म. । पीतदेवदाल्याम् । भा. । रा.नि.व.२ । See देवदाली ।

**अगरु** । क्ली । अगुरुचन्दने । कृष्णागुरुणि । অগরাই চন্দন । वा.उ.२७अ. । See अगुरु ।

**अगरुसारः** । पुं । कृष्णागुरौ । Aloe wood, the black variety. কাল অগুরু ।

**अगस्तिः** । पुं । (Sesbana grandiflora.) वकनामकपुष्पशाकवृत्ते । मै.तचिकं । বকফুলের গাছ । हिं हतिया, वकुल वृहत् वाँलधरी । तैं लक्ष्मयविसेचेट्टु । मं अगला हदगा । अगस्तिः श्वेतरक्तनीलपीतभेदेन चतुर्विधः । गुणाः—पित्तकफ्हारित्वं, ग्रीष्मशमनत्वं हिमत्वं योनिशूलघ्नत्वाकुष्ठशोथनाशित्वम् । अन्यच—वकोऽतिशिशिरस्तिक्तः मधुरः मदगन्धिः पित्तदाहकफश्वासश्रमघ्नोदीपनश्च । रा.नि.व.१० । अपरच "मुनिशिम्बी सरा शीता बुद्धिदा रुचिरा लघुः । पाककाले तु मधुरा तिक्ता चैव स्मृतिप्रदा ॥ त्रिदोषशूलकफहृत्पाण्डुरोगविषापनुत् । शीफगुल्महरा प्रोक्ता सा पक्वा रुचपित्तला ॥" पर्य्यन्तु मुनिद्रुमस्य—कटु तिक्तं गुरु मधुरं किञ्चिदुष्णं क्रमिकफकण्डूविषरक्तपित्तघ्नञ्च । वै.निघ । पुष्पगुणाः—शीतलं गौल्यं त्रिदोषघ्नं प्रशमनं वलासकासवैवर्ण्यभूतहरं बलप्रदञ्च ॥ रा.नि.व. १० । शीतवीर्य्यं चातुर्थकज्वरहरं नक्तान्ध्यघ्नं तिक्तं कषायं कटु पीनसकफपित्तवातघ्नञ्च । भा.पू.१भ. शा.व. ।

**अगस्तिकुसुमः** । पुं । वकवृक्षे । বাকসগাছ । त्रिका. ।

**अगस्तिद्रुः** / **अगस्तिद्रुमः** } पुं । वकवृक्षे । त्रिका. ।

**अगस्त्यः** । पुं । वकवृक्षे । रा. नि. व. १० ।

**अगस्त्यरसः** । पुं । उदररोगघ्ने रसे । रसगन्धकजैपालबीजलौहशिलाजतु-ताम्रहरिद्राणां प्रत्येकं समभागः, एकत्र त्रिकटुभृङ्गराजार्द्रकनिम्बनिर्गुण्डीस्वर्णुलीक्वाथैरेकवारं मर्द्यः । अनुपा. गुड़हरीतकी, काम्पिल्लचूर्णं वा । र.सा.सं. ।

**अगस्त्यहरीतकी** । स्त्री । कासे हिता । पाकविधिः—दशमूलादिक्वाथ्यद्रव्याणि प्र.१प. यवाः ८श.हरीतकीशतं । हरीतकीशतान् पोट्टलीकृताम् एकत्र ८०श.जले पक्त्वा पादशिष्टः क्वाथः कर्त्तव्यः । अथ गुड़ं (१२॥श.) तत्क्वाथेन शोधयित्वा कुड़वमितघृततैलभर्ज्जितनिरस्थिहरीतकीसहितं पक्त्वा च पादशिष्टेऽवतार्य्य शीते पिप्पलीचूर्णं ॥० श. प्रक्षिपेत् । शीतले मधु ॥०श.मिश्रयेत् । मात्रा—हरीतकीद्वयं लेहस्य च तो. २ प्रत्यहं खादेत् । एतदन्तर्गता चौरपुष्पी = दन्तखड़िका । च.द.कास. । मतान्तरे दशमूलद्रव्यं प्र. ४ तो. । दशमूलीं स्वयं गुप्तां शङ्खपुष्पीं शटीं बलाम् । हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् । भार्गीं-पुष्करमूलञ्च द्विपलांशं यवाढकम् ॥ हरीतकीशतञ्चैकं जलपञ्चाढके पचेत् । यवस्विन्नकषायन्तं पूतं तच्चाभयाशतम् । पचेद्गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात् । तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् । लिह्याद्दे चाभये चाद्यं खादेन्नित्यं रसायनात् ॥ इति पाठः । रस.र. । प्रयोगा. हा.श्वि: ३.६ अ. ।

**अगाधम्** । क्ली । जले । है. च. ४ का. ।

**अगारधूमः** । पुं । गृहधूमे । ঝুল । वा. उ. ३८ अ. ।

**अगिरः** । पुं । चित्रकवृक्षे । जटा । See चित्रकः ।

**अगुरु** । क्ली । (Aquilaria agallocha) A fragrant wood. स्वनामप्रसिद्धसुगन्धिकाष्ठविशेषे । অগুরুচন্দন । हिं अगर । तैं इरुगुड्डु चेट्टु । मं शिशवाचे भाड़, कृष्णागरु । तच्च कृष्णदाह स्वादु-मङ्गल्यकाष्ठा-गुरु भेदेन पञ्चविधम् । रा. नि.व.१२ । तेषां विशेषास्तत्तत्पर्य्याये स्मर्य्याः । अस्य सामान्यगुणाः—तिक्तता, उष्णता कटुता, लेपे रुक्षता, व्रणकफवायुवान्तिमुखरोगनाशित्वं, त्वच्यं, पित्तलं, लघु तीक्ष्णं, कर्णाक्षिरोगघ्नञ्च । रा.नि. व.१२; वा.चि.४अ. । कृष्णागुरु—गुणाधिकं जले मज्जति च । एतत्भेदः—कृष्णागुरुसमगुणः । भा. क.व. ।

**अगुरुः** । पुं । Aloe wood (or agallocha.) अगुरुवृक्षे । অগুরু গাছ । वा.सू.१५अ. एलादिव. । "अगुरुः शीवासकं कुङ्कुमम्" । कपिलशिंशपायाम् । हिं कपिलवर्ण शीसव । भा.पू १भ.वटादि व. । शिंशपावृक्षे । শিশুগাছ । मं रचिकम् ।

**अगुरुगन्धम्** । क्ली । हिङ्गुनि । हिङ्।

**अगुरुसारः** । पुं । कृष्णागुरुवृक्षे । काल अगुरु । See कृष्णागुरुः । लौहे । रत्ना.एकार्थः ।

**अगुरुसारा** । स्त्री । शिंशपावृक्षे । भा

**अगुरुशिंशपा** । स्त्री ।(Dalbergia Sisu.) शिंशपावृक्षे । शिशु । हि शीसव । अ.टी. स्वामी ।

**अगूढ़ः** । पुं। The castor-oil plant,(Ricinus communis.) श्वेतैरण्डे । শ্বেতভেরেন্দা । हिं एरण्ड । वै.निघ. । See एरण्डः ।

**अगूढ़गन्धम्** ।क्ली। (Ferula assafœtida.) हिङ्गुनि । रा.नि.व.६ । See हिङ्गु । पलाण्डौ । मृगनाभौ । लशुने ।

**अग्टचिः** । स्त्री । अभिलाषे । वा. चि. ७ अ. ।

**अगौकाः** । पुं।A fabulous animal with eight legs. शरभे । पक्षिणि । सिंहे । मे. ।

**अग्निः** । पुं । The fire of the stomach. जाठराग्नौ । स चतुर्विधः—मन्दतीक्ष्णविषमसमभेदेन । यथा''मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः । कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः ॥ विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तकान् । करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥ समासमाग्नेरशिता मात्रा सम्यग्विपच्यते । स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः॥ कदाचित् पच्यते सम्यक्कदाचिच्च न पच्यते । तीक्ष्णाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते'' ॥ मा.नि. । तल्लक्षणं—''वामपार्श्वाश्रितं नाभेः किञ्चित्सोमस्य मण्डलम् । तन्मध्ये मण्डलं सौर्य्यं तन्मध्येऽग्निर्व्यवस्थितः । जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत् ॥'' भा. । अपरञ्च —''सूर्य्यो दिवि यथा तिष्ठन् तेजोयुक्तैर्गभस्तिभिः । विशोषयति सर्व्वाणि पल्वलानि सरांसि च ॥ तद्वच्छरीरिणां भुक्तं ज्वलनोनाभिमाश्रितः । मयूखैः पच्यते चिप्रं नानाव्यञ्जनसंस्कृतम् । स्थूलकायेषु सत्त्वेषु यवमात्रः प्रमाणतः । कृमिकीटपतङ्गेषु वालमात्रोऽवतिष्ठते ॥'' रस.प्र. । ''पाचकं रञ्जकञ्चापि साधकालोचके तथा । भ्राजकश्चेति पित्तस्य नामानि स्थानभेदतः ॥ अग्न्याशये यकृत्प्लीह्नोः हृदये लोचनद्वये । त्वचि सर्व्वशरीरेषु पित्तं निवसति क्रमात् । पाचकं पक्वे भुक्तमिति ।'' निदा.। तेजःपदार्थविशेषे । आगुन । हिं आग । अग्नितापगुणाः —वातकफस्तम्भताशीतकम्पघ्नः, आमाशयकरः रक्तपित्तकोपनश्च । राज.भा. । चित्रके, চিতেগাছ । सियो. ग्रहणीचि.विलाद्यघृते । वा.सू.१५अ. आरग्वधादि-व. । अग्निजारवृक्षे । रा.नि.व.२३। पीतवालके । केशरे । पित्ते । अम्ले । निम्बुके । रा.नि.व.२१ । स्वर्णे । रा.नि.व.१३। भल्लातके. । रा.नि.व.११ । रक्तचित्रके । रा.नि.व.६। च.द.ग्रहणी-चि.कपित्थाष्टके ।

**अग्निकः** । पुं।An insect of scarlet colour. इन्द्रगोपकीटविशेषे । আষাড়েপোকা । सु.मि.अ. ; हे.च.४का. । चित्रकवृक्षे । वा.चि.७ अ. । भल्लातकवृक्षे । भा.पू.१भ-ह.व. ।

**अग्निकर्णी** । स्त्री । वृक्षविशेषे । वै.निघ.२भ. अभिन्यास ज्वर-चि. ।

**अग्निकर्म** । क्ली । ग्रन्थ्यादिरोगेषु दग्धशलाकादिभिः प्रयोज्ये दाहकार्य्ये । तत्र चारदाहाङ्गरीयः क्रियासु,न गुणेषु । तच्चतुर्विधं रोगाधिष्ठानभेदात्, यथा—वलयबिन्दुविलेखगुमशलाकावघर्षणानि । तस्य च कालः शरद्ग्रीष्माभ्यामन्यत्र सर्व्वर्त्तुषु प्रशस्तः । तस्य पात्रं —दुर्व्वलबालवृद्धभीरुप्रभृतिभिन्नाः । तदुपकरणं – पिप्पल्यजशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतरलोहाः चौद्रगुड़स्नेहाश्च । सु.सू.१२अ. । वा.चि.१५अ. ।

**अग्निकाष्ठम्** । क्ली । (Agallochum) अगुरौ । ''अग्निकाष्ठं करीरे स्यात् ।''रा.नि.व.२३ । शमीकाष्ठे । रा.नि.व.१२ ।

**अग्निकुमारः** । पुं । अजीर्णाधिकारोक्तरसायनवटीविशेषे । यथा —''टङ्कणं रसगन्धौ च समभागं त्रयं विषात् । कपर्दः सर्जिका चारो (यवचारः) मागधी विश्वभेषजम् ॥ पृथक् पृथक् कर्षमात्रं वसुभागमितोषणम् । जम्बीराम्लैर्दिनं घृष्टो भवेदग्निकुमारकः । विसूचीशूलवातादिवह्निमान्द्यो प्रशान्तये ॥'' रस.प्र. रसेन्द्रचि. । भैष.प्रयोगा.सा. कौ.रसा.सं. । द्वितीयः ग्रहण्यधिकारे । पटुपञ्चकं पञ्चलवणम् । भृङ्गराजादिना प्रत्येकं त्रिधा मर्द्दनम् । र.सा.सं.१११ योगः । तृतीयो ग्रहण्याम् । अजमोदा वनयमानी । र.सा.सं.१२२योगः,भैष. । चतुर्थः सन्निपातज्वरे हितः । पारदः ४तो.गन्ध.४

ती. हंसपादी (গোওয়ালিয়া) रसे दिनैकं मर्द्दयित्वा वटीकरणेन २ ती. विषेण सह काचकूप्यां निधाय मुखमवरुध्य बालुकायन्त्रेण १२ प्रह.दीपशिखावदग्नौ पाच्यः। शीते विषं ॥०ती.मरिचचूर्णं ॥० ती. मिश्रयेत्। मात्रा रक्तिमिता। भा.म.ख. १ भ.। पञ्चमः अजीर्णे, अत्र भागत्रयमिति एकभागापेक्षया, एवं सर्व्वत्र। कपर्दशङ्खं दग्ध्वा जम्बीररसे शोधनीयम्। षष्ठी बृहदग्निकुमारः। अत्र रसापेक्षया द्विगुणं गन्धं टङ्कणञ्च देयम्। पटूनि लवणानि। द्वादशैतानीति फलत्रयादिपञ्चपटून्तानि द्रव्याणि रसतुल्यानि। र.सा.सं.१२८ योगः, प्रयोगा.। सप्तमोऽप्यपरबृहदग्निकुमारः। अत्र जातीफलं जातीफलजातीकोषौ। वराङ्गं=गुड़त्वक्। १३८योगः। अष्टमेऽग्निकुमारे समभागमिति प्रत्येकं भागैकं;वसुभागमिति भागाष्टकम्। र.सा.सं.१५६ योगः। रस.र.उदरे.।

**अग्निकुमारलोहम्।** क्ली। प्लीहाधिकारे रसः। रामठं=हिङ्गु। तुल्यहिङ्गुटङ्कणसैन्धव-धान्यजीरकयमानीमरीचशुण्ठीलवङ्गैलाविडङ्गानां प्रत्येकं १ ती. लौहं सर्व्वसमं रसस्य ४ ती. गन्धकस्य च ४ ती.। अनु. घृतं मधु च। र. सा. सं. ३३४ योगः।

**अग्निगर्भः।** पुं। अग्निजारवृक्षे। रा.नि.व.६।

**अग्निगर्भा।** स्त्री। (Acacia suma.)शमीवृक्षे। শাঁই গাছ। हिं, मं शमी। गुणाः—तिक्ता, कटुः, कषाया, शीता, लघुः, रेचनी, कफकासभ्रमश्वासकुष्ठार्शःक्रमिघ्नी। भा.पू.१भ.। See शमी। महाज्योतिष्मतीलतायाम्। বড় লতাফটকী। रा.नि.।

**अग्निघृतम्।** क्ली। अग्निमान्द्ये घृतम्। घृतं४ श. पिप्पल्यादिकल्कद्रव्यं प्रत्येकं ४ ती. दधि ४ श. काञ्जिकं ४ श. शुक्तं ४ श. आर्द्रकरसः४ श.। एभिः यथाविधि घृतं पचेत्। च.द.अग्निमा.चि.। पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली। हिङ्गुचव्यजमोदे च पञ्चैव लवणानि च। द्वौ क्षारौ हबुषा चैव दद्यादर्द्धपलोन्मितम्। दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च। आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत् ॥ इति पाठः।

**अग्निचूड़ः।** पुं। ताम्रचूड़पक्षिणि। कुक्कुड़ा। दा.हिं कोमुड़ा, हिं मुर्गा। स द्विविधः बन्यग्राम्यभेदेन। तयोर्ग्राम्यः—बृंहणः, हृद्यः, बल्यः, गुरुः, शुक्रकफकृत्, स्निग्धः, उष्णवीर्य्यः, कषायरसश्च। आरण्यः—स्निग्धः, बृंहणः, श्लेष्मलः, गुरुः, वातपित्तक्षयवमिविषमज्वरनाशकश्च। भा.। हृद्यं श्लेष्मघ्नं लघु च। रा.नि.व.११। रुच्यं स्वादु कषायं शीतलञ्च। राज.।

**अग्निजः।** पुं। अग्निजारवृक्षे। रा.नि.व.६। भल्लातके। सुवर्णे। मांसधात्री।

**अग्निजननी।** स्त्री। भेषज्यमेतत् अग्निमान्द्योपशमनम्। रस.चि.। पलैकं मूर्च्छितं सूतं मरिचं हिङ्गुजीरकम्। प्रतिकर्षं वचां शुण्ठीं तत्सर्व्वं मार्कवद्रवैः। दिनं पिष्ट्वा लिहेन्माषं मधुना वह्निदीप्तये। कर्षैकं भक्षयेच्चानु दाड़िमं नागरं गुड़ैः॥ मार्कवद्रवैः भृङ्गराजरसैः। प्रयोगा.।

**अग्निजातः।** पुं। अग्निजारवृक्षे। रा.नि.व ६।

**अग्निजारः।** पुं। A plant used in medicine of stimulant properties. पश्चिमसमुद्रप्रसिद्धे स्वनामख्याते सागरसम्भूतौषधविशेषे। स चतुर्वर्णः। तेषु लोहितवर्णः श्रेष्ठः। "जाराभो दहनस्पर्शो पिच्छिलः सागरे भवः। जरायुस्तच्चतुर्वर्णः तेषु श्रेष्ठः सलोहितः" इति तल्लक्षणम्। गुणाः—कटुरसः, उष्णवीर्य्यः, लघुपाकः, कफवायुसन्निपातशूलरोगघ्नः, पित्तकरश्च। "स्यादग्निजारः कटुरुष्णवीर्य्यः तुदामयो वातकफामयघ्नः। पित्तप्रदः सोऽधिकसन्निपातशूलातिशीतामयनाशकश्च॥" रा.नि.व.६।

**अग्निजालः।** पुं। अग्निजारे। रा.नि.व. ६।

**अग्नि-जिह्वा (जिह्विका)।** स्त्री। (Gloriosa Superba.) लाङ्गलीवृक्षे। रत्ना.। ইষলাঙ্গুলিয়া। हिं करिहारी। मं कललावी। गुणाः—सरा, तिक्ता, कटुका, तुवरा, तीक्ष्णा, उष्णा, पित्तला, सचारा, गर्भपातिनी, कुष्ठशोफाशोव्रणशूलश्लेष्मक्रमिजित्, कफवातघ्नी अन्तःशल्यनिष्कासिनी च। भा.पू.१भ.गु.व.।

**अग्निज्वाला।** स्त्री। Pothos officinalis. गजपिप्पल्याम्। গজপিপুল। सा चविकायाः फलमिति प्राच्याः। "चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली।" भा.पू.१भ.। गुणाः—

कटुः, उष्णा, वातश्लेष्महृत्, दीपनी, अतीसारश्वासकफामयकृमिघ्नी। लाङ्गलीवृक्षे। अग्निजारे। जलपिप्पल्याम्। কাংচড়া। मं जलपिंपली। धातकीवृक्षे। रा.नि.व.२३।

**अग्नितुण्डीरसः** । पुं। अजीर्णाधिकारे रसः। "शुद्धसूतं विषं गन्धमजमोदा फलत्रिकम्। सर्जिचारं यवचारं वह्निसैन्धवजीरकम्॥ सौवर्चलं विडङ्गानि सामुद्रं त्रूषणं तथा। विषमुष्टिसमं सर्व्वं जम्बीराम्लेन मर्दयेत्। मरिचाभां वटीं खादेत् वह्निमान्द्यप्रशान्तये॥" अत्र वह्निश्चित्रकः, अजमोदा यमानी। विषमुष्टिः,महानिम्बः, अस्य त्वक् पत्रं वा सर्व्वसमम्। र.सा.सं.१२३योगः। द्वितीयः—अमृतवराटकमरिचैः द्विपञ्चनवभागिकैःकृतैः क्रमशः। वटिका मुद्गसमाना कफपित्ताग्निमान्द्याजीर्णहरा॥ अत्र लिम्पाकरसैः वटिका कार्य्या। प्रयोगा अजीर्णे। अमृतवटीति भैष.।

**अग्निदमनकः** } **अग्निदमनी** } पुं, स्त्री। (Medicinal plant stimulant and stomachic,considered as a small species of Cantacári cá) क्षुद्रकण्टकवृक्षविशेषे। गणिकारीति प्रसिद्धा गणिरि। दुरालभाभेदे। দুরালভাভেদ। मं धमासाभेद, अगिदवणा। वै. निघ.। শোলা। इति केचित्। गुणाः—कटूष्णत्वं, रुचिकरत्वं, अग्निदीपकत्वम्। रा.नि.व. ४। वातगुल्मकफघ्नत्वं, प्लीहघ्नत्वञ्च। वै.निघ.।

**अग्निदीपनः** । पुं। वरुणवृक्षे। বরুণগাছ। भा.पू.१भ.। [वर्द्धक।

**अग्निदीपनी** । त्रि। अग्निवृद्धिकर्य्याम्। अग्नि-

**अग्निदीप्ता** । स्त्री। महाज्योतिष्मती लतायाम्। লতাফট্‌কী। मं थोड़ मालकाङ्गनी। हिं उभिजिनि। रा.नि.व. ३। भा.पू.१भ.।

**अग्निधमनः** । पुं। कटुनिम्बे। কটুনিম্, ঘোড়ানিম্। मं कडुनिम्ब। See महानिम्बः।

**अग्निनिर्यासः** । पुं। अग्निजारवृक्षे। रा.नि. व.६। [लोके।

**अग्निपर्णी** । स्त्री। अग्निवल्याम्। আগিয়া इति

**अग्निपाली (माली)** । पुं। चित्रकक्षुपे। চিতে। मद.२व.।

**अग्निप्रस्तरः** । पुं। अग्निजनकपाषाणे। চক্মকির পাথর। मं गार।

**अग्निफला** । स्त्री। महाज्योतिष्मतीलतायाम्। বড় লতাফট্‌কী। मं थोड़ मालकांगनी। रा.नि. व.३।

**अग्निभः** । पुं। सुवर्णे। रा. नि व. १३।

**अग्निभा** । स्त्री। ज्योतिष्मतीलतायाम्। লতা ফট্‌কী। मं क्षुद्रमालकाङ्गनी। हिं कबुह। See ज्योतिष्मती।

**अग्निभु** । क्ली। स्वर्णे। जले। रा.नि.व. १३।

**अग्निमणिः** । पुं। सूर्य्यकान्तमणौ।

**अग्निमथनः** । पुं। गणिकारिकायाम्। গণিরি বা আগ্‌গন্ত। रा.नि.व.६। See गणिकारिका, अग्निमन्थः।

**अग्निमन्थः** । पुं। (Premna Seratifolia) स्वनामख्यातवृक्षे। গণিরি, আগ্‌গান্ত। हिं अरणि,अगेथ,गणिआरि। उत्.अगिवथ। तें.चिरिनेलु चेट्टु। अग्निमन्थो द्विधा क्षुद्रबृहद्भेदेन। तदुभयगुणाः—वीर्य्योष्णः, कटुः, तिक्तः, तुवरः,मधुरः, अग्निदः, श्वयथुपाण्डुकफवातहरः, मलरोधविषाममेदोरोगहरश्च। लघुस्तु लेपने उपनाहे शोफे च हितः। वै.निघ.। भा.पू.१भ.गु व.। च.सू.४अ.२६ दश। अग्निवधू इति पूर्व्वदेशे, इति उ.। सु.सू. ३८ अ. संशोधने। वा.उ.२०अ। सर्जवृक्षे।

**अग्निमयः** । पुं। श्वेतवृद्धदारके। শ্বেত বিচতাড়ক। मं श्वेत वरधारा। वै.निघ.। श्वेतवृद्धायाम्।

**अग्निमान्द्यम्** । क्ली। मन्दाग्निनामकरोगविशेषे। মন্দাগ্নি। तस्य कारणमत्यम्बुपानादिसम्भूतमजीर्णम्। तत्र स्वल्पापि मात्रा न पच्यते, कफजरोगाश्च विविधा जायन्ते। तत्राग्नेः समानताख्यापनं, विषमाग्नौ वायोरुपशमः, तीक्ष्णाग्नौ पित्तस्य, मन्दे च श्लेष्मणः शोधनं प्रतीकारः। च.द.। निदानं यथा—"अत्यम्बुपानाद्विषमाशनाच्च संधारणात् स्वप्नविपर्य्ययाच्च। कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य॥" तत्र अजीर्णं षट्—कफादामाजीर्णं, पित्ताद्विदग्धाजीर्णं, वाताच्च विष्ट-

आमाजीर्णं रसशेषात् रसशेषाजीर्णम्। दिवास्वपेन जीर्णात् दिनपाकि। षष्ठञ्च प्राकृतमिति। "तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः। उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते ॥ विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः। मलवाताप्रवृत्तिश्च स्तम्भो मोहाङ्गपीड़नम् ॥ विदग्धे भ्रमतृण्मूर्च्छा पित्ताच्च विविधा रुजः। उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ रसशेषेऽन्नविद्वेषः हृदयाशुद्धिगौरवे। मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः। उपद्रवा भवन्त्येते मरणं वाप्यजीर्णतः ॥" भा.नि.। पथ्यं यथा – श्लैष्मिके वमनं पूर्व्वं पैत्तिके मृदुरेचनं। वातिके स्वेदनञ्चाथ यथावस्थं हितं यत् ॥ नानाप्रकारो व्यायामो दीपनानि लघूनि च। बहुकालसमुत्पन्नाः सूक्ष्मा लोहितशालयः ॥ विलेपी लाजमण्डश्च मण्डो मुद्गरसःसुरा। एणो वर्त्तो शशो लावः क्षुद्रमत्स्याश्च सर्व्वशः ॥ शालिञ्च शाकं वेत्राग्रं वास्तूकं बालमूलकं। लशुनं हृद्यकूष्माण्डं नवीनकदलीफलम् ॥ शोभाञ्जनं पटोलञ्च वार्त्ताकुं नलदम्बु च। कर्कोटकं कारवेल्लं वार्हतञ्च महार्द्रकम्।प्रसारणीं मेषशृङ्गं चाङ्गेरीं सुनिषण्णकं। धात्रीफलं नागरङ्गं दाड़िमं यवपर्पटाः ॥ अम्लवेतसजम्बीरमातुलुङ्गानि माक्षिकं। नवनीतं घृतं तक्रं सौवीरकतुषोदके ॥ धान्याम्लं कटुतैलञ्च रामठं लवणार्द्रकं। यमानी मरिचं मेथी धान्यकं जीरकं दधि ॥ ताम्बूलं तप्तसलिलं कटुतिक्तौ रसावपि। मन्दानलेऽप्यजीर्णेऽपि पथ्यमेतन्नृणां भवेत् ॥ अपथ्यमाह। विरेचनानि विण्मूत्रं वायुवेगविधारणं। अतिरिक्ताम्बुपानं जागरो विषमाशनम्।रक्तस्रुतिं शमीधान्यं मत्स्यं मांसमुपोदिकां। जलपानं पिष्टकञ्च जाम्बवं सर्व्वमालुकम् ॥ कूष्मिका मोरटं क्षीरं किलाटञ्च प्रपानकं। तालास्थि शस्यं तद्वालं स्नेहनं दुष्टवारि च ॥ विरुद्धासात्म्यपानान्नं विष्टम्भीनि गुरूणि च। अग्निमान्द्येऽप्यजीर्णे च सर्व्वाणि परिवर्ज्जयेत् ॥

**अग्निमुखम्** । क्ली। कुसुम्भपुष्पे। कुंकुमे।

**अग्निमुखः** । पुं। चित्रकवृक्षे। চিতেগাছ। भल्लातकवृक्षे। ভেলা গাছ। वि.।

**अग्निमुखचूर्णम्** । अग्निमान्द्ये हितम्। हिङ्गु. १भ.वचा २ भ.पिप्पली ३ भ. शुण्ठी ४ भ.यमानी ५ भ. हरीतकी ६ भ. चित्रकं ७ भ. कुष्ठं ८ भ.। च.द.अग्निमा.चि.। प्रयोगा.।अजीर्णे। भैष.। सा.कौ। अन्यत् स्वल्पं हृष्ट्वा उदरे। सा.कौ.रस.र।

**अग्निमुखताम्रः** । पुं। रसोऽयमम्लपित्ताधिकारे। "गन्धकेनाश्ममात्रेण सूततुल्येन निर्म्मिता। कज्जली या तया लिप्यं ताम्रपत्रन्तु तत्समम् ॥ अर्ज्जुनत्वग्रसैः सार्द्धं पक्वोदुम्बरपल्लवे। आच्छाद्य कृष्णलवणैश्चूर्णैश्चापि न्व मृण्मये। अन्धमूषागतं ध्मातं तत्सिद्धं भक्षयेन्नरः। शाणकं रक्तिकावृद्ध्या मासमात्रं प्रयोगतः। अम्लपित्तं क्षयं शूलं जरत्पित्तं सुदारुणम्। सप्तरात्रप्रयोगेण शरीरं निर्म्मलं भवेत् ॥ रस.र.। पञ्चलवणैरिति प्रयोगा.।

**अग्निमुखमण्डूरम्** । क्ली। शोथाधिकारे। मण्डूरस्य १२प,गोमूत्रस्य १२श.। प्रक्षेपार्थं—पञ्चकोलं देवदारु मस्तकं त्रिकटु त्रिफला विड़ङ्गञ्च। प्रत्येकं चूर्णं १प.। मात्रा १तो.।अनु.तक्रम्। भैष.।

**अग्निमुखरसः** । पुं। रसोऽयं शूलरोगोपशमनः। अत्र पारदगन्धकौ समौ पारदार्द्धं मृतताम्रम्, एकत्र शाकपत्ररसैः (সেগুন) चौरिणीरसैश्च दिनैकं मर्द्दयित्वा लघुपुटेन पचेत्। अनुपा. यमान्यादिचूर्णमुष्णोदकेन पेयम्। रस.र.।द्वितीयोऽपि शूलाधिकारे। अयञ्च रसरत्नाकरधृतेन प्रायः तुल्य एव। अत्र बलिः गन्धः। गगनम् अभ्रे, अर्कः ताम्रे। वेतसाम्लम् अम्लवेतसे। सवरमिति त्रिफलया सहितम्। भुजगवल्ली पर्णं। सलिलं बालकं (বালা)। कनकः धुस्तूरः। पटुगणः पञ्चलवणानि। वज्री स्नुही। मुष्टिः घण्टापाटलायां कुड्ची वा। र.सा.सं.२८२ योगः। रसरत्नाकरधृते द्वितीये। मुण्डितिका मुण्डीरी। महाराष्ट्री ब्रह्मयष्टिः বামুনহাটী।

**अग्निमुखलवणम्** । क्ली। अग्निमान्द्ये। अत्र—चित्रकमूलं त्रिफला, दन्तीमूलं त्रिवृन्मूलं कुष्ठम्। एषां प्रत्येकं चूर्णं समं, सर्व्वसमं सैन्धवं एकत्र स्नुहीक्षीरैः संभाव्य तत्काण्डमध्ये दत्त्वा पङ्केनालिप्य मृदावग्नौ क्षिपेत् ॥ भैष.।

**अग्निमुखलौहः** । पुं, क्ली। अर्शसि हितः। त्रिवृन्मूलादीनां ८ पलम्। वारि द्रोणमितं (३२ श.)।पादावशिष्टः क्वाथः कर्त्तव्यः। अथ लौहपात्रे २४प. घृतमुष्णीकृत्य तत्र लौहस्य १२प.दत्त्वा क्वाथेन सह पचेत्। घनीभूते अवतार्य विकटचूर्णं

२प. त्रिकटुचूर्णस्य प्रत्येकं २प. त्रिफलाचूर्णस्य च ५प. शिलाजतो: १प. मधुन: २४प. शर्करायाः २४प. मिश्रयेत्। रसेन्द्र.चि.। चक्रमते चित्रका दीनां प्रत्येकं पलाष्टकं ६४श.जले पक्त्वा पादशिष्ट: क्वाथो विधेय:। अत्र अजझटा भूम्यामलकी। ज-टेति पाठे मूलकम्। अथ विड़ङ्गस्य पलत्रयं व्योषस्य च प्रत्येकं षट् तोलकं कल्कीकृत्य तत्, तथा स्वर्णमाक्षिकेण मन:शिलया विकङ्कतेन वा जारितं लौहचूर्णं १२प. घृतञ्च २४प. तस्मिन् क्वाथे दत्त्वा एकत्र पाच्यम्। घनीभूते शीतले च शर्कराया मधुनश्च शरावत्रयं मिश्रयेत्। घृतेन पेयम्। च.द.अर्श: चि.। अग्निलौहं पश्य।

**अग्निमुखी**। स्त्री। भल्लातक्याम्। ভেলা। मे. खचतुष्कं। रत्ना.। च.सू.४अ. भेदनीये। लाङ्गलि-कायां, ঈশলাঙ্গুলিয়া। मे.खचतुष्कं। भा.पू.२भ. अने.व.। कण्टके। কাঁচ্ড়া। रा.नि.व.४। भा.पू.ह. व.। गुड़ूच्याम्।

**अग्निरजा:** } **अग्निरज्जु:** } पुं। इन्द्रगोपकीटे। আষাঢ়ে পোকা। हे.च.४। An insect of scarlet color.

**अग्निरस:**। पुं। राजयक्ष्मणि हित:। अन्यश्च क्षयकासे हित:। तयो: प्रथम:—वज्रहाटकसूता-नां भस्मैकं द्वित्रिषट् क्रमात्। त्रिकण्टकरसैर्भाव्यं दिनान्ते तद्विचूर्णयेत्। गुञ्जामात्रं प्रयोक्तव्यं सज्वरे राजयक्ष्मणि। स्नुहीमूलञ्च जम्बीरद्रवै: स्यादनुपा-नकम्।...खादेत् त्रिनिष्कम्...। हीरकस्य १भ. स्वर्णस्य २भ. रसस्य ३भ. गन्धकस्य च ६भ.। द्वि-तीय:—शुद्धसूतं द्विधा गन्धं कुर्य्यात्खल्वेन कज्जलीं। तयो: समं तीक्ष्णचूर्णं मर्द्दयेत् कतकद्रवै:। द्वियामान्ते कृतं गोलं ताम्रपात्रे विनि:क्षिपेत्। आच्छाद्यै-रण्डपत्रेण यामार्द्धेऽत्युष्णता भवेत्। धान्यराशौ न्य-सेत् पश्चात् द्वियामान्ते समुद्धरेत्। संपेष्य गालयेद्वस्त्रे सद्यो वारितरं भवेत्। त्रिकटु त्रिफला चैला जातीफललवङ्गकम्। एषाञ्च नवभागानां समं पूर्व्वरसो भवेत्। संचूर्ण्यालोड़येत् क्षौद्रैर्भक्ष्यं निष्क-द्वयं द्वयम्। क्षयमग्निरसो नाम्ना क्षयकासनिकृन्त-न:। इन्द्रवारुणिकामूलं भङ्गकणातिलै: सह। भ-क्षयेत् क्षयकासार्त्तो निष्कमात्रं प्रशान्तये॥ पारदस्य १भ. गन्धकस्य २भ.। तयो: समं तीक्ष्णलौहचूर्णं निर्गुण्डीफलरसेन कन्यारसेन वा प्रहरद्वयं संमर्द्य गोलकं कृत्वा एरण्डपत्रैराच्छाद्य ताम्रपात्रे निवेश्य च धान्यराशौ प्रहरद्वयं अष्टरात्रं वा न्यसेत्। अथो-द्धृत्य गोलितं जलवद्भवेत्। त्रिकट्वादिचूर्णं मिलितं पूर्व्वचूर्णसमं (नवद्रव्यस्य९भ.) ग्राह्यम्। रस.र.। भावप्रकाशे, कतकद्रवै: = कन्यकाद्रवै:। तथा द्वि-यामान्ते = अष्टरात्रात्। नवभागोन्मितै:। भा.पाठ:।

**अग्निरुहा**। स्त्री। मांसरोहिण्याम्। रा.नि. व.१२।

**अग्निरोहिणी**। स्त्री। मांसरोहिण्याम्। মাংসরোহিণী। वा.उ.३१अ.। तन्नामकक्षुद्ररोगवि-शेषे। सा त्रिदोषजा। पित्तोल्वणैर्मलै: ज्वरवत: मांसदारणा: कक्षाप्रदेशेषु येऽग्निसदृशा: स्फोटा जायन्ते साऽग्निरोहिणीत्युच्यते। "मलै: पित्तोल्वणै: स्फोटा ज्वरिणो मांसदारणा:। कक्षाभागेषु जायन्ते येऽग्न्याभा: साऽग्निरोहिणी। पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीवित"मिति॥ एतस्य चिकित्सितं वा.उ.३२अ.मृग्यम्।

**अग्निलौह:**। पुं। अग्निमुखापरनामकोऽर्शोघ्नोऽयं रस:। यथा—"चित्रक्षिचकनिर्गुण्डीस्नुहीमुण्डिति-काजझटा:। प्रत्येकशोऽष्टपलिका जलद्रोणे विपा-चयेत्॥ पलत्रयं विड़ङ्गस्य व्योषं कर्षत्रयं पृथक्। त्रिफलाया: पलं पञ्च शिलाजतुपलं न्यसेत्॥ दि-व्यौषधिहतस्यापि वैकङ्कतहतस्य वा। पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्॥ घृताच्चतुर्विंशतिभि-र्मधुशर्करयोरपि। घनीभूते च शीते च दापयेद-वतारिते। एतदग्निमुखं नाम दुर्नामान्तकर: प-र:॥......मुण्डितिका मुण्डीरी। अजझटा भूम्या-मलकी। चित्रकादीनां रसेनापि पाकव्यवहार:। क्वाथ: पादावशिष्ट:। पाकावतारणकाले प्रक्षे-पार्थं विड़ङ्गादीनां चूर्णम्। त्रिफलाया मिलित्वा पञ्चपलानि। शिलाजतु १प.(शिवागुड़िकोक्तरीत्या शोधितम्)। दिव्यौषधि: स्वर्णमाक्षिक-मन:शिले। वैकङ्कतो वनपालङ्क:। रुक्मलौहं वज्रपाण्ड्वादि। त-च्च रसायनोक्तरीत्या जारणपुटनादिना सूक्ष्मचूर्णितं। घृतात् चतुर्विंशतिपलानि मधुशर्करयोरपि प्रत्येकं चतुर्विंशति:। तप्तपूते लौहं दत्त्वा पश्चात् शर्करा-सहितं क्वाथं दत्त्वा पाक: कार्य्य:। अवतारणसमये विड़ङ्गादिचूर्णप्रक्षेप:। शीते पर्य्युषिते च मधु देयं। रस.र.अर्श:-चि.।

**अग्निवक्त्र:**। पुं। भल्लातकवृक्षे। ভেলাগাছ।

मद.व.१ । चित्रकवृक्षे । চিতে গাছ । [त्रौषधी ।

**अग्निवती ।** स्त्री । आगिया इति लोकप्रसि-

**अग्निवर्द्धकः (नः) ।** त्रि । अग्न्युद्दीपके,मरि-चादौ । आग्नेयद्रव्यमात्रे । अग्निवृद्धिकर । राज.।

**अग्निवलवृद्धिः ।** स्त्री । जठरानलस्य वृद्धौ । च.द.अर्श:-चि. ।

**अग्निवल्लभः ।** पुं । Resin. सर्जशौनिर्यास-विशेषे । राले । धुना । हे.च. । रा.नि.व. ९१२ । मद.व.३ । See सर्जः ।

**अग्निवल्ली ।** स्त्री । लताविशेषे । र.सा.सं. अ-भिन्यासज्व. स्वच्छन्दनायकरसे ।

**अग्निवाहः (हुः) ।** पुं । धूमे । हे.च.४का. ।

**अग्निविकारः ।** पुं । तन्नामकरोगभेदे । स चतुर्भेदः । शार्ङ्ग.पू.७अ. । See अग्निः ।

**अग्निविवर्द्धनः ।** त्रि । यमान्यादौ ।

**अग्निविसर्पः ।** पुं । See अग्निवीसर्प ।

**अग्निवीजम् ।** क्ली । सुवर्णे । त्रिका. ।

**अग्निवीजः ।** पुं । अग्निमन्थे ।

**अग्निवीर्य्यम् ।** क्ली । स्वर्णे । रा. नि. व. ३ ।

**अग्निवीसर्पः ।** पुं।(Pain from a boil.) विसर्पभेदे—यत्र सर्व्वाङ्गं दीप्ताङ्गाराकीर्णमिव भवति, शरीरे च यं यं देशं प्रति चलति स स देशः शान्ताङ्गारवदसितो नीलो रक्तो वा भवति । तथा झटिति अग्निदग्ध इव स्फोटैराचितो भवति। अङ्गव्यथा संज्ञानाशः निद्रानाशश्च भवति। लक्षणं—वातपित्तज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः । अस्थिभेदाग्निसदनतमकारोचकैर्युतः । करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् । यं यं देशं विसर्पश्च विसर्पति भवेत्तु सः। शान्ताङ्गारासितो नीलो रक्तो वाशु च∽चीयते । अग्निदग्धइव स्फोटैः शीघ्रगत्वाद्द्रुतञ्च सः । मर्म्मानुसारी वीसर्पः स्याद्वातोऽतिवलस्ततः । व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत् । हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना। क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु । चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् । दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते॥वा.नि.१३अ.।

**अग्निवृद्धिः ।** स्त्री । अग्निदीप्तौ । क्षुधावृद्धि ।

**अग्निशिखम् ।** क्ली । सुवर्णे । रा.नि.व.१३ । Safflower (Carthamus tinctorius) कुसुम्भपुष्पे । कुसुमफूल । Saffron (Crocus sativus) कुङ्कुमे । भा.पू.१भ. । मद.व. ३ ।

**अग्निशिखः ।** पुं । कुंकुमवृक्षे । কুঙ্কুমগাছ । रा.नि.व.१२ । लाङ्गलिकावृक्षे । বিষলাঙ্গলিয়া গাছ । रत्ना. । कुसुम्भवृक्षे । কুসুম গাছ । श.र.। पूतिकरञ्जे । নাটা । शरवृक्षे । ওল গাছ । प.मु. ।

**अग्निशिखा ।** स्त्री । (Gloriosa superba). लाङ्गलिकौषधौ । বিষলাঙ্গলিয়া । हिं कलिहारी । भा.पू.१भ.गु.व. ।

**अग्निशेखरम् ।** क्ली. पुं । कुङ्कुमे । रा. नि. व.१२ । कुसुम्भपुष्पे । लाङ्गलीवृक्षे । विशल्यानामशाकभेदे । [२९अ. ।

**अग्निष्टोमः ।** पुं । सोमलतायाम् । सु. चि.

**अग्निसंस्कारः ।** पुं । अग्निदाहकर्म्मणि ।

**अग्निसंस्पर्शा ।** स्त्री । पर्पटीनाम-सुगन्धद्रव्ये । सा च उत्तरदेशे प्रसिद्धा । भा.पू. १भ.क.व. ।

**अग्निसन्दीपनः ।** त्रि । अग्निवर्द्धके । क्षुधा-वर्द्धक । Increasing appetite.

**अग्निसन्दीपनरसः ।** पुं। अग्निमान्द्ये रसः। यथा—पञ्चकोलं मरिचं, पञ्चलवणं, यवक्षारः, टङ्कणं, सर्जिक्षारः, जीरकं, कृष्णजीरकं, यमानी, वचा, मधुरिका, हिङ्गु, चित्रकं, जातीफलं, कुष्ठं, जातीकोषः, त्रिजातकं, तिन्तिडीलम्लम्, अपामार्गभस्म, विषं, गन्धकं, पारदः, अभ्रं, लौहं, वङ्गं, लवङ्गं, हरीतकी चैतेषां प्रत्येकमेकैको भागः अम्लवेतसस्य १भ. शङ्खभस्मनश्च ४भ.। भैष. ।

**अग्निसम्भवः ।** पुं । (Wild saffron) अरण्यकुसुम्भवृक्षे। বনকুসুম । रा.नि.व.४। अग्निजारवृक्षे । रा.नि.व ६ ।

**अग्निसहायः ।** पुं । वन्यपारावते । घुघु । মং ঘুগলা পক্ষী । रा.नि.व.१९ । वायौ ।

**अग्निसादः ।** पुं । अग्निमान्द्ये । मन्दाग्नि । शा.कौ.ज्व.चि. । [अर्शः चि. ।

**अग्निसाध्यः ।** त्रि । अग्निदाहसाध्ये । च.द.

**अग्निसारम् ।** क्ली । (A sort of collyri-

um.) रसोञ्जने। रा.नि.व.१२।

**अग्निसारा।** स्त्री। फलशून्यशाखायाम्। रा. नि.व.२। मञ्जिष्ठायाम्।

**अग्निसुन्दररसः।** पुं। अजीर्णाधिकारे रसः। यथा—टङ्कणं भागमेकञ्च मरिचञ्च द्विभागिकम्। आर्द्रकस्य रसेनैव भावना चात्र दीयते॥ अनु लवङ्गम्। प्रयोगा.।

**अग्निसेवनम्।** क्ली। अग्निसेवायाम्। আগুন পোওয়ান। गुणाः—शीतवातस्तम्भकफवेपथुघ्नं रक्तपित्तकरम् आमाभिष्यन्दपाचनञ्च। मद.१२व.।

**अग्निहानिः।** पुं। अग्निमान्द्ये। वा.नि १२अ.।

**अग्न्या।** स्त्री। तित्तिरपक्षिणि। गवि। हला.।

**अग्न्याशयः।** पुं। पक्वाशये। পাকাশয়।

**अग्रम्।** क्ली। पलपरिमाणे। "परिमाणे पलस्य च"। मे.रद्विकं। इत्याद्यग्रे।

**अग्रकाण्डः।** पुं। काण्डाग्रे।

**अग्रजः।** पुं। काकविशेषे। भासपक्षिणि।

**अग्रजङ्घा।** स्त्री। The fore part of the leg. जङ्घाग्रभागे। हे.च.। [জঙ্ঘা।

**अग्रधान्यम्।** क्ली। धान्यविशेषे। জনার। वा-

**अग्रपर्णी।** स्त्री। A plant cowhage. शूकशिम्ब्याम्। আলাকুশী। प.मु.।See आत्मगुप्ता।

**अग्रपाणिः।** पुं। हस्ताग्रे।

**अग्रपुष्पः।** पुं। वेतसवृक्षे। বেতগাছ। प.मु.।

**अग्रमांसम्।** क्ली। The heart. हृदये। वुक्कायाम्। हृदयान्तर्गतमांसवृद्धिरूपरोगविशेषे। অগ্রমাস। सु.श्रा.।

**अग्रलोध्रः।** पुं। चिञ्चोटकक्षुपे। চেঁচ্কো, চিঙ্কোড়মূল। गुणाः—गुरुपाकः,शीतलः, अजीर्णकरश्च। राज.। [७।

**अग्रलोहिता।** स्त्री। चिल्लीशाके। रा.नि.व.

**अग्रवीजः।** पुं। वीजाग्रवृद्धमाने। यथा कुरण्टादिः। हे.च.। A viviparous plant as the Gomphroena globosa &c.

**अग्रव्रीहिः।** स्त्री। प्रसाधिकायाम्। নবান্ন ধান। र.मा.।

**अग्रहायणः।** पुं। मार्गशीर्षमासे। অগ্রহান মাস। [गौड़े। म.च.।

**अग्रिमा।** स्त्री। लवलीवृक्षे। লোণা গাছ इति

**अग्रुः।** स्त्री। अङ्गुली। আঙুল।

**अग्र्या।** स्त्री। त्रिफलायाम्।

**अघनम्।** क्ली। दधनि। দই। हला.।

**अघविषः।** पुं। सर्पे।

**अघोरनृसिंहरसः।** पुं। सान्निपातिकज्वरे रसः। See घोरनृसिंहरसः।

**अङ्कः।** पुं। शरीरावयवे। কোল। रा. नि. व. १८। वा.चि.७अ.। चिह्ने, रेखायाम्। पापे। दुःखे। मे.कद्विकम्। [प.मु.।

**अङ्कनः।** पुं। अङ्कोटवृक्षे। আঁকোড় গাছ।

**अङ्कपादम्।** क्ली। छागेषाद्यवयवविशेषे। वा. मू.१९अ.।

**अङ्कपाली।** स्त्री। धात्र्याम्। ধাত্রী। वेदिकाख्यगन्धद्रव्यविशेषे। "धात्रीवेदिकयोरपि।" मे. लचतुष्कं। आलिङ्गने। मे.।

**अङ्कलोध्यः।** पुं। चिञ्चोडवृक्षे। চেঁচ্কোমূল।

**अङ्कलोध्रः।** पुं। चिञ्चोटकक्षुपे। চেঁচ্কো। See अग्रलोध्रः।

**अङ्कुरः।** पुं। प्ररोहे। পোঁক। वा.उ.३६अ.। जले। रुधिरे। लोम्नि। मुकुले। फले। सर्व्वञ्च मे. रत्रिकं। अभिनवोद्भिदि। मे.।

**अङ्कुशः।** पुं। सृणौ। ডাঙশ। हला.।

**अङ्कूरः।** पुं। अङ्कुरे। हे.च.४का.।

**अङ्कोटः(ठः)।** पुं। अङ्कोटकवृक्षे। र.मा.। (सु.सि.अ.३६)। भा.पू.१भ.गु.व.।

**अङ्कोटकः।** पुं।(Alangium Hexapetalum) स्वनामख्यातवृक्षे। আঁকোড় গাছ, ধলা আঁকোঁড়। हिं ढेरा। भा.। रा.नि.व.९। अस्य गुणाः—कटुः, तीक्ष्णः, स्निग्धः, उष्णः, तुवरः, लघुः रेचनः, क्रिमिशूलामशोफश्लेष्मविषघ्नश्च। तत्फलगुणाः—शीतलं, स्वादु, श्लेष्मलं, बृंहणं, गुरु, बल्यं, विरेचनं, वातपित्तदाहक्षयास्रजित्। मद.व. १। विषलूतादिदोषघ्नम् वातकफहरः ग्रन्थिकृच्च। रा.

नि.व. ६ । च.द.अ.सा.चि. ।

**अङ्कोठवटकः** । पुं । रक्तातिसारे देय-वटके । यथा—पलमङ्कोठमूलस्य पाठा दार्व्वीञ्च तत् समाम् । पिष्टा तण्डुलतोयेन वटकानचसम्मितान् ॥ छायाशुष्कांश्च तान् कुर्य्यात् तेष्वेकं तण्डुलाम्बुना । पेषयित्वा प्रदद्यात्तं पानाय ॥ भा.म.ख. ।

**अङ्कोलः** । पुं । अङ्कोटकवृत्ते । আঁকোড়গাছ । रत्ना. । भा.म.ख.१भ.अतिसा.चि.। "अङ्कोलमूलकल्कः ।" वा.उ.३८अ. ।

**अङ्कोलकः** । पुं । अङ्कोटवृत्ते । কাঁকরোল । ওকড়া इति च र.सा.सं. ।

**अङ्कोलफलसञ्ज्ञाशः** । पुं । फलविशेषे । পেস্তা इति लोके ।

**अङ्कोलतैलम्** । क्ली । तन्नामकफलवीजतैले । আঁকোড়বীজের তৈল । गुणाः—"अङ्कोलतैलं वातघ्नमभ्यङ्गात्त्वग्रुजापहं । कफनाशकरं प्रोक्तं पूर्व्ववैद्यैर्महर्षिभिः ॥" वै.निघ. ।

**अङ्कोल्लः** । पुं । देवदारुणि । रा.नि.व.२३। वा.उ.३८अ. । [मद.व १ ।

**अङ्कोल्लकः** । पुं। अङ्कोटवृत्ते । আঁকোড়গাছ ।

**अङ्कोल्लसारः** । पुं । मालवप्रसिद्ध-स्थावरविषप्रभेदे । A kind of poison. हे.च.४का. ।

**अङ्गम्** । क्ली । वोले । সুগন্ধ বোল । रा.नि.व. ६ । शरीरे । शरीरावयवे । रा.नि.व १८ । उपसर्जनभूते । हे.च.नानार्थः । [वा.नि १२अ. ।

**अङ्गगौरवम्** । क्ली। शरीरगुरुत्वे । গা ভার ।

**अङ्गग्रहः** । पुं । अङ्गवेदनायाम् । গা ব্যথা । वा.नि.१६अ. ।

**अङ्गग्लानिः** । स्त्री । Langour. देहजाड्ये । শরীরের জড়তা । वा.चि.२२अ. ।

**अङ्गघातः** । पुं । अङ्गाघाते । গায়েলাগা । Bodily pain.

**अङ्गचयः** । पुं। गुदवृषणयोर्मध्यभागे । वै.निघ. ।

**अङ्गचेष्टा** । स्त्री । अङ्गचालने । অঙ্গচালনা । वा.नि.१५अ. ।

**अङ्गजम्** । क्ली । रक्ते । मद्ये । मे.जत्रिकं ।

**अङ्गजः** । पुं। केशे । रोगे । मांसधातौ । मदे । वि. ।

**अङ्गज्वरः** । पुं । राजयक्ष्मणि । যক্ষ্মা রোগ ।

**अङ्गतापः** । पुं । शरीरोष्णतायाम् । গায়ের তাপ ।

**अङ्गदरणम्** । क्ली । पित्तजन्यपीड़ायाम् ।

**अङ्गदाहः** । पुं । गात्रदाहे । গা জ্বালা ।

**अङ्गना** । स्त्री। नार्य्यां। मे.नत्रिकं। प्रियङ्गौ । भा.।

**अङ्गनाप्रियः** । पुं । अशोकतरौ । र.मा. । द्रुमोत्पले । ওলট্ কম্বল । प.मु. ।

**अङ्गनाप्रिया** । स्त्री । प्रियङ्गुनामगन्धद्रव्ये । भा.पू.१भ.क.व. ।

**अङ्गपाकता** । स्त्री । पित्तजन्यरोगे । পাকা ফোঁড়ার ন্যায় গাত্র বেদনা ।

**अङ्गपीड़ा** । स्त्री । वायुजन्यरोगे । গা ব্যথা ।

**अङ्गपूजितः** । पुं । अश्वतरे । मद. व. १२ ।

**अङ्गप्रसारणम्** । क्ली । कायविस्तारे । গা হাত মেলান । वा.नि.४अ. ।

**अङ्गवली** । स्त्री । त्रिवली । বড় ।

**अङ्गभङ्गः** । पुं । शरीरस्य भङ्गे । গা ভাঙা । वा.उ.२अ. । गुदवृषणयोर्मध्यभागे । रोगे । वायुरोगे ।

**अङ्गभेदः** । पुं। वायुरोगे । বায়ুজন্য গাত্রভঙ্গ ।

**अङ्गमर्द्दः** । पुं । गात्रवेदनायाम् । वा.सू.४अ. ।

**अङ्गमर्द्दनम्** । क्ली। गात्रपीटने। গা কুটনো ।

**अङ्गमेजयत्वम्** । क्ली। अङ्गकम्पने। গা কাঁপা।

**अङ्गरक्तः** । पुं । कम्पिल्लके । কমলা গুঁড়ি । अम. । [मादि । গাত্ররঞ্জন দ্রব্য ।

**अङ्गरागः** । पुं । अङ्गलेपनद्रव्ये । यथा—कुंकु-

**अङ्गरुहम्** । क्ली । रोमणि । লোম ।

**अङ्गरुहा** । स्त्री । लोम्नि । केशे । চুল ।

**अङ्गलाघवम्** । क्ली । कायलघुत्वे । গা হাল্কি । वा.उ.१८अ. ।

**अङ्गलेपः** । पुं । चन्दनादिद्रव्ये ।

**अङ्गलोद्यः** । पुं । Ginger (Amomum zinziber). आर्द्रके । আদা । त्रिकोटवृक्षे ।

**अङ्गवः** । पुं । शुष्कफले । शुष्कफल । श.च. ।

**अङ्गवलोथा** । स्त्री । श्वेतयमान्याम् । यओयान ।

**अङ्गविकृतिः** । पुं। Apoplexy. अपस्मार-रोगे । रा.नि.व.२० । [गे । भा. ।

**अङ्गविभ्रंशः** । पुं । कायशैथिल्यरूपवायुजरो-

**अङ्गविक्षेपः** । पुं । अङ्गहारे । अङ्गचालने । वा.उ.२ अ. ।

**अङ्गशूलम्** । क्ली । गात्रतोदे । गा शूलन ।

**अङ्गशोथः** । पुं । कायशोफे । गात्र फोला ।

**अङ्गशोषः** । पुं । वायुजरोगे । [वा.उ.२अ.।

**अङ्गशोषणम्** । क्ली । अङ्गस्य शुष्कतायाम् ।

**अङ्गसङ्गम्** । क्ली । मैथुने । [१२ अ. ।

**अङ्गसदनम्** । क्ली । शरीरावसादे । वा. नि.

**अङ्गसादः** । पुं । अवसादे । हारा. ।

**अङ्गसुन्दरः** । पुं । दद्रुघ्नरसे । दादमर्द्दन । अम. ।

**अङ्गसुप्तिः** । स्त्री । कायस्पर्शाज्ञतायाम् । शरी-रस्वापे । गात्रेर असाड़ता । [रवा. ।

**अङ्गसेनः** । पुं । अगस्तिद्रुमे । बाकस गाछ ।

**अङ्गहर्षः** । पुं । रोमाञ्चे । वा.नि. २ अ. ।

**अङ्गहारः** । पुं । अङ्गचालने ।

**अङ्गहीनः** । त्रि । विकलाङ्गे, काणादौ ।

**अङ्गारः** । पुं । निर्धूमाग्निपिण्डे । आङ्गार । "दग्धतः काष्ठसम्भूतोऽङ्गारः ।" वा.सू. ६अ. अरु-णः । अङ्गारपूर्णपात्रे । हेमा. । कुरुण्टकवृक्षे । झाँटीविशेष । पीतवर्ण अम्लान वृक्ष । रवा. ।

**अङ्गारकः** । पुं । Yellow or white amaranth. कुरुण्टके । झाँटीजाति । अङ्गारे । आङ्गार । मै.कचतुष्कं । भृङ्गराजे । भीमराज । रा.नि.व.४ । भा.पू.१भ.गु.व. ।

**अङ्गारकतैलम्** । क्ली । स्वनामख्यातविषमज्व-रघ्नतैलविशेषे । यथा—मूर्व्वा लाक्षाहरिद्रे द्वे म-ञ्जिष्ठा सेन्द्रवारुणी । बृहती सैन्धवं कुष्ठं बला मां-सी शतावरी । आरनालाढ़केनैव तैलप्रस्थं विपाच-येत् । तैलमङ्गारकं नाम सर्व्वज्वरविमोक्षणम् ॥ इति रस.र. । पाकप्रकारः—तिलतैलं ४ श. मू-र्व्वादि ४१ श. । काञ्जिकं १६श. । प्रथमं काञ्जिकेन पक्त्वा पश्चात् कल्कद्रव्यञ्च पक्त्वा समापयेत् । च.द. । इन्द्रवारुणी = राखाल शशामूल । अन्यत् शत्रशोषे द्दितम् । मूर्च्छिततिलतैलं ४ श. वर्व्वरी = बाबुई-तुलसी १२॥ श.वारि ६४ श.पादशिष्टक्वाथेन वर्व्व-र्य्यादीनां १श.कल्केन समं पाच्यम् । च.द.शत्रशो.चि. । मीक्षिका = मक्षिका । [नि.व.१३ ।

**अङ्गारकमणिः** । पुं । Coral. प्रवाले । रा.

**अङ्गारकर्कटी** । स्त्री । रोटिकायाम् । रुटी । अगाकड़ी रोटी लिटी इति हिन्दी । यथा—शुष्क-गोधूमचूर्णन्तु साम्बु गाढ़ं विमर्द्दयेत् । विधाय वट-काकारं निर्धूमेऽग्नौ शनैः पचेत् ॥ अङ्गारकर्कटी ह्येषा बृंहणी शुक्रला लघुः । दीपनी कफकृद्बल्या पीनसश्वासकासजित् ॥ वैद्य.नि. । भा. ।

**अङ्गारकुष्ठका** । स्त्री । हिंसावल्याम् ।

**अङ्गारधूपः** । पुं । अङ्गारेण यो धूपः हिङ्गु-दिना प्रसिद्धः । वा.चि.८ अ. ।

**अङ्गारपरिपाचितम्** । क्ली । (Roasted food.) शूलादिपक्वमांसे । त्रि । अङ्गारपक्वे ।

**अङ्गारपर्णी** । स्त्री।भार्गी।बामणहाटी।र.सा.सं.।

**अङ्गार(क)पुष्पः** । पुं । (Ingua.) जीवपुत्र-द्रुमे । इङ्गुदी । जियापुता इति लोके । श.र. ।

**अङ्गारपूरिका** । स्त्री । रोटके । रुटी ।

**अङ्गारमञ्जरी**, **अङ्गारमञ्जी** } स्त्री। A species of Bonduc or Bonducella. करञ्जविशेषे । श.र. । महा-करञ्जे । डहर करञ्ज । रा.नि.व.९ ।

**अङ्गारमणिः** । पुं । प्रवाले ।

**अङ्गारवर्णी** । स्त्री । भार्ग्याम् । बामणहाटी ।

**अङ्गारवल्लरी** । स्त्री । (Ovieda verticallata.) करञ्जविशेषे । नाटाकरञ्जा इति भाषा ।

**अङ्गारवल्ली** । स्त्री । महाकरञ्जे,रक्तकरञ्जे च । भार्ग्याम् । वा.सू.१५ अ. । सुरसादि । भा.पू.१भ. । गुञ्जायाम् । कुँच । भा.पू.अने.व. । कटुकरञ्जे । करञ्जवल्लयाम् । रक्तगुञ्जायाम् । भा.पू.१भ.गु.व. ।

**अङ्गारवृक्षः** । पुं । इङ्गुदीवृक्षे । भा.पू. १भ. वटा. । रवा. । पूतञ्जिया इति च ।

**अङ्गारवेणुः** । पुं । रक्तवर्णवंशविशेषे ।

**अङ्गारशकटी** । स्त्री । चुल्ल्याम् चुलो ।

**अङ्गारा** । स्त्री । छित्नावल्याम् । इङ्गुदीवृचे । प.मु. । जियापुता ।

**अङ्गारिका** । स्त्री । The stalk of the sugarcane. इच्चुकाण्डे। आकगाछ । (Butea frondosa.) किंशुककोरके । পলাশকলি । मे. कचतुष्कं ।

**अङ्गारितम्** । क्ली । The early blossom of किंशुक । पलाशकलिकोद्गमे । ছারা।

**अङ्गारिता** । स्त्री । लतामात्रे । चुल्ल्याम् । मे. तचतुष्कं ।

**अङ्गिरः** । पुं । तित्तिरपक्षिणि ।

**अङ्गुणः** । पुं । वार्त्ताकौ । বেগুন । श.र. ।

**अङ्गुरिः(री)** । स्त्री । अङ्गुल्यां । पाणिपादाङ्गुल्याम्। হাত পায়ের আঙুল । श.टी. ।

**अङ्गुलः** / **अङ्गुलिः** } पुं, स्त्री । The thumb. करपादयोः शाखायां । আঙুল। गजकर्णिकावृचे। হাতিশুঁড়ে । करिशुण्डाग्रभागे । हे.च. । वृद्धाङ्गुष्ठे । ज. । रा.नि.व.१८ । अथाङ्गुष्ठप्रदेशिन्यौ मध्यमानामिका तथा । कनिष्ठा चेति पञ्च स्युः क्रमेणाङ्गुलयः स्मृताः ॥ रा.नि.व.१८ ।

**अङ्गुलिकण्टकः** । पुं । नखे ।

**अङ्गुलित्राणकम्** । क्ली । तन्नामकयन्त्रे । আঙুটা । वा.सू.२५श. ।

**अङ्गुलिपञ्चकम्** । क्ली । कराङ्गुलिपञ्चकं— यथा, अङ्गुष्ठतर्ज्जनीमध्यमानामिकाकनिष्ठम् ।

**अङ्गुलिपर्व्व** । क्ली । अङ्गुलिग्रन्थौ ।

**अङ्गुलिफला** । स्त्री । श्वेतनिष्पावे । रा.नि. ।

**अङ्गुलिमानम्** । क्ली । अङ्गुल्या योजनपर्य्यन्तमाने । ८ यवैः=१अङ्गुलिः । २४ अङ्गुलिभिः=१ हस्तः । ४ हस्तैः=१ दण्डः । २००० दण्डैः=१ क्रोशः । ४ क्रोशैः=१ योजनम् । इति । [का. ।

**अङ्गुलिमोटनम्** । अङ्गुलिमर्द्दनजशब्दे । वि-

**अङ्गुलिसंज्ञा** । स्त्री । यवान्वां । যাউ । [१८ ।

**अङ्गुलिसम्भूतः** । पुं । नखे । নখ । रा.नि.व.

**अङ्गुली** । स्त्री । गजकर्णिकायाम् । मे.लचिकं ।

**अङ्गुषः** । पुं । नकुले । নেউল । बाणे । তীর ।

**अङ्गुष्ठः** । पुं । वृद्धाङ्गुलौ । বুড়ো আঙুল । रा. नि.व.१८।१ । [म्लालजी ।

**अङ्घ्रालजी** । स्त्री । अम्लालजीरोगे । See अ-

**अङ्घ्रिः** । पुं । द्रुममूले । रा.नि.व.१ । अम. । पादे । रा.नि.व.१८ ।

**अङ्घ्रिग्रन्थिकम्** । क्ली । पिप्पलीमूले ।

**अङ्घ्रिजिह्वकः** । पुं । दमनकवृचे ।

**अङ्घ्रिनामकः(नामन्)** । पुं। दमनकवृचे । वृचमूले । रा.नि.व.२ । अम. ।

**अङ्घ्रिपः** । पुं । वृचे । रा.नि.व.२ । हला. ।

**अङ्घ्रिपर्णिका** / **अङ्घ्रिपर्णी** } स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । भा.पू.१.गु.व. ।

**अङ्घ्रिवला** । स्त्री । पृश्निपर्ण्याम् ।

**अङ्घ्रिवल्लिः(का)** / **अङ्घ्रिवल्ली** } स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । श.टी.र. ।

**अङ्घ्रिषः** । पुं तन्नामकतालुरोगे। See अध्रुषः।

**अङ्घ्रिसन्धिः** । पुं । पादगुल्फे । [हे.च. ।

**अङ्घ्रिस्कन्धः** । पुं। गुल्फे । পায়ের গোড়ালি।

**अङ्घ्रुः** । पुं । पादगुल्फे ।

**अचरणा** । स्त्री । योनिव्यापद्विशेषे, यत्र योनिः प्रथममेव मैथुनाद्विरता बीजं न गृह्णाति । एवमतिचरणापि योनिरतिमैथुनात् न बीजं गृह्णाति । मैथुनात् पूर्व्वमेव रजोनिःसारणात् अचरणातिचरणयोः वीर्य्यं नावस्थितं भवतीति केचित् । लचणम्--मैथुनेऽचरणा पूर्व्वं पुरुषादतिरिच्यते । बहुशश्चातिचरणा तयोर्बीजं न विन्दति । मा.नि. ।

**अचलत्विट्** । पुं । कोकिले । श.च. ।

**अचिकित्स्यः** । त्रि । चिकित्सितुमशक्ये ।

**अचिकुरः** । पुं । खालित्ये । টাক্ ।

**अचिन्त्यजः** । पुं । पारदे । रा.नि.व. १३ ।

**अचिन्त्यशक्तिरसः** । पुं । रसोऽयं नवज्वरे व्यवहेयः । अस्य मात्रा रक्तिद्वयम् । अथानुपानं

धान्यपिप्पलीक्काथ: । रसोऽयं वज्रमुषायां बालुकायन्त्रेण लघुपुटे पाच्य: । अत्र पारदादिस्वर्णपर्य्यन्तानामेकैको भाग:, लौहस्यार्द्धो भाग:, लौहार्द्धं वैक्रान्तं । द्रव्यसमुदायं भृङ्गराजरसेन संमर्द्य पर्पटीवत् पचेत् । ततो भावनाद्रव्याणां प्रत्येकं भावनाचितयं दत्त्वा पचेत् । रस: गन्धक: प्र. १ मा. कज्जली कार्य्या । अथ भृङ्गराज-केशराज-निर्गुण्डी (निशिन्दा), मण्डूकी (थुलकुड़ि), ग्रीष्मसुन्दरक: (गिमा),अपराजितामूलं, शालिञ्च:, कालमारिष: (काँटानटे),सूर्य्यावर्त्तश्चेति द्रव्याणि । एषां प्र.रसं ४ मा. तेन मिश्रयित्वा पश्चात् स्वर्णमाक्षिकं १मा. मरिचचूर्णं १ मा. दत्त्वा च मुद्गाभा वटी कार्य्या । भैष.ज्व.चि. ।

**अचिन्त्यात्मा** । पुं । परमात्मनि ।

**अचिरपल्लव:** । पुं । सप्तपर्णवृक्षे । प.मु.।

**अचेतन:** । त्रि । जड़े । सेन्द्रियं चेतनद्रव्यं निरिन्द्रियमचेतनम् । च. ।

**अचैतन्य:** । त्रि । चैतन्यरहिते । [कम् ।

**अच्छ:** । पुं । गुन्द्रे । भल्लूके । स्फटिके । मे.छद्वि-

**अच्छभल्ल(ल्लुक:)** । पुं । भल्लूके । ভালুক । रा.नि.व.१९ । रत्ना. ।

**अच्छन्टिका** । स्त्री । वान्ती । रा.नि.व.२० ।

**अच्छल:** । पुं । तिलकल्के ।

**अच्छिन्नपत्र:** । पुं । शाखोटवृक्षे । শেওড়া গাছ । युक्तपत्त्रवृक्षमात्रे ।

**अच्छुक:** । पुं । तन्नामकरञ्जनपुष्पवृक्षे । আচ ফুলেরগাছ । तिनिशवृक्षे । प.मु.। [उदुम्बरवृक्षे ।

**अच्युतावास:** । पुं । अश्वत्थवृक्षे । रा.नि.व.११।

**अज:** । पुं । छागे । भा.पू. । स्वर्णमाक्षिके । वै.च.। तन्नामकौषधिविशेषे, अजशृङ्गीतिख्याते । अजनामकौषधिरजशृङ्गीति विज्ञायते । च.चि.१अ.।

**अजकर्ण:** } **अजकर्णक:** } पुं । छागकर्णवत्पत्रशालतरुविशेषे । असन इति र.मा. । बालसर्ज इति रत्ना.। पीतशाल इति च भाषा प्रसिद्धे । আসনা, পিয়াশাল । हिं आसन् । गुणा:—कटुतिक्तकषाय: उष्णवीर्य्य: कफपाण्डुकर्णरोगप्रमेहकुष्ठविषव्रणघ्न । भा.पू.१भा.वटा.व. । सर्जवृक्षे ।

रा.नि.व.९ । महासर्जतरौ शालभेद एव । सु.सू. अ.३८,५गण: ड. ।

**अजका** । स्त्री । अजागलस्तने । छागपुरीषे । तन्नामकक्रष्णगतशोणितजनेत्ररोगविशेषे । आताम्रपिच्छिलास्रहृदाताम्रपिटिकातिरुक्। अजाविट्सदृशीच्छायकाख्याविर्ज्यासृजाजका । वा.उ.१०अ.।

**अजकाजातम्** । क्ली। नेत्रतारकागतरोगविशेषे । तस्यास्तु व्यथा, रक्तता, पूयस्रावश्च नेत्रयोर्भवति । लक्षणं —अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्र: । विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् ॥ मा.नि. ।

**अजकेशी** । स्त्री । नीलीवृक्षे । वै.निघ. ।

**अजगन्धा** } **अजगन्धिका** } स्त्री । वनयमान्याम्। चैत्रयमान्यां अम.।रत्ना.। वनयमानी । (Ocymum gratissimum.) गुणा:—कटु: तीक्ष्णा रुचा हृद्या अग्निवर्द्धनी दृष्टिक्रासकरी लघु: शुक्रवातकफघ्नी च । मद.व.१। वनतुलस्यां । বনতুলসী । हिं ववरी, ववइ । तिलोणि । मद.। मं रानतुलस, तिलवण । रा.नि.व.४ । गुणा:—लघु: रुचा हृद्या वातकफघ्नी च । मद.व.१ । वनयमान्यां । च.द.वि.ज्व.। "नीलिनीमजगन्धाञ्च ।" फोकान्दी, वनयमानीति । च.सू.४अ· च.सू.२शिरो. वि. । वा.चि.१५अ. । उ.२२अ. ।

**अजगन्धिनी** । स्त्री । मेषशृङ्ग्याम् । গাড়ল শিঙে । र.मा. ।

**अजगर:** । पुं । (Boa constrictor.) सर्पविशेषे। मद.१२।१०६। विलेशयमृगविशेषे । अयमर्शसि हित: । सु.सू.४६अ. ।

**अजगल्लिका** } **अजगल्ली** } स्त्री । बर्बरीवृक्षे । বাবুই তুলসী । भा.पू.१भ.पु. । क्षुद्ररोगान्तर्गतबालरोगविशेषे । स च कफवातजन्यो भवतीति । वा.उ.३१अ. । स्निग्धा: स्ववर्णा: ग्रथिता नीरुजा मुद्गसन्निभा: । पिटिका: कफवाताभ्यां बालानामजगल्लिका ॥ मा.नि.क्षुद्ररो. ।

**अजघोष:** । पुं । त्रयोदशविधसन्निपातज्वरान्तर्गतसन्निपातज्वरे । लक्षणं —छगलकसमानगन्ध: लाम्बरुजावान्निरुद्धगलरन्ध्र: । अजघोषसन्निपातादातायाच: पुमान् भवति ॥ भा.म.१भ. ।

**अजटा** । स्त्री।(Flacourtia cataphracta.)

भूम्यामलक्याम्। भुँई आम्ला। रसे.चि.अर्श:-अग्निमुख-लौहे।

**अजड़ा**। स्त्री। भूम्यामलक्याम्। कपिकच्छौ। आलाकुशी, शुयाशुया। भा.पू.गु.व.। कृमरिचे। लङ्कामरिच। अचि.।

**अजड़ाफलम्**। क्ली। शूकशिम्बीफले। आलाकुशी फल। च.चि.२अ. वृष्यक्षीरे।

**अजथ्या**। स्त्री। A plant, (Yellow jasmin.) स्वर्णयूथिकायाम्। छागसमूहे।

**अजदण्डी**। ब्रह्मदण्डीवृक्षे।

**अजनामकम्**। क्ली। माचिके। है.च.।

**अजन्तजग्ध:**। त्रि। अकीटभक्षिते। च.द. अ.सा.चि.कुटजपुटपाके.। [भा.पू.१भ.फ.व.।

**अजप्रिया**। स्त्री। वदरीवृक्षे। कुल गाछ।

**अजबला**। स्त्री। कृष्णतुलस्याम्। कालतुलसी।

**अजभक्ष:**। पुं। वर्बुरीवृक्षे। बाबुई, बावर। रा.नि.। (क्षा) क्षुद्रदुरालभायां। रा.नि.व.४।

**अजमल:**। पुं। गोधूमे। गम्। प.मु.।

**अजमांसम्**। क्ली। छागमांसे। See छागमांसम्। वा.सू.६अ.।

**अजमोद:**। पुं। दीप्यके। वा.सू.३५अ. वत्सकादिव.। "कटुङ्गफलाजमोद:।"

**अजमोदाख्या**। स्त्री। वनयमान्यां। चेत्रयमान्यां। र.मा.। वृहन्नवङ्गादिचूर्णे। यमान्यां। रा.नि.।

**अजमोदा(दिका)**। स्त्री। (Pimpinella Involucrata, Ligusticum ajwaen; Syn. Apium involucratum.) स्वनामख्यातपण्यद्रव्ये। राधुनी। हिं अजमद। अजमोदा इति महाराष्ट्रकर्णाटयो: प्रसिद्धा। तें वामं। गुणा: —कटुरुष्णा रूक्षा कफवातघ्नी रुच्या शूलाध्मानारोचकजठरनाशिनी च। रा.नि.व.६। कटु: तीक्ष्णा दीपनी वातकफघ्नी उष्णा विदाहिनी हृद्या वृष्या बलमला लघु: नेत्ररोगकृमिच्छर्दिहिक्कावस्तिरुजापहा च। मद.व.२। कटु:, तीक्ष्णा, आग्नेया, वातकफघ्नी, उष्णा, विदाहिनी, शुक्रवर्द्धनी, बल्या, लघु:, नेत्ररोगकृमिवमिहिक्कावस्तिशूलघ्नी च। भा. पू.१भ.ह.व.। सि.यो.अग्निमान्द्य-चि.। "क्विाटुकाजमोदा।" यक्ष-चि.एलादिमन्थे। तथा ग्रहणी चि.चित्रक गुडे। च.सू.४अ.४५दश। वनयमान्यां। यमान्याम्। सु.सू.३८अ.पि.व.। ड.। च.संग्रहणी-चि. चित्रकाद्यगुड़िकायां। महाषट्पलकघृते। ग्रहणी-कल्याणगुड़े।

**अजमोदाद्यवटक:**। पुं। आमवाते हित:। अत्र यमान्यादिचूर्णं प्रत्येकं १ पलं, गुडूच्या: १० पलानि, वृद्धदारकस्य १० पलानि, हरीतक्या: ५ पलानि, सर्व्वचूर्णसमं गुड़ं दत्त्वा एकत्र विमिश्रयेत्। च.द.आ.वा.चि.।

**अजम्भ:**। पुं। भेके। श.र.।

**अजया**। स्त्री। विजयायाम्। भङ्गा सिद्धिरिति भाषा। रा नि.। [रहिते।

**अजरम्**। क्ली। स्वर्णे। रा.नि.व.१३। त्रि.। जरा-

**अजरकम्**। क्ली। अजीर्णे। सि.यो.कास चि. वृन्द:। च.द.पाण्डुचि.योगराजे।

**अजरा**। स्त्री। गृहगोधिकायां। टिक्टिकि। जीर्णफञ्जीलतायां। वृद्धदारके। रा.नि.व.७। घृतकुमार्यां। घृतकुमारी। रा.नि.व.५। आत्मगुप्तायाम्। आलाकुशी। भा पू.१भ.गु.व.।

**अजलम्बनम्**। क्ली। यामुनस्रोतोऽञ्जने। श. च.। Antimony.

**अजलोमा(मी)** पुं। शूकशिम्ब्याम्। आलाकुशी। र.मा.। Cowach. See आत्मगुप्ता। महौषधिविशेषे। See औषधि:।

**अजवल्ली**। स्त्री। मेषशृङ्ग्याम्। মেড়াশিঙে।

**अजशृङ्गिका** } **अजशृङ्गी** } स्त्री। A plant, described as a milky and thorny plant with a front crooked figure like a ram's horn. भा.पू.१भ.गु.व. १७१। মেড়াশিঙে, গাড়লশিঙী, ছাগলবেঁটে इति वङ्गभाषा। तिक्तशाकगणीय-स्वनामख्यातवृक्षे। मं मेषसिंग। कं कुरियमर। रा.नि.व.६। छागलविषाणिका उत्तमारणी सेविकेति। सु.सू.३८अ.। गुणा:—कटु: तिक्ता कफार्श:शूलशोथघ्नी चक्षुष्या श्वासहृद्रोगविषकासकुष्ठघ्नी च। एतत्फलं तिक्तं कटूष्णं कफवातघ्नं जठरानलदीप्तिकृत् हृद्यं रुच्यं लवणरसं अ-म्लरसञ्च। रा.नि.व.६। वातला पाके रूक्षा पित्त-

प्रयत्नेनैवमुलघ्नी। मद.व.१। भा.पू.१भ.गु.व.। कर्कटशृङ्गे, स च पुत्रजीवसदृशस्तवविशेषः। सु.सू. ३७ ऊ.। भा.४भं.रेवतीग्रहचि.। मेषशृङ्गां, कर्कटशृङ्गां वा। सु.सू.३८च.वल्लीपञ्चके। वा.चि.८च। "अजशृङ्गी जटाकल्कम्।" भा.पू.२भ.वनौ.व.।

**अजश्री:।** स्त्री। फटिकारिकायाम्। भा.नि.।

**अजहा।** स्त्री।(Corpopogon pruriens.) शूकशिम्ब्याम्। আলাকুশী। च.टी.।

**अजचीरम्।** क्ली। छागदुग्धे। वा.उ.१६च.। See छागदुग्धं।

**अजचीरनाश:।** पुं। आखोटवृक्षे। শ্যাওড়া গাছ। रा.नि.व.९।

**अजा।** स्त्री। छाग्याम्। तन्नामकमहौषधिविशेषे। सु.चि.३०च.। See औषधिः।

**अजागर:।** पुं। A plant (Eclipta or verbesina prostrata.) भृङ्गराजवृक्षे। ভীমরাজ। श.र.। महासर्पे।

**अजाघृतम्।** क्ली। छागीघृते। गुणाः—अजाघृतञ्च चक्षुष्यं दीपनं बलवर्द्धनं। वृष्यं पाके कटु प्रोक्तं कासश्वासक्षयापहम्। कफार्शोराजयक्ष्माणां नाशनं परमं मतम्॥ वै.निघ.। [व.६।

**अजाजिक:(का)।** पुं। पीतजीरके। रा.नि.

**अजाजी(जि:)।** स्त्री। (Cuminum cyminum.) Cumin seed. जीरके। কালাজীরা। हिं जीरा,कालाजीरा। स्थूलजीरके। বড়জীরে। रा.नि.व.६। च.द.संग्रहणी-चि.ग्रहमुके। काकोदुम्बरिकायाम्। যজ্ঞডুমুর। श्वेतजीरके। भा.पू. १भ.ह.व.। च.द.संग्रहणी-चि.मायामकाञ्जिके। र. सा.सं.माणिक्यरसे। कृष्णजीरके। सि.यो.दिवारात्रिज्वरे ग्रन्दः। "अजाजी गुड़संयुक्ता विषमज्वरनाशिनी।"

**अजातक्रम्।** क्ली। छागीतक्रे। गुणाः—अजातक्रं लघु स्निग्धं दाहगुल्मार्शनाशनं। त्रिदोषशोथग्रहणीपाण्डुरोगहरं परम्॥ वै.निघ.।

**अजातदन्त:।** त्रि। मासषट्कातीतेऽपि यस्य शिशोर्दन्तोद्गमो न भवति।

**अजादनी।** स्त्री। A small species of prickly night-shade. क्षुद्रदुरालभायाम्। रा.नि.व.४।

**अजादुग्धम्।** क्ली।। छागदुग्धे।

**अजानय:** / **अजानेय:** पुं। A horse of good breed. उत्तमाश्वे। जयदत्तः।

**अजान्त्री।** स्त्री। A potherb (Convolvulus argenteus.) नीलवृक्षायाम्। নীলবোনা, ছাগলবেঁটে। रत्ना.। गुणाः—कटुरसा, कासघ्नी, बीजदा, गर्भजननी च। रा.नि.व. ३। वृद्धदारके। रा.नि.व.३।

**अजापक्षम्।** क्ली। पक्वघृतविशेषे।

**अजापञ्चकम्।** क्ली। यक्ष्मरोगे घृतम्। छागघृतं४श.छागविष्ठारसः४श.छागीदुग्धं४श.छागदधि ४श. छागमूत्रं ४श. प्रक्षेपः यवक्षारः ८ पलं यथाविधि पाच्यम्। च.द.यक्ष्म-चि.। भैष.।

**अजापय:।** क्ली। छागदुग्धे। वा.उ.१३च.।

**अजाप्रिया।** स्त्री। बदरीवृक्षे। भा.फ.व.।

**अजामांसम्।** क्ली। छागमांसे। गुणाः—लघु स्निग्धं किञ्चिच्छीतं रुचिप्रदं मधुरं पुष्टिकृत् बल्यं वातपित्तघ्नञ्च। वै.निघ.।

**अजामूत्रम्।** क्ली। छागीमूत्रे। गुणाः—कटु उष्णं रूक्षं नाड़ीविषघ्नं प्लीहोदरकफश्वासगुल्मशोफहरं लघु च। रा.नि.व.१५। वा.उ.२४च.।

**अजामेद:।** क्ली। छागवसायाम्। वा.चि.१च.।

**अजाविट्।** स्त्री। छागविष्ठायाम्। वा.उ.१०च.

**अजाह्वा।** स्त्री। आत्मगुप्तायाम्। আলাকুশী। च.टी.भ.। See अजहा।

**अजाक्षी।** स्त्री। काकोदुम्बरिकायाम्। কাক্‌ডুমুর। मं काला उम्बर। रा.नि व.११।

**अजाक्षीरम्।** क्ली। छागीदुग्धे।

**अजिततैलम्।** क्ली। नेत्ररोगे हितं तैलम्। तिलतैलं षड्शरावकं,मतान्तरे शरावकम्। आमलकीरसः ४श. दुग्धं ४श। कल्कार्थे यष्टिमधु पलमितम्। च.द नेत्ररोग-चि.। अकल्कोऽपि भवेत् स्नेहः यः साध्यः केवले द्रवे। स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित्। स्नेहस्य कुड़वं तत्र पचेत्कल्कपलेन तु॥ इति प.प्र.।

**अजिनम्** । क्ली । मृगचर्म्मणि । अम. ।

**अजिनपत्रा** । स्त्री । A bat. चर्म्मचच्याम् । बाद्ड़ा चाम्‌चिकी इति च लोके । रा.नि.व.१८।

**अजिनपत्रिका** ।स्त्री। चर्म्मचच्याम् । बादुड़, चाम्‌चिकी। हे.च. । पेचके । [रा.नि.व.१८ ।

**अजिनपत्री** । स्त्री। जतुकायाम् । चाम्‌चिकी ।

**अजिनयोनिः** । पुं । An antelope. हरिणे । प.मु. । [नौ । सर्व्वत्र मे.रत्रिकम् ।

**अजिरः** । पुं, क्ली । दर्दुरे । वाते । विषये । त

**अजिह्मः** । पुं । भेके । त्रिका. ।

**अजीगर्त्तः** । पुं । सर्पे ।

**अजीर्णम्** । क्ली । अपाकरोगविशेषे । आमं विदग्धञ्च यत्तदजीर्णम् । भा.म.ख.१भ.अ.सा. । तच्चात्यम्बुपानविषमभोजन वेगविधारण दिवानिद्रा-रात्रिजागरणादिभिःकारणैरुत्पद्यते। उत्पन्ने चाजीर्णरोगे यथासमयं देहानुरूपमपि लघु भोजनं न परिपाकमेति । आदौ तत्त्रिविधम्, आम-विदग्ध-विष्टब्धाजीर्णभेदेन । तथान्नजरसशेषाहाररसज-दिनपाकित्वाद्भेदत्रयमपि कल्पितम् । तेषु कफकोपादामाजीर्णं, पित्तकोपाद्विदग्धाजीर्णं, वायुकोपाच्च विष्टब्धाजीर्णं भवति । रसशेषतया रसशेषाजीर्णम् । माधवः । वा.नि.१२अ. । "गोमांसभक्षको मन्दजठराग्निर्भवेन्नरः । प्राजापत्यं चरेत्कृच्छ्रमतिकृच्छ्रं तथैव च ॥" इत्यादि कर्म्मविपाकः । See अग्निमान्द्यम् ।

**अजीर्णकण्टकरसः** । पुं । रसोऽयं अजीर्णे प्रयोज्यः । रस.र. । र.सा.सं. । सा.कौ. । भा. । भैष. । प्रयोगा. ।

**अजीर्णजरणः** । पुं । कर्चूरे । See कर्चूरः ।

**अजीर्णी** । त्रि । अजीर्णरोगयुक्ते ।

**अजेयः** । पुं । अर्जुनहच्चे । वै.निघ. ।

**अज्झटा** । स्त्री। भूम्यामलक्याम्। भूँई आम्ला। हिं भुइ आम्बरा । भा.पू.१भ.गु.व. ।

**अज्झलः** । पुं । कोकिले ।

**अञ्चकम्** । क्ली । नेत्रे । रा.नि.व.१८ ।

**अञ्जनः** । पुं । गृहगोधिकायाम् । टिक्‌टिकी ।

**अञ्जनम्**
**अञ्जनकर्म्म** } क्ली । Anointing or making clear. नेत्रप्रसाधने । काजल, আজনাই, আজন্ इति भाषा । सुर्म्मा इति पश्चिमदेशे ।"अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं स्मृतम्।" तच्च पञ्चविधम्—"सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् । स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च। नीलाञ्जनञ्चेति।" तेषु सौवीरं धूम्रं रक्तपित्तहरञ्च । रसाञ्जनं विषहिक्काक्षिरोगघ्नं व्रणरोपणशोधनञ्च । स्रोतोऽञ्जनं पीताभं, पुष्पाञ्जनं सितं,नीलाञ्जनञ्च नीलवर्णमिति । वा.। तच्च षड्विधमिति कालिकापुराणे; यथा—"सौवीरं जाम्बलं तुल्यं मयूरं श्रीकरं तथा । दर्व्विका मेघनीलञ्च अञ्जनानि भवन्ति षट् ॥ स्रवद्रूपन्तु सौवीरं जाम्बलं प्रस्तरं तथा । मयूरं श्रीकरं रवं मेघनीलञ्च तैजसम् ॥ घृततैलादियोगेन ताम्रादौ दीपवह्निना । यदञ्जनं जायते तु दर्व्विका परिकीर्त्तिता॥" इति । गुणः—नेत्रनैर्मल्यकारित्वमेव । पुनस्तत्त्रिविधं रसो वटी तथा चूर्णमिति । "यथापूर्व्वं बलं तेषु श्रेष्ठमाहुर्मनीषिणः ॥" इति । तच्च पुनः प्रत्येकं त्रिविधं यथा—"तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा । स्नेहनञ्चेति लिङ्गानि……। लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमुच्यते । नेत्रवर्त्मशिराजालश्रोत्रशृङ्गाटकस्थितं । मुखनासाक्षिभिर्दोषमुत्क्लिश्य स्रावयेच्च तत् ॥ कषायं तिक्तकं चापि सस्नेहं रोपणं मतम् । स्नेहस्य शैत्याद्बल्यं स्याद्दृष्टेश्च बलवर्द्धनं । मधुरं स्नेहमच्छ तदञ्जनं स्यात्प्रसादनम् ॥ दृष्टिदोषप्रसादार्थं स्नेहनार्थञ्च तद्धितं । एरण्डमात्रा वर्त्तिस्तु लेखनी स्यात्प्रमाणतः । सार्द्धैकरेणुकमिता रोपणी वर्त्तिरिष्यते । क्रियते स्नेहनीवर्त्तिर्द्विहरेणुकमात्रया॥ रसाञ्जनस्य मात्रा तु पिष्टा वर्त्तिमिता मता । चूर्णन्तु लेखनं वैद्यैर्द्विशलाकं प्रदीयते । रोपणं त्रिशलाकं स्यात् चतस्रः स्नेहनाञ्जने ॥" हेमन्ते शिशिरे मध्याह्ने ग्रीष्मे शरद्यपराह्णे वर्षासु वसन्ते च सर्व्वदैव काल इति । भा.पू.ख.२भ.। कज्जले । हे.च.।सि.यो.कामलाचि.रक्तपित्तचि.।स्रोतोऽञ्जने । भा. । सु.चि.२५अ. । रसाञ्जने । च.द.अ.सा.चि. प्रियङ्ग्वादिः । रक्तपित्तचि.। अ.३अ. प्रदेहषट्के । अञ्जनयोगेच ।भा.बालचि.।सौवीराञ्जने। वा.सू.१५ अ.अञ्जनादिः । सु.सू.३८अ.। See अञ्जनविधिः ।

**अञ्जनकेशिका**
**अञ्जनकेशी** } स्त्री । हट्टविलासिनीनामगन्धद्रव्ये । A vegetable perfume. नखिकानाम-

गन्धद्रव्ये उत्तरदेशे प्रसिद्धे । भा.पू.१भ.क.व. ।

**अञ्जनगुडिका** । स्त्री । विसूचिकायामौषधविशेषे । गुड़पुष्परसः, अपामार्गबीजं, अपराजितामूलं, हरिद्रा, त्रिकटु च । अञ्जनं कर्त्तव्यम् । च.द.अग्निमान्द्यचि. ।

**अञ्जनत्रयम्(त्रितयम्)** । क्ली । कालाञ्जनस्रोतोऽञ्जन-रसाञ्जनेषु । "कालाञ्जनसमायुक्तं स्रोतोऽञ्जनरसाञ्जने ।" रा.नि.व.२२ ।

**अञ्जननामिका** । स्त्री । वर्त्मगतनेत्ररोगभेदे । আঞ্জনী, আজনাই । अत्र वर्त्ममध्ये रक्तेन ताम्रा मुद्गप्रमाणा पिड़का भवति।वा.उ.८.१४अ. "दाहतोदवती ताम्रा पिड़का वर्त्मसम्भवा । मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥" मा.नि.।

**अञ्जनभैरवः** । पुं । सान्निपातिकज्वरे रसः। अत्र एकांशमिति प्रत्येकमेकांशम् । तीक्ष्णं तीक्ष्णलौहम् । र.सा.सं.सान्निपा.ज्व.। अस्याञ्जनं विधिः ।

**अञ्जनयुग्मम्** । क्ली । स्रोतोऽञ्जने रसाञ्जने च । वा.सू. प्रियङ्ग्वादिः ।

**अञ्जनरसः** । पुं । सान्निपातिकज्वरे नस्यम् । इह ईशः पारदः । मरिचचूर्णं समम् । र.सा.सं.ज्व.चि.। अन्यः सान्निपातिकज्वरदाहे। तत्र वाह्लिकं हिङ्गु । रसकं स्फटिकारी ।

**अञ्जनविधिः** । पुं । नेत्रप्रसाधनभेदे । यथा, "अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत् । अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं मतम् ॥ रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम् । यथापूर्वं बलं तेषु स्नेहमाहुर्मनीषिणः ॥ तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा । स्नेहनञ्चे"ति । तेषु,लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनं नेत्रवर्त्मादिदोषहरम् । रोपणं सस्नेहं कषायं तिक्तं दृष्टिबलवर्द्धनञ्च ॥ मधुरं स्नेहमच्छं स्नेहनं नेत्रस्नेहनार्थम् । भा.।

**अञ्जनादिगणः** । पुं । अञ्जनफलिनीमांसीपद्मोत्पलरसाञ्जनमधुकनागाह्वरूपो वर्गः । स च विषान्तर्दाहपित्तघ्नः । वा.सू.१५अ. । सौवीराञ्जनं, रसाञ्जनं, नागकेशरपुष्पं,प्रियङ्गुः, नीलोत्पलं, वीरणमूलं, नलिनं, मधुकं, पुन्नागञ्चेति । सु.सू.३८अ.।

**अञ्जनाधिका** / **अञ्जनिका** } स्त्री । कृष्णकार्पासरूपे । See कालाञ्जनी । अञ्जन्याम् आजनाई । अञ्जनी लेपकारिणी । हारा.। वै.श.३का. । क्षुद्रमूषिकायाम् ।

**अञ्जनाम्भः** । क्ली । अञ्जनजलं । Liquid collyrium.

**अञ्जनिकः** । पुं । गन्धराजायाम् । [नि.व.४ ।

**अञ्जनी** । स्त्री । कटुकायाम्। कालाञ्जन्यां । रा.

**अञ्जलिः** । पुं । प्रसृतिद्वये, १२तो. प.प्र.१ख.। कुड़वमाने । रत्ना.नानार्थः । भा.उ.वाजी । करसम्पुटे । मे.लत्रिकम् ।

**अञ्जलिका** । स्त्री । लज्जालुकायाम् । क्षुद्रमूषिकायाम् । जटा. ।

**अञ्जलिकारिका** । स्त्री । (Mimosa natans.) लज्जालुकायाम् । रा.नि.व.५ । भा.पू.गु.व. ।(Lycopodium imbricatum.) वराहक्रान्तायाम् । বরাক্রান্তা ।

**अञ्जलिनी** । स्त्री । लज्जालुकायाम् ।

**अञ्जीरः** । पुं । (Ficus carica,Psidium pomiferum.) स्वनामख्याततरौ । বড় পেয়ারা গাছ । हिं आँजीर । फलगुणाः—शीतलं, स्वादु, गुरु, रक्तपित्तवातघ्नञ्च । मद.व.६ ।

**अटरुषः** । पुं । (Justicia adhatoda.) वासकतरौ । र.सा.सं.सूतिकारिरसे, कन्दर्पसारतैले च । वा.चि.२अ. । See वासकः ।

**अटरूषः** / **अटरूषकः** } पुं । वासकतरौ । र.मा. । च.द.रक्तपित्तचि. ।

**अटवी** । स्त्री । अरण्ये । [इति रत्ना. ।

**अटवीलता** । स्त्री । कुष्माण्डतरौ । कुष्माण्ड्याम्

**अटिः** । पुं । शरारिपक्षिणि । हला. ।

**अट्टम्** । क्ली । अन्ने । मे.टत्रिकं ।

**अट्टनम्** । क्ली । अस्त्रभेदे । त्रिका. ।

**अट्टहासः(कः)** । पुं । (Jasminum multiflorum.) कुन्दपुष्पतरौ । কুঁদ ফুলের গাছ । रा.नि.व.१० ।

**अड्डः** । पुं । गोधूमे ।

**अड्डुः** । पुं । लकुचतरौ ।

**अणुः** । पुं । सूक्ष्मधान्ये । अणुव्रीहिविशेषे स्यात् । मे.णत्रिकं । चीनधान्ये । [६२अ. ।

**अणुज्योतिः** । क्ली । तीक्ष्णदृष्टौ । वा.शा.५अ.

**अणुतैलम्** । क्ली । केशगतरोगे तैलविशेषः । वा.सू.२०अ.उ.२२अ. । [नि.व.४ ।

**अणुमुष्टिः** । पुं । विषमुष्टौ, महानिम्बे । रा

**अणुरेवती** । स्त्री । (Croton polyandrum.) दन्तीवृक्षे । प.मु. । रा.नि.व.६ ।

**अणुव्रीहिः** । पुं । सूक्ष्मधान्ये । रा.नि.व.१६ ।

**अण्डम्** । पुं,क्ली । मुष्के । रा.नि.व.१८। डिम्बे । ডিম্,আণ্ডা । गुणाः—कटु स्वादु रुचिकरं शुक्रकरं वातश्लेष्महरञ्च। गन्धमार्जाराण्डे । খাটাশী । वै.निघ.१भ.वा.व्या.विषगर्भतैले। मृगनाभौ। वीर्य्ये। वि.।

**अण्डकः** । पुं । अण्डकोषे । हे.च. ।

**अण्डकोटरपुष्पी** । स्त्री । अजान्त्र्याम् । नीलवुह्ना इति लोके । रत्ना. ।

**अण्डकोषः** । पुं । कुण्डले । वृषणे । অণ্ডকোষ । रा.नि.व.१८ । अण्डकोषलक्षणं—रेतःशुक्रसमाबद्धं कोशगर्भेऽवतिष्ठते। रेतःस्रावाण्डयुगलं ग्रन्थ्याभं चाण्डवर्त्तुलं। भूयश्चोदरवेष्टन्याः पश्चा उदरगह्वरे। तिष्ठेत्प्राक्स्पर्शनाङ्गुलैः कोषमायाति तद्द्वयम्। दक्षिणस्मात् स्थूलतरं वामाण्डं निम्नलम्बि च । वामं रैतसिकं सूत्रं यतो दीर्घतरं परात् । उपर्य्युपरिसंस्थानस्तरद्वन्द्वेन निर्म्मितः। कोषो रैतसिके सूत्रे धत्तेऽण्डयुगलं तथा। तन्तोराभ्यन्तरो रक्तः सङ्कोचनगुणान्वितः। तनोर्वाह्यश्चर्म्ममयो लोमभिः कतिभिश्चन। तन्तोस्तिरस्करण्यान्तरेकया भिद्यते द्विधा। तद्गर्भद्वयमध्यान्ते पुंसोऽण्डयुगलं ननु । उदराद्रेतसः सूत्रे पश्चाद्गागमवाण्डयोः। नियतं समनुप्राप्ते धराजाग्र्यादिनिर्म्मिते ॥ अत्रिरिति कश्चित् ।

**अण्डकोषकः** । पुं । अण्डकोषे । श.र. ।

**अण्डगः** । पुं । गोधूमे ।

**अण्डगजः** । पुं । चक्रमर्द्दक्षुपे । रा.नि.व.४ ।

**अण्डजः** । पुं । मत्स्ये । पक्षिणि । भा.पू.२भ. ।

**अण्डजा** । स्त्री । शरटे । वि. । सर्पे । मत्स्ये । पक्षिणि । मे.जत्रिकं । मृगनाभौ । वा.हेमा.।

**अण्डपर्णः** । पुं । मलाण्डतरौ । अत्रि.।

**अण्डपेशी** । स्त्री । कोषे । मुष्के । हे.च. ।

**अण्डस्कन्दः** । पुं । अण्डेषु स्कन्द इव,अश्वस्याण्डरोगविशेषे । तल्लक्षणं यथा—प्रकोपान्मारुतादीनां कारणैः पूर्व्वचोदितैः । अण्डस्कन्दस्तुरङ्गाणां जायते बहुसंज्ञकः ॥ तस्य रूपं चिकित्साञ्च भेदश्चैव समासतः । प्रवक्ष्यामि यथायोगं वाजिनां हितकाम्यया॥ वृषणौ दूषयेद्वायुः श्लेष्मणा यस्य संयुतः । तस्य मुष्कशलत्येको रोगो वाताण्डसंज्ञकः ॥ यदण्डं कम्पतेऽश्वस्य तेन पादेन खञ्जति । सम्यक्पृष्ठस्य तस्याश्च वेदना मुष्कयोर्भवेत् ॥ शूनता मुष्कयोश्चैव रक्तता कृष्णतापि वा । भवेत् पित्तेन दुष्टेन पिड़कानाञ्च सम्भवः॥ शूनौ पक्वौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ । त्रिकलम्बेन युक्तस्य तस्य पूताण्डमादिशेत् ॥ स्पर्शतः कठिनौ रूक्षौ रूपतश्चैव यौ मृदू । वृषणौ यस्य वाहस्य स रक्ताण्डः प्रकीर्त्तितः ॥ तस्मिन् सर्व्वाः प्रयोक्तव्याः क्रियाः पीताण्डबोधिताः ॥ शूनौ तु कठिनौ रूक्षौ वृषणौ मन्दवेदनौ । कृच्छ्रमूत्रस्य वाहस्य मूत्रकोशश्च शूयते ॥ श्लेष्माण्डः स तु विज्ञेय श्चोपाण्डौ वेधयेच्छिरां । निरुहं कटुतैलेन चाङ्गे स्वेदञ्च कारयेत् ॥ जयदत्तः ५०अ. ।

**अण्डहस्ती** । पुं । चक्रमर्द्दक्षुपे । रा.नि.व.५ ।

**अण्डालुः** । पुं । मत्स्ये । श.च. ।

**अण्डिका** स्त्री । यवचतुष्टयपरिमाणे । च. ।

**अण्डिनी** । स्त्री । सान्निपातिकयोनिरोगविशेषे । लक्षणं—"अतिकायगृहीतायास्तरुण्या अण्डिनी भवेत् ।" सु.चि. ।

**अण्डीरः** । पुं । पुरुषे । मे.रत्रिकं ।

**अण्वस्थि** । क्ली। मक्षिकाद्यादिस्थे सूक्ष्मास्थ्नि। सु.शा.।

**अण्वी** । स्त्री । अङ्गुली । [इति च लोके। अत्रि.।

**अतन्द्रा** । स्त्री । कापि इति ख्याते फले । च।

**अतरुणदारुः** } पुं । तरुदारके । विज-
**अतरुणदारः(कः)** } ताड़क । हिं विधारा ।
"अतरुणदारुराशापुराः।"भा.म.१भ.सन्धिकल्प.चि.।

**अतलस्पृक्** । क्ली । जले । हे.च.४का ।

**अतसी** । स्त्री।(Linum Usitatissimum) Common flax. क्षुमावृक्षे । মসিনা । हिं तिसि । तें नल्लयगसिचेट्टु । गुणाः—मधुरा बल-

कारिका कफवातवर्द्धनी, तुवरपित्तघ्नी कुष्ठवातघ्नी च। रा.नि.व.१६। शुक्रदृष्टिघ्नी स्निग्धा गुरुः वातासृजिच्च। मद.व.१०।

**अतसीतैलम्।** क्ली। अतसीजाततैलं। मसिनার তৈল। गुणाः –मधुरं पिच्छिलं वातघ्नं मदगन्धि कषायं कफहरं कासहरञ्च। रा.नि.व.१५। आग्नेयं स्निग्धोष्णं कफपित्तनुत् कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु। मलकृत् रसतः स्वादु ग्राहि त्वग्दोषहृद्घनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्यं वातशान्तये॥ भा.पू.तैलव.।

**अतिकटुः।** त्रि। निम्बादिद्रव्ये।

**अतिकण्टः(कः)।** पुं। लघुगोक्षुरके। दुरालभायाम्। मद.व.१। [कन्दशाके। रा.नि.व.७।

**अतिकन्दः(कः)।** पुं। हस्तिकन्दनाममहा-

**अतिकृशः।** त्रि। अतिदुर्ब्बले।

**अतिकेसरः।** पुं। कुब्जकापुष्पवृक्षे। কোকণ দেশীয় পুষ্প বিশেষ। হিং কুজা। रा.नि.व.१०। भा.पू.पु.व.। कण्टकसेवत्याम्। কাঁটা সেউতি।

**अतिक्रान्तावेक्षणम्।** क्ली। यत्पूर्व्वमभिहितं तत्। "यथा चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति।" सु.उ.६५अ.।

**अतिगण्डः।** त्रि। वृहद्गण्डे। मी.ज्योतिष्चकं।

**अतिगन्धः।** पुं। A sort of Jasmine (Jasminum zambac.) मुद्गरपुष्पवृक्षे। रा. नि.व.१०। गन्धके। रा.नि.व.१३। (Michelia champaca.) चम्पकवृक्षे। रा.नि.व.१०। भूतृणे। গন্ধতৃণ। रा.नि.व.८। [म्पकवृक्षे। रा.नि.व १०।

**अतिगन्धकः।** पुं। हस्तिकर्णपलाशवृक्षे। च-

**अतिगन्धा(लुः)।** स्त्री। पुत्रदात्रीलतायाम्। रा.नि.व.४। [জিয়াপুতা। रा.नि.व.४।

**अतिगन्धिका।** स्त्री। पुत्रदात्रीलतायाम्।

**अतिगुहा।** स्त्री। (Uraria lagopoedes.) पृश्निपर्ण्याम्। ছোট চাকুলে। र.मा.। शालपर्ण्याम्। मद.व.१। वा.सू.२९अ.। "स्वर्णां गुहामतिगुहाम्।"

**अतिघूर्णता।** स्त्री। अतिनिद्रा। भा.म.४भ. मसूरिकादि। "तृष्णा दाहातिघूर्णता।"

**अतिचरः।** पुं। पक्षिभेदे।

**अतिचरणा।** स्त्री। तन्नामककफजयोनिरोगविशेषे। अतिव्यवायेन शोथयुक्ता योनिरतिचरणोच्यते। "सैवातिचरणा शोफसंयुक्तातिव्यवायतः।" वा.उ.३३अ.। See अचरणा।

**अतिचरा(ला)।** स्त्री। पद्मचारिण्याम्। मद. व.३। (Hibiscus mutabilis.) स्थलपद्मिन्याम्। स्थलपद्म। रा.नि.व.५। भा.पू.१भ.। See स्थलपद्मम्। भूतृणे।

**अतिच्छत्रः।** पुं। रक्तकोकिलाक्षे। তালমাখনা। রক্ত কুলেখাড়া। प.मु.।रत्ना.। छत्राकाम्। Mushroom. কাটছাতু, পোয়ালছাতু। स्थूलतृणविशेषे।

**अतिच्छत्रकः।** पुं। भूतृणे। प.मु। भूतृणे। গন্ধতৃণ। रा.नि.व.८। तृणसाधारणे। वृक्षविशेषे। यस्य मूले पत्रे वा छत्राकारः, कटुरसश्च। रा.नि.। सप्तपर्णवृक्षे।

**अतिच्छत्रा** } स्त्री। शताह्वायाम्। শুলফা।
**अतिच्छत्रिका** } रा.नि व.४। मद.व.२। वा.उ.६अ.। "अतिच्छत्रा पलङ्कषा।" सि.यो.उन्मादचि.महापैशाचघृते। मधुरिकायां। মৌরী। च.चि.१अ.। छत्रवृक्षे। यस्य मूले पत्रे वा छत्राकारः, कटुरसश्च। भूतृणे। रा.नि.। विषाणिकायाम्। वा.सू.२९अ.। तन्नामकमहौषधौ। See ओषधिः।

**अतिजागरः।** पुं। नीलक्रौञ्चे। रा.नि.व.१९।

**अतिजृम्भः।** पुं। वायुरोगविशेषे। वै.निघ.।

**अतितपस्विनी।** स्त्री। गोरक्षमुण्ड्याम्। গোরক্ষ চাকুলিয়া। भा.पू.१भ.गु.व.।

**अतितर्पणम्।** क्ली। अतितृप्ती। वा.सू.८अ.।

**अतितीव्रा।** स्त्री। गण्डदूर्व्वायाम्। रा.नि.व.८।

**अतितीक्ष्णः।** त्रि। मरिचादौ। पुं। शोभाञ्जनवृक्षे। क्ली। अजमोदायाम्। [निघ.।

**अतितृष्णः।** पुं। पित्तजज्वररोगविशेषे। वै.

**अतितेजिनी।** स्त्री। त्रिपर्ण्याम्। তেজবল, তেজবতী। मद.व.१।

**अतिदग्धम्।** क्ली। अग्निदग्धरोगे। अतिदग्धे

मांसावलम्बनं गात्रविश्लेष: शिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं, ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति। व्रणश्चास्य चिरेण रोहति रूढश्च विवर्णो भवति। मुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम्। इत्यादि। सु.सू.१२अ.।

**अतिदाहः** । पुं । अतिसन्तापे । वै.निघ.।

**अतिदीप्तिः** । स्त्री । श्वेतसुरसायाम्। শ্বেত বাবুই তুলসী। वै.निघ.। [व.६।

**अतिदीप्यः(कः)** । पुं । रक्तचित्रके । रा.नि.

**अतिदुष्टः** । पुं । गोक्षुरके । वै.निघ.।

**अतिदेशः** । पुं । प्रकृतस्यानागतेन साधनम्। यथा—यनेनास्य वायुरूर्द्धमुपतिष्ठते तेनोदावर्त्तः स्यादिति। सु.उ.६५अ.। [सु.सू.१५अ।

**अतिनिद्रता** । स्त्री । कफवृद्धिजन्यरोगविशेषे।

**अतिपक्वमांसम्** । क्ली । पाकाधिकसिद्धमांसे। गुणाः—अतिपक्वन्तु यन्मांसं विरसं वातलं गुरु। वै.निघ.।

**अतिपक्वक्षीरम्** । क्ली । अतिशृतघनदुग्धे। ঘনাবৃত দুগ্ধ। इदम् अतिगुरु। "भवेद्गुरीयोऽतिशृतम्।" वा.टी.हेमाद्रौ चारपाणि:।

**अतिपत्रः(कः)** । पुं । शाकतरौ। শেগুন গাছ। रा.नि.व.९। उन्माद-चि.महापैशाचघृते। हस्तिकन्दनाममहाकन्दे। रा.नि.व.७।

**अतिपत्रा** । स्त्री । (Sida cordifolia.) बलायाम्। বেলেড়া। हिं खरेंटी।

**अतिपातितम्** । क्ली । अस्थिभङ्गविशेषे। तेनास्थि नि:शेषेण भिन्नं भवति। सु.नि.१५अ.।

**अतिपिच्छः** । पुं । श्वेतरक्तालुके। वै.निघ.।

**अतिपिच्छला** । स्त्री । कुमार्य्याम्। घृतकुमारी। वै.निघ.।

**अतिपिञ्जरः** } **अतिपीडकः** } पुं । दुष्टव्रणे। च.।

**अतिबला** । स्त्री । (Sida rhombifolia.) पीतबलायाम्। পীতবর্ণ বেলেড়া,পীতবাকুলি। हिं ककहिया। मं पिटारिखी। गुणाः—तिक्ता कटुः वातघ्नी क्रिमिघ्नी दाहतृष्णाविषच्छर्द्दिक्लेदोपशमनी च। रा.नि.व.४। शीतला मधुरा बलकानिकृत्। स्निग्धा ग्राहिणी वातरक्तरक्तपित्तचतघ्नी च। मद.व.१। हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमनी। हन्यादतिबला मेहं पयसा सितया समम्॥ भा.पू.१भ.गु.व.। सु.सू.३९ संशमने। च.सू.४अ.। सु.सू.क्रमिचि.। चि.क्र.क.बल्ली स्त्रीरोगचि.। वा.उ.४०अ.। श्वेतवाट्यालके। गोरक्षतण्डुलायां। গোরক্ষ চাকুলিয়া,কালিয়া ঝিঁটকী।विष्णु नारायणतैले। शतावरीयो.सा.कौ.। चि.क्र.क.बल्लीकेतक्यादितैले।

**अतिबलिका** } **अतिबली** } स्त्री । वाट्यालके। रा.नि.व.४।

**अतिभारगः** । पुं। अश्वतरे। খচ্চর इति लोके।

**अतिभोजनम्** । क्ली । अतिमात्रया भोजने। गुणाः—आलस्यगौरवाटोपसादाश्च कुरुतेऽधिकम्। सु.सू.४६अ. कृतान्नव.।

**अतिमङ्गल्यः** । पुं। (Aegle or cratoeva marmeloes.) बिल्ववृक्षे। रा.नि.व.११।

**अतिमञ्जुला** । स्त्री । कण्टकसेवतीवृक्षे। हिं सेवती गुलाब। গোলাপ, রক্ত গোলাপ। भा.पू.१भ.पु.व.। मद.व.३। See सेवती।

**अतिमण्डलः** । पुं । भूधामनवृक्षे। वै.निघ.।

**अतिमन्थः(कः)** । पुं । अग्निमन्थक्षुपे।

**अतिमुक्तः(कः)** } **अतिमुक्तका** } पुं।Mountain eboney. तिनिशवृक्षे। अम.। तिन्दुकवृक्षे। তেদ, গাব। नवमल्लिकाभेदे। मं तें रायविर। রায়বেল। (Goertnera racemosa.) माधवीलतायाम्। प.सु.। "अतिमुक्तकमिच्छन्ति वासन्ती-माधवीलताम्।" हला.५४। अतिमुक्तस्तु नि:सङ्गे वासन्त्यां तिनिशेऽपि च। मे.तचतुष्कं। वा.उ.१२अ.। "तथातिमुक्तकैरण्ड।" भा.पू.१भ.। गुणाः—कषाय: शीतल: श्रमघ्न: पित्तदाहज्वरोन्मादहिक्काच्छर्द्दिघ्नश्च। रा.नि.व.१०। See तिनिश:। माधवी मधुरा शीता लघ्वी दोषत्रयापहा। भा.पू.१भ.पु.व.। (कः) हरिमन्थे। हारा.।

**अतिमुक्ततैलम्** । क्ली । अतिमुक्तकबीजतैले। गुणाः—वातपित्तघ्नं केश्यं श्लेष्मलं गुरु शीतलञ्च। वा.टी.हेमा.। [व.१०।

**अतिमुक्ता** । स्त्री । अतिमुक्तकायाम्। रा.नि.

**अतिमोदनी(दिनी)** । स्त्री । नवमल्लिकायां। रा.नि.व.१०।

**अतिमोदा** । स्त्री।(Jasmimum arboreum.) नवमल्लिकायां। সেউতি। रा.नि.व.१०। गन्धिकारीहच्चे स्वनाम्ना कोंकणदेशे ख्याते। গণিরি। रा.नि.व.१०।

**अतियवः** । पुं । निःशूकयवे । कृष्णवर्णे यवे । मद.व.१० । निःशूकोऽतियवः स्मृतः । यवादतियवो न्यूनः । भा.पू.१भ.धान्यव. ।

**अतियुक्तः** । त्रि । वारंवारं प्रयुक्ते । भा.म.ख. १भ.चं.सा. । "स्नेहाद्यैरतियुक्तैः ।" [१७भ.।

**अतियोगः** । पुं । अतिशयितप्रयोगे । वा.सू.

**अतिरक्तः** । पुं । हिङ्गुले । वै.निघ. ।

**अतिरक्ता** । स्त्री । जवापुष्पवृक्षे । वै.निघ. ।

**अतिरसः** । पुं । पौण्ड्रके । श.मा. ।

**अतिरसा** । स्त्री । मूर्व्वायाम् । মূরগা। वै.निघ. २भ.स्वप.चि.पलङ्कषातैलं । रास्नायाम् । मद.व. १। वल्लीयष्टिमधुनि । रा.नि.व.६ । शतमूल्याम् । च.सू.४ । [१२ । भा.पू.१भ. मद.व.१ ।

**अतिरुहा** । स्त्री । मांसरोहिण्याम् । रा.नि.व.

**अतिरूक्षः** । त्रि । स्नेहशून्ये, कङ्गुकोद्रवादौ ।

**अतिरेचकः** । पुं । काकोल्याम् । কাঁকলা। वै.निघ. । [नि.व.२०।

**अतिरोगः** । पुं । क्षयरोगे । राजयक्ष्मणि । रा.

**अतिरोमशः** । पुं । वन्य-छागे । छाग. ।

**अतिरोमशा** । स्त्री । नीलबुह्नायाम् । ছাগলবেঁটে । प.मु. ।

**अतिलङ्घितम्** । क्ली । अत्युपवासे । तल्लक्षणं—पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च । क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः। मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि। देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥ च.द. ।

**अतिलम्बी** । स्त्री । शताह्वायाम् । भा.पू.१भ. ।

**अतिलोहितगन्धः** । पुं । दमनकवृक्षे । দনা। प.मु. ।

**अतिवर्त्तुलः** । पुं । (Sida rhombifolia.) कलायविशेषे । মটর, বাটুলা, কড়াই । र.मा. ।

**अतिविदाही** । त्रि । राजसर्षपादौ ।

**अतिविद्या** । स्त्री । दुष्टव्यधनविशेषे । प्रमाणातिरिक्तविद्धायाम् । सु.शा.८ ।

**अतिविषः(षा)** । स्त्री ।(Aconitum heterophyllum.)स्वनामख्यातौपविषजातीयपण्यद्रव्ये। আতইচ্ । हिं आतइस । अतिविषा सर्व्वत्र भाषा । तें अतिवसचेटु । अतिविषा शुक्लकृष्णारुणभेदात् त्रिधा रसवीर्य्यविपाकेषु तुल्या । गुणाः— कटूष्णा तिक्ता कफपित्तज्वरघ्नी आमातीसारकासघ्नी विषघ्नी छर्द्दिघ्नी च । रा.नि.व.६ । वा.सू.१५भ. वचादि. । नागाराऽतिविषाभयाः । च.द.ज्व.चि.पिप्पल्याद्यघृते । मदनपालस्तु श्यामकन्दीपत्रिविषीं स्वतुर्भेदानाह श्वेतरक्तकृष्णपीतत्वात् ते तासां यथापूर्व्वं श्रेष्ठा गुणैस्तमा सर्व्वदोषहरा शोथघ्नी शैत्यकारोगघ्नी रसायनी च । मद.व.१। अतिविषाकटुकीप्रभृतीनामुष्णगोमयजलेन शुद्धिर्मातव्या । सा. कौ. । [वै.निघ. ।

**अतिवीजः** । पुं । बब्बूलवृक्षे । বাব্লাগাছ ।

**अतिवृहत्फलः** । पुं । पनसवृक्षे । কাঁটাল গাছ । भा.पू.१भ. ।

**अतिव्यथा** । स्त्री । अतिशयितयन्त्रणायाम् । पीड़ायाम् ।

**अतिव्यायामः** । पुं । व्यायामाधिक्ये । অধিক কুস্তি করা । अतिव्यायामो न पथ्यः । अतिव्यायामतः कासो ज्वरश्छर्द्दिः श्रमः क्लमः । तृष्णा क्षयः प्रतमकः रक्तपित्तञ्च जायते॥ भा.पू.१भ.।

**अतिशष्कुली** । स्त्री । तिलक्लतरोटिकायाम् । गुणाः —रुचा श्लेष्मपित्तास्रघ्नी गुरुः विष्टम्भिनी, न चक्षुष्या च । भा.पू.कृतान्नव.। [मूल । र.मा.।

**अतिशारिवा** । स्त्री । अनन्तायाम् । অনন্ত-

**अतिशूकः** । पुं । यवे। যব । प.मु. ।

**अतिशूकजः** । पुं। गोधूमे । গম । Wheat.

**अतिशृतक्षीरम्** । क्ली । अतिक्वथिते दुग्धे कवलभोज्यवत् सञ्जाते । तद्गुरुतरम् । स्वाग्निर्ज्जलं शृतं त्रिविधतुरष्टांशशेषितम् । तथा शृततमं सारं गुरु बल्यतमं पयः ॥ वा.सू.५भ.अरु.टी.खरनादः ।

**अतिशोष:** । पुं । क्षयरोगे । See क्षय: ।

**अतिसख्या** स्त्री । वल्लीयष्टिमधुनि ।

**अतिसर्जनम्** । क्ली । वेधे । मे.नपञ्चकं ।

**अतिसान्द्र:** । पुं । राजमाषे । बा.ब्राशी बरटी । रवा. । [लतायष्टिमधुनि ।

**अतिसाम्या** । स्त्री । कृष्णसुखगुञ्जावल्ल्याम् ।

**अतिसार:** । पुं । पर्पटके । मद.व.१ । हिं पापड़ा । उदरामयरोगविशेषे । See अतीसार: ।

**अतिसारकी** । त्रि । अतिसाररोगिणि ।

**अतिसारघ्न:** । पुं । चेत्रपर्पटके । ক্ষেৎপাপ- ড়া । वै.निघ. । [निघ. ।

**अतिसारघ्नी** । स्त्री । अतिविषायाम् । वै.

**अतिसारभेषजम्** । क्ली । लोध्रे । तद्रोग- निवारके औषधे ।

**अतिसारवारणरस:** । पुं । अतिसारे रस: । अत्र कृतकर्पूरं पक्वकर्पूरम् । खाखसीचीरं अहिफे- नम् । र.सा.सं. ।

**अतिसारस्था** । स्त्री । रास्नायाम् । वै.निघ. ।

**अतिसूक्ष्म:** । त्रि । अतिशयसूक्ष्मे ।

**अतिसेवनम्** । क्ली । अधिकमात्रया सेवने ।

**अतिसौम्या** । स्त्री । वल्लीयष्टिमधुके । रा.नि.व.६ ।

**अतिसौरभ:** । पुं । आम्रवृक्षे । भा.पू.फ.व. ।

**अतिस्कन्धा** । स्त्री । रक्तकुलत्थके । वै.निघ. ।

**अतिस्थूलवर्त्मा** । पुं । दुष्टव्रणविशेषे । च. ।

**अतिस्निग्ध:** । त्रि । अत्यन्तस्निग्धे । तस्य ल- क्षणम् —कफप्रसेक: शिरसो गुरुतेन्द्रियविभ्रम: । लवणं तदतिस्निग्धे रुक्षं तत्र प्रदापयेत् ॥ वै.निघ. नस्यचि. । [निघ. ।

**अतिस्रवा** । स्त्री । मयूरवल्ल्याम् । मुग्वा । वै.

**अतिच्छिन्नसन्धि:** । पुं । सन्धेरतिशयविश्लेषे । सन्धिच्युतं सदुश्चैरवस्थानं । तेन सन्ध्यस्थ्नोरुभयोरेवा- तिक्रान्तता वेदना च । सु.नि.१५अ. । See भग्न: ।

**अतीसार:** । पुं । Diarrhœa or dysentry. अतीव सरति, प्रकृतिमतिक्रम्य गुदमार्गेण सरतीति अतीसार: । स्वनामख्यातोदरामयरोगे, बहुद्रवमलनि:- सरणरोगे । तस्य निदानं गुरुभोजनादिकम् । तस्य निरुक्ति:—रसादिद्रवधातूनामग्निं मन्दीकृत्य मलेन सह मिश्रितानां वायुना चाध: प्रणुन्नानां अतिनि:- सरणादतीसार उच्यते । तस्य च पूर्व्वरूपं —हृदय- नाभिगुह्योदरादिस्थानेषु सूचीविद्धवद्वेदना, काया- वसादवायुमलविबन्धतोदोदराध्मानापरिपाकादिक- ञ्च । स षड्विध: वातपित्तकफसन्निपातशोकापरि- पाकजभेदाद्भवति । तत्र वातजे मलस्यारुणता फे- णिलता रुक्षता पक्वता तथा गुदे सशब्दवेदनमल्पशो मुहुर्नि:सरणञ्च लक्षणं भवति । पित्तजे च मलस्य हरितपीतलोहितवर्णता तृष्णामूर्च्छादाहा:, मल- द्वारे ज्वाला चतञ्च लक्षणम् ; कफजे च शुक्लगाढ़- सकफामगन्धिशीतलमला नि:सरन्ति, रोगी स- रोमाञ्चश्च भवति । सान्निपातिके च वातजादिल- क्षणानि दृश्यन्ते, प्रायशश्चात्र मला: शूकरवसा-मां- सधावनवारिवद्भवन्ति । शोकजे च गुञ्जाफलस- दृशशोणितं केवलं मलमिश्रितं मलरहितं वा स- रति, तच्च मलसहितं चेत् दुर्गन्धं मलरहितं चे- न्निर्गन्धं भवति । आमातिसारे च नानावर्णं वारं- वारञ्चातिसार्य्यते, तथा तत्रोदरशूलमतीव जायते । अतीसारस्य चासाध्यलक्षणं—मलस्य कृष्णस्निग्धता, यकृत्खण्डवत् कृष्णरक्तवर्णता, घृततैलवसामज्ज- दधिदुग्धमांसधावनवारिसदृशता, कृष्णनीलवर्णता, ईषत्कृष्णरुक्षचिक्कणता, शिखिपुच्छवत् विविधवर्ण- चन्द्रकयुक्तता, घनशवगन्धिमस्तिष्काभता, सुगन्ध- पूतिगन्धबहुलता च, तथा तृष्णादाहान्धकारदर्शनं, हिक्काश्वासपार्श्वशूलेन्द्रियचित्तमोहा: गुह्याभ्यन्तर- वलिपाक: प्रलापश्च, तथा गुदसंवरणाक्षमता बल- मांसहीनता अतीवोदराध्मानं शोथ:, मलद्वारस्य पक्वतासत्त्वेऽपि गात्रस्य शीतलता उपद्रवाश्च । चिकित्सा-स्वस्वपर्य्याये प्रदर्शनीया । अतीसारे नाना- विधद्रवधातुनि:सरणमन्यत्र केवलमेव कफनि:स- रणमित्यतिसारप्रवाहिकयोर्भेद: । इति माधवक- रसंग्रहादतीसारसंग्रह: । शार्ङ्गधरस्तु भयजमुक्त्वा स- प्तविधमाह । तस्य सम्प्राप्ति: संशम्यापां धातुरन्त:कृ- शानुं वर्चोमिश्रो मारुतेन प्रणुन्न: । वृद्धोऽतीवाध: सरत्येव यस्माद्व्याधिं घोरं तं त्वतीसारमाहु: ॥ हृ- न्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधा: । विट्संग आध्मानमथाविपाको भविष्यत: तस्य पु- र:सराणि ॥ तस्य निदानम्—गुर्व्वतिस्निग्धरुक्षोष्ण- द्रवस्थूलातिशीतलै: । विरुद्धाध्यशनाजीर्णैरसात्म्यै-

चापि भोजनैः॥ स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात्। शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्त्तुपर्ययात्॥ जलाभिरमणैर्वेगविघातैः क्रमिदोषतः। नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते॥ सु.उ. ४०अ.। स च वातपित्तकफसन्निपातशोकामजभेदात् षड्विध इति। अथातिसार-लक्षणम्—अनिलेनाथ पित्तेन श्लेष्मणा चापि वाजिनः। अतीसारस्तथा चान्यः सन्निपातेन जायते॥ सङ्कोचिताङ्गः स्थानेन सकफं योऽतिसार्य्यते। अल्पं तनु सशब्दञ्च पुरीषं बहु वा हयः॥ तस्य वातात्मकं विन्द्यादतीसारं विचक्षणः। पित्तजञ्चैव वक्ष्यामि श्लेष्मजञ्च समासतः॥ स्वेदहाहपरीतानां लक्षयेन्मतिमान् भिषक्। स्रावेण नीलरक्तेन विस्रगन्धेन पित्तजम्॥ मन्दाहारस्तथा वाही ह्रष्टरोमातिपीड़ितः। श्यामैः सपिच्छिलैर्भिन्नैर्विद्यात् श्लेष्मसमुद्भवम्॥ सन्निपातात्मकञ्चैव सर्व्वेषां लक्षणैर्युतम्। द्विरूपं द्वन्द्वजं ज्ञेयमतीसारं विचक्षणैः। अतीसाराः समुद्दिष्टाः शालिहोत्रादिभिः पुरा॥ ज.द.४२अ.।

**अतुलः** । पुं । कपि । तिलकवृक्षे । श.च.।

**अतृप्तिः** । स्त्री । तृप्तिशून्यत्वे । अपरितोषे ।

**अतेजाः** । स्त्री । छायायाम् । रा.नि.व.२१।

**अत्कः** । पुं । अङ्गे । उणा.।

**अत्नः** । पुं । सूर्य्ये । वै.निघ.।

**अत्यः** । पुं । अश्वे । [भक्षके । विज.र.।

**अत्यग्निः** । पुं।क्षुधाधिक्ये। च.द.अग्निमा.चि.।

**अत्यन्तपद्मा** । स्त्री । कमलिन्याम् । वै.निघ.।

**अत्यन्तशोणितः** । त्रि । अतिरक्ते । क्ली । सुवर्णगैरिके । वै.निघ.।

**अत्यन्तसुकुमारः** । पुं। (Panicum Italicum.) कन्दलीवृक्षे । कङ्गुण्याम् । रा.नि.व.१६।

**अत्यम्बुपानम्** । क्ली । मात्रातिरिक्तवारिपाने। तल्लक्षणं यथा—अत्यम्बुपानान्न विपच्यतेऽन्नं अनम्बुपानाच्च स एव दोषः। तस्मान्नरो वह्निविवर्द्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि॥ इति जलपानलक्षणम्। रा.नि.व.१४।

**अत्यम्लः** । पुं, क्ली । (Spondias mangifera.) वृक्षाम्ले । তেঁতুল । रा.नि.व.६ । See तिन्तिड़ी। वनमातुलुङ्गे । मातुलुङ्गे । त्रि,अत्यन्ताम्लरसयुक्ते ।

**अत्यम्ला** । स्त्री । मातुलुङ्गवृक्षे । वनबीजपूरे । मधुरलेबु, मधुटाबा वा मधुलेबु । रा.नि.व.११। महाकाँकड़ी । रत्ना. तिन्तिड्याम् । श.र.।

**अत्यम्लपर्णी** । स्त्री । वल्लिसूरणे लताविशेषे । कड़वड़वेलि । हेंगगोलि । रा.नि.व.३ । अम्ललोण्याम् । আমরুল । गुणाः—अत्यम्लपर्णी तीक्ष्णाम्ला शोहशूलविनाशिनी । वातश्लेष्मद्दीपनी रुच्या गुल्मश्लेष्मामयापहा॥ रा.नि.व.३ । मात्रा.२माषा ।

**अत्ययः** । पुं । नाशे, दोषे, कृच्छ्रे । रत्ना.अने.व.। मे.यत्रिकं । [गाछ । रा.नि.व.१०।

**अत्यर्कः** । पुं । शुक्लार्कवृक्षे । শ্বেত আকন্দ

**अत्यानन्दा** । स्त्री । कफजन्ययोनिरोगविशेषे, येन स्त्री ग्राम्यधर्म्मेण सन्तोषं न लभते । अत्यानन्दा न सन्तोषं ग्राम्यधर्म्मेण विन्दति । भा.म.ख.४भ.योनिरोगचि.।

**अत्यारक्ता** । स्त्री । जवापुष्पवृक्षे ।

**अत्युग्रम्** । क्ली । हिङ्गुनि । मद.व.२ ।

**अत्युग्रगन्धा** । स्त्री । कृष्णगोकर्ण्याम् । कृष्णापराजितायाम् । अजमोदायाम् । मद.व.२ ।

**अत्युदीर्णा** । स्त्री । दुष्टव्यधनविशेषे । यत्र तीक्ष्णमहामुखशस्त्रेण वेधो भवति । सु.शा.८अ.।

**अत्यूहः** । पुं । कालकण्ठपक्षिणि । दात्यूहे । मे.हत्रिकं । [कायाम् । मे.हत्रिकं ।

**अत्यूहा** । स्त्री । नीलशेफालिकायाम् । नीलि-

**अत्रिः** । पुं । ऋषिविशेषे ।

**अदनम्** । क्ली । भक्षणे ।

**अदन्तः** । त्रि । दन्तहीने ।

**अदलः** । पुं । हिज्जलवृक्षे । श.च. । घृते ।

**अदला** । स्त्री । घृतकुमार्य्याम् । रा नि. ।

**अदंशः** । पुं । महामूलके । बड़ मूला ।

**अदारिका** । स्त्री । वृक्षकमले, वृक्षोत्पले । ওলট্ কমল । वै.निघ. । [निघ. ।

**अदृढ़ः** । त्रि । अस्थिरे । क्ली । तृणविशेषे । वै.

**अद्भुतसारः** । पुं । खदिरसारे । रा.नि.व.८ ।

**अद्यम्** । क्ली । धान्ये ।

**अद्यतनः** । त्रि । अद्यभवे । আজিকার ।

**अद्यश्विना** } **अद्यश्वीना** } स्त्री । आसन्नप्रसवायां गवि

**अद्रकः** । पुं । महानिम्बवृक्षे । वै.निघ. ।

**अद्रिः** । पुं । पर्व्वते । शैलवृक्षे । मे.रद्विकं । परिमाणविशेषे ।

**अद्रिकर्णी** । स्त्री । अपराजितायाम् । श्वेतापराजितायाम् । रा.नि.व.१३ । [भा.पू.१गु.व. ।

**अद्रिका** । स्त्री । धान्यके । ধনে । महानिम्बे ।

**अद्रिजः** । त्रि.गिरिजाते । क्ली । शिलाजतुनि । र.मा.रत्ना. । तुम्बुरुवृक्षे । रा.नि.व.११ । गरिके ।

**अद्रिजतु** । क्ली । शिलाजतुनि । हेमा.। भा.।

**अद्रिजा** । स्त्री । सैंहलपिप्पलीक्षुपे । रा.नि. व.६ । [व.३ ।

**अद्रिभूः** । स्त्री । आखुकर्णीलतायाम् । रा.नि.

**अद्रिमाषा** । स्त्री । বনমাষ । মাষাণী । वै. निघ. । [ডুমুর । वै.निघ. ।

**अद्रिसानुजा** । स्त्री । त्रायमाणायाम् । বলা-

**अद्रिसारः** । पुं । लौहे । रत्ना. ।

**अद्रेष्कः(ष्का)** । पुं,स्त्री । निम्बविशेषे । हिं बकायननिम्ब । পাহাড়ে নিম্ । भैष. कुष्ठचि. ।

**अधः** । अव्ययं । अधोभागे । योनौ । वै.निघ. ।

**अधःकुन्तलः** । पुं । अन्तर्लोम्नि ।

**अधःपातनम्** । क्ली । पारदस्य यन्त्रमार्गेणाधःक्षेपणे । यथा—नवनीताह्वयगन्धकं (লাউয়া গন্ধক) सूतञ्च समभागं गृहीत्वा जम्बीररसेन मर्द्दयित्वा, शुकशिम्बीमूलं शियुमूलापामार्गश्वेतसर्षपसैन्धवकल्केन समभागेन संमिश्र्य यन्त्रस्योर्द्ध्वभाण्डाभ्यन्तरतले कल्कमिश्रितं तं सूतं लेपयेत् । अथ जलयुक्तमधोभाण्डं भुवि पूरयित्वा तस्य मुखे रसयुक्तं भाण्डमधोमुखं संस्थाप्य च द्वयोः सन्धिमुखं लेपयेत् । अथ उपरिष्टात् पुटे दत्ते पारदो जले पतति । इत्यधःपातनं । "नवनीताह्वयं सूत"मित्यादि । र.सा.सं. ।

**अधःपुटः** । पुं । चारोलीवृक्षे । वै.निघ. ।

**अधःपुष्पी** । स्त्री । (Hicracium,)गोजिह्वाक्षुपे । रा.नि.व.४ । चोरपुष्पीवृक्षविशेषे । চোর কাঁটকী,চোরখড়িকা,ভাঁটুই, উকৃণে, বাটিয়া, লেঙরা । हिंटाङ्कलीति गौडीयाः । सततत्त्व.ब्रह्मदण्डी नाम्ने वै.निघ.२भ. ।

**अधःप्रस्तरः** । पुं । तृणासने । वै.निघ. ।

**अधःशल्यः** । पुं । अपामार्गक्षुपे । रा.नि.व.४ । भा.पू.१भ. । श्वेतापामार्गे ।

**अधःशाखः** । पुं । संसाराश्वत्थवृक्षे ।

**अधःशेखरः** । पुं । श्वेतापामार्गे ।

**अधमः** । पुं । अम्लवेतसे ।

**अधमाङ्गम्** । क्ली । चरणे । श.च. ।

**अधरः** । पुं । ओष्ठे । ঠোঁট । रा.नि.व.१८ । क्ली । स्त्रीयोनौ ।

**अधरकण्टकः** । पुं । दुरालभायाम् । वै.निघ.।

**अधरकण्टिका** । स्त्री । क्षुद्रशतावर्य्यां । वै.निघ.।

**अधरा** । स्त्री । नीचदिशि । वै.निघ. ।

**अधामार्गः** } **अधामार्गवः** } पुं । अपामार्गे । धामार्गववृक्षे । গড়গণ্ড । हिं काड़च । अ.टी. ।

**अधिकण्टकः** । पुं । यासक्षुपे । দুরালভাবিশেষ । रा.नि.व.४ । [निघ. ।

**अधिकप्रियम्** । क्ली । त्वचि । দারচিনি । वै.

**अधिकरणम्** । क्ली । यत्र कुर्व्वन्ति तदधिकरणम् । सु.सू.४१अ. । 'यमर्थमधिकृत्योच्यते ।' यथा रसं दोषं वा । सु.उ.६५अ. ।

**अधिकारी** । पुं । पुरुषे । वै.निघ. ।

**अधिजिह्वः** । पुं । A tumour on the tongue. कण्ठगतमुखरोगे । सु.नि.१६अ.। अयं ह्यजिह्वोऽप्युच्यते ।

**अधिजिह्वकः** । पुं । जिह्वागतरोगविशेषे । See अधिजिह्वा ।

**अधिजिह्वा** } **अधिजिह्विका** } स्त्री । जिह्वारोगविशेषे कफशोणितजे । अत्र जिह्वोपरि जिह्वाग्रवत् शोथो जायते । पक्वश्चेदसाध्यः । उपजिह्वा जिह्वानिम्नतो भवतीत्यनयोर्भेदः। लक्षणम्—जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्रः । सु.नि.१६अ.। अपरस्य जिह्वागत-

रोगे जिह्वोपरि शोफरूपे। लक्षणम्—"अधिजिह्वाभिधानन्तु उपरिष्टाद्विनिर्द्दिशेत्॥" अ.ह.२९अ.।

**अधिदन्तः (कः)** । पुं। A tooth growing over another. दन्तमूलगतरोगविशेषे। गजदन्ते। গজদাঁত। अयन्तु दन्तोपरि षड्‌धिकदन्तनिर्गमरूपरोगः। तेन चास्य ग्रासग्रहणेऽनिष्टा भवति। सप्तदन्तविशिष्टोऽष्टदन्तविशिष्टश्चाश्वोऽधिदन्त इत्युच्यते। "सप्तभिश्चाष्टभिर्दन्तैः स्यातश्चाधिकदन्तकः।" ज.द.३अ.।

**अधिदैवतम्** । क्ली। अधिदेवतायाम्। आधिदैविकरोगे। सु.शा.१अ.।

**अधिपतिः** । पुं। मर्म्मस्थानविशेषे। तच्च रोमावर्त्तस्थानं मस्तकाभ्यन्तरे सर्व्वशिरासम्मिलनस्थानञ्च। सु.शा.६अ.।

**अधिभूतः** । पुं। यमधिकृत्य योवर्त्तते स एव तस्याधिभूतो नाम। यथा यस्य नामेन्द्रियस्य यत् कार्य्यभूतं तदेव कार्य्यं तस्येन्द्रियस्याधिभूतविषयः। सु.शा.१अ.।

**अधिमन्थः** । पुं। Acute pains in the balls of the eyes with pain and swelling of one side of the head. अभिष्यन्दोत्थनेत्ररोगविशेषे। स च वातजपित्तजकफजरक्तजभेदेन चतुर्विधः। सर्व्वत्रैव लक्षणं तीव्रवेदना। अभिष्यन्दे (চোক উঠা বা নেত্রশূল) उपेक्षिते अधिमन्थो जायते। लक्षणम्—वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम्। तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः॥ उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा। शिरसोऽर्द्धञ्च तं विद्यादधिमन्थं स्वलक्षणैः॥ हन्याद्दृष्टिं श्लैष्मिकः सप्तरात्रादधिमन्थो रक्तजः पञ्चरात्रात्। षड्रात्राद्वा वातिको वै निहन्यात् मिथ्याचारात्-पैत्तिकः सद्य एव॥ अधिमन्थेषु सर्व्वेषु ललाटे वेधयेच्छिरां। अग्निना सर्व्वथा मन्थे भ्रुवोस्तु परिदाहयेत्॥ सु.उ. ६अ.

**अधिमांसम्** । क्ली,पुं।म.नै.रो.।Seeनेत्रमांसार्म्म

**अधिमांसकः** । पुं। Inflammation of the tonsils. कफजन्यदन्तवेष्टजरोगविशेषे। हनुभवान्त्यदन्ते अतिवेदनमहाशोथो लालास्रावश्च भवति। हान्व्ये पश्चिमे दन्ते महाशोथोमहारुजः। लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः। भा.म.ख.४भ.मु.रो.चि.। मा.नि.। सु.नि.१६अ.।

**अधिमांसार्म्म** । क्ली, पुं। Fleshy excrescence on the eye, cancer of the eye. दृष्टिशुक्लगतरोगविशेषे मांसवृद्धौतिख्याते। लक्षणम्—पद्माभं मृदु रक्तार्म्म यन्मांसं चीयते सितै। पृथुमृद्वधिमांसार्म्म बहुलञ्च यकृन्निभम्॥ मा.नि.।

**अधिमुक्तकः** । पुं। माधवीलतायाम्। वै.निघ.।

**अधिमुक्तिका** । स्त्री। मुक्ताग्टहे, शुक्तौ। मुक्ताझिनुक। वै.निघ.। [रत्ना.।

**अधिष्ठानम्** । क्ली। स्थाने। ग्रामे। नगरे।

**अधीरः** । पुं। अयोग्यवैद्ये। वै.निघ.।

**अधोंऽशुकम्** । क्ली। परिधेयवस्त्रे। अम.।

**अधोगतः** । पुं। अस्थिभङ्गरोगे। वै.निघ.।

**अधोघण्टा** । स्त्री। अपामार्गे। আপাঙ্। रत्ना.।

**अधोऽङ्गम्** । क्ली। मलद्वारे।

**अधोमर्म्म** । क्ली। गुदे। गुह्यद्वारे। हे.च.।

**अधोजिह्विका** । स्त्री। तालुमूलस्थक्षुद्रजिह्वायाम्। আলজিব। हारा.। जिह्वाधःशोथरोगे। कफादधस्तादधिजिह्विका चेति। च.।

**अधोद्वारम्** । क्ली। मलद्वारे। योनौ। हे.च.।

**अधोभागहरः** । त्रि। विरेचनकर्म्मणि हितकरे। च.।

**अधोमुखा** । स्त्री। गोजिह्वायाम्। रा.नि.व.४।

**अधोयन्त्रम्** । क्ली। वकयन्त्रे।

**अधोवायुः** । पुं। अपानवायौ।

**अधोरेचनः** । पुं। आरग्वधवृक्षे।

**अधोऽस्रपित्तम्** । क्ली। अधोगतरक्तपित्तरोगे। See रक्तपित्तम्।

**अध्यण्डा (व्यण्डा)** । स्त्री। कपिकच्छुलतायाम्। আলাকুশী। See आत्मगुप्ता। भूम्यामलक्याम्। रत्ना.। कोकिलाक्षे। তালমাখনা। मद.व.१। भा.पू.। प.मु.।

**अध्यर्बुदम्** । क्ली। अर्ब्बुदोपरि जातार्ब्बुदरोगे। আবের উপর আব। लक्षणं—यज्जायतेऽन्यत्खलु-पूर्व्वजाते ज्ञेयं तदध्यर्ब्बुदमर्बुदज्ञैः। सु.नि.११अ.।

**अध्यशनम्** । क्ली। अजीर्णोपरि भोजने। लक्षणम्

—"अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते। प्राग्भुक्ते त्वनले मन्दे द्विरन्नं न समाहरेत्। प्रातराशे त्वजीर्णे तु सायमाशो न दुष्यति। पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम्। सायमाशे त्वजीर्णे तु प्रातर्भुक्तं विषोपमम्"। वै.निघ. दिनचर्य्या। भुक्तस्योपरि भूयोभोजने। भा.म.ख.१भ.अती.सा.चि.। "विरुद्धाध्यशनाजीर्णैः।" वा.सू.८अ.।

**अध्यण्डः** । पुं। चोरिकावृक्षे। श.र.। महार्कवृक्षे। त्रि। प्रत्येकं कर्षार्द्धमाने। सि.यो. र.पि.चि.एलादिगुटिकायां वृन्दः।

**अध्युषितः** । पुं। सर्व्वांश्चिरोगे। त्रि। उपविष्टे।

**अध्रुषः** । पुं। तन्नामकतालुगतमुखरोगे। अत्र तालुदेशे रक्तदोषजन्यलोहितानतिस्थूलशोथः, तेन च ज्वरस्तीव्रवेदना च भवति। मानि। तल्लक्षणं —शोफस्त्वस्तब्धो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः। सु.नि.१६अ.।

**अध्वगः** । पुं। उष्ट्रे। अश्वतरे। हे.च.।

**अध्वगभोज्यः(ग्यः)** । पुं। आम्रातकवृक्षे। त्रिका.।

**अध्वगवृक्षः** । पुं। आम्रातकवृक्षे।

**अध्वगमी** । पुं। खेचरे, पक्षिणि। वै.निघ.।

**अध्वजा** । स्त्री। स्वर्णुलीक्षुपे। रा.नि व.४।

**अध्वनिषेवणम्** । क्ली। अध्वचलने। वै.निघ. See चंक्रमणं।

**अध्वरा** । स्त्री। मेदायाम्। भा.पू १ ह.व.।

**अध्वशोषः** । पुं। पथिश्रमजन्यशोषरोगे। अध्वप्रशोषी स्रस्ताङ्गः संभृष्टपरुषच्छविः। प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः॥ नि.।

**अध्वसिद्धकः** । पुं। सिन्धुवारवृक्षे। रा.नि.व.४।

**अध्वाण्डशात्रवः** । पुं। श्योणाकवृक्षे। শোণা গাছ। हिं नाउया श्योणाल। श.च.।

**अनंशुमत्फला** । स्त्री। कदलीवृक्षे। जटा.।

**अनः** । क्ली। अन्ने। उणा.। [निघ.।

**अनग्ना** । स्त्री। कार्पास्याम्। কাপাস। वै.

**अनघः** । पुं। गौरसर्षपे। रा.नि.व.१६।

**अनघ्नः** । पुं। गौरसर्षपे। वै निघ.।

**अनङ्गम् (कम्)** । क्ली। मनसि। श.र.।

**अनङ्गसुन्दररसः** । पुं। वाजीकरणाधिकारे रसः। सूतस्य पलं गन्धकस्य च पलं रक्तकुसुदरसैः दिनत्रयं भावयेत्। ततो वालुकायन्त्रे प्रहरमात्रं पचेत्। अवतार्य्य रक्तावकपुष्पश्वेतपद्मरसेन दिनैकं भावयेत्। र.सा.सं.। [য়া শাক। रा.नि.व.४।

**अनडुज्जिह्वा** । स्त्री। गोजिह्वायाम्। গোজি-

**अनडुही** । स्त्री। See अनड्वाही।

**अनड्वान्** । पुं। वृषे। भा.पू.। रत्ना.।

**अनड्वाही** । स्त्री। गवि। গাই। हला.।

**अनणुः** । पुं,क्ली। सूक्ष्मधान्ये। সরুধান। वै.निघ

**अनन्तः** । पुं। दुरालभायाम्। वै निघ.२भ. अनन्तादिचूर्णे, सर्व्वज्वरे। सिन्धुवारवृक्षे। अभ्रकधातौ। रा.नि.व.१३।

**अनन्तकः** । पुं। मूलके। नलतृणे। हिं नरकट। मद.व.१।

**अनन्तमूलम्** । क्ली। करालाख्यौषधे। सुगन्धायां। वचाभेदे। श.चि.। अनन्तायाम्।

**अनन्तमूली** । स्त्री। दुरालभायाम्। रक्तदुरालभायाम्। वै.निघ.।

**अनन्तरन्ध्रका** । स्त्री। खर्परपोलिकायाम्। আস্কে পিটে। वै.निघ.।

**अनन्तवातः** । पुं। तन्नामकशिरोरोगविशेषे। लक्षणं—दोषास्तु दुष्टास्त्रय एव मन्यां सम्पीड्य घाटासु रुजां सुतीव्राम्। कुर्व्वन्ति योऽक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु॥ गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान्। अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम्॥ मा.नि.।

**अनन्ता** । स्त्री। स्वनामख्यातलतायां। অনন্ত-মূল। हिं अनन्तमूल। सु. मिश्र.अ.। शारिवेति उत्तरापथे प्रसिद्धा। रा.नि.व१२। See सारिवा। च.द.पि.ज्व.चि.शिरोलेपे। "कालियचन्दनानन्ता।" भा.म.ख.४भ.गर्भ-चि.। "अनन्ता शारिवा रास्ना"। भा.म.ख-१भ.ज्वरे शारिवादौ। "अनन्ता बालकं मुस्तम्"। च.सू.४,३१दश.। दूर्व्वायां। हे.च.४। स्वर्णक्षीर्य्यां। प मु.। लाङ्गल्यां। प.मु.। भा.पू. १गु.व.। दुरालभायां। प.मु.। भा.म.ख.४भ,

मु.री चि. । "कल्कैरनन्ता खदिरारिमेद..... ।" वा.१५अ. प्रियङ्ग्वादि व. । प्रियङ्ग्वादि-दूर्व्वादि-व. हेम'.श्वतायां। "दूर्व्वानन्ता निम्बवासात्मगुप्ता पद्मा-द्रजी धीजनवल्लभनन्ता ।" नीलदुर्व्वायाम् । भा. पू.१। रा.नि.व.१२। गोलीर्भ्या । শ্বেতদূর্ব্বা । रा. नि.व.८ । यवासायाम् । भा.म.४भ.काकोल्यादिव., "अनन्तां कुक्कुटीं बिम्बीम्"। दुरालभाभावे यवासा ग्राह्या । अग्निमन्थवृक्षे । गुडूच्याम् ।

**अनभिलाषः** । पुं । अन्नविद्वेषे । अरोचके । रा.नि.व.२० ।

**अनलः** । पुं । चित्रकक्षुपे । रा.नि.व.६ । भा.पू. १भ.ह व.। च.द.संग्रहणी चि.पाठाद्यचूर्णे । रक्त-चित्रके । र.सा.सं. । भल्लातकवृक्षे । रा.नि.व.११ । पित्ते । रा.नि.व.२१ । देवधान्ये । मद.व.१० । अग्नौ । [दूर्व्वा ।" भैष.कुष्ठ-चि.।

**अनलम्** । क्ली । भल्लातकबीजे । "अनलमरिच-

**अनलनामा** । पुं । चित्रकवृक्षे । [नि.व.३ ।

**अनलप्रभा** । स्त्री । ज्योतिष्मतीलतायाम् । रा.

**अनलविवर्द्धनी** । स्त्री । कर्कटिकायाम् । কাঁকুড়গাছ ।

**अनली (लिन्) लिः** । पुं। वकवृक्षे । त्रिका.

**अनवस्थितचित्तत्वम्** । क्ली । वायुरोगे । वै.निघ. । चित्तचाञ्चल्ये ।

**अनशनम्** । क्ली । लङ्घने । मा.नि. ।

**अनक्षः** । त्रि । अन्धे ।

**अनक्षि** । क्ली । कुचक्षुषि ।

**अनाक्रान्ता** । स्त्री । कण्टकार्य्याम् । र.मा. ।

**अनागतार्त्तवा** । स्त्री । कन्यायाम्। अजात-रजस्कायाम् । रा.नि.व १८ । [सु.उ.६५अ. ।

**अनागतावेक्षणम्** । क्ली। एतत् वक्ष्यतीत्यर्थे।

**अनाचारः** । पुं । असत्कर्म्मणि । वै.निघ. ।

**अनातङ्कः** । त्रि । अरोगिणि ।

**अनातपः** । पुं । आतपाभावे ।

**अनातुरः** । त्रि । अरोगिणि ।

**अनामकम्** । क्ली । अर्शोरोगे । श.र. ।

**अनामयम्** । क्ली । आरोग्ये । रा.नि.व.२० ।

**अनामा** । पुं । अनामिकाङ्गुली । श.र. ।

**अनामिका** । स्त्री । तन्नामकाङ्गुली, अङ्गुष्ठा-त्चतुर्थाङ्गुली । रा.नि.व.१८ ।

**अनार्जवः** । पुं । रोगे । रा.नि.व.२० ।

**अनार्त्तवजलम्** । क्ली । पौषादिमासचतुष्टय-भवे वृष्टिजले । तत्र वातादिदोषत्रयकोपनं । यथा —अनार्त्तवं प्रमुञ्चन्ति वारि वारिधरास्तु यत् । त-त्त्रिदोषाय सर्व्वेषां देहिनां परिकीर्त्तितं । भा.पू. वारिव. ।

**अनार्त्तवा** । स्त्री। रजःशून्यायां । तन्नामकयो-निव्यापदि रोगे । अनार्त्तवास्तनी षण्ढी खरस्पर्शा च मैथुने । मा.नि. ।

**अनार्य्यकम्** । क्ली । Aloe wood. अगुरु-काष्ठे । कृष्णा. । काष्ठागुरुणि । रा.नि.व.१२ । भा.पू.१भ.क.व. । [रा नि. ।

**अनार्य्यजम्** । क्ली । Aloe wood. अगुरुणि ।

**अनार्य्यतिक्तः (कः)** । पुं । (Gentiana cherayta Rox.) भूनिम्बे । চিরাতা । अम.।

**अनासिकः** । त्रि । नासिकाहीने ।

**अनाहः** । पुं । आनाहरोगे । See आनाहः ।

**अनाहारः** । पुं । आहाराभावे ।

**अनिच्छः** । त्रि । तृप्ते । वै.निघ. ।

**अनिमिषः** } पुं । मत्स्ये । त्रिका.मी.षचतुष्क ।
**अनिमेषः** } त्रि । निमेषशून्ये ।

**अनिर्माल्या** । स्त्री । (Medicago esculenta.Rox ) पिच्छिकायाम् । पृक्कायाम् । পি-ড়িং । रत्ना. ।

**अनिर्वाणः** । पुं । कफे । वै.निघ. ।

**अनिलः** । पुं । वायौ । शाकतरौ । শেগুন গাছ। रा.नि.व.२३ । [वै.निघ.।

**अनिलकपित्थकः** । पुं । स्थूलाम्रातके ।

**अनिलकारकः** । पुं। काञ्जिकभेदे । वै.निघ.

**अनिलघ्नः(कः)** । पुं ।(Terminalia belerica.) बिभीतकवृक्षे । रा.नि.व.११ ।

**अनिलज्वरः** । पुं । वातिकज्वरे । स च सा-

अनिरामभेदात् द्विविधः। च.द.। See ज्वरः।

**अनिलनिर्यासः** । पुं । प्रियालवृक्षे । पियाशाल । मं विवला । वै.निघ. ।

**अनिलपर्य्ययः** । पुं । वायुरोगे ।

**अनिलभुक्** । पुं । सर्पे । वै.निघ. । [रस.र. ।

**अनिलरसः** । पुं । रसोऽयं पाण्डुरोगे हितः ।

**अनिलरिपुः** । पुं । एरण्डवृक्षे । वै.निघ.२भ. सन्धि-ज्व.चि. रास्नादिः ।

**अनिलहरम्** । क्ली । कृष्णागुरुणि । वै.निघ. ।

**अनिला** । स्त्री । नद्याम् । खटिकायाम् । फुलखड़ि । र.मा.।

**अनिलाजीर्णम्** । क्ली। वाताजीर्णे। वा.सू.८अ.

**अनिलाटिका** । स्त्री । रक्तपुनर्नवायाम् ।

**अनिलान्तकः** । पुं । इङ्गुदीवृक्षे । जियापूती । हिं इङ्गोट् । रा.नि.व.८।

**अनिलापहा** । पुं। रक्तकुलत्थके । लालकर्ति। वै.निघ. ।

**अनिलामयः** । पुं । वायुरोगे । वातव्याधौ ।

**अनिलारिरसः** । पुं। वातव्याध्यधिकारे रसः। अत्र वातारिरसैः एरण्डमूलरसैः । अग्निः चित्रकः। तोयैः क्वाथैः। र.सा.सं. रसेन गन्धं द्विगुणं विमर्द्य वातारिनिर्गुण्डिरसैर्दिनैकं । निवेशयेत्ताम्रमये पुटे तत्सर्व्वं मृदावेष्ट्य च वालुकाख्ये । यन्त्रे पुटे गोमयचूर्णवह्नौ स्वभावशीते तु समुद्धरेत्तत् ॥ निर्गुण्डिकावातहराग्नितोयैः संचूर्ण्य यत्नेन विभावयेत्तत् ॥

**अनिलोचितः** । पुं । नीलमाषके । वै.निघ.।

**अनिष्टा (ष्ठा)** । स्त्री । नागबला । रा.नि. ।

**अनिःसारा** । स्त्री । कदलीवृक्षे । कलागाछ । रा.नि.व.११। वै.निघ. ।

**अनिक्षुः** । पुं । (Chaccharum spontaneus.) इक्षुविशेषे । थागड़ा । र.मा.। काशाख्यो। रत्ना. । [षचतुष्कं ।

**अनीकस्थः** । त्रि । हस्तिशिक्षाविचक्षणे । मे.

**अनीली** । स्त्री । काशतृणे । र.मा.।

**अंशुकदली** । स्त्री । कदलीविशेषे । मं लोखंडीकेल ।

**अनुकर्णम्** । क्ली । कर्णसमीपे । वा.शा.४अ. ।

**अनुकर्षणम्** । क्ली । पानपात्रे । हारा. ।

**अनुकल्पः** । पुं । An alternative. अभावे तद्गुणद्रव्यान्तरग्रहणे ।

**अनुकूलका** । स्त्री । लघुदन्त्याम् । वै.निघ. ।

**अनुकूला** । स्त्री । क्षुद्रदन्तीवृक्षे । रा.नि.व.६।

**अनुकूलिनी** । स्त्री । क्षुद्रदन्त्याम् ।

**अनुगः** । पुं । परिचारके । रत्ना. ।

**अनुजम्** । क्ली । प्रपौण्डरीक-नाम-गन्धद्रव्यविशेषे । पुंडरिया । रा.नि.व.१२ ।

**अनुजा** । स्त्री । त्रायमाणलतायाम् । गोयालिया लता । रा.नि.व.५ । बना डुमुर । भा.पू. १भ.गु.व. । [दनु । सि.यो.पाण्डुचि.हन्द्वः ।

**अनुतक्रम्** । क्ली। तक्रानुपाने । जग्ध्वा तक्रं पिबेः

**अनुतर्षः** । पुं । तृष्णा । सुरापानपात्रे । भेष.मे. षचतुष्कं ।

**अनुत्क्लेशः** । पुं । उत्क्लेशाभावे । च.सं.विसूची ।

**अनुत्थितविद्धा (शिरा)** । स्त्री । दुःस्थानबन्धनात् वेपमानायाः यस्याः शिरायाः शोणितसम्मोही भवति । सु.शा.८अ. ।

**अनुपजः** । त्रि । अनुपदेशजाते । ते च कूलेचरकोषस्थमत्स्यप्लवपादिनो भवन्ति । See अनूपवर्गः । [इत्यादि । हला. ।

**अनुपदीना** । स्त्री। उपानहि । जूता, खड़म

**अनुपशयः** । पुं । What increases the disease. उपशयविपरीते व्याध्यसात्म्यौषधान्नविहारादौ। यथा—हेतुव्याधिविपर्य्यस्तविपर्य्यस्तार्थकारिणां । औषधान्नविहाराणामुपयोगं सुखावहं । विद्यादुपशयं व्याधेः सहि सात्म्यमिति स्मृतः॥ विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः । मा.नि. पञ्चनिदाने ।

**अनुपानम्** । क्ली । औषधाङ्गपेयविशेषे । अनुपान । तत्र औषधपानानन्तरं विलम्ब्य प्रयोज्यं, रात्रौ पुनः पाचनमेव व्यवस्थेयम् । "विलम्ब्य च क्रामणमेतदीरितं रात्रौ पुनः पाचनमेतदूचिरे ।" रा.नि.व.२० । वातेऽनुपानं स्निग्धोष्णं, श्लेष्मणि

कषीर्षं, पिते खिग्धं, स्नेहपाने उष्णोदकमित्यादि। मद.व १३। "चूर्णावलेहगुड़िकाकल्कानामनुपानकं। वातपित्तकफोद्रेके त्रिद्व्येकपलमाहरेत्" । शार्ङ्ग.म. ख.६अ.।

**अनुयालुः** । पुं । पानीयालुके । बन आलू । रा.नि.व.७। [ठले । श.च. । खङ्गठले । वेतसे ।

**अनुपुष्पः** । पुं । (Saccharum sara.) शर-

**अनुबन्धी** । स्त्री । तृष्णायां । हिक्कायां । मे. ।

**अनुभासः** । पुं । काकविशेषे । वै.निघ. ।

**अनुभूतिः** । स्त्री । चिञ्चायाम् । তেউড়ী । हिं निसोतर । See चिञ्चत् ।

**अनुमतम्** । क्ली । "परमतमप्रतिषिद्धम् । यथान्यो ब्रूयात् सप्तरसा" इति सु.उ.६५अ. ।

**अनुयवः** । पुं । यवान्न्यूनोऽनुयवः। वा.। निःशूकयवे । हेमा. । गुणाः—ह्रद्यः स्थैर्यकरः सूक्ष्मेदः-पित्तकफघ्नः पीनसश्वासकासोरुस्तम्भकण्ठरोगघ्नश्च । वा.शूकधान्यवर्गे । [रा.नि.व.६।

**अनुरुहा** । स्त्री । नागरमुस्तायां । नागरमुता ।

**अनुरेवती** । स्त्री । चुद्रदन्त्याम् । रा.नि.व.६ ।

**अनुलासः** । पुं । मयूरपच्छिणि । मयूर ।

**अनुलास्यः** । पुं । मयूरपच्छिणि ।

**अनुलेपः** / **अनुलेपनम्** } पुं, क्ली । चन्दनादौ । गन्धद्रव्यादिलेपने । চন্দনাদি লেপন । गुणाः—अनुलेपस्तृषामूर्च्छादौर्गन्ध्यश्रमवातजित् । सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धनः॥ मद.व.१३। अपिच—अनुलेपनकं बल्यं तेजःसौभाग्यदायकम्। त्वच्यं प्रीतिप्रदं प्रोक्तं तृण्मूर्च्छाश्रमनाशनं । दौर्गन्ध्यवातहं प्रोक्तं पूर्व्वाचार्य्यैरिदं स्मृतम् ॥ वै.निघ. । प्रीतिकरं, ओजस्करं, शुक्रवर्द्धनं, दौर्गन्ध्यहरं, श्रमपापतन्द्राहरञ्च । राज. ।

**अनुलोमनम्** । क्ली । अनुलोमकरणे । मलादिधातूनां यथामार्गे गमनोपाये । মলাদিধাতুর যথাপথে গমনোপায়। यथा—कृत्वा पाकं मलानाञ्च भित्वा बन्धमधो नयेत् । तच्चानुलोमनं प्रोक्तं यथा प्रोक्ता हरीतकी ॥ भा. ।

**अनुल्वणी** । स्त्री । हिक्कायाम् । तृष्णायाम् । मे.।

**अनुवासः** / **अनुवासनः** / **अनुवासनकः** } पुं,क्ली सौरभे । स्नेहवस्तौ । स्नेहने । धूपने । मे. । "यः स्नेहो दीयते सः स्यादनुवासननामकः" । तस्य मात्रा च पलद्वयं तदर्द्धं वेति । भा. ।

**अनुवासनवस्तिः** । पुं । स्नेहवस्तौ । मात्रावस्तौ । "अनुवासनभेदश्च मात्रावस्तिरुदीरितः" । भा.। स च तैलादिस्नेहोपकरणैः स्नेहक्काथादिना वा साध्यते गोपुच्छाकारेण स्वर्णादिनिर्म्मितेन, गजदन्तादिकृतेन वा नेत्रेण । পিচকারী বা নল। नेत्रपरिमाणं वयोभेदेन विविधम् । एकवर्षीयात् षड्वर्षपर्य्यन्तं षडङ्गुलं । अष्टवर्षे अष्टाङ्गुलं। षोड़शवर्षे द्वादशाङ्गुलं।प्रत्येकस्य परिणाहो यथाक्रमं कनिष्ठिकानामिकामध्यमाङ्गुलिपरिमितः । एतेषाञ्च प्रत्येकं यथाक्रमं सार्द्धाङ्गुलं सार्द्धद्व्यङ्गुलं सार्द्धत्र्यङ्गुलञ्च वस्तिमुखे सन्निवेश्यम् । वस्तिद्वारप्रवेशनीयनेत्रमुखञ्च यथाक्रमं कङ्कश्येनमयूरपुच्छमध्यनाड़ीवत् स्थूलं भाव्यम् । येन च द्रव्येणास्थापनं तत्परिमाणं पूर्व्वोक्तवयोऽनुरूपमेव यथाक्रमं रोगिणो द्वाञ्जलिपरिमाणं चतुरञ्जलिमितमष्टाञ्जलिमितञ्च भाव्यम् । एवमुत्तरोत्तरं वयोऽनुरूपं नेत्रादिमानं वर्द्धनीयम् । द्वितीयञ्च—पञ्चविंशतेरूर्द्ध्वं नेत्रदैर्घ्यं द्वादशाङ्गुलं मूलपरिणाहश्च अङ्गुष्ठोदरसन्निभो भाव्यः । गृधिनीपत्रनाड़िकावच्चाग्रभागः, बदरास्थिमितं वा कलायपरिमितं वा छिद्रवर्त्म भाव्यम् । वस्तिबन्धनार्थञ्च नेत्रमूले कर्णिकाद्वयं (কাণি) कार्य्यम् । द्रव्यमानञ्च रोगिणो द्वादशाञ्जलि । अत्र कल्पे माधुकतैलं ग्राह्यम् । सु.चि.३८अ.। एतत्प्रकरणं सु.चि.३५।३६।३७अ.द्रष्टव्यं । विरेचनात्सप्तरात्रे गते जातबलाय च । भुक्तान्नायानुवास्याय वस्तिर्देयोऽनुवासनः ॥ अथानुवास्यं स्वभ्यक्तं उष्णाम्बुस्विदितं शनैः । भोजयित्वा यथाशास्त्रं कृतचंक्रमणं ततः । उत्सृष्टानिलविण्मूत्रं योजयेत् स्नेहवस्तिना । सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः । कुञ्चितापरजङ्घस नेत्रं स्निग्धे गुदे न्यसेत् । बद्ध्वा वस्तिमुखे सूत्रं वामहस्तेन धारयेत् ॥ पीड़येद्दक्षिणेनैव मध्यवेगेन धीरधीः । जृम्भाकासक्षवादींश्च वस्तिकाले न कारयेत् ॥ वै.निघ.वस्तिविधिः । अथाश्वस्य यथा—अथानुवासनविधेस्तथैवास्थापनस्य च । प्रवक्ष्यामि यथायोगं शास्त्रदृष्टेन वर्त्मना ॥ काष्ठैर्दण्डैरयोभिश्च

मङ्गंगननलादिभिः । द्वादशाङ्गुलदीर्घन्तु परिणाहे षड़ङ्गुलम् ॥ कोलास्थिमात्रच्छिद्रन्तु कुर्य्यान्नेत्रं विचक्षणः । मूलादनुक्रमग्रञ्चामस्थूणन्तु विशेषतः । त्यक्त्वाङ्गुलानि चत्वारि कर्णिकान्तस्य कारयेत् । पुटकस्य प्रबन्धाय मूले द्वे चापि कर्णिके ॥ अनेनास्थापनं कुर्य्यादनुवासनमेव च । यथायोग्यं भिषक् प्राज्ञः सर्व्वरोगोपशान्तये ॥ अनुवासनविवरणम् — त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा । भोजयित्वा हयं प्राज्ञो रसकक्षेहभोजनैः ॥ भोजितं भोजनोक्तेन दिनान्ते चानुवासयेत् । निरूहयेदनाहारमपराह्ने विचक्षणः ॥ त्रिभिर्वारैः प्रदातव्यौ निरूहः शास्त्रकोविदैः । ईषत्तीक्ष्णः प्रयोक्तव्यः प्रथमं पुटकोविदैः ॥ द्वितीयश्च तृतीयश्च तीक्ष्णौ चैव प्रकीर्त्तितौ ॥ ज.द.१६अ. ।

**अनुवासनोपगवर्गः** । पुं । षड़्विंशदशकनाम-कषायवर्गे । यथा —रास्नासुरदारुविल्लमदनशतपुष्पहश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योणाका इति दशेमानि··· ॥ हश्चीरः श्वेतपुनर्नवा । च.सू.४अ.।

**अनुवासाख्यः** । पुं । अनुवासने । वै.निघ. ।

**अनुवेल्लितम्** । क्ली । शाखासु व्रणबन्धनभेदे । सु.सू.१८अ. ।

**अनुशयी** । स्त्री । क्षुद्ररोगान्तर्गतपादरोगविशेषे । तल्लक्षणं यथा —गम्भीरामल्पशोथाञ्च सवर्णां सुपरिस्थिताम् । पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिनीम् ॥ चि.—हरेदनुशयीं वेद्यः क्रियया श्लेष्मविद्रधेः । भा.पाद रो.चि. ।

**अनुशस्त्रम्** । क्ली । त्वक्सारस्फटिककाचजलौकाग्निक्षारनखादिरूपशस्त्रेषु । तानि च शिशुभीरुप्रभृत्यर्थम् । सु.सू.८अ. । [त्रि । शीतले ।

**अनुष्णम्** । क्ली । उत्पले । नीलपद्मे । रा.नि.।

**अनुष्णवल्लिका** } स्त्री । नीलदूर्व्वायाम् । रा.
**अनुष्णवल्ली** } नि.व.८ ।

**अनुसार्य्यकम्** । क्ली । सुगन्धद्रव्यविशेषे । मं कड़ीला ।

**अनूचानः** । पुं। उत्तमवैद्ये . साङ्गवेदाध्यायिनि।

**अनूपः** । पुं । महिषे । मे.पत्रिकं । अम्बुप्रायदेशे । मे.। तल्लक्षणं यथा—"बह्वम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः । देशोऽनूप इति ख्यातः ॥ तथा नदीपल्वलशैलाब्जफुल्लोत्पलकुलैर्युतः । हंससारसकारण्डचक्रवाकादिसेवितः । शशो वराहमहिषरुरुरोहितकुलाकुलः । प्रभूतद्रुममुख्याढ्यो नानाशष्पफलान्वितः । अनेकशालिकेदारकदलीक्षुविभूषितः । अनूपदेशो ज्ञातव्यो वातश्लेष्मामयार्त्तिमान्" । भा. । गुणाः— गुरुः, सान्द्रः, पिच्छिलः, मधुरः, श्लेष्मलः, स्निग्धः, प्रमेहगलगण्डश्लीपदर्च्छर्द्दिकरश्च । रा.नि.। राजवल्लभस्तु स्निग्धं शीतलं वातश्लेष्मलं गुरुश्चाह ।

**अनूपजम्** । क्ली । आर्द्रके । रा.नि.व.६ । त्रि । अनूपदेशोत्पन्नद्रव्यमात्रे । पुं । वृक्षविशेषे । আনারস গাছ । वै.निघ. । [अनूपः

**अनूपदेशः** । पुं। अनूपलक्षणयुक्तप्रदेशे । See

**अनूपमांसम्** । ह । अनूपदेशस्थजन्तुमांसे । See आनूपमांसम् । [रा.नि.व.१० ।

**अनूष्णम्** । उत्पले । শুন্দিফুল, শালা ।

**अनृजुः** । त्रि । शठे । असरले। पुं । तगरपुष्पवृक्षे।

**अनेकदिग्वायुः** । पुं । नानादिग्भवविसंष्ठुलवाते । এলো মেলো বাতাস ।

**अनेकपः** । पुं । गजे । হাতী । मद.व.११ ।

**अनेकान्तः** । पुं । क्वचित्तथा क्वचिदन्यथेति यः सः । सु.उ.६५अ. ।

**अनेड़मूकः** । त्रि । वाक्श्रुतिरहिते। मे.। अन्धे।

**अनोकहः** । पुं । वृक्षे । গাছ ।

**अन्तःकण्ठशल्यावलोकिनी** । स्त्री । नाड़ीयन्त्रविशेषे । सा च दशाङ्गुला भवति। भा.नाः।

**अन्तःकरणम्** । क्ली । अन्तरिन्द्रिये, मनसि ।

**अन्तःकुटिलः** । पुं । शङ्खे । शाँक ।

**अन्तःकोटरपुष्पी (ष्पिका)** । स्त्री । नीलवृक्षायाम् । ছাগলবেঁটে । प.मु. । रत्ना. ।

**अन्तःपदवी** । स्त्री । सुषुम्नाख्यनाड़िकायाम् ।

**अन्तःसत्त्वा** । स्त्री। भल्लातकवृक्षे । गर्भिण्याम् । श.च. ।

**अन्तकः** । पुं । काञ्चनारवृक्षे । रक्तकाञ्चन । भा.गु.व.। यमे । सन्निपातज्वरविशेषे । तल्लक्षणं— यथा—दाहं करोति परितापनमातनोति, मोहं ददाति विदधाति शिरःप्रकम्पं । हिक्कां करोति

कमनच समाजुहोति जानीहि तं विबुधवर्जित-मन्तकाव्यम्। भा.म.१भ। [रचिकं।

**अन्तरम्** । क्ली। अवकाशे। छिद्रे। मध्ये। मे.

**अन्तरापत्या** । स्त्री। गर्भिण्याम्।

**अन्तरायामः** । पुं। आक्षेपकभेदे। लक्षणं यथा—अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः। स्नायुप्रतानमनिलस्तस्य: क्षिपति वेगवान्॥ विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन्। अभ्यन्तरे धनुरिव यदा नमति मानवः। तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली॥ भा.। मा.नि.। [व.१२।

**अन्तरि(री)क्षम्** । क्ली। आकाशे। रा नि.

**अन्तरिक्षजलम्**
**अन्तरीक्षजलम्** } क्ली। आकाशजले। वृष्टिर जल। See गगनाम्बु।

**अन्तरुहा** । स्त्री। श्वेतदूर्वायाम्।

**अन्तर्जठरम्** । क्ली। कोष्ठे। कुक्षिमध्ये। अम.।

**अन्तर्दधनम्** । क्ली। सुरावीजे। श.च.।

**अन्तर्दाहः** । पुं। शरीराभ्यन्तरदाहे। গায়ের ভিতরে জ্বালা। कोष्ठसन्तापे। रा.नि.व.२०। सन्निपातज्वरविशेषे। लक्षणं यथा—अन्तर्दाहः शैत्यं बहिः श्वयथुररतिरपि श्वासः। अङ्गमपि दग्धकल्पं सोऽन्तर्दाहार्दितः कथितः॥ भा.म.१भ.।

**अन्तर्धूमः** । त्रि। बद्धमुखहण्डिकाभ्यन्तरे अग्निदग्धे। च.द. ग्रहणी-चि. चित्रकचारे।

**अन्तर्मलः** । पुं। मलान्तर्वृद्धे। कश्चिदचिः।

**अन्तर्महानादः** । पुं। शङ्खे।

**अन्तर्मुखम्** । क्ली। व्रणविस्रावणास्त्रविशेषे। लक्षणं यथा—तद्वदन्तर्मुखं तस्य मध्यमध्यर्द्धमङ्गुलम्। अर्द्धचन्द्राननं चैतत् तथाध्यर्द्धाङ्गुलं फलं॥ कश्चिदचिः।

**अन्तर्मुखी** । स्त्री। स्त्रीयोनिरोगविशेषे। तल्लक्षणं—व्यवायमतितृप्ताया भजन्त्यास्तत्र पीड़ितः। वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः॥ वक्रयत्याननं योन्याः सास्थिमांसानिलार्त्तिभिः। अत्यर्त्तिमैथुनासक्ता योनिरन्तर्मुखी मता॥ च.चि.।

**अन्तर्वत्नी** । स्त्री। गर्भिण्याम्। अम.।

**अन्तर्वमिः** । स्त्री। अपरिपाके। त्रिका.।

**अन्तर्विद्रधिः** । पुं। जठरान्तरस्थविद्रधिरोगे। लक्षणं यथा—पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणं। वल्मीकवत् समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम्॥ गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा। वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ। एषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः॥ भा.। [वृद्धिः।

**अन्तर्वृद्धिः** । पुं। अन्त्रवृद्धिरोगे॥ See अन्त्र-

**अन्तर्वेधः** । पुं। मर्म्मवेधे। मर्म्मपीड़ायाम्।

**अन्तशय्या** । स्त्री। मरणे। मे.।

**अन्तस्नेहफला** । स्त्री। श्वेतकण्टकार्य्याम्।

**अन्तावसायी** । (इन्)। पुं। नापिते। मे.।

**अन्तिका** । स्त्री। सातलायाम्। চামরকষা। चुल्ल्याम्। मे.कत्रिकं।

**अन्त्यः** । पुं। मुस्तायाम्। मे.।

**अन्त्यपुष्पा** । स्त्री। धातकीवृक्षे। वै.निघ.।

**अन्त्रम्** । क्ली। पुरीतति। নাড়ীভুঁড়ি। रा.नि.व.१८। उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः। अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्द्दिशेत्॥ सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणामर्द्धव्यामहीनानि। सु.शा.५अ.। असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः। तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति। ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः॥ इति तदुत्पत्तिः। सु.शा.४अ.।

**अन्त्रकूजः** । पुं। वायुरोगविशेषे। नाड़ीशब्दे। सु.नि.१अ.। [বাক্ষেধরা इति भाषा। नि.।

**अन्त्रकूजनम्** । क्ली। अन्त्रध्वनौ। আঁৎডাকা।

**अन्त्रपाचम्** । क्ली। स्थावरविषान्तर्गतत्वक्सारनिर्य्यासविषे। सु.कल्प.२अ। [२।

**अन्त्रवल्लिका** । स्त्री। महिषवल्ल्यां। रा नि.व.

**अन्त्रवल्ली** । स्त्री। सोमवल्लीलतायाम्।

**अन्त्रवृद्धिः** । स्त्री। Rupture. स्वनामख्यातरोगविशेषे। तल्लक्षणं यथा—वातकोपिभिराहारैः शीततोयावगाहनैः। धारणे रणभाराध्वविषमाङ्गप्रवर्त्तनैः॥ क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा। पवनो विगुणीकृत्य स्वनिवेशादधो नयेत्। कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा॥ उपे

वातकुष्ठकण्डूविषव्रणघ्नः प्लीहगुल्मार्शःकफोदरमल-क्रमिहरश्च । कटुतिक्तोष्णः कफघ्नो मेदघ्नो विषघ्नः वातकुष्ठव्रणघ्नः शोथकण्डूविसर्पहरश्च । पुष्पं मधुरं तिक्तं धारकं क्रमिकुष्ठकफार्शोविषरक्तपित्तघ्नं गुल्म-शोथहरञ्च । भा.पू.१भ. ।

**अरुणोपलः** । पुं । अरुणवर्णमणिविशेषे । चूनि इति भाषा । पद्मरागमणौ । हे.च. ।

**अरुन्धती** । स्त्री । जिह्वाग्रे । वै.निघ. ।

**अरुषः** । पुं । व्रणे । घोटके । वै.निघ. ।

**अरुंषिका** । स्त्री । क्षुद्ररोगान्यतमकपालरोगे । शिरोव्रणे । अयं कफरक्तक्रमिकोपतो भवति । "अरुंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्ध्नि तु । कफासृक्-कृमिकोपेन नृणां विद्यादरुंषिकाम्" ॥ मा.नि. ।

**अरुष्कः** । पुं । भल्लातकवृक्षे । ভেলা গাছ । मं विवबा । भा पू.१भ. । रा.नि.व.११ ।

**अरुष्करः** । पुं । भल्लातकवृक्षे । प.मु. । रा.नि व.११ । भा.पू.१भ. । मद.व.१ । अरुंषिकायाम् । त्रि । व्रणकृति । मे.रचतुष्कं ।

**अरुष्करम्** । क्ली । भल्लातकफले । च.द.अर्श-चि. । भैष.कुष्ठ-चि.पञ्चतिक्त.घृते । "सनागरारुष्करवृद्धदारकम्" । सि.यो.चतुःसमलौहे । च.सू. ४अ.कुष्ठघ्नव. । [আমলা । रा.नि.व.५ ।

**अरुषा (टा)** । स्त्री । भूम्यामलक्याम् । भूँइ

**अरोकदन्तः** । त्रि । कृष्णदन्ते । वै.निघ. ।

**अरोचकः** । पुं । अरुचिरोगे । स पञ्चविधः —वातपित्तकफसन्निपातागन्तुभेदेन । मा.नि. । मनस्तापज आगन्तुक इति शार्ङ्ग.पू.७अ. । लक्षणं यथा—प्रक्षिप्तन्तु मुखे चान्नं जन्तोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो भक्तद्वेषमथो शृणु ॥ चिन्त-यित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनं । द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्यान्ने न भवेच्छ्रद्धा स भक्तच्छन्द उच्यते । विजयरक्षिते भोजः । एते त्रिविधा अपि रोगा चरकसुश्रुताभ्यां एक एव कृताः । वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः । अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ॥ मा.नि. । पथ्यं यथा—वस्तिः समीरणे पित्ते विरेको वमनं कफे । सर्व्वेषु-सर्व्वकामार्थं हर्षणं स्यादरोचके ॥ भा. । बस्तिर्विरेको वमनं यथाबलं धूमोपसेवाकवलग्रहस्तथा । तिक्तानि काष्ठानि च दन्तघर्षणं चित्तान्नपानानि हितैः कृतानि । गोधूममुद्गारुणशालिषष्टिका मांसं वराहाजशशैणसम्भवं । चेङ्गी भषाख्यं मधुरालिकीलिशः प्रोष्ठी खलेशः कवयी च रोहितः । कर्कारुवेत्राग्रनवीनमूलकं वार्त्ताकुशोभाञ्जनमोचदाडिमं । भव्यं पटोलं रुचकं घृतं पयो बालानि तालानि रसोनशूरणम् । द्राक्षा रसालं नलदम्बुकाञ्जिकं मद्यं रसालादधितक्रमार्द्रकम् । कङ्कोलखर्जूरपियालतिन्दुकं पक्वं कपित्थं वदरं विकङ्कतम् । तालास्थिमज्जा हिमवालुका सिता पथ्या यमानी मरिचानि रामठम् । स्वाद्वम्लतिक्तानि च देहमार्जना वर्गोऽयमुक्तोऽरुचिरोगिणो हितः । इति पथ्यम् । कासोद्गारक्षुधानेत्रवायुवेगविधारणम् । अहृद्यान्नमसृक्स्रुतं क्रोधं लोभं भयं शुचम् । दुर्गन्धरूपसेवा च न कुर्यादरुची नरः ॥ इति अपथ्यम् ।

**अर्कः** । पुं । (Calotropis gigantea, Syn, Asclepias gigautea.) स्वनामख्यातोपविष-जातीयक्षुपे । আকন্দ গাছ । हिं मान्दार । मं रुइ । कं अर्क्के । तें जिल्लेटुचेट्टु । अर्कः श्वेतरक्तभेदेन द्विविधः । तयोर्विशेषास्तत्पर्य्याये द्रष्टव्याः । गुणाः —कटुः उष्णः वातजित् दीपनीयः शोफघ्नः व्रणघ्नः कण्डूकुष्ठक्रमिघ्नश्च । रा.नि.व.१० । सारकः वातघ्नः कुष्ठकण्डूव्रणप्लीहगुल्मार्शःकफोदरमलक्रमिघ्नश्च । पुष्पं—मधुरं तिक्तं धारकं कुष्ठक्रमिकफार्शोविषरक्तपित्तगुल्मशोथघ्नञ्च । भा.पू.१भ. । अर्कद्वयं सरवातकुष्ठकण्डूविषव्रणान् । निहन्ति प्लीहगुल्मार्शो-यकृच्छ्लेष्मोदरक्रमीन् । मद.व.१ । मात्रा २-३ रक्तिः । इति रावणकृतचिकित्साशास्त्रे । ताम्रे । मे. कद्विकं । त्रैलोक्यडम्बररसे । वै.निघ. वा.व्या. चि.चिन्तामणिरसे । स्फटिके । मे.कद्विकं । अरुणार्कें । प.मु.भा.पू.१भ. । आदित्यपत्रक्षुपे । रा. नि.व. ४ । "अर्कोरक्तपुष्पः प्रसिद्धः ।" सु.सू.३७अ. अर्कादिव. । ३९अ.शिरो.चि. ।

**अर्ककान्ता** । स्त्री । आदित्यभक्तायाम् । हुड़-हुड़िया । रा.नि.व.४ । मद.व.१ ।

**अर्कगन्धिका** । स्त्री । क्षीरविदार्य्याम् । कुष्माण्ड भूमिकुष्माण्ड । प.मु. ।

**अर्कचन्दनम्** । क्ली । रक्तचन्दने । रा.नि.व.१२ ।

क्ली। अर्कमूले ।

**अर्कतैलम्** । क्ली। कुष्ठाधिकारे । अत्र कटुतैलं पलाष्टकं अर्कपत्ररसस्य पलाष्टकं निशाया: पलं मन:शिलायाश्च पलम् । च.द.कुष्ठ.चि. । सा.कौ. ।

**अर्कदल:** । पुं । आदित्यपत्रक्षुपे । रा.नि.व.४ । अर्कवृक्षे । [भा. ।

**अर्कनामा** । पुं । रक्तार्के । লাল আকন্দ ।

**अर्कपत्र:** । पुं । आदित्यपत्रक्षुपे । रा.नि.व ४ । च.द. । अर्कवृक्षे ।

**अर्कपत्रा (त्री) (त्रिका)** । स्त्री । ईश्वरमूलवृक्षे । ঈশের মূল । प.मु.र.मा. ।

**अर्कपर्ण:** । पुं । रक्तार्कवृक्षे । লাল আকন্দ । मं सूर्यमन्दार । भा.पू.१भ. । [माषाणी ।

**अर्कपर्णिका (र्णी)** । स्त्री । माषपर्ण्याम् ।

**अर्कपाद:** । पुं । सूर्यकान्तमणौ । निम्बवृक्षे । वै.निघ. । [क्षुपे ।

**अर्कपादप:** । पुं । निम्बवृक्षे । त्रिका. । अर्क

**अर्कपुष्पा** । स्त्री । क्षीरकाकोल्याम् । ক্ষীর কাঁকলা । See क्षीरकाकोली ।

**अर्कपुष्पिका** / **अर्कपुष्पी** } स्त्री । (Gygandropsis centa-phylla, Syn, Cleome pentaphylla.) सूर्यवल्ल्याम् । শ্বেত হুড়হুড়িয়া । अर्कहुलीति भाषा । अर्कसदृशपुष्पी लता । हिं अम्बाहुली दधियार् क्षीरवृम् । मं शिरदोडी । भा.४भ.बालरोग चि. । गुणा:—अर्कपुष्पी क्रिमिश्लेष्म-मेहपित्तविकारजित् । मद.व.१ । क्रिमिकफमेहमनोविकारघ्नी । भा.पू.१भ. । रक्तापराजितायाम् । रत्ना. । क्षीरकाकोल्यां । र.मा. ।

**अर्कप्रभागुडिका** । स्त्री । रसायनाधिकारे । अस्या: पाठ: यथा—रसं निष्कद्वयं शुद्धं निष्कैकं ताम्रचूर्णकं । चित्रामूलफलक्काथे यामं खल्ले विमर्द्दयेत् । तद्गोलं बन्धयेद्वस्त्रे दोला:यन्त्रेषु तक्रके । चित्राफलयुते पश्चाच्चतुर्यामात्समुद्धरेत् । वटिकार्कप्रभा नाम जरामृत्युविनाशिनी । संवत्सरप्रयोगेषु सूर्यतुल्यो भवेन्नर: । पलाशबीजतैलञ्च कर्षमेकं गवां पय: । अनुपानमिदं पाता दशनागबलो भवेत् ॥ प्रयोगा.रसायना. ।

**अर्कप्रिया** । स्त्री । आदित्यभक्तायाम् । হুড়হুড়িয়া গাছ । जवायाम् । रा.नि.व.१० ।

**अर्कभक्ता** । स्त्री । ब्राह्म्यां । ব্রাহ্মীশাক । आदित्यभक्तायाम् । হুড়হুড়িয়া, শুল্টে इति च भाषा । हिं हुलहुल । मं सूर्यफुलवल्ली । रा.नि.व.४ । र.मा. ।

**अर्कभूति:** । स्त्री । ताम्रभस्मनि । वै.निघ.२भ. क्षीरताम्ररसे, संग्रहणी-चि. ।

**अर्कमूर्त्तिरस:** । पुं । रसोऽयं सान्निपातिकज्वरे प्रयोज्य: । द्रव्याणि चास्य रसगन्धकलौहविषाणि । अत्र लौहस्याष्टौ भागा: पारदस्य भागद्वयं, गन्धको द्विगुण:,विषस्य च षोड़शांशो ग्राह्य: । अयमेव त्रिदोषदावानल: कथ्यते यदायं ताम्रपात्रस्थापित: पुन: निम्बुकरसपित्तवर्गकण्टकार्य्यार्द्रकरसैर्भाव्यते । भैष.ज्व.चि. ।

**अर्कमूलम्** । क्ली । तन्नामकवृक्षमूले । च.द. अग्निमा.चि.क्षारगुड़े ।

**अर्कमूला** । स्त्री ।(Aristolochia Indica.) ईश्वरमूल्याम् । ঈশের মূল । रत्ना. ।

**अर्कलवणम्** । क्ली । अर्कक्षारे । वै.निघ ।

**अर्कवल्लभ:** । पुं । बन्धुजीववृक्षे । বান্ধুলিবৃক্ষ, দুপুরে চণ্ডী । मं दुपारी । रा.नि.व.१० ।

**अर्कवल्ली** । स्त्री । आदित्यभक्तायां । হুড়হুড়ে । वै.निघ । [सु. । रा.नि.व.६ ।

**अर्कवेदम् (धम्)** । क्ली । तालीशपत्रे । प.

**अर्कसुता** । स्त्री। कृष्णापराजितायां । वै.निघ. ।

**अर्कसुधा** । स्त्री । अर्कोत्थसुधायाम् । আকন্দের চূণ। गुण: —गुल्मरोगस्य नाशिनी। वै.निघ.।

**अर्कहिता** । स्त्री । आदित्यभक्तायाम् । হুড়হুড়িয়া । मं सूर्यफुलवल्ली । रा.नि.व.४ ।

**अर्कक्षीरम्** । क्ली । अर्कवृक्षनिर्यासे । আকন্দের আটা । गुणा:—क्रिमिघ्नं व्रणघ्नं कुष्ठार्शोदरेषु च हितम् । राज. । तिक्तलवणमुष्णवीर्य्यं लघु स्निग्धं गुल्मोदरकुष्ठहरं विरेचने हितञ्च । भा.पू. १भ. । च.द.अर्श-चि. ।

**अर्कादिगण:** । पुं । अर्कालर्कनागदन्तीविशल्याभार्गीरास्नावृश्चिकालीप्रकीर्य्याप्रत्यक्पुष्पीपीत-

तैजोदकीर्य्याश्वेतायुग्मतापसवृक्षा इति । अर्कालर्क-करञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति ॥ सु.सू. ३८ष. । गुणाः—कफमेदोविषघ्नः क्रमिकुष्ठघ्नः विशेषाद्व्रणशोधनश्च । वा.सू.१५ष. ।

**अर्काश्मा** । पुं । सूर्य्यकान्तमणौ । चुनी, पान्ना इति च लोके । हला. । [अर्कवृक्षे । अम. ।

**अर्काह्वः** । पुं । तालीशपत्रे । सूर्य्यकान्तमणौ ।

**अर्क्की** । पुं। मयूरे । मयूर । मं मोरी । वै.निघ.।

**अर्केश्वररसः** । पुं । रसोऽयं वातव्याध्युपशमनो द्विविधश्च । तृतीयो रक्तपित्ते, चतुर्थश्च कुष्ठाधिकारे । "रसस्य भागाश्चत्वारो गन्धकस्य दशैव तु । ताम्रस्य वाटिकायाश्च दत्त्वा चैनामधोमुखीम् । सम्यक् निरुध्य तस्याश्च दद्यादूर्द्ध्वं शरावकं । भाण्डे निरुध्य यत्नेन भस्मनापूर्य्य भाण्डकम् । अग्निं प्रज्वालयेद्यामं सुखं तस्य निरुध्य च । स्वाङ्गशीतं समुद्धृत्य तत्ताम्रं चूर्णयेद्भृशम् । भावयेदर्कदुग्धेन पुटित्वा दशधा पुनः ॥" रसे.चि. । रसेन्द्रसारसंग्रहे अयमेव कुष्ठे धृतः । विशेषस्तु—तत्र गन्धकस्य ताम्रचक्रिकायाश्च १२ भागा उक्ताः । इति प्रथमः ॥ "रसेन गन्धं द्विगुणं विमर्द्य ताम्रस्य चक्रेण सुतापितेन । आच्छादयित्वाथ ततः प्रयत्नात् चक्रे विलग्नञ्च ततः प्रगृह्य । सञ्चूर्ण्य च द्वादश धार्कदुग्धैः पुटेत वह्नित्रिफलाजलैश्च ।" मात्रा२र.। इति द्वितीयः ॥ रसे.चि. । "सूतार्कं मृतताम्रञ्च मृताभ्रञ्च समाक्षिकम् । अमृताम्बुरसैर्भाव्यं त्रिसप्त कपुटे पचेत् । वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः । भक्षणम् ।" अत्र अर्कः ताम्रम् । अमृता गुडूची । माक्षिकं स्वर्णमाक्षिकम् । र.सा.सं.रक्तपित्तचि. । इति तृतीयः ॥ चतुर्थः कुष्ठाधिकारे । "पलानीशस्य चत्वारि बलेर्द्वादश तावती । ताम्रस्य चक्रिका देया रसस्योर्द्ध्वं शरावकं । दत्त्वा विबद्धभाण्डस्थं पूरयेद्भस्मना दृढं । अग्निं प्रज्वालयेद्यामद्वयं शीतं विचूर्णयेत् । पुटैर्द्दशधा सूर्य्यदुग्धेनालोड़ितं पुनः । वरापावकभृङ्गानां द्रवैस्त्रिभिर्विभावयेत् । अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित् ॥" अत्र ईशः पारदः, तस्य चत्वारि पलानि । बलेर्गन्धकस्य च द्वादशपलानि । र.सा.सं. ।

**अर्कोसमा** । स्त्री । वर्व्वर्य्याम् । वावुईतुलसी ।

**अर्कोपलः** । पुं । सूर्य्यकान्तमणौ । আতস পাথর इति लोके । रा.नि.व.१३ ।

**अर्गटः** । पुं । आर्त्तगल इति प्रसिद्धे कण्टकवृक्षविशेषे । নীলঝাঁটী । हिं आर्त्तगल । मं एरवणी । गुणाः—शीतः व्रणशोधनरोपणश्च । मद.व.५ । तथा । "अर्गटस्तुवरः शीतवीर्य्यो व्रणविशोधनः । व्रणरोपणकश्चैव पुष्पमस्य मधु स्मृतम् । तिक्तञ्च ज्वरपित्तघ्नं कफरक्तरुजापहम् ।" वै.निघ. ।

**अर्गलम्** । क्ली । मांसे । वै.निघ. ।

**अर्घटम्** । क्ली । भस्मनि । हारा. ।

**अर्घ्यम्** । क्ली । आर्घ्यमधुनि । See मधु ।

**अर्घ्याटः (लः)** । पुं । शृङ्कलायाम् । ওকড়া, চেঁচ্কো। शृङ्कला चालुपत्रः स्यादर्घ्यातोऽर्घ्याटलो मतः, इति द्रव्याभि. ।

**अर्घ्यातः** । पुं अर्घ्याटे । ওকড়া। द्रव्याभि. ।

**अर्व्याहः** । पुं । मुचुकुन्दवृक्षे । रा.नि.व.१० ।

**अर्चिः** । स्त्री, क्ली । कान्तौ । अग्निज्वालायाम् ।

**अर्जकः** । पुं । क्षुद्रतुलसीवृक्षभेदे । বাবুই তুলসী । हिं वावरी । मं आजवला । कं गगेंर । तें तेल्लगगेरचेट्टु । "वर्वरिकाकारो लघुमञ्जरीकः सूक्ष्मपत्रः निर्गन्धः श्वेतकुठेरकः (বাবুই) ।" सु.सू. ३८अ.सुरसादौ ड.। श्वेतवर्व्वर्य्याम् । শাদা বাবুই । भा.पू.१भ.। श्वेतपर्णास, তোকমারী इति लोके। सि.यो.विसूची-चि.वमनशान्तौ । अर्जकः श्वेतकृष्णरक्तभेदात्त्रिभेदः तुल्यगुणश्च । गुणाः—कटूष्णः वातकफरोगघ्नः नेत्ररोगहरः रुच्यः सुखप्रसवकरश्च । रा.नि.व.१० । श्वेतपलाशवृक्षे । See वर्वरी । [शाल ।

**अर्जकर्जः** । पुं । असनवृक्षे । আসনা, পিয়া-

**अर्जुनः** । पुं । (Tarminalia Arjuna, or Pentaptera arjuna.)स्वनामख्यातवृक्षे । অর্জ্জুন গাছ । हिं कह, कौह । मं अर्जुनसादड़ा । कं सारदोल । तें मद्दिचेट्टु । गुणाः—कषायोष्णः कफघ्नः व्रणशोधनः पित्तश्रमतृष्णाहरः वातकोपनश्च । रा.नि.व.६ । शीतलः हृद्यः क्षतक्षयविषरक्तहरः मेदोमेहव्रणघ्नः तुवरः कफपित्तघ्नश्च । भा.पू.१भ.वटादिव. । वा.सू.१५अ.न्यग्रोधादिः । "अ-

मूर्व्वयार्जुनकपीतनसोमवल्कः।" माना २ तो.। नेत्रशुक्लगतरोगे। लक्षणम्—"एको यः शशवधिरोपमश्च विन्दुः शुक्लस्थो भवति तमर्जुनं वदन्ति।" मा.नि.। मयूरे। मे.नत्रिकं। त्रि। श्वेतवर्णे।

**अर्जुनम्।** क्लो। दृणमात्रे। हला.। सुवर्णे। मे.नत्रिकं। कासतृणे। र.मा.। दर्भभेदे।

**अर्जुनघृतम्।** क्ली। हृद्रोगे हितम्। अत्र क्वाथार्थमर्जुनत्वक् ६४ प. पाकार्थं जलं ६४ श. शेषः १६श. कल्कः १ श. घृतं ४ श.। मूर्च्छितघृतं ४श. अर्जुनस्वरसः १६श. अर्जुनत्वक्कल्कः १श. एकत्र पाच्यम्। च.द.हृद्रोग-चि.। "पार्थस्य कल्कस्वरसेन सिद्धं शस्तं घृतं सव्वहृदामयेषु।" घृतं ४ श. अर्जुनस्वरसः ४ श. कल्कार्थं अर्जुनत्वक् १ श.। शा.कौ.। भैष.भा.रस.र.।

**अर्जुनत्वक्।** स्त्री। अर्जुनवल्कले। अर्ज्जुनछाल। च.द.अ.सा.चि.शल्लक्यादिः।

**अर्जुननामाख्यः।** पुं। अर्जुनवृक्षे। भा.।

**अर्जुनसुधा।** स्त्री। अर्जुनोत्थसुधायां। अर्ज्जुन काटेर चूर्ण। गुणाः—"सुधा ह्यर्जुनजा प्रोक्ता कफस्य च विनाशिनी।" वै.निघ.। द्रव्यगुणे।

**अर्जुनाख्यः।** पुं। काशतृणे। र.मा.। अर्जुनवृक्षे।

**अर्जुनादः।** त्रि। दर्भकाशखादके। च.चि.२अ.।

**अर्जुनाद्यघृतम्।** क्ली। प्रमेहे घृतम्।यथा— "अर्जुनपटोलनिम्बैः सवचाद्दीप्यकरसासमञ्जिष्ठैः। भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः। गोक्षुरकसोमवल्कैः नवपटोलैर्द्विरिद्रया त्रिफलाः। अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण। मञ्जिष्ठातिविषाभ्यां कल्ककषायैः पचेत्तैलम्। कफवातोत्थे मेहे पित्तकृते साधयेत्सर्पिः॥" भा.म.३भ. मेह चि.।

**अर्जुनी।** स्त्री। गवि। गाई। मे.नत्रिकं।

**अर्जुनोपमः।** पुं। शाकद्रुमे। শেগুণ গাছ। र.मा.। शालवृक्षे। रत्ना.।

**अर्णः।** पुं। शाकवृक्षे। শেগুণ। श.च.।

**अर्णः (स्)।** क्ली। जले। रा.नि.व.१४।

**[illegible]ः।** पुं। शङ्खे। वै.निघ.।

**[illegible]वः।** पुं। समुद्रे। रत्ना.।

**अर्णवजः** / **अर्णवजमलः** } पुं। समुद्रफेने। रत्ना.।

**अर्णवफेनः।** पुं। समुद्रफेने। च.द.।

**अर्णवमलः।** पुं। समुद्रफेने। रत्ना.।

**अर्णवोद्भवः।** पुं। अग्निजारवृक्षे। रा.नि.व.६।

**अर्णोदः।** पुं। मुस्तके। रा.नि.व.६।

**अर्णोभवः।** पुं। शङ्खे। रा.नि.व.१३।

**अर्त्तगलः।** पुं। नीलझिण्ट्याम्। नीलझाँटी। सु.द्रव्यसं.अ. आगड़ इति ख्याते फलवृक्षे। रत्ना.।

**अर्त्तिः।** स्त्री। रोगे। रा.नि.व.२०।

**अर्थः।** पुं। विषये। धने। याचने। कारणे। वस्तुनि। अभिधेये। निवृत्तौ। प्रयोजने। मे.थद्विकं।

**अर्थचम्पिका।** स्त्री। कर्कटशृङ्ग्याम्। काँकड़ा शृङ्गी। वै.निघ.।

**अर्थप्रसादनी।** स्त्री। धामनवृक्षे। वै.निघ.।

**अर्थसाधकः।** पुं। पुत्रजीववृक्षे। पुत्रजीवा। मद.व.१भा.। [रीठाकरञ्जे। मद.व.५।

**अर्थसाधनः।** पुं। पुत्रजीववृक्षे। मद.व.१।

**अर्थसिद्धः (कः)।** पुं। पुत्रजीववृक्षे। श्वेतनिर्गुण्ड्यां। कृष्णनिर्गुण्ड्याम्। रा.नि.व.४।

**अर्थापत्तिः।** स्त्री। 'यदकीर्त्तितमर्थादापद्यते।' सा.सु.उ.६५अ.।

**अर्थ्यम्।** क्ली। शिलाजतुनि। मे.यद्विकं।

**अर्दनिः।** पुं। अग्निरोगे। अ.टी.।

**अर्द्दितम्।** क्ली। तन्नामकवातव्याधौ। পক্ষাঘাত বিশেষ। तस्य लक्षणम्—"उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च। हसतो जृम्भतो भारादिषमाच्छयनाशनात्॥ शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः। अर्द्दयत्यनिलो वक्रमर्द्दितं जनयेत्ततः॥ वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते। शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम्। ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे च वेदना। तमर्द्दितमिति प्राहुः।" मा.नि.। अत्र रोगे यस्मिन् पार्श्वे अर्द्दितं तस्मिन्नेव पार्श्वे ग्रीवादीनां वेदना भवतीति बोध्यम्। त्रिवर्षातीते अतिक्षीणे निमेषशून्ये च रोगिणि तदसाध्यं भवति। अथौषधं—तिलक-

स्व )त्तरसोनकल्कादिकम् । "स्नेहपानानि नस्यञ्च भोज्यान्यनिलहन्ति च । उपनाहाश्च शस्यन्ते स्वेद-नञ्च तथार्द्दिते ॥" "तन्नामकाम्बरोगविशेषे । लक्ष-णं —हनुर्द्वयस्य विक्षेपात् घोणाभेदाच्च वृज्जिमा-न् । नासापुटविकाराच्च अर्द्दितं रोगमादिशेत् ।" नयद.५५भ. ।

**अर्द्दम्** । क्ली । समाप्ते । पुं । खण्डे । मे. ।

**अर्द्दकः** । पुं । जलसर्पे । वै निघ. ।

**अर्द्धकपाटसन्धिकः** । पुं । वाय्वादीर्घैकपा-लोतरालपालिकर्णबन्धनाकृतिविशेषे। सु.सू.१६भ.।

**अर्द्धकेशिकी** । स्त्री । छेदनार्थं शस्त्रधाराबि-शेषे । सु.सू.८भ. ।

**अर्द्धखारी** । स्त्री । खारीमानार्द्धे १२८ श. ।

**अर्द्धचन्द्रः** । पुं । मयूरपिच्छे । मयूरपुच्छेर चाँद । हि.च. ।

**अर्द्धचन्द्रम्** । क्ली । अङ्गुलितोरणे । हारा. ।

**अर्द्धचन्द्रा** । स्त्री । त्रिवृति । रा.नि.व.६। कृष्ण त्रिवृति । काल তেউড়ী । भा.पू.१भ. ।

**अर्द्धचन्द्राननः** । पुं । अन्तर्मुखनामकविस्रा-रणास्त्रे । भम. ।

**अर्द्धचन्द्रिका** । स्त्री । कर्णस्फोटालतायां । रा. नि.व.३ । कृष्णत्रिवृति । मद.व.१ ।

**अर्द्धलोचकः** । पुं। कुर्पासे । काँचुली । हारा.

**अर्द्धतिक्तः** । पुं । किराततिक्ते । भा.पू.१भ.।

**अर्द्धधारकम्** । क्ली। अस्त्रविशेषे । तच्च छेदन-भेदनार्थम् । सु.सू.८भ. ।

**अर्द्धनारीश्वररसः** । पुं । रसोऽयं सान्निपा तिकज्वरे गुञ्जामात्रं नस्यकर्म्मणि योज्यः । अपरे जीर्णविषमज्वरे नस्यमित्याहुः । तेन तत्क्षणमेव वामाङ्गज्वरो नश्यति । अस्य द्रव्याणि रसगन्धक-विषटङ्कणानि समभागानि कज्जलीवत् कृत्वा कृष्ण-सर्पमुखाभ्यन्तरे स्थापयित्वा तन्मुखं मृदा संलिप्य भाण्डे स्थापयेत् । ऊर्द्धाधो लवणदानपूर्व्वकं ततो भाण्डमावृत्य तीव्राग्नौ ४ प्रहरं पचेत् । भैष.। अत्र "विषं ग्राह्यञ्च तत्समम्"मिति मिलितरसगन्धकयोः समम् । "जैपालं तत्सममिति" विषतुल्यं जैपा लं देयम् । "मरिचञ्च चतुर्गुणमिति" एकभागापे

क्षया मरिचस्य चातुर्गुण्यम् । श्रीकण्ठः । सोमेश्वरस्तु मिलितरसगन्धकापेक्षया चातुर्गुण्यमित्याह । व्यव-हारोऽप्यनेनैव । "रसगन्धौ समौ शुद्धौ विषं ग्रा-ह्यञ्च तत्समं । जैपालं तत्समं ग्राह्यं मरिचञ्च च-तुर्गुणम् । त्रिफलाया रसैर्मर्द्यं भावना पञ्चधा कृ-ता ॥" र.सा.सं.जीर्ण-विषम-ज्व.चि. । अन्यः पा-ठः शुद्धसूतं तथा गन्धं विषं ताम्रस्य भस्म च । सम-भागेन संगृह्य वारिणा पेषयेद्दृढं । चक्राकारसम-ङ्कृत्वा सर्पतुण्डेन संन्यसेत् । तत्तुण्डलेपनङ्कृत्वा रौद्रे दद्याद्दिनत्रयः । स्थाल्यन्ते लवणं किञ्चित्तस्योपरि च गोलकं । ततो लवणकं दत्त्वा सिकताभिः प्र-पूरयेत् । चतुर्भिः प्रहरैर्ज्वालामन्दमध्यखरक्रमात् । शीते तद्गोलकं नीत्वा दूरीकृत्य च लेपनं । भस्म संगृह्य यत्नेन खल्ले कुर्याद्विमर्द्दनं । यवमात्रन्तु त-च्चूर्णं नस्ये दद्याज्ज्वरेश्वरि ॥" प्रयोगा.ज्व.चि. ।

**अर्द्धपलम्** । क्ली । कर्षद्वये । ४ तो.। स्यात्कर्षा-भ्यामर्द्धपलम् । प.प्र.१ख. ।

**अर्द्धपादा** । स्त्री । भूम्यामलक्याम् । वै.निघ. ।

**अर्द्धपारावतः** । पुं । वनकुक्कुटे । चित्रकण्ठ-पारावते । घुघ्घिपायरा। तित्तिरपक्षिणि । अभि.।

**अर्द्धपुष्पा** । स्त्री। महाबलायाम् । पीतবেলেড়া। वै.निघ. । [থাওগ্রা ।

**अर्द्धभाजनम्** । क्ली । अर्द्धाशने । আদপেটা।

**अर्द्धमात्रिकः** । पुं । निरूहणाधिकारे तन्नाम-क-वस्तौ । "दशमूलीकषायेण शताह्वाञ्च प्रपेष-येत् । सैन्धवाञ्च मधुनो द्विपलं द्विपलं तथा । तैलस्य पलमेकन्तु फलस्यैकञ्च योजयेत् । अर्द्धमा-त्रिकसंज्ञोऽयं वस्तिर्देयो निरूहवत् । न च स्नेहो न च स्वेदः परिहारविधिर्न च । आनियानुमतो ह्येष सर्व्वरोगनिवर्हणः ॥ इति च.द. ।

**अर्द्धमासूरी** । स्त्री । लेखनार्थमस्त्रधाराविशेषे। सु.सू.८भ. ।

**अर्द्धवीरक्षा** । स्त्री । कृष्णदूर्व्वायाम् ।

**अर्द्धश(स)फरः** । पुं । दग्धपालाख्यक्षुद्रमत्स्य-विशेषे । দাঁড়িকা বা ডানকোণা মাছ । हारा.।

**अर्द्धशरावः (कः)** । पुं । प्रसृतिद्वये । ३२ तो. । प.प्र.१ख. । भा. । [वै.निघ. ।

**अर्द्धसहः** । पुं । पेचके । প্যাঁচা । मं घुवड़ ।

**अर्द्धांशोनजलम्** । क्ली । अर्द्धांशेन हीने पक्वजले । इदं वातपित्तघ्नम् । रा.नि.व.१४ ।

**अर्द्धालिंग:** । पुं । जलसर्पे । वै.निघ. ।

**अर्द्धावभेदक:** । पुं । शिरोरोगभेदे । আধ কপালে ধরা । निदानलक्षणे—"रूक्षाशनाध्यशनप्राग्वातावश्यायमैथुनै: । वेगसन्धारणायासव्यायामै: कुपितोऽनिल: । केवल: सकफो वार्द्धं गृहीत्वा शिरसो बली । मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेऽतिवेदनां । शस्त्रारणिनिभां कुर्य्यात्तीव्रां सोऽर्द्धावभेदक: ॥"मा.नि.।अपिच यस्योत्तमाङ्गार्द्धमतीव जन्तो: सम्भेदतोदभ्रमशूलजुष्टं । पक्षाद्दशाहादथवाप्यकस्मात्तस्यार्द्धभेदं त्रितयाद्व्यवस्येत् ॥ सु.उ.२५अ. ।

**अर्द्धाशनम्** । क्ली । अर्द्धभोजने । श.च. ।

**अर्द्धेन्दु:** । पुं । अतिप्रौढ़स्त्रीयोनौ अङ्गुलियोजने । मे.दत्रिकं ।

**अर्द्धेन्दुशकला** । स्त्री । नासारोगविशेषे । कपालरोगभेदे । श्लीपदरोगे । अर्व्वुदरोगे । गलरोगे। तालुरोगे । कर्णरोगे । वै.निघ. ।

**अर्द्धोदकक्षीरम्** । क्ली । अर्द्धोदकशृतदुग्धे । অর্দ্ধজলে সিদ্ধ দুগ্ধ । "अर्द्धोदकं पय: शिष्टमामाल्लघुतरं शृतम् ।" हेमाद्रौ चारपाणि: ।

**अर्भ: (क:)** । पुं । बालके । रा.नि.व.१८ । कुशे । मे.कत्रिकं । पचजातशिशौ । रा.नि.व.१८ ।

**अर्भा** । स्त्री । गुग्गुलौ । গুগ্গুল । 'अर्भाचूर्णं सहयुतम् ।" प्रयोगा.भग्न चि. ।

**अर्म्मण:** । पुं । द्रोणपरिमाणे (३२ सेर) । प.प्र.१ख. । च.द.अ.सा.चि.कुटजावलेहे ।

**अर्म्मन्** । क्ली । नेत्ररोगविशेषे । চক্ষুরোগ । तच्च पञ्चविधम्—प्रस्तार्य्यर्म्म, शुक्लार्म्म, रक्तार्म्म, मांसार्म्म, स्नाय्वर्म्म चेति । लक्षणं स्वस्वपर्य्याये द्रष्टव्यम् ।

**अर्यमा** । पुं । अर्कवृक्षे । रा.नि.व.१० । सूर्य्ये ।

**अर्व्वण:**<br>**अर्व्वा (न्)** } पुं । अश्वे । भा.पू. ।

**अर्व्वती** । स्त्री । वड़वायाम् । कुट्टन्याम् । मे.तत्रिकं ।

**अर्व्वुद:** । पुं,क्ली । पुरुषे । दशकोटिपरिमाणे । मे.दत्रिकं । मांसकीलकाकाररोगविशेषे । আব্ । ফিঁ রসৌলী । वातजपित्तजकफजरक्तजमांसजमेदोजाध्यर्व्वुदद्विरर्व्वुदभेदेनाष्टौ । लक्षणं—गात्रप्रदेशे क्वचिदेव दोषा: संमूर्च्छिता मांसमसृक् प्रदूष्य । वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकं । कुर्व्वन्ति मांसोच्छ्रयमत्यगाधं तदर्व्वुदं शास्त्रविदो वदन्ति । वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा वा। तज्जायते तस्य च लक्षणानि ग्रन्थे: समानानि तदा भवन्ति ॥ मा.नि. । सु.नि. ११अ. । "दोष: प्रदुष्टो रुधिरं शिरास्तु सम्पीड्य सङ्कोच्य गतस्तु पाकम् । संस्रावमुन्नाह्यतिमांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिं । स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ॥" इति दन्तरोगभेदे । नेत्ररोगभेदे । तालुरोगे तल्लक्षणं—तालुमध्ये रक्तजं पित्तलक्षणं पद्मकर्णिकावत्केसरैरिव पार्श्वतो दीर्घमांसाङ्कुरैर्वेष्टितं शोथं अर्व्वुदं विद्यात् । "पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्व्वुदं पित्तलिङ्गम् ।" भा.म.४भ.मुखरो.चि. ।

**अर्व्वुदाकार:** । पुं । बहुवारवृक्षे । চালিতা গাছ । वै.निघ. ।

**अर्व्वुदाद्रिज:** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙা । मं सुरदारशिंग । वै.निघ. ।

**अर्व्वूरम्** । क्ली । आहुल्यनामक्षुपे । काश्मीरे तड़वड़ इति प्रसिद्धे । मं तड़वड़ । वै.निघ.२भ. संग्रहणी-चि.तालीशादिचूर्णे ।

**अर्श:** । क्ली । The piles or hoemorrhoids. स्वनामख्यातगुदरोगविशेषे । लक्षणम्—दोषास्त्वङ्मांसगुदमुखादध्यन्तरत: सार्द्धचतुरङ्गुलिमिता या नाड़ी गुदमिति कथ्यते । सा गुदनाड़ी शङ्खावर्त्तनिभवलित्रययुक्ता । तस्या: सार्द्धाङ्गुलिमितांशो गुदौष्ठ: । गुदौष्ठादङ्गुलिमितोऽंश: संवरणीनाम प्रथमा बलि:, तदुपरि सार्द्धाङ्गुलिमितोऽंशो विसर्ज्जनीनाम द्वितीया, तदूर्द्ध्वं सार्द्धाङ्गुलिमितोऽंश: प्रवाहनीनाम तृतीयाबलिरुच्यते । तास्वेव मांसांकुरा जायन्ते । तच्चार्श: षड्विधं वातजादिभेदात् । प्रकरणमिदं गुदार्श:परं बोध्यम् । तन्निदानं यथा—"दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् । मांसाङ्कुरानपानादौ कुर्व्वन्त्यर्शांसि तान् जगु: ।" इति । "पृथग्दोषै: समस्तैश्च शोणितात्सहजानि च । अर्शांसि षट्प्रकाराणि विद्याद्गुद-

मलिनये ।” साधारणचिकित्सा — अत्र तथान्नपानौषधादिकं सेव्यं येन वायोरनुलोमः अग्निबलञ्च वृद्धिश्च जायते । “दत्त्वाथ वेतनं योऽध्येत्यादायापि च वेतनं । अध्यापयेच्च जुहुयाज्जपेदार्शोयुतो भवेत् ॥” इति कर्म्मविपाकः । पथ्यं —“विरेचनं लेपनमस्त्रमोक्षः क्षाराग्निशस्त्राचरितश्च कर्म्म । पुरातना लोहितशालयश्च सषष्टिकाश्चापि यवाः कुलत्थाः । गोधाखुसर्पानगजोष्ट्रकूर्म्मश्वावित्कुलिङ्गाजखरोतुकोशाः । तरक्षुचाषाश्वशृगालकाका येऽन्येऽपि मांसाः प्रसहाश्च तेऽपि ॥ पटोलपत्तूररसोनवह्निपुनर्णवाशूरणवास्तुकानि । जीवन्तिका दन्तशठा सुरा च त्रुटिर्वयस्था नवनीततक्रं । कक्कोलधात्रीफलकं कपित्थमौष्ट्रादिमूत्राद्यपयांसि चापि । भल्लातकं सर्षपजञ्च तैलं गोमूत्रसौवीरतुषोदकानि । वातापहं यच्च यदग्निकारि तदन्नपानं हितमर्शसेभ्यः ॥” इति । अपथ्यं — आनूपमामिषं मत्स्यं पिण्याकं दधिपिष्टकं । माषान् करीरं निष्पावं विल्वं तुम्बीमुपोदिकां । पक्वाम्रं शालुकं सर्व्वं विष्टम्भीनि गुरूणि च । आतपं जलपानानि वमनं वस्तिकर्म्म च । विरुजानि च सर्व्वाणि मारुतं पूर्व्वदिग्भवम् । वेगरोधं स्त्रियं पृष्ठयानमुत्कटकासनं । यथास्वं दोषलञ्चान्नमर्शसः परिवर्ज्जयेत् । यत्पथ्यं यदपथ्यञ्च वक्ष्यते रक्तपित्तिनां । रक्तार्शोरोगिणां तत्तदपि विद्याद्विशेषतः ॥” इति ।

**अर्शःकुठाररसः** । पुं। रसोऽयं अर्शसि हितः। पाठः—“शुद्धसूतं पलञ्चैकं द्विपलं शुद्धगन्धकं । मृततास्रञ्च लौहञ्च प्रत्येकञ्च पलत्रयम् । त्रिकटुं लाङ्गलीं दन्तीं चित्रकं पुष्करं तथा । प्रत्येकं द्विपलं योज्यं यवक्षारञ्च टङ्कणं । उभौ पञ्चपलौ योज्यौ सैन्धवं पलपञ्चकं । द्वात्रिंशच्च गवां मूत्रं स्नुहीक्षीरं तदर्द्धकं । सर्व्वं मृद्वग्निना पाच्यं यावन्नायाति पिण्डताम् ॥” इति मात्रा माषद्वयम् । रस.र.प्रयोगा. । रसेन्द्रचिन्तामणौ रसगन्धौ न धृतौ । स्नुहीक्षीरञ्च गोमूत्रसमं दत्तम् । पुष्करस्थाने पिलुकमिति उक्तम्। अन्यः—“शुद्धसूतं द्विभागन्धं मृतलौहञ्च ताम्रकं। प्रत्येकं द्विपलं दन्ती सूरणं शूरणं तथा। शुभाटङ्कयवक्षारसैन्धवं पलपञ्चकं। पलाष्टकं स्नुहीक्षीरं द्वात्रिंशच्च गवां जलैः। आपिण्डितं पचेदग्नौ खादेन्माषद्वयं ततः ॥” र.सा.सं. । शुभा वंशलोचना ।

**अर्शःसूदनः** । पुं । शूरणे । ওল ।

**अर्शम्** । क्ली । अर्शोरोगे । श.र. ।

**अर्शसः** । त्रि । अर्शोयुक्ते ।

**अर्शी** । त्रि । अर्शोयुक्ते । श.र. ।

**अर्शोघ्नः** । पुं । शूरणे । ওল । रा.नि.व.७ । भल्लातके । ভেলা । सर्जिक्षारे । সাজিমাটী । तेजबले । তেজবল । श्वेतसर्षपे । শ্বেত সরিষা । कटुशूरणे । বুনো ওল । वै.निघ. ।

**अर्शोघ्नवर्गः** । पुं । कुटजबिल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति। अयं द्वादशदशकः प्रभावादर्शोघ्नः । च.सू.४ ।

**अर्शोघ्नवल्कला** । स्त्री । तेजबले । তেজবল। वै.निघ. ।

[कं । भल्लातके । वै.निघ. ।

**अर्शोघ्नी** । स्त्री । तालमूल्याम् । रत्ना.। मी.नि-

**अर्शोजः** । पुं । भगन्दररोगे ।

**अर्शोयन्त्रम्** । क्ली। अर्शोदर्शनार्थं गोस्तनाकारयन्त्रे । “अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलं । नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलं । द्विच्छिद्रं दर्शने व्याधेः कैचिच्छिद्रन्तु कर्म्मणि ।” चि. । जयद.५२अ. ।

**अर्शोवर्त्मन्** । क्ली । नेत्रवर्त्मगतरोगविशेषे । नेत्रवर्त्मनि कर्कटीवीजवत् मन्दवेदनमश्लक्ष्णतीक्ष्णा या पिड़का भवति तत् । “एर्वारुवीजप्रमिताः पिड़का मन्दवेदनाः । शुक्लाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्त्यते ॥” एषा सन्निपातजा । मा.नि. । तदुक्तं—पिड़का सन्निपातेन तदर्शोवर्त्म निर्दिशेत् । इति विजयरक्षिते—निमिः ।

**अर्शोहररसः** । पुं । रसोऽयं अर्शसि हितः । पाठो यथा—“रसवैक्रान्तशुद्धाभ्रकान्तभस्म सगन्धकं । तुल्यांशं मर्द्दयेच्चार्द्रदाड़िमोत्थैः रसैस्ततः । भक्षयेन्माषमेकन्तु अर्शसां नाशने रसः ॥” रस.र.।

**अर्शोहितः** । पुं । भल्लातकवृक्षे । त्रिका. ।

**अर्हम्** । क्ली । सुवर्णे । সোণা । वै.निघ. ।

**अर्हा** । स्त्री । त्रायमाणालतायाम् । বলালতা । वै.निघ. ।

**अलम् (कम्)** । क्ली । हरितालके । रा.नि.व. १३ । भि.यो.कास,चि,मनःशिलादिधूमपाने,वृन्द.।

"मन:शिलालो मरिच"इति। वृश्चिकपुच्छकचुटके। বিছের হুল। हे.च.। कड़ोली। वै.निघ.१भ.वा.व्या.प्रत्यक्षीला.चि.। भल्लीयुक्तकेशे।

**अलकप्रियः** । पुं। कृष्णभल्लातके। কাল ভেলা। मं विवलाजटा। वीजकवृचे। हिं विजयसार। मद.व.५।

**अलका** । स्त्री। वसायाम्। চর্ব্বি। वै.निघ.।

**अलकाह्वयः** । पुं। कटुनिम्बे। কটু নিম্। वै.निघ.।

**अलक्तः (कः)** । पुं, क्ली। Lac, the red animal dye so called. लाक्षायाम्। আলতা, লাহা, জৌ, গালা। हिं लाही। मं अलिता। कं अलतगे। गुणाः—"तिक्तोष्णः कफवातामयघ्नः कण्ठ्यो व्रणघ्नश्च। रा.नि.व.६।वर्णकर. हिमः बल्यः स्निग्धः लघुस्तुवरः अनुष्णः कफपित्तरक्तहिक्काकासज्वरघ्नः व्रणोरःचतवीसर्पकृमिकुष्ठहरः। अलक्तको विशेषेण व्यङ्गघ्नः।" भा.पू.१भ.। अलक्तको रजोरोधी रक्तपित्तचयापहः। प्रदरञ्चाप्यतीसारं सरक्तं चपयेद्‌ध्रुवम्॥" अत्रि.।

**अलगणः** । पुं। नेत्ररोगविशेषे। वै.निघ.।

**अलगर्द्दः** । पुं। सर्पविशेषे। জলটোঁড়া, জলবোড়া।

**अलगर्द्दा** । स्त्री। सविषजलायुकायाम्। বিষাক্ত জোঁক। सा रोमशा महापार्श्वा कृष्णमुखी च। See जलायुका। सु.सू.१३म.।

**अलगर्धः** । पुं। अलगर्द्दे। अम.।

**अलङ्कारसुवर्णम्** । क्ली। शृङ्गीकनके। हारा.।

**अलजी** । स्त्री। प्रमेहपिटिकारोगे। लक्षणम्—"रक्ता सिता स्फोटवती दारुणा त्वलजी भवेत्। सु.नि.प्रमेहचि.६ष.। नेत्रसन्धिजरोगे। स च नेत्रसन्धौ प्रमेहाधिकारोक्तालजीलक्षणः शोथः। लक्षणम्—"जाता सन्धौ कृष्णशुक्लेऽलजी स्यात् तस्मिन्नेव ख्यापिता पूर्व्वलिङ्गैः।" मा.नि.। शुक्रदोषविशेषे। एषापि प्रमेहपिटकाया लक्षणयुक्ता। "अलजीलक्षणैर्युक्तामलजीञ्च वितर्कयेत्॥" सु.नि.शू.दो.चि.१४ष.। [पारुल।

**अलम्बमुष्कक:** । पुं। मुष्ककवृचे। घण्टा-

**अलम्बा** । स्त्री। तिक्तालाब्वाम्। তিৎলাউ। स्थावरविषान्तर्गतपत्रविषे। सु.कल्प.२य.। See पत्रविषम्।

**अलम्बुजा** । स्त्री। गोरक्षमुण्ड्यां। वै.निघ.।

**अलम्बुदम्** । क्ली। वालके। বালা। वै.निघ. क्षय.चि.शिवगुटी.।

**अलम्बुषः** । पुं। वाक्निरोगे। मे.षचतुष्कं। भूकदम्बे। কুকশিমে গাছ। र.मा.रत्ना.।

**अलम्बुषा (सा)** । स्त्री। A sort of sensitive plant. लज्जालुकाभेदे। ফুল শোলা। गुणाः—मधुरा लघुः कृमिकफपित्तघ्नी च। भा.पू.१भ.गु.व.। अलम्बुषायाः स्वरसः पीतो हिपललामया। अपचीगण्डमालानां कामलायाश्च नाशनः। भूकदम्बे। কুকশিমে। महाश्रावण्याम्। বড় থুলকুড়ি। रा.नि.व.५। वै.निघ.१भ.वा.व्या.षड़शीति.गुग्गुलो, मूषणाद्यलौहे च। लौहमलो। মণ্ডুর। च.द.१भ.आमवाते अलम्बुषाचूर्णे।

**अलम्बुषाद्यचूर्णम्** । क्ली। आमवाते। पाठः—"अलम्बुषां गोक्षुरकं गुड़ूचीं वृद्धदारकम्। पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्णवम्। त्रिफलां नागरञ्चैव श्लक्ष्णचूर्णानि कारयेत्॥" मण्डूरादिचूर्णं प्रत्येकं समभागमादाय एकत्र संमिश्रणीयं। अनुपानं—दधिमस्तुं काञ्जिकं दुग्धं तक्रं मांसरसं वा यथालाभं दद्यात्। च द.आमवा.चि.। द्वितीयं यथा—अलम्बुषा गोक्षुरकं त्रिफलानागरामृताः। यथोत्तरं भागवृद्ध्या श्यामाचूर्णञ्च तत्समम्। इति। अलम्बुषा लौहमलं। मतान्तरे मुण्डीरी। श्यामाचूर्णं वृद्धदारकमूलचूर्णम्। च.द.आ.। तृतीयमपि आमवाते। "अलम्बुषा गोक्षुरकं मूलं वरुणकस्य च। गुड़ूची नागरञ्चेति समभागानि कारयेत्॥" भा.। रस.र.।

**अलम्बोर्द्ध्वस्तनी** । त्रि। यस्याः स्तनौ न लम्बौ नोर्द्ध्वमुखौ च। सु.शा.१०ष.।

**अलम्बोष्ठी** । त्रि। यस्याः ओष्ठौ लम्बमानौ न भवति। सु.शा.१०ष.।

**अलमोसः** । पुं। मत्स्यभेदे। वै.निघ.।

**अलर्कः** । पुं। (Calotropis gigantea or Procera; अर्क of white flowers.) श्वेतार्के। শ্বেত আকন্দ। हिं मादार। भा.पू.१भ.।

मी.कचिकं। मन्दार इति हेमा.अलर्कादिव.। मन्दारार्के। रा.नि.व.१०। अलर्कोमन्दारार्कः यस्य क्षीरं च विनश्यति। सु.सू.३८अ.अर्कादि.ड.। मन्दाराख्यः श्वेतपुष्पः। वा.सू.१५अ.अर्कादिव.चरणः। "अर्कालर्कौ नागदन्ती विशल्या।" योगोन्मादितकुक्कुरे। मी.कचिकं। कुक्कुरज्वरे। हा.अचि.२स्था.२अ.।

**अलवणा।** स्त्री। ज्योतिष्मत्यां। लताफट्की। वर्त्तुलपक्वरक्तफला पीततैला काकमर्द्दनिका। सु.सू.३८अर्कादिव.ड.। गुणाः—तीव्रा चालवणा सा स्यात् कफमेदः क्रमिप्रणुत्। अचि.। हरीतक्याम्। मद.व.१।

**अलसः (कः)।** पुं। पादरोगविशेषे। পাঁকুই तल्लक्षणं—"क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ। दुष्टकर्दमसंस्पर्शादलसं तं विनिर्दिशेत्॥" सु.नि.१३अ.। विसूचिकाया अवस्थाभेदे। स त्रिधा—विपाजीर्णं रसादिकं दोषैः स्यादलसस्त्रिधा। आर्क.। प्रयाति नोर्द्ध नाधस्तात् आहारो न विपच्यते। आमाशयेऽलसीभूतः तेनासौ लसको मतः॥ इति निरुक्तिः। वा.सू.८। तल्लक्षणं यथा—"कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति। निरुद्धो मारुतश्चैव कुक्षावुपरि धावति॥" See अग्निमा.। क्ली। क्षुद्रकुष्ठरोगभेदे। लक्षणम्—"कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम्।" मा.नि.। व्याखजातिज्वरे। गज-वै.। जिह्वारोगे। वै.निघ.। वृक्षभेदे।

**अलसा।** स्त्री। हंसपदीलतायाम्। গোওয়ালে লতা। मी.कचिकं। [वै.निघ.।

**अलसी।** स्त्री। अतस्याम्। তিসি, মশিনা।

**अलसेलुका।** स्त्री। रक्तालुकायाम्। ফুল সোলা। वै.निघ.।

**अलातम्।** क्ली। अङ्गारे। কয়লা। रत्ना.।

**अलाबु।** क्ली। (बुः,बूः)। स्त्री। (Cagenaria vulgaris, Syn,Cucurbita lagenaria.) स्वनामख्यातफलशाकलतायाम्। লাউ গাছ। हिं लौका, मिठितुम्बी, लवलौका, गहलौका। मं दुध्याभोपला। सा द्विधा दीर्घा वर्त्तुला च। तत्फलगुणाः—मिष्टं हृद्यं पित्तश्लेष्मघ्नं वृष्यं रुचिकरं धातुपुष्टिविवर्द्धनम्। भा.पू.१भ.। मिष्टतुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु। वृष्यं रुचिकरं प्रोक्तमिति च। द्रव्यगु.। कटुतुम्ब्यां। তিৎলাউ। श.र.।

**अलाबुकः।** पुं। अश्वस्य मुखरोगे। अत्र मुखदीर्घस्थं तालुशोफः श्वासश्चेति विशेषश्च भवति। ज.द.।

**अलाबुका।** स्त्री। कटुदुग्धालाबुनि। भा.।

**अलाबुनी।** स्त्री। कटुदुग्धालाबुनि। তেত শ্বেতলাউ। कटुतुम्ब्याम्। তিৎলাউ। मिष्टतुम्बीलतायाम्। মিষ্টলাউ গাছ। हिं मीठितुम्बी। मद.व.७।

**अलाबुविधिः।** पुं। अलाब्वा रक्तमोक्षणे। "अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम्। तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने।" सु.सू.१३अ.।

**अलाबुसुहृत्।** पुं। अम्लवेतसे। वै.निघ.।

**अलाबूयन्त्रम्।** क्ली। यन्त्रविशेषे। लक्षणं—"स्याद्द्वादशाङ्गुलाऽलाबुर्वाहे त्वष्टादशाङ्गुला। चतुस्त्र्यङ्गुलवृत्तास्या दीप्ताऽन्तःश्लेष्मरक्तहृत्॥" क्वचित् अचि.।

**अलासः।** पुं। जिह्वास्फोटे। जिह्वागतमुखरोगे। अत्र दुष्टकफशोणितेन जिह्वातले दारुणः शोथो भवति। वृद्धिं गते जिह्वास्तम्भो जिह्वामूले पाकश्च भवति। लक्षणं - जिह्वातले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम्॥ सु.नि.१६अ.।

**अलिः।** पुं। भ्रमरे। रत्ना.। मद्ये। मी.लचिकं। वृश्चिके। हारा.। काके। कोकिले। श.र.।

**अलिकः।** पुं, क्ली। कपोले। रा.नि.व.१८। ललाटे। रत्ना.। [तैलभृष्टमांसे। पिष्टके।

**अलिकमत्स्यः।** पुं। अङ्गारे। भिन्नतिले।

**अलिकुलप्रिया।** स्त्री। व्याघ्रशिवल्यां। কাঠ গোলাপ। वै.निघ.।

**अलिकुलसङ्कुला।** स्त्री। कण्टकशेवन्त्यां। কাঁটাশেউতী। कुब्जकाहृये। কোকণদেশীয় পুষ্পবৃক্ষ। रा.नि.व.१०। भा.पू.१भ.।

**अलिगर्द्दः।** पुं। जलसर्पे। আলাধ, ধরা, গেঁড়িভাঙ্গা इति च लोके। श.र.।

**अलिजिह्वा (ह्विका)** । स्त्री । क्षुद्रजिह्विकायाम् । आल्जिब इति लोके । श.र. ।

**अलिञ्जरम्** । क्ली । फलविशेषे । फुटीविशेष । चिरफोटीति महाराष्ट्रे। गुणाः—अलिञ्जरं तु रुच्यं स्याच्छीतलं भेदकं मतं । तुवरं मधुरं चारं तिक्तं पाके कटु स्मृतं । स्वादिष्ठं वातकृच्छ्वासकासश्लेष्मविनाशनम् ॥ वै.निघ. ।

**अलिता** । स्त्री । अलक्तके । आलता । गुणाः —"अलितोक्ता तिक्तका स्यात्कफवातव्रणापहा । व्यङ्गारुचीकण्डूरुजं व्रणदोषञ्च नाशयेत् । अन्ये गुणाश्च लाक्षावत्प्रोक्ताः पूर्व्वमहर्षिभिः ।" वै.निघ.।

**अलिदूर्व्वा** । स्त्री। मालादूर्व्वायां । रा.नि.व.८।

**अलिपकः** । पुं । भ्रमरे । कोकिले । कुक्कुरे । सर्व्वत्र मे.कचतुष्कं। [रा.नि.व.५ ।

**अलिपत्रिका** । स्त्री। वृश्चिकाल्यां । बिछाती।

**अलिपर्णिका (र्णी)** । स्त्री । वृश्चिकाल्यां । बिछाति, बिछुटी । रा.नि.व.६ ।

**अलिप्रियम्** । क्ली । रक्तोत्पले । त्रिका. । पुं । धाराकदम्बवृक्षे । आम्रवृक्षे । श.र. । कदम्बवृक्षे । भा.पू.१भ. ।

**अलिप्रिया** । स्त्री । पाटलावृक्षे । पारुल गाछ । प.मु. । भूजम्बूवृक्षे । वै.निघ. ।

**अलिमकः** । पुं । भेके । कोकिले । भ्रमरे । पद्मकेशरे । मधूकवृक्षे । मे.कचतुष्कं ।

**अलिमोदा** । स्त्री । गणिकारिकायां । गणिरि । रा.नि.व.६ ।

**अलिमोहिनी** । स्त्री । केविकापुष्पवृक्षे । रा.नि.व.१० । केविकां पश्य ।

**अलिम्पकः (म्बकः)** । पुं । कोकिले । मधुमक्षिकायाम् । कुक्कुरे । पद्मकेशरे । वै.निघ. ।

**अलिवल्लभा** । स्त्री। रक्तपाटलायां। भा पू.१भ.।

**अलिवाहिनी** । स्त्री । कोकणदेशप्रसिद्धे केविकावृक्षे । केवेर इति भाषा । रा.नि.व.१० ।

**अलिसमाकुलः** । पुं । पुष्पवृक्षविशेषे । दवणसेवन्तीति महाराष्ट्रादौ । वै.निघ. ।

**अली (इन्)** । पुं । वृश्चिके । भ्रमरे । मे. ।

**अलीकम्** । क्ली । ललाटे । हे.च. ।

**अलीकमत्स्यः** । पुं । धन्याकजीरकतिलतैलभृष्टमाषपिष्टके । यथा—"माषपिष्टिकया लिप्तं नागवल्लीदलैर्मृदत् । तत्तु संस्वेदयेद्युक्त्या स्थाल्यामक्षारकोपरि । ततो निष्काशितं खण्डं तिलतैलेन भर्जयेत् । अलीकमत्स्य उक्तोऽयं प्रकारः पाकपण्डितैः । तं हिङ्वाकभटिनैव वालूकेन च भक्षयेत्॥भा.पू.२भ.।

**अलीनकम्** । क्ली । वङ्गे । हे.च. । [निघ. ।

**अलीष्टः** । पुं । तिलकवृक्षे । तिल गाछ । वै.

**अलुः** । पुं, स्त्री । गलन्तिकायाम् । भालो । तुलसीवृक्षे । क्ली । मूले । मे.कद्विकं ।

**अलुकम्** । क्ली । आलुकसाधारणे । आलू । गुणाः—आलुकं शीतलं ग्राहि मलस्तम्भनं मधुरं जड़ं रुच्यं हृद्यं दुर्जरं बलवर्द्धनं स्तन्यवर्द्धनं मलमूत्रकफवातवृद्धिकरं रक्तपित्तघ्नञ्च । वै.निघ. । एतच्च राजालुरक्तरागालुश्वेतकृष्णवन्यकाष्ठालुभेदेन बहुविधम् । विशेषः पर्य्याये द्रष्टव्यः । आलुबोखार इति प्रसिद्धे काबिलदेशीयफले । आभिधे ।

**अलोमशः** पुं । मत्स्यविशेषे । तल्लक्षणं—वितस्तिपरिमितः श्वेताङ्गः सूक्ष्मशल्कश्च । तन्मांसं बलकरं वीर्य्यकरं पुष्टिकरञ्च । रा.नि.व.१७ ।

**अलोमशा** । स्त्री । वृक्षविशेषे । मं कांगभाड़ । वै.निघ. ।

**अलोहितम्** । क्ली । रक्तपद्मे । ईषद्रक्तपद्मे ।

**अल्कः** । पुं। वृक्षविशेषे । शरीरावयवे । वै.निघ.।

**अल्पकः** । पुं । यासवृपे, दुरालभायाम् । रा.नि.व.४ । भूमिजम्बूवृक्षे । वै.निघ. ।

**अल्पकेशिका** } **अल्पकेशी** } स्त्री। भूतकेश्यां । ढामन्नकषा । प.मु. । र.मा.रत्ना. ।

**अल्पगन्धम्** । क्ली । रक्तकैरवे । रक्तकमले । वै.निघ. । [व.१० ।

**अल्पगोधूमः** । पुं । ह्रस्वगोधूमे । प.मु । मद.

**अल्पघण्टिका** । क्ली । शणघण्टपुष्प्याम्। लघुशणगाछ । मं लहुताग ।

**अल्पतनुः** । त्रि । खर्व्वे । अम. ।

**अल्पनायिकाचूर्णम्** । क्ली । औषधमिदं

अन्यत्रा हितम्। पाठः—"विशाखं पञ्चलवणं प्रत्येकं चूर्णितं पिचु। गन्धकान्माषकानष्टौ चतुरो माषकान् रसात्। इन्द्राशनात्पलं शाणचित्रयाधिकमिष्यते। खादेन्मिश्रीकृताच्छाणमनुपेयञ्च काञ्जिकं॥" र.चि.। [वै.निघ.

**अल्पनिद्रता**। स्त्री। पित्तजन्यनिद्राल्पतारोगे

**अल्पपत्रः**। पुं। क्षुद्रपत्रतुलसीक्षुपे। र.मा.। क्ली। रक्तपद्मे। र.मा.।

**अल्पपत्रकः**। पुं। गिरिजमधूकवृक्षे। পাহাড়ে মৌল গাছ। रत्ना.। [नि.व.४।

**अल्पपत्रिका**। स्त्री। रक्तापामार्गक्षुपे। रा.

**अल्पपत्री**। स्त्री। मिश्रेयायाम्। सुपल्याम्। তালমূলী। वै.निघ.। [निघ.द्रव्यगु.।

**अल्पपद्मम्**। क्ली। रक्तपद्मे, रक्तोत्पले। वै.

**अल्पपर्णिका** } स्त्री। मुद्गपर्ण्याम्। মুগানী।
**अल्पपर्णी** } वै.निघ.।

**अल्पपुष्पिका**। स्त्री। पीतकरवीरे। পীতপুষ্প করবী। वै.निघ.।

**अल्पप्रमाणकः**। पुं। लतापनसे। र.मा.। चेलानके। চেলা তরমুজ, খরমুজ इति भाषा। वै.निघ.।

**अल्पमस्तकः**। पुं। चित्रकक्षुपे। वै.निघ.।

**अल्पमक्षिका**। स्त्री। मक्षिकाविशेषे। ছোট মাছী। वै.निघ.।

**अल्पमारिषः**। पुं। क्षुद्रमारिषे। কাঁটানটিয়া, বা চাঁপানটিয়া। हिं अल्पमरषा। मं थोरतांडुलजा। अम.। तच्छाकगुणाः—लघुशीतवीर्य्यं रूक्षं पित्तघ्नं कफनाशनं। मलमूत्रनिःसारकं रुच्यं दीपनं विषघ्नञ्च। भा.पू.१भ.। See तण्डुलीयं।

**अल्परसा**। स्त्री। हैमवत्याम्। रा.नि.व.२२।

**अल्पवर्त्तकः**। पुं। तित्तिरपक्षिणि। मद. व.१२। [वै.निघ.।

**अल्पशुक्रता**। स्त्री। पित्तजन्यशुक्राल्पतारोगे।

**अल्पशोफः**। पुं। सर्व्वाचिरोगे। वै.निघ.।

**अल्पक्षुपा**। स्त्री। क्षुद्रलज्जालुकायां। वै.निघ.।

**अल्पास्थि**। क्ली। पक्वकफले। फलसा। रा. नि.व.११। भा.पू.१भ.।

**अल्पिका**। स्त्री। वनमल्लिकाजातौ। द्रै.च.४। मुद्गपर्ण्याम्। भा.पू.१भ.।

**अम्लकः**। पुं। कङ्कोलविशेषे। ककुभल। धान्यके। धনে। वै.निघ.।

**अम्लका**। स्त्री। धान्यके। धনে। वै.निघ.।

**अम्ला**। स्त्री। मातरि। धान्यके। धনে।

**अम्लु**। क्ली। आलुके। আলুবোখারা इति लोके। मद.व.६।

**अवकुण्ठनम्**। क्ली। आर्त्तनादे।

**अवकुशः**। पुं। गोलाङ्गूलवानरे। अयं पर्णमृगजातीयः। सु.सू.४६अ.।

**अवकूलनम्**। क्ली। अग्नावुष्णीकरणे। च.द. अतिसा-चि.। "अङ्गारेष्ववकूलयेत्।"

**अवकेशी**। त्रि। अफलवृक्षे। द्रै.च.।

**अवक्रः**। पुं। सरलवृक्षे। সরল গাছ।

**अवगण्डः**। पुं। गण्डदेशस्थव्रणे। বয়েস ফোঁড়া। मं पुटकुली। त्रिका.।

**अवगथः**। पुं। प्रातःस्नाने।

**अवगाहः**। पुं। स्नाने। स्नानगृहे। [स्नाने।

**अवगाहनम्**। क्ली। स्नाने। मज्जनपूर्व्वक-

**अवगाहस्वेदः**। पुं। अवगाहनेन स्वेदे। वा. सू.१७अ.।

**अवगीर्णः**। पुं। अपानान्निर्गते द्रव्ये।

**अवगुण्ठनम्**। क्ली। योषित्शिरःप्रावरणे, स्त्रीमुखाच्छादने। [का.

**अवगुण्ठितम्**। क्ली। चूर्णिते। গুঁড়া। त्रि-

**अवग्रहः**। पुं। गजललाटदेशे। हारा.। [के।

**अवग्राहः**। पुं। अवहारके। হাঙ্গর इति लो-

**अवचूर्णम्**। क्ली। स्थूलचूर्णे। মোটা গুঁড়া।

**अवचूर्णितः**। त्रि। चूर्णिते।

**अवच्छकः**। पुं। भक्तिमति रोगिणि। वै.निघ.।

**अवटः (टी)**। पुं। नाडीव्रणे। कूपे। मे.।

**अवटीटः**। त्रि। नतनासिके। থান্দা। अम.।

**अवटुः**। स्त्री। ग्रीवापश्चाद्भागे। रत्ना.। रा.नि. व.१८। पुं। वृक्षविशेषे।

**अवटुः** । पुं । मन्यापृष्ठभागे । वै.निघ. ।

**अवतापः** । पुं । मज्जाविज्वरे । गजवै. ।

**अवतारणम्** । क्ली । भूतादियष्टे । वस्त्राञ्चले । मे.णपञ्चकं । [पतितगर्भायां गवि । हला. ।

**अवतोका (दा)** । स्त्री । स्रवद्गर्भायां गवि,

**अवदन्तः** । पुं । बालके । बाला । वै.निघ. ।

**अवदंशः** । पुं । सुरापानरुचिजनकभक्ष्यद्रव्ये । চাট । हला. । शिग्रुवृक्षे । कृष्णशिग्रौ । সজিনা । वै.निघ. ।

**अवदानम्** । क्ली । उशीरे । अ.टी. ।

**अवदान्तः** । पुं । शिग्रुवृक्षे । वै.निघ. ।

**अवदाहं (कम्)** । क्ली । लामज्जकतृणे । বেণার ন্যায় শাদা তৃণ । भा.पू.१व. । वीरणमूले । গন্ধবেণা । मं पिंवलावाला । वै निघ. ।

**अवदाहेष्टम्** । क्ली । वीरणमूले । গন্ধবেণা । अ.टी. । [टी.भ. ।

**अवदाहेष्टकापथम्** । क्ली । उशीरे । अ.

**अवदोहः** । पुं । दुग्धे । त्रिका. । [मे. ।

**अवध्वंसः** । पुं । अवचूर्णने । গুঁড়া করণ ।

**अवध्वस्तः** । त्रि । अवचूर्णिते । मे.तचतुष्कं ।

**अवना (नी)** । स्त्री । त्रायमाणायां । গোওয়ালিয়া, বলা লতা । रा.नि.व.५ ।

**अवनाटः** । त्रि । नतनासिके । থান্দা । अम.।

**अवनीसारा** । स्त्री । कदल्याम् । वै.निघ ।

**अवन्ति(न्ती)सोमम्** । क्ली । काञ्जिके । प.मु. । हारा. । रा.नि.व.१५ ।

**अवपाटिका** । स्त्री । क्षुद्ररोगान्तर्गतशूकरोगे । अल्पीयःखां यदा हर्षाद्बलाद्गच्छेत् स्त्रियं नरः । हस्ताभिघातादथवा चर्म्मण्युद्वर्त्तिते बलात् । यस्या वपाट्यते चर्म्म तां विद्यादवपाटिकां।मा.नि.।

**अवपीड़ः** । पुं । पञ्चविधनस्यकर्म्मान्यतमे शिरोनस्ये । स च शोधनस्तम्भनभेदेन द्विविधः । अवपीड्यते यस्मात् स अवपीड़ इति । "वपीड्य दीयते यस्मा[ अवपीड़स्ततः स्मृतः । कल्कीकृतादौषधाद्यः पीड़ितो निसृतोरसः । सोऽवपीड़ः समुद्दिष्टः तीक्ष्णद्रव्यसमुद्भवः । स गलरोगादौ शस्तः ।" प.प्र. ४ख. । "गलरोगे सन्निपाते निद्रायां विषमज्वरे । मनोविकारे कृमिषु युज्यते चावपीड़नम्॥" वै.निघ. नस्यवि. ।

**अवबाहुकः** । पुं । See अपबाहुकः ।

**अवभासिका (नी)** । स्त्री । वर्णच्छायाप्रकाशिकायां त्वचि । सा च व्रीहिरष्टादशभागप्रमाणा । শরীরের বাহিরের চর্ম্ম । सु.शा.४अ. ।

**अवभ्रटः** । त्रि । नतनासिके । খাঁদা इति लोके । अम. ।

**अवमन्थः (कः)** । पुं । शूकरोगभेदे । लक्षणम् —"दीर्घा बहस्तु पिड़का दीर्य्यन्ते मध्यतस्तु याः । सोऽवमन्थः कफासृग्भ्यां वेदना रोमहर्षकृत् ॥ सु.नि.१४अ. । कर्णपालीरोगभेदे । सु.सू. १६अ. ।

**अवमर्द्दः (नम्)** । पुं, क्ली । पीड़ने । अम. ।

**अवमोटनम्** । क्ली । आमोटने । মোচড়াওন । मा.नि.वा.व्या. ।

**अवयवः** । पुं । शरीरावयवे । रा.नि.व.१८ ।

**अवयवस्थानम्** । क्ली । शरीरे । वै.निघ. ।

**अवयवी** । पुं । पक्षिणि । वै.निघ. ।

**अवरम्** । क्ली । गजपश्चाज्जङ्घादौ । अम. ।

**अवरदारुकम्** । क्ली । तन्नामकस्थावरविषान्तर्गतपत्रविषे । सु.कल्प.२अ. । See पत्रविषम् ।

**अवरिका** । स्त्री । धन्याके । ধনে । रा.नि.व.६ ।

**अवरोहकः** । पुं । अश्वगन्धायां । मद.व.१ ।

**अवरोहशाखी** । पुं । प्लक्षवृक्षे । পাকুড় গাছ । रा.नि व.११ ।

**अवरोहिका** । स्त्री । अश्वगन्धायां । रा.नि. ।

**अवरोही (हिन्)** । पुं । वटवृक्षे । বটগাছ । रा.नि.व.११ ।

**अवलग्नः** । पुं । मध्यप्रदेशे । মাজা ।

**अवलम्बनः (कः)** । पुं । श्लेष्मविशेषे । तस्य स्थानं हृदयं, तत्कर्म्म च स्ववीर्य्या हृदयावलम्बनं त्रिकसन्धारणञ्च । भा. ।

**अवला** । स्त्री । नारी । रत्ना. । प्रियङ्गौ । प्रयोगा,गलगण्डे । "मधुसोम्रावलासर्ज ।"

**अवलुञ्चनम्** । क्ली । मुण्डने । शैथिल्ये । सु.सू. २५अ. । [चतुष्कं ।

**अवलेपः** । पुं । गर्व्वे । लेपने । भूषणे । मे.प

**अवलेपनम्** । क्ली । लेपने । भक्षणे । লেপা, মাখান ।

**अवलेहः** } **अवलेहिका** } पुं, स्त्री । लेह्यौषधे । চাটিবার ঔষধ । जिह्वया आस्वादने । सायं स्यादवलेहिका । च.द.ज्वर चि. । क्वाथादेः पुनः पाकात् घनत्वमवलेहः । "क्वाथादेर्यः पुनः पाकाद्घनत्वं सा रसक्रिया ।" प.प्र.१अ. । मात्रा च तस्य पलमिता । "सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात्पलोन्मिता । सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुड़ः । द्रवं चतुर्गुणं दद्यात्··· । सुपक्वे तन्तुमत्त्वं स्यादवलेहोऽप्सु मज्जति । दुग्धमिक्षुरसं यूषं पञ्चमूलकषायजं । वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ।" भा. । अयमूर्द्ध्वजत्रुगदहरः सायञ्च प्रयोज्यः । ऊर्द्ध्वजत्रुगदघ्नी या सा सायमवलेहिका ॥ च. ।

**अवलेहनम्** । क्ली । लिहने । চাটা ।

**अवल्कः** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে, গাড়লশিঙে । वै.निघ. ।

**अवल्गुजा** । स्त्री । कृष्णसोमराज्याम् । হাকুচ । भैष.भल्ला.गुड़े. ।

**अवल्गुजः (जा)** । पुं,स्त्री । कृष्णसोमराज्यां । सु.चि.२५अ. । सोमराज्याम् । হাকুচ । भा.पू.१भ.भैष.कुष्ठ-चि. ।

**अवल्गुजबीजम्** । क्ली । सोमराजीबीजे ।

**अवशकुथिका** । स्त्री । जानुदेशे ।

**अवश्यः** } **अवश्या** } पुं, स्त्री । तुषारे । भा.म.४भ.शिरो रोग-अर्द्धावभेदके । प्राग्वातावश्यमैथुनैः । भल्ला.गुड़े. ।

**अवश्यायः** । पुं । शिशिरे । च.द.पि.ज्व.मद्वीकादि. । "अवश्यायस्थितं पाक्यम् ।" तुषारे । भा.म.४भ.नासारो. । "अवश्यायकैमैथुनवाष्पसेकैः ।"

**अवश्याया** । स्त्री । कुज्झटिकायाम् ।

**अवष्टम्भः** । पुं । स्वर्णे । मे. ।

**अवष्वाणम्** । क्ली । भक्षणे । है.च. ।

**अवसादः** । पुं । अवसन्नतायाम् ।

**अवसादनम्** । क्ली । उत्सन्नव्रणस्य निम्नीकरणे । सु.चि.१अ. ।

**अवसादनी** । स्त्री । महाकरञ्जे ।

**अवसितम्** । क्ली । मर्दितधान्ये ।

**अवसेकः** । पुं । रक्तमोचणे । च.चि.१अ. ।

**अवसेकिमः** । पुं । वटके । বড়া । वै.निघ. ।

**अवसेचनम्** । क्ली । जलसेचने । सु. ।

**अवस्कन्दः** । पुं । अवगाहनस्नाने ।

**अवस्कयनी** । स्त्री । बहुदिनानन्तरप्रसूतायां गवि । কেলেন গাই । [चतुष्कं ।

**अवस्करः** । पुं । विष्ठायाम् । गुह्यदेशे । मे.र-

**अवहस्तः** । पुं । हस्तपृष्ठे । হস্তোপরিভাগ । है.च. । [হাঙ্গর, জলহস্তী । मे.रचतुष्कं ।

**अवहारः (कः)** । पुं । ग्राहाख्यजलजन्तौ ।

**अवच्छिन्नसन्धिः** । पुं । सन्धिविश्लेषे । सन्धिच्युतं सत् नीचमुखेनावस्थानम् । सन्ध्यस्थीरतिक्रान्ततावेदना च । सु.नि.१५अ. । [है.च. ।

**अवक्षेपणी** । स्त्री । वल्गायाम् । লাগাম ।

**अवाक्पुष्पी** । स्त्री । हेमपुष्प्यां । र.मा. । मधुरिकायाम् । মৌরী । रत्ना. । रा.नि.व.४ । शतपुष्पायाम् । শুল্‌ফা । मं वड़ीशौंक । रा.नि.व. ४ । च.द.अर्श चि.सुनिषण्ण.चाङ्गेरीघृते । चोरपुष्प्याम् । চোরহুলী,চোরখড়্কী । रत्ना. ।

**अवाचीनः** । त्रि । विपर्य्यस्ते । मे.नचतुष्कं ।

**अवाच्यदेशः** । पुं । योनौ । त्रिका. ।

**अवानम्** । क्ली । शुष्कफलादौ । श.र. ।

**अविः** । पुं । मेषे । भा.पू. । मूषिके । कम्बले. । मे । मत्स्यभेदे । स्त्री । कुलत्थिकायां । বনকুলথ । अविः कुलाली चक्षुष्या कुम्भकारी कुलत्थिका । र.मा. । मेष्याम् । त्रिका. । ऋतुमत्यां । अम. ।

**अविकम्** । क्ली । हीरके । रा.नि. ।

**अविकमांसम्** । क्ली । मेषमांसे । वै.निघ. ।

**अविगन्धनी** } **अविगन्धिका** } **अविगन्धी** } स्त्री । अजगन्धायाम् । বনযমান । तिलोपर्णीवर्व्वरीति, च लोके रा.नि.व.४ ।

**अविघ्नः (घ्नः)** । पुं । पानीयामलकी । सा.सु.। करमर्द्दवृक्षे । করম্চা গাছ । मं करवंद । अम.।

**अवितक्रम्** । क्ली । मेषीतक्रे । ভেড়ার দুধের ঘোল । गुणाः—अवितक्रमपथ्यं स्यादस्नं दुर्गन्धकारकं । दीपनं कटुकक्षीणं लेखनं लघु पित्तकृत् । रक्तदोषकरञ्चैव कफवातविनाशकम् ॥ द्रव्यगु. ।

**अवित्यजः** । पुं । पारदे । शब्दकल्पद्रुमः । रा.नि.व.१३ । अत्र अचिन्त्यज इत्येवं पाठो राजनिघण्टौ दृश्यते । [नि. ।

**अविदग्धः** । त्रि । अनस्ले । विजयर.अजीर्ण-

**अविदग्धम्** / **अविदुग्धम्** । क्ली । मेषीदुग्धे । हला. । See आविकक्षीरम् ।

**अविदु(दू)ष्यम्** । क्ली । मेषीदुग्धे । ভেড়ার দুধ্ । हला. ।

**अविद्धकर्णी** । स्त्री । पाठायाम् । আকনাদি। भ.टी. । सा.कौ. । जातीफलावध्याम् । भृङ्गराजे । ভীমরাজ । भ.टी. ।

**अविद्धकर्णिका (र्णी)** । स्त्री । पाठायाम् । আক্নাদি । भ.टी. । जातीफलावध्याम् ।

**अविद्धा** । स्त्री । दुष्टशिराव्यधने । "कुष्ठःचता हीनशस्त्रप्रणिधानेनोपविद्धा ।" सु.शा.८अ. ।

**अविपक्ति(त्ति)करचूर्णम्** । क्ली । अम्लपित्ताधिकारे । पाठः—"त्रिकटु त्रिफला मुस्तं वीजञ्चैव विड़ङ्गजम् । एलापत्रञ्च सर्व्वञ्च समभागं विचूर्णयेत् । यावन्त्येतानि चूर्णानि लवङ्गं तत्समं भवेत् । सर्व्वचूर्णद्विगुणितं त्रिवृचूर्णञ्च दापयेत् । सर्व्वमेकीकृतं यावत्तावच्छर्करयान्वितम् । सर्व्वमेकीकृतं पात्रे स्निग्धभाण्डे निधापयेत् । भोजनादौ ततोऽन्ते च मध्वाज्याभ्यामिदं शुभम् ॥" र.सा.सं. । भैष. । प्रयोगा.सा.कौ. । त्रिकट्वादि प्रत्येकं १ तो. लवङ्गचूर्णं ११ तो. त्रिवृन्मूलचूर्णं ४४ तो. शर्करा ६६ तो. ।

**अविपटः** । पुं । ऊर्णामयवस्त्रे, कम्बलादौ ।

**अविपाकः** । पुं । अपरिपाके । [रा.नि.व.१६

**अविप्रियः** । पुं । श्यामाकतृणे । শামা ঘাস ।

**अविप्रिया** । स्त्री । श्यामालतायाम् । रा.नि. । श्वेतालताक्षुपे । रा.नि.व.५ ।

**अविभुक्** । पुं । व्याघ्रे । मं लांडगा । वै.निघ. ।

**अविमरीष(स)म्** । क्ली । आविक्षीरे । ভেড়ীর দুদ্ । हला.हे.च. ।

**अविमुक्तकः** । पुं । माधवीलतायां । वै.निघ. ।

**अविमुक्तका** । स्त्री । तिन्दुकवृक्षे । তেঁদ । हिं केंदु । मं टेंभुरणी । काकतिन्दुकी । वै.निघ. ।

**अविमोचम्** । क्ली । आविकक्षीरे । र.मा. ।

**अविला** । स्त्री । मेष्याम् । हे.च. । [वै.निघ. ।

**अविवृक्षः** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**अविशिरम्** । क्ली । सूर्य्यावर्त्तफले । হুড়হুড়ের ফল । वै.निघ. ।

**अविश्वासा** । स्त्री । चिरप्रसूतगवि । श.च. ।

**अविषा** । स्त्री । अतिविषायाम् । रा.नि.व.६ । निर्व्विषतृणे । নির্ব্বিষী ঘাস । वै.निघ. । [हला. ।

**अविसोढ़म्** । क्ली । अविक्षीरे । ভেড়ীর দুধ্ ।

**अविस्रम्** । त्रि । पूतिगन्धरहिते । च.चि.२अ. ।

**अवी** । स्त्री । वनकुलत्थे । र.मा. । ऋतुमत्यां स्त्रियाम् । हे.च. । [सु.शा.१अ. ।

**अवीजधर्म्मी** । त्रि । यो वीजधर्म्मी न भवति ।

**अवीजा** । स्त्री । गोस्तनीसदृशगुणद्राक्षायाम् । কিস্‌মিস্ বেদানা इति लोके । "अवीजान्या स्वल्पगुणा गोस्तनीसदृशी गुणैः ।" भा. ।

**अवीदुग्धम्** । क्ली । मेषीदुग्धे । ध.द. ।

**अवीमूत्रम्** । क्ली । मेषीमूत्रे । च.द. ।

**अवुकः** । पुं । छागे । श.र. । [निघ. ।

**अवृक्षः** । पुं । पुष्पवृक्षभेदे । मं पत्थरफुल । वै.

**अवेद्यः** । पुं । गोवत्से । श.र. । [नि. ।

**अवेला** । स्त्री । पूगचर्व्विते । চিবন গুপারি ।

**अवोदम्** । क्ली । आर्द्रके । जटा. ।

**अव्यक्तम्** । क्ली । प्रकृतौ । "अखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम ।" सु.शा.१अ. । आत्मनि । हे.च. ।

**अव्यक्ता** । स्त्री । कृष्णगोकर्ण्याम् । কাল অপরাজিতা । मं कालीगोकर्णी । वै.निघ. ।

**अव्यङ्गः** । त्रि । अविकलाङ्गे । स्त्री । शूकशिम्ब्याम् । আলাকুশী ।

**अव्यञ्जनः** । त्रि । शृङ्गहीने । हला. ।

**अव्यण्डः (ण्डा)** । पुं, स्त्री । भूम्यामलक्याम् । ভূঁই আমলা । कपिकच्छ्वां । আলাকুশী । च. चि.३अ. ।

**अव्यथा** । स्त्री । स्थलकमलिन्याम् । স্থলপদ্ম । भा.पू.१भ. । रा.नि.व.११ । हरीतक्याम् । महाश्रावण्यां । মুণ্ডীরী । भा.पू.१भ.गु.व. । आमलक्यां । लक्ष्मणायां । লক্ষ্মণামূল । [श्वा. ।

**अव्यथिः (थी)** । पुं । अश्वे । वा.सू.४अ.प्रजा-

**अव्यथ्या** । स्त्री । हरीतक्याम् । भा.पू.१भ. ।

**अव्यधा** । स्त्री । दुष्टशिरावेधने । "अशस्त्रकृता अव्यधा ।" सु.शा.८अ. ।

**अव्यया** । स्त्री । गोरक्षमुण्ड्यां । গোরক্ষচাকুলি । मं गोरखमुंडी । वै.निघ. ।

**अव्रणशुक्रः** । पुं । नेत्रस्य कृष्णभागगतरोगविशेषे । अयमभिष्यन्दजः ज्वालायुक्तः शङ्खेन्दुकुन्दसदृशवर्णः नभस्थतनुमेघाकृतिश्च सुसाध्यः । लक्षणम् —दृष्टेः समीपे न भवेत्तु यच्च न चावगाढ़ं न संस्रवेच्च । सवेदनावन्न च युग्मशुक्रं तत्सिद्धिमाप्नोति कदाचिदेव । सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रुयुक्तं । विहायसीवाभ्रदलानुकारि तदव्रणं साध्यतमं वदन्ति ॥ सु.उ.५अ. । स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासं । वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति । गम्भीरजातं बहुलश्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् । विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्ममदृष्टिकृच्च । द्वित्वागतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम् ॥ मा.नि. ।

**अशकुम्भी** । स्त्री । पानीयोपरिजवृक्षे । পানা। र.मा. ।

**अशनम्** । क्ली । भोजने । अन्ने ।रा.नि.व.२० । पुं। पीतशाले । च.सू.४अ.४२दशकं । चित्रकवृक्षे । भल्लातकवृक्षे । वै.निघ. । [षे । सु.सू.४६अ. ।

**अश(स)नकः** । पुं । असनपुष्पाकारधान्यविशे-

**अशनपर्णी** । पुं,स्त्री । विजयसार इति प्रसिद्धे वृक्षे । मारादी इति च पश्चिमदेशे । गोकर्णालतायां । অপরাজিতা । अम. ।

**अशनपुष्पः** । पुं । अशनपुष्पाकारशाली । षष्टिक धान्यविशेष । सु.सू.४६अ. ।

**अशनमल्लिका** । स्त्री । आस्फोतायाम् । হাপরমালী । च.द. ।

**अशना (या)** । स्त्री । क्षुधायाम् । हला. । शुक्लनिष्पावे । শ্বেত বর্বটি বা শিম্ । रा.नि.व.७।

**अशनिः** । पुं,स्त्री । हीरके । হীরে । वै.निघ । *

**अशाका (खा)** । स्त्री । शूलीतृणे । शाखाशून्यलतायाम् । रा.नि.व.८ ।

**अशान्तगन्धाढ्या** । स्त्री । आम्रहरिद्रायाम् । আম আদা । मं आंबेहलद । वै.निघ. ।

**अशितम्** । क्ली । भक्षणे । खादने । हे.च. ।

**अशितलता** । स्त्री । नीलदूर्व्वायाम् । নীল দূর্ব্বা । वै.निघ. । [वज्रम् ।

**अशिरम्** । क्ली । हीरके । रा.नि.व.१२ । See

**अशिशिम्बी** । स्त्री । स्वनामख्यातशिम्बीविशेषे । শ্বেত শিম্ । मं थोरश्वेतश्रावे । गुणाः— मधुरा कषाया श्लेष्मपित्तघ्नी व्रणदोषघ्नी शीतला रुचिकरी च । रा.नि.व.७ ।

**अशिश्विका** । स्त्री । अनपत्यायाम् । যে স্ত্রীর সন্তান নাই । श.र. ।

**अशीता**
**अशुक्ला** } स्त्री । भूमिकुष्माण्डे । वै.निघ. ।

**अशुक्लजा** । स्त्री । बोरोधान्ये । वै.निघ. ।

**अशुचिः** । त्रि । अपवित्रे । [व.१६ ।

**अशूकजः (कः)** । पुं । शुक्लशाली । रा.नि.

**अशृतम्** । क्ली । अपक्के ।

**अशोकः** । पुं । (Saraca Indica, Jonesia Aśoka.)स्वनामख्यातवृक्षे । অশোকগাছ । मे. । हिं अशोगी । स लोहितकुसुम इति । सु.सू.३८ लोध्रादिः । अशोकवृक्षगुणाः—शीतलः हृद्यः पित्तदाहघ्नः गुल्मशूलोदराध्मानघ्नः कृमिघ्नश्च। रा.नि.व.१० । तिक्तः ग्राही वर्ण्यः कषायः अपची तृष्णादाहकृमिशोषविषरक्तघ्नश्च । भा.पू.१भ. । मा-

वायविशेषे। यथा—आरग्वधसिन्नकरोहिणी च हरीतकीपिप्पलिमूलमुस्ताः। इा.चवि.२स्थानं २अ.

**आरग्वधादिः** । पुं। आरग्वधेन्द्रयवपाटल-काकतिक्ता-निम्बामृता-मधुरसा-सुवहचपाठाः।भूनि-म्बसैर्य्यकपटोल-करञ्जयुग्मं सप्तच्छदाग्निसुषवीफल-बाणघोंटा इत्यात्मको गणः छर्द्दिकुष्ठविषमज्वरघ्नः कफकण्डूतिप्रमेहदुष्टव्रणशोधनः विशेषतो बलास-घ्नश्च। वा.सू.१५अ.। सु.सू.३८अ.। आरग्वधादि-पञ्चद्रव्यकृतकषाये वातश्लेष्मज्वरे। च.द.। आरग्वध-ग्रन्थिकमुस्ततिक्ताहरीतकीभिः क्वथितः कषायः...।

**आरग्वधाद्यतैलम्** । क्ली। योनिव्यापदधि-कारे तैलम्। सर्षपतैलं ४श.गर्द्दभमूत्रं ४श. आर-ग्वधमूलत्वक् १ प. शङ्खचूर्णं २ प. हरितालं २ प. एकत्र पाच्यम्। च.द.योनिव्या.चि.। कुष्ठरोगे च तैलं। आरग्वधत्वक् वटत्वक् कुष्ठं हरितालं मनः-शिला हरिद्रा दारुहरिद्रा च, एषां मिलितपादि-ककल्केन तैलप्रस्थं विपचेत्। च.द.कुष्ठ.चि.।

**आरट्टजः** । पुं। तद्देशीयाश्वे। आरबी घोड़ा। जटा.।

**आरणालम् (कम्)** । क्ली। काञ्जिके। आ-मानी, काँजि। यत्र निस्तुषीकृतैः आमैर्गोधूमैः संहितं तदारणालमुच्यते। प.प्र.३ख.। आरणा-लन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः। पक्वैरासन्धितं तत्तु सौवीरसदृशं गुणैः॥ भा.पू.सन्धानव.।

**आरणिः** । पुं। कुलहण्डके आवर्त्ते। हारा.।

**आरण्यगोमयः** । पुं। वन्यगोमये। वनघुंटे। च.चि.१अ.।

**आरण्यपशुः** । पुं। वनजपशौ। स सप्तधा,—ऋक्ष-महिष-वानर-सरीसृप-रुरु-पृषत-मृगाः।

**आरण्यमक्षिका** । स्त्री। दंशके। डाँशमा-छि। रत्ना.। [रा.नि.व.३।

**आरण्यमुद्गा** । स्त्री। मुद्गपर्ण्याम्। मुगानी।

**आरण्यबिम्बिका** । स्त्री। तुण्डिकायाम्। बुनो तेलाकुचा। रा.नि.व.२३।

**आरण्योपलभस्म** । क्ली। वनकरीषभस्मनि। बिलघुँटेर छाइ। वै.निघ.२भ.ज्व.भक्तेश्वररसे।

**आरतिः** । स्त्री। स्वस्थचित्तत्वे।

**आरभः** । पुं। उद्यमे। वधे। दर्पे। मे.।

**आरम्भम्** । क्ली। विस्वादे।

**आरवः** । पुं। गजकुम्भाधोभागे। हला.।हे.च.। गजकुम्भसन्धिभागे। त्रिका.।

**आरा** । स्त्री। चर्म्मभेदकास्त्रे। सा व्यधनप्रयो-जना। लक्षणं—"आराऽर्द्धाङ्गुलवृत्ता स्यात्तत्प्रवेशा-नयोऽर्हतः। चतुरस्रा···॥ चवि.सु.चि.३अ.। आ-रामुखीनाम जलपक्षिणि। अम.।

**आराग्रम्** । क्ली। अर्द्धचन्द्राग्रास्त्रमुखे। "आरा-ग्रन्तु मुखं तेषाम्। पुष्पपत्रादिभेदतः॥" हला.।

**आराधनम्** । क्ली। पचने। मे.नचतुष्कं।

**आरामः** । पुं। उपवने। "नगरान्नातिदूरेण यः सङ्किरपरोपितः। तरुषण्डः स आरामस्तथोप-वनमुच्यते॥" हला.।

**आरामघोलिः(लिका)** । स्त्री। पत्रशाक-विशेषे, पश्चिमदेशे प्रसिद्धे। गुणाः—"आरामघो-लिका चाम्लरुचा कफानिलापहा। पित्तश्लेष्मकरी चान्या गुरुा जीर्णज्वरापहा॥" रा.नि.व.७।

**आरामवल्लिका** । स्त्री। मल्लिकाविशेषे। रा.नि.व.२३।

**आरामशीतला (ली)** । स्त्री। रामशा-लीति महाराष्ट्रख्याते सुगन्धपत्रशाकविशेषे। आ-रामशीतलापि पश्चिमदेशे कथ्यते। वर्व्वर्य्यादिगणे धृता। गुणाः—तिक्ता शीतला पित्तघ्नी दाहशोष-हरा व्रणविस्फोटकघ्नी च। रा.नि.व.१०। शीता कटुः पित्तकफास्रघ्नी च। मद.व.१। [सु.३८अ.।

**आरामुखम्** । क्ली। व्यधनार्थशस्त्रविशेषे। सु.

**आरालिकः** । पुं। पाचके। अम.।

**आरिः (री)** । पुं। कण्टकवृक्षे। खदिरसारे। खयेर। गुणाः—कटुः तिक्तोष्णः कफवातघ्नः व्रण-कण्ठरोगघ्नः रुच्यः दीपनश्च। रा.नि.व.८।

**आरुः** । पुं। (Lager stroemia rigia.) वृक्षविशेषे। कर्कटे। शूकरे। मे.रद्विकं। कुष्माण्ड-लतायाम्। अलाब्वाम्।

**आरुकम्** । क्ली। हिमालयदेशजाते स्वनाम-कौषधिविशेषे। आड़ इति भाषा। पत्रपुष्पादि-भेदेन तस्य चातुर्जात्यं सर्व्वाण्येव गुणैः तुल्यानि। गुणाः—"आरुकं वातसेहार्शःकफघ्नञ्च। मद.व.६।

मधुरं हिमं अर्शःप्रमेहगुल्मरक्तदोषघ्नञ्च। रा.नि.व.११। पुं। काबिलदेशे आलुबुखार इति ख्याते खाद्यद्रव्ये। गुणाः—"आरुकी ग्राहितुवरी हृद्यः शीतो गुरुः स्मृतः। मलावष्टम्भकी ग्राही भेदी चोष्णः कफापहः। पित्तहृत्पाचकश्चाम्लो मधुरश्च सुखप्रियः। मुखस्वच्छकरश्चैव मेहगुल्मार्शनुत्परः। रक्तवातरुजां हन्ता स पक्वो मधुरो गुरुः। कफपित्तकरश्चोष्णो रुच्यो धातुविवर्द्धकः। वै.निघ.।

**आरुष्करः** । पुं। भल्लातकवृक्षे। वै.निघ.।

**आरूटषकः** । पुं। वासायां। च.चि.२५.।

**आरेवतः** । पुं। स्थूलारग्वधवृक्षे। বড় সোণালু। रा.नि.व.९। भा.म.१भ चित्तभमज्व चि.। "पथ्यारेवतरामसेनकरजो।" सु.स.३८अ लाक्षादिव। क्ली। आरेवतवृक्षफले। (খেজুরবিশেষ) अम.।

**आरोग्यम्** । क्ली। रोगनिर्म्मुक्तौ। आरोग्यं वह्निवर्द्धनं। रा.नि.व.२०। "बलाधिष्ठानमारोग्यं।" चर.।

**आरोग्यपञ्चकम्** । क्ली। पथ्यारग्वधतिक्तानिशदामलकेषु। एतत्सिद्धं पाचनं सामे जीर्णज्वरे हितम्। भा.म.१भ.ज्व.चि.।

**आरोग्यशाला** । स्त्री। चिकित्सालये।

**आरोग्यशिम्बी** । स्त्री। आरग्वधवृक्षे। (শোন্দাল। हिं धनवहेड़ा। मं लघुवाहावा। मद.व.१।

**आरोग्याम्बु** । क्ली। पादशेषोष्णजले। "पादशेषन्तु यत्तोयं आरोग्याम्बु तदुच्यते।" भा.।

**आरोहः** । पुं। अवरोहे। वरस्त्रियाः श्रोण्यां। रा.नि.व.१८। परिमाणविशेषे। हे.च.। गजाद्यारोहके। मे.हत्रिकं।

**आर्ग्वधः** पुं। आरग्वधवृक्षे।

**आर्घ्यम्** । क्ली। तन्नामप्रसिद्धमधुभेदे। "मधूकवृक्षनिर्यासं जरत्काष्ठाश्मशोद्भवाः। अवन्त्यार्घ्यं तदाख्यातं श्वेतकं मालवे पुनः। तीक्ष्णतुण्डास्तु या पीता मक्षिकाः षट्पदोपमाः। आर्घ्यास्तास्तत्कृतं यत्तदार्घ्यमित्यपरे जगुः।" गुणाः—"चक्षुष्यं कफपित्तघ्नं कटु कषायं पाके तिक्तं बलपुष्टिकरञ्च। अस्तदोषघ्न"मिति। भा.। मक्षिकास्तीक्ष्णतुण्डा यास्तथा षट्पदसन्निभाः। तदुद्भूतं यदार्घ्याहं तदार्घ्यं मधु वर्ण्यते। एतत्पिङ्गलवर्णम्। रा.नि.व.१४।

**आर्घ्यशर्करा** । स्त्री। आर्घ्यमधुकृतशर्करायां। इयं गुणैरार्घ्यमधुतुल्या। रा.नि.व.१४।

**आर्घ्या** । स्त्री। मधुमक्षिकाविशेषे। सा च पीततुण्डा भ्रमरसदृशा। रा.नि.व.१४। See आर्घ्यं।

**आर्त्तः** । त्रि। पीड़िते।

**आर्त्तगलः (ला)** । पुं, स्त्री। (Barleria coerulea.) नीलझिण्ट्यां। নীলঝাঁটী। हिं कटसैरुया। मं कालाकोराण्टा। रा.नि.व.१०। च.द.भग्न चि.कषायघृते। सु.सू.२८,२९संशोधने। See नीलाम्लानः। गुणाः—"उष्णः तिक्तः कटुः वातकफघ्नः शोथकण्डूशूलकुष्ठव्रणघ्नश्च।" वै.निघ.। भैष.मुखरो.चि.। रक्तझिण्टीवृक्षे। भा.पू.१भ.।

**आर्त्तवम्** । क्ली। स्त्रीपुष्पे। तस्य प्रवृत्तिनिवृत्तिकालः द्वादशवर्षादिपञ्चाशद्वर्षमितः। तच्च प्रतिमासमुपचितं वायुर्योनिमुखं नयेत् धमनीद्वयेन। सु.शा.३अ.। तत्स्वरूपं—"रसादेव रजः स्त्रीणां मासि मासि त्र्यहं स्रवेत्। तद्वर्षाद्द्वादशादूर्द्धं याति पञ्चाशतः क्षयं॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवं। ईषत्कृष्णविवर्णं च वायुर्योनिमुखं नयेत्॥ शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमं। तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत्॥" इति गर्भार्त्तवलक्षणम्। भा.। पुष्पं। त्रि। ऋतुजे। मे.रत्रिकं।

**आर्त्तवी** । स्त्री। घोटक्याम्। रा.नि.व.१९।

**आर्त्तिः** । स्त्री। पीड़ायां,वेदनायां। रा.नि.व.।

**आर्द्रः** । त्रि। सजले वस्तुनि। ভিজা। हिं गीला। मं ओलें। तच्च सरसनीरसभेदेन द्विधा। तयोर्वालुकाद्यम् आर्द्रम्। नीरसमपि सदुग्धगुप्तरसभेदात् द्विधा। तयोः वटाश्वत्थाद्यं नीरसम्। सदुग्धमपि द्विधा मृदुतीक्ष्णभेदेन। तयोः शातलाद्यास्तीक्ष्णाः दुग्धिकाद्याः मृदव इति। यथा—"आर्द्रं द्रव्यं द्विधा प्रोक्तं सरसं नीरसं तथा। सदुग्धं गुप्तरसकं द्विधा नीरसमुच्यते। वालुकं सार्षपं शाकं निर्गुण्ड्यरुष्कमार्षरम्। धत्तूराद्यमिदं सर्व्वमार्द्रं स्वरसमुच्यते। वटाश्वत्थकरीराद्यं आर्द्रद्रव्यन्तु नीरसम्। सदुग्धन्तु द्विधा प्रोक्तं मृदुतीक्ष्णमिति क्रमात्। शातलावज्रशोहुण्डसीरिण्याद्यास्तु तीक्ष्णकाः। दुग्धिकार्कक्षीरिकाद्या मृदुदुग्धाः प्रकीर्त्तिताः।" प.प्र.। क्लिन्ने। मे.।

**आर्द्रकम्** । क्ली। (Zingiber officinale.) Common zinger. स्वनामख्यातकन्दशाकविशेषे । আদা । हिं आदरख । मं आलें । कं अल्ल, अद्रका । गुणाः—शुण्ठीसमगुणं कटुकमपि पाके मधुरं प्राग्भोजनं सलवणं सेवितं अग्निदीपनं रुचिकरं जिह्वाकण्ठशोधनञ्च भवति । ग्रीष्मे शरदि च न सेव्यम् । भा.पू.१भ.,वा. आर्द्रकं नागरगुणं भेदनं दीपनं गुरु । मद.व.२६ ।

**आर्द्रकस्वरसः** । पुं । आर्द्रकस्य स्वरसे । আদার রস । च.द.ज्व.चि.कवलधारणे ।

**आर्द्रचिक्कणम्** । क्ली । आमचिक्कणगुवाके । কাঁচা চিকিণ সুপারি । रा.नि.व.२३ ।

**आर्द्रजम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**आर्द्रदाडिमनिर्यासः** । पुं । आर्द्रदाडिमफलस्वरसे । सि.यो अरोच.चि.श्रीकण्ठः ।

**आर्द्रमरिचम्** । क्ली । आममरिचे । কাঁচা মরিচ । गुणाः—"आर्द्रन्तु मरिचं किञ्चिच्चोष्णं पाके रसे मधु । अपित्तलञ्च कटुकं गुरु चाग्निप्रदीपनम् । तिक्तञ्च रुचकं स्वादु कफवातहरं परं । हृद्रोगञ्च क्रमींश्चैव नाशयेत्… ।" वै.निघ. ।

**आर्द्रमाषा** । स्त्री। Leguminus shrub, (Glicine debilis.) वनमुद्गे, माषपर्ण्याम् । रा.नि.व.३ ।

**आर्द्रवटकः** । पुं । আদাবড়া इति प्रसिद्धे भोज्यद्रव्ये । तत्प्रकरणं यथा—मुद्गपिष्टरचितान् वटकांस्तैलपाचितान् हस्तचूर्णितान् कृत्वा तत्र भृष्टहिङ्गुमरिचार्द्रकजीरकचूर्णं निम्बूरसं यवानीञ्च युक्त्या दत्त्वा मिश्रयेत् । अथ तद्द्रव्यसंपूरकं दत्त्वा मुद्गपिष्टानि पचेत् । तानि च पिष्टकानि क्वथितजले निमज्ज्यानि । "मुद्गपिष्ट्या विरचितान् वटांस्तैलेन पाचितान् । हस्तेन चूर्णयित्वाथ तस्मिंश्चूर्णे विनिक्षिपेत् । भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरीचं जीरकं तथा । निम्बूरसं यवानीञ्च युक्त्या सर्वं विमिश्रयेत् । मुद्गपिष्टं पचेत्सम्यक् स्थाल्यामाधारकोपरि । तत्रासु गोलकं कुर्यात् तन्मध्ये पूरणं क्षिपेत् । तैले तान् गोलकान् पक्त्वा क्वथितायां निमज्जयेत् । गुणाः—"गोलकाः पाचकाः शीतास्तेनार्द्रवटका अपि ।" भा.पू.१भ. ।

**आर्द्रशाकम्** । क्ली । आर्द्रके । रा.नि.व.६ ।

**आर्द्रा** । स्त्री । कृत्तिविषायां । षष्ठनक्षत्रे । आर्द्रके । रा.नि.व.६ ।

**आर्द्राख्यम्** । क्ली । आर्द्रके ।

**आर्द्रिका** । स्त्री । क्षुद्रार्द्रके । भा.पू.१भ. । आर्द्रधनिकायां । কাঁচা ধনে । गुणाः—"तिक्तमधुरा मूत्रला पित्तञ्च न करोति ।" "आर्द्रिका भेदिनी गुर्वी तीक्ष्णोष्णा दीपनी च सा । कटुका मधुरा पाके रुक्षा वातकफापहा ।" वा.सू.६अ. ।

**आर्षभी** । स्त्री । कपिकच्छुलतायाम् । আলকুশী । रा.नि.व.३ । See आत्मगुप्ता । [शार्ङ्ग. ।

**आलम् (कम्)** क्ली । हरिताले । प.मु. ।

**आलगर्द्दः** । पुं । Species of cobra. अलगर्द्दे । जलसर्पे । [सु.सू.४६अ. ।

**आलदूषकः** । पुं । तन्नामकप्रतुदपक्षिणि ।

**आलविषः** । पुं । यस्य आलि (লাল) विषमस्ति । ते च वृश्चिकविश्वम्भरराजीवमत्स्योच्चिचिङ्गाः समुद्रवृश्चिकाश्च । सु.कल्प.३अ. । [कल्प.८अ. ।

**आलविषा** । स्त्री । कृच्छ्रसाध्यलूताभेदे । सु.

**आलस्यम्** । क्ली । अलसतायां । सामर्थ्येऽपि कर्मण्यनुत्साहे । भा.म.१भ.ज्व.चि. । "आलस्यं मधुरास्यता ।"

**आलातम्** । क्ली । अङ्गारे । रा.नि.व.२० ।

**आलानम्** । क्ली । गजबन्धनस्तम्भे । हला. । रज्जौ । मे. । [গাছ । श.र. ।

**आलाबुः (बूः)** । स्त्री । अलाब्वाम् । লাউ

**आलावर्त्तम्** । क्ली । वस्त्रव्यजने । কাপড়ের পাখা । हे.च. ।

**आलास्यः** । पुं । कुम्भीरे । हे.च. ।

**आलिः** । पुं । वृश्चिके । भ्रमरे । मे.त्रिकं ।

**आलिङ्गनम्** । क्ली । आश्लेषे । रत्ना. ।

**आलिञ्जरः** । पुं । अलिञ्जरे । জালা । त्रिका. ।

**आलिम्पना** । स्त्री । दर्ग्यां । त्रिका. ।

**आलिवङ्गा** । स्त्री । हालिम् इति लोके । आशालवीज इति गुर्जरे । वै.निघ.१भ.,वा.व्या., कटिवा.चि. ।

**आली** । स्त्री । कफोणी । मे.लत्रिकं ।

**आलीढम्** । क्ली । लेहने । अशिते ।

**आलीनकम्** । क्ली । रङ्गे । राङ् । हे.च. ।

**आलुः** । पुं । कोङ्कणदेशप्रसिद्धकन्दविशेषे । कामालू । मं कांसालु । सूरणे । आलुके । पेचके । रा.नि.व.७। स्त्री । क्षुद्रजलाधारे । गलन्तिकायां । त्रिका. । क्ली । भेलके । मूले । त्रिका । (गोल आलू इति ख्याते कन्दविशेषे । मे. । गुणाः— रक्तपित्तघ्नं गुरु स्वादु शीतलं स्तन्यं शुक्रकरञ्च । द्रव्याभि. ।

**आलु(लू:)कः** । पुं, क्ली । An esculent root, (Arum campanulatum.) कन्दशाकविशेषे । आलु गाछ । स बहुधा—काष्ठालुक-शङ्खालु हस्त्यालु रक्तालु-पिण्डालु-मध्वालुभेदात् । तत्र काष्ठालुकं काठिन्ययुक्तं (हिं काठारु), शङ्खालुकं श्वेततायुक्तं (शङ्खारु इति लोके), हस्त्यालुक दीर्घतायुक्तं महाशरीरम्, रक्तालुकञ्च (रक्तारुतरुडा), पिण्डालुकं (हिं वर्त्तुलसुथनो), मध्वालुकं मिष्टं रोमयुक्तं (हिं दीर्घसुथनी) इति च । गुणाः —मलमूत्रनिःसारकं रुचं दुर्जरं रक्तपित्तघ्नं वातकफघ्नं बल्यं वृष्यं स्तन्यवर्द्धनञ्च । भा.पू.१भ. । आलूकं शीतलं सर्व्वं विष्टम्भि मधुरं गुरु । राज. ।

**आलुकी** । स्त्री । रक्तालुभेदे । राङा आलू । हिं अरुइ । या दीर्घा कठिना तन्वी च । गुणाः — बलकृत् स्निग्धा गुर्व्वी हृदयकफघ्नी विष्टम्भिनी तैलभर्जितात्यन्तरुचिकरी च । भा.पू १भ.,शा.व. ।

**आलूकम्** । क्ली । एलवालुके । आलुके । रा. नि.व.४ । [पादौ यथोक्तौषधलेपे । सु.चि.१अ.।

**आलेपः (नम्)** । पुं. क्ली । जातमात्रशोथव-

**आलेयम्** । क्ली । पद्मकाष्ठे । वै.निघ. ।

**आलेशः** । पुं । अश्वमुखरोगे । तत्र हनुदन्तो न सम्यगुद्गच्छन् यन्त्रणामुत्पादयति, तेनाश्वोऽस्वस्थः अनिच्छया लोकं खादति भग्नकासी चीणबलश्च भवति । "हनुदेशे यदा दन्तो भवत्यभ्यन्तराश्रयः । आलेश इति तं विद्यात् श्लेष्मरक्तसमुद्भवम् ॥ तेनाश्वो दुर्मनात्यर्थं मन्दं पिबति खादति । जर्जरं कासते चैव बलाच परिहीयते ॥" ज.द.२६अ. ।

**आलोकः (नम्)** । पुं,क्ली । दर्शने । (देखा । दीपे । मे. ।

**आलोचकः** । पुं । तन्नामकाग्नी । तस्य स्थानं नेत्रं । स च रूपादि दर्शयति । सु.सू.२१अ.। क्ली । तन्नामकपित्ते । भा. ।

**आलोचनम्** । क्ली । दर्शने ।

**आलोड़नम्** । क्ली । मिश्रणे। उत्तेजने । [माने।

**आलोलः** । पुं । कम्पे । त्रि । कम्पिते । लम्ब-

**आलूकम्** । क्ली । आलुके । आलू । हिं अलु, आलुवोखार । गुणाः — रसतः शीतं स्वादमनं वातपित्तकरञ्च । मद.व.६ । [रूस] (धोड़ा । त्रिका.।

**आवट्टजः** । पुं। उत्तमाश्वे । पारसीकाश्वे । पा-

**आवपनम्** । क्ली । भाण्डे । वीजवपने । अम.।

**आवरकः** । त्रि । आच्छादके ।

**आवर्त्तः** । पुं। भ्रमे । भा.म.३भ.उदा.चि । राजावर्त्तमणौ । रा.नि.व.१३ । तन्नामकमर्म्मस्थाने । स्थानं च तस्य भ्रुवयोरुपरि निम्नदेशः । तत्रस्थं वैकल्यकारमर्म्मेदयं । सु.शा.६अ.। शुभाशुभसूचकेऽश्वस्य रोमावर्त्ते । तं च पञ्चवतिप्रकाराः । तद्यथा— "विंशतिस्तु शुभाः प्रोक्ताः षट्सप्तत्यधिकाः स्मृताः । उत्तरोष्ठे प्रपाणे स्यात् तत्रावर्त्तः शुभावहः ॥ सृक्कणोश्च तथा प्रोक्ताः सर्व्वकामफलप्रदाः । चयश्चैवाथ चत्वारो वाजिनो यस्य रोमजाः । द्वौ वा ललाटजौ यस्य स तु धन्यतमः स्मृतः ॥ आनुपूर्व्व्यां स्थितावेवं ललाटे रोमजास्त्रयः । निःश्रेणी नाम सा ख्याता भर्त्तुः सर्व्वार्थसाधिनी ॥ शिरःकेशान्तयोर्मध्ये शवो नामाभिधीयते । तत्रावर्त्तः स्मृतोऽस्य भर्त्तुर्जयविवर्द्धनः ॥ घण्टाबन्धसमीपस्थो निगालः कीर्त्तितो बुधैः । तस्मिन्देवमणिर्नाम रोमजः शुभकृत्स्मृतः ॥ कर्णमूले तथा बाहोः केशान्ते मस्तके तथा । आवर्त्ताः पूजिता नित्यं विशेषेण तु मस्तके ॥ आवर्त्ता यस्य चत्वारो वाजिनो वक्षसि स्थिताः । एकः कण्ठे भवेत्स्पष्टः स धन्यः सर्व्वकामदः ॥ रन्ध्रे चैव यदा भर्त्तुरीप्सितार्थप्रदो भवेत् । उपरन्ध्रे भवेच्चैव रोमजातिपूजितः ॥ शङ्खचक्रगदावज्रशक्तिपद्मोपमाश्च ये । विशेषेण शुभाः प्रोक्ता रोमजाः शुभदेशजाः ॥ अत ऊर्द्धं प्रवक्ष्यामि रोमजाननिन्दितान् ।

भर्त्तुः क्लेशावहान् सर्व्वान् धनप्राणापहारकान् ॥ नासिकापुटयोर्मध्ये प्रदेशः प्रोथ उच्यते । तत्र भर्त्तुर्विनाशाय रोमजश्च प्रकीर्त्तितः ॥ ऊर्द्ध्वञ्च नासिकाच्छिद्रात् स्वामिनः क्लेशकारकः । गण्डयोश्चैव भर्त्तारं हन्त्यावर्त्तो दुरासदः ॥ अश्रुपातः समुद्दिष्टः प्रदेशश्चक्षुषोरधः । तत्रावर्त्तो भवेद्भीमः स्वामिनः कुलनाशनः ॥ अपाङ्गाद्द्व्यङ्गुलं चैव प्रदेशः शङ्ख उच्यते । तस्मिन् भर्त्तुर्विनाशाय भवेद्दारुण रोमजः ॥ भ्रूप्रदेशसमुद्भूत आवर्त्तो नैव पूजितः । सुहृद्वियोगकृत् सः स्याद्भर्त्तुरर्थविनाशकः ॥ मन्यां ग्रीवां शिरो विन्द्यात्तत्रावर्त्तस्तु कुत्सितः । कण्ठयोश्चापि संग्रामे स्वामिनस्त्वाशु घातयेत् ॥ चिबुकस्य समीपस्थो वामदक्षिणभागतः । प्रदेशस्तु हनुर्नाम तत्रावर्त्तो हि दारुणः ॥ अधरोष्ठस्य नाधस्तादावर्त्तं हि प्रमर्द्दकम् । तस्मिन् पापो भवेद्भर्त्तुः कर्णयोश्चापि रोमजः ॥ कण्ठस्याध निगालस्य मध्ये गलक उच्यते । तत्रावर्त्तः स्मृतः पापः स्कन्धसन्धिगतश्च यः ॥ अधस्ताज्जङ्घयोश्चैव ग्रन्थिः कूर्च इति स्मृतः तत्रावर्त्तः स्मृतो भर्त्तुः संग्रामे जीवितान्तकृत् ॥ कूर्चादष्टाङ्गुलं चोर्द्ध्वं पार्श्वयोस्तु कला स्मृता । तत्र भर्त्तुः शराघातैर्जीवितान्तश्च रोमजः ॥ ककुदं हयभस्यैव सुव्यक्तमुपलक्षयेत् । वाजिनो यस्य तत्र स्यादावर्त्तः स्वामिनाशनः ॥ ककुदस्य पुरोभागे समीपे वह उच्यते । भर्त्तुः सुतमसेतस्य तस्मिन्नाशाय रोमजः ॥ कीकसे तु च यस्य स्यादावर्त्तस्तस्य दारुणः । रणे हतः समं भर्त्रा क्रव्याद्भिः स विलुप्यते ॥ क्रोड़े चैवासने चापि हृदये चैव जानुनि । आवर्त्ताः स्वामिघाताय भवन्त्येव न संशयः ॥ पार्श्वयो रोमजा यस्य स चाश्वो नयति क्षयम् । स पचत्याशु भर्त्तारं नीहाराम्बु यथा रविः ॥ कूर्चस्याधःप्रदेशस्तु कुष्ठिकः परिकीर्त्तितः । अधन्यस्तत्र वाहस्य जङ्घयोर्जानुनोश्च यः ॥ नाभिजो मुष्कजश्चैव त्रिकजश्च विशेषतः । पुच्छमूलस्थितश्चापि नैव धन्यः प्रकीर्त्तितः ॥ कुक्षौ व्याधिं नियच्छन्ति रोमजाः कुक्षिसम्भवाः । पायुसीवनिमध्यस्था नैव धन्यास्तु कीर्त्तिताः ॥ स्फिक्‌पिण्डे स्थूरके चैव यस्यावर्त्तो हि वाजिनः । लिङ्गावर्त्तः स विख्यातो भर्त्तुः सर्व्वार्थनाशकः ॥ शतपादीति विख्यातस्तथा वै मुकुलोऽपरः । आवर्त्तश्चैव सङ्घातः पादुकश्चार्द्धपादुकः ॥ शुक्तिश्चैवावलीढश्च आवर्त्तः कीर्त्तितोऽष्टधा । वाजिदेहगतः सम्यक् शुभाशुभनिवेदकः ॥ शतपादीसमाकारः शतपादीति कीर्त्तितः । जातीमुकुलसङ्काशो मुकुलः समुदाहृतः ॥ आवर्त्तो भ्रमितैर्बालैः सङ्घातो रोमपुञ्जकैः । शुक्तिश्च शुक्तिसंस्थानैः रोमभिर्व्वक्तलक्षणैः ॥ वत्सावलीढकाकारोऽवलीढः परिकीर्त्तितः । पादुकः पादुकाकारस्तथा चैवार्द्धपादुकः ॥ बाल्ये विशेषसंस्थाने निर्द्दिशन्मतिमान् भिषक् । शास्त्रमार्गानुसारेण यथा प्रोक्तं विचक्षणैः ॥ एतेषामेव सर्व्वेषामावर्त्तानां तपोधनैः । रोमजेति कृता संज्ञा वाजिलक्षणवेदिभिः ॥ शुभाशुभौ तु यत्र द्वौ तत्रैको न फलप्रदः । एको हेम्ना दहेत्पापं तेन दोषो न दुष्यति ॥ अथवा द्विजमुख्याय वेगादिगुणवान्हयः । दत्त्वा ग्राह्यः क्रयेणैव दुरावर्त्तस्तु काकुदो ॥ श्रीवत्सो रोमजश्चैव रोचमानस्तथैव च । अङ्गदो मुषलो चैव राज्यरत्नप्रदः सदा ॥ प्रपाणे मारुतं विन्द्याल्ललाटे च हुताशनम् । उरसि चाश्विनौ देवौ चन्द्रसूर्य्यौ च मूर्द्धनि ॥ रन्ध्रे स्कन्दविशाखौ च उपरन्ध्रे हरो हरिः । इत्येवं पूजिता ह्येते दशावर्त्तास्तु वाजिनः ॥ अर्थ्येकेन विहीनाश्चेद्भवेयुरशुभास्तदा ॥ क्ली । स्वर्णमाक्षिके । रा नि.व.१३ ।

**आवर्त्तकः ।** पुं । कीटविशेषे । तद्दष्टे वायुजन्यरोगा जायन्ते । सु.कल्प.८अ.। राजावर्त्तमणौ । रा नि.व.१३ । क्ली । स्थलपद्मे । रौप्यमाक्षिके । रा नि.व.१३ ।

**आवर्त्तकी ।** स्त्री । स्वनामख्यातलतायां कोकणादिदेशे आकुली तलाड़वल्ली भगतवल्ली इति च प्रसिद्धायां ।(भगतगुरी) । गुणाः—कषायोष्णा सरा तिक्ता रसायनी हृद्या वातामवातरक्तशोथमेहघ्नी । मद.व.१ । कषायाम्ला शीतला पित्तहा । रा.नि.व.३ । वृहद्दन्त्याम्, भद्रदन्त्याम् । रा.नि.व.६ ।

**आवर्त्तनम् ।** क्ली । आलोड़ने दुग्धादीनाम् । आवटान । धातुगालने । अ.टी ।

**आवर्त्तनी ।** स्त्री । (Helicteres Isora.) आतमोड़ा इति ख्याते द्रव्ये । आंतमोड़ा । हिं मरफली । धातुगालनपात्रे । श.र. ।

**आवर्त्तपूलिका ।** स्त्री । पूलिकाभेदे ।

**आवर्त्तमणिः ।** पुं । राजावर्त्तनामकोपरत्ने । रा.नि.व.१३ ।

**आवर्त्तिनी ।** स्त्री । अजशृङ्गीवृक्षे । र.मा. ।

**आवलीकन्दः (कः)** । पुं । मालाकन्दे । रा.नि.व.७ ।

**आव(ब)ल्यम्** । क्ली । दौर्ब्बल्ये ।

**आवसथः** । पुं, क्ली । गृहे । हे.च. ।

**आवसितम्** क्ली । निर्व्वुषीकृतधान्ये । বওলান ধান । हे.च. । परिपक्वमर्द्दितधान्ये । भरत. । [भ ।

**आवस्थिकः** । त्रि । अवस्थोचिते । सु.चि ३८

**आवा(बा)धा** । स्त्री । पीड़ायाम् । श्र.र. ।

**आवापः** पुं । आलवाले । कल्के । प.प्र.१ख.। निःक्षेपे । सु.चि.१श्र. ।

**आवारि** । क्ली । हट्टगृहे । হাটচালি । उणा.।

**आवासः** । पुं । गृहे । हे.च ।

**आविः** । पुं । पश्चिणि । वै.निघ. ।

**आविकः** । पुं । कम्बले । हे.च. । हला. । त्रि । मेषसम्बन्धिनि । क्ली । मेषमांसादौ । मेषीदुग्धे ।

**आविकघृतम्** । क्ली । मेषीनवनीतजातघृते । ভেড়ার দুধের ঘি । गुणाः—लघुपाकं पित्तकोपनं योनिदोषे कफे वाते शोफे कम्पे च हितम् । रा.नि.व.१५ । पाके लघ्वाविकं सर्पिः सर्व्वरोगविषापहं । दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ अत्रि.८श्र. ।

**आविकदधि** । क्ली । मेषीदुग्धकृतदधनि । ভেড়ীর দই । हिं मेढ़ीकेदहि । गुणाः—गुरु सुस्निग्धं कफपित्तकरं वाते रक्तवाते च पथ्यं शोफव्रणघ्नञ्च । रा.नि.व.१५। सुखरोगे परं हितं, दृष्टफलं । आविकं पित्तकृद्वातशमनं कफकोपनं । गुल्मार्शःकुष्ठरोगे च रक्तपित्ते न शस्यते । अत्रि.८श्र.।

**आविकनवनीतम्** । क्ली । मेषीदुग्धजातनवनीते । ভেড়ীর দুধের ননি । गुणाः—पाके हिमं लघु सारकं योनिशूले कफे वाते अर्शसि च सदा हितम् । ऐडकं नवनीतं क्लिष्टगन्धं शीतलं मेधाहृत् गुरु पुष्टिस्थौल्यमन्दाग्निदीपनञ्च । रा.नि.व.१५ ।

**आविकमांसम्** । क्ली । मेषमांसे । ভেড়ার মাস । गुणाः—मधुरं ईषद्गुरु बलकरञ्च । आजमांसाद्विपरीतगुणं तेन अल्पगुणं स्निग्धं गुरु सदोषं अभिष्यन्दि च । वा.सू.६श्र. ।

**आविकमूत्रम्** । क्ली । मेषीमूत्रे । ভেড়ীর মূত্র । गुणाः—तिक्तं कटुकम् उष्णं कुष्ठघ्नम् अर्शःशूलोदरकृमिशोफमेहविषघ्नञ्च । रा.नि.व.१५ । शोफकुष्ठार्शोमेहवर्चोग्रहघ्नञ्च । मद.व.८ ।

**आविकक्षीरम्** । क्ली । मेषीदुग्धे । ভেড়ীর দুধ । मं मेंढ़िचेदुध् । गुणाः—स्वादु अम्लपाकं स्निग्धोष्णं गुरु पित्तकफोल्वणं बृंहणं हिक्काश्वासानिलघ्नञ्च । वा.टी.चारपाणिः । लोमशं गुरु कफपित्तहरं स्थौल्यघ्नं मेहघ्नं वातप्रकोपे पथ्यं अनिलजे कासे हितञ्च । रा.नि.व.१५ । वातव्याधिहरं हिध्माश्वासपित्तकफप्रदञ्च । वा.सू.५श्र. । क्षीरञ्च मधुरं रूक्षमुष्णं वातकफापहं । न शस्तं रक्तपित्तानां वातिकानां हितं भवेत् । अत्रि.८श्र. । [वै.निघ. ।

**आविकी** । स्त्री । कम्बले । শাল । शब्दका ।

**आविग्नः** । पुं । करमर्द्दवृक्षे । পাণি আম্‌লা । श्र.र. । भ.टी.सा. । [टा ।

**आविटः** । वृक्षविशेषे । हिं आवुटा । मं आप-

**आविधः** । पुं । वेधनास्त्रे । ভোমর, তুরপুন । अम. । [गर्भ. ।

**आविरः** । पुं । प्रसववेदनायाम् । मा.नि.मूढ़-

**आविलम्** । क्ली । काविलदेशीयफलविशेषे । सेओ इति लोके । मं योरसेवफल । त्रि । कलुषे ।

**आविलकन्दः** । पुं । मालाकन्दे । रा.नि.व.१।

**आविलमत्स्यः** । पुं । मत्स्यविशेषे । तल्लक्षणं यथा—शुभाङ्गः ताम्रपक्षः स्थूलाङ्गश्च । गुणाः—अतिरुच्यः मधुरः बल्यः वीर्य्यपुष्टिवर्द्धनः गुणाढ्यश्च । रा.नि.व.१७ ।

**आविला** । स्त्री । मत्स्ये । आह्वर्य्यां । আমরুল । मं आंबोली । अम. । [वै.निघ. ।

**आविहृष्टः** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**आविष्टः** । त्रि । प्रेतादिभिर्गृहीते । ভূতে পাওয়া । हारा. ।

**आवी** । स्त्री । प्रसववेदनायाम् । सु.नि.८श्र. । प्रसवलिङ्गे मूत्रकफप्रसेकादौ । विज.र. ।

**आवेगी** । स्त्री । वृद्धदारकलतायां । বীজতারক । रा.नि.व.२ । र.मा. । मद.व.१ ।

**आवेशः** । पुं । अपस्माररोगे । हे.च.। भूतसञ्चारे । रा.नि.व.२० ।

**आवेशनम्** । क्ली । शिल्पशालायाम् । हला. । भूतावेशे । मे.नचतुष्कं । मन्त्रेण भूतमात्रस्य शिरसि सन्निवेशने । "वक्षावेशनताड़नैः ।" च.द.ज्व.चि. । क्रोधे । धरणिः ।

**आवेशनमन्त्रः** । पुं । येन मन्त्रेण भूतादयः शरीरे विशन्ति । चचि.१स्था.५अ. ।

**आवेशिकः** । त्रि । आगन्तुके । अम.।

**आशनः** । पुं । असनवृक्षे । द्विरूप-कोषः ।

**आशयः** । पुं । आधारे । अभिप्राये । पनसवृक्षे । मे. । अजीर्णे । Organs or receptacles. कोष्ठागारे । अजयपालः । आशयाः सप्त — वातपित्त कफ रक्त पक्व-मूत्रामाशयाः, स्त्रीणामतिरिक्तो गर्भाशय इत्यष्टौ । सु.शा.५अ. । वायुः स्वस्थितिहेतोराशयं करोति । आशयाभ्यासयोगेन करोत्याशयसम्भवम् । सु.शा.४अ. । तत्र उरो रक्ताशयः, तदधः श्लेष्माशयः,तदधः आमाशयः, तदधः पक्वाशयादूर्द्धं ग्रहणी नाम या कला सैव पाचकाशयः । नाभेरूर्द्ध्वमग्न्याशयः मध्यभागे स्थितः । तस्योपरि तिलं, तदधो वाताशयः । तदधः पक्वाशयः स एव मलाशयः । तदधो वस्तिः स एव मूत्राशयः । भा.पू.। वाभटस्तु नार्य्यास्त्रय आशया अधिका उच्यन्ते, ते च गर्भाशयः स्तनौ च । तत्र गर्भाशयः पित्तपक्वाशयान्तरे, प्रवृद्धौ स्तनौ स्तन्याशयौ च ।

**आशयफलम्** । क्ली । पनसे । विश्वः ।

**आशयाशः** । पुं । वायौ । अग्नौ । भ.टी.. ।

**आशा** । स्त्री । तृष्णायाम् । अम. ।

**आशाढ़ः** । पुं । तृतीयमासे । द्विरूप.भ.टी. ।

**आशापुरसम्भवः** । पुं । भूमिजगुग्गुलौ । आसापूरी धूप इति लोके । रा.नि.व.१२ ।

**आशाबन्धः** । पुं । मर्कटजालके । माकड़सार जाल । मे.धचतुष्कं । [भोजने ।

**आशितः** । त्रि । भुक्ते । अशिते । जटा.। क्ली ।

**आशितम्भवम्** । क्ली। अन्नादौ। पुं। तृप्तौ मे.

**आशिता** । त्रि । अतिशयभोक्तरि । हे.च. ।

**आशी (शीः)** । स्त्री । सर्पदन्ते । मे. । सर्पविषे । श र. । आशी तालुगता दंष्ट्रा तया दष्टो न जीवति । विषविद्या. । वृद्धिनामकौषधे । रा.नि.व.५ । [पुष्पहवविशेषे । रत्ना. ।

**आशीतः (कः)** । पुं । अद्विल्लक इति ख्याते

**आशीविषः** । पुं । सर्पे । मद.व.१२ । अम. । दर्वीकरसर्पे । सु.कल्प.४अ. ।

**आशुः** । पुं, क्ली । धान्यसामान्ये । र.मा. । वर्षाभवषष्टिकादिव्रीहिविशेषे । আউশ ধান । मे, शद्विकं । "आशुभक्तोदकैः पिष्टम् ।" च.द अ.पि.चि.अभयावटी । गुणाः—मधुरः पाकेऽम्लः पित्तकरः गुरुश्च । राज. ।

**आशुकारी** । पुं । पित्तोल्बणसन्निपातज्वरे । लक्षणं—"अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च । गात्रे च विन्दवो रक्ता दाहोऽतीव प्रजायते । पित्तोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ॥" भा.म १भ. ।

**आशुकोपितः** । पुं। मर्द्दशजातवक्तकशाली। धकोड़ धान इति प्रसिद्धः । रा.नि.व.१६ ।

**आशुगः** । पुं । वायौ । अम. ।

**आशुतीक्ष्णकम्** । क्ली । ताम्रे । [च ।

**आशुपः** । पुं । वंशविशेषे । বেউড় বাঁশ । श.

**आशुपत्री** । स्त्री । शल्लकीलतायां । কুন্দুরকী লতা । रत्ना. ।

**आशुमण्डः** । पुं । आशुभक्तमण्ड । আউশ চালের মণ্ড । गुणाः—ग्राही मधुरः कफकरः तर्पणः त्रयदोषघ्नः शुक्रवर्द्धनश्च । अत्रि.१स्थान.२३ अ. । [धान्ये । भ.टी.भ. ।

**आशुव्रीहिः** । पुं । वीरीधान्ये । रत्ना. । आशु·

**आशुशुक्षणिः** । पुं । अग्नौ । रत्ना. ।

**आशेकुटी** । पुं । पर्वते । श मा. ।

**आश्चोतनम्** । क्ली । नेत्रसेचने । वा.टी.हेमा. चक्षुःपूरणे । प्रयोगाः । तस्य लक्षणं - "अथ आश्चोतनं कार्य्यं निशायां न कदाचन । उन्मीलितेऽक्षिद्व्यङ्गुलादूर्द्ध्वं विन्दुभिर्द्व्यङ्गुलाद्दितम् । क्वाथक्षौद्रासवस्नेहविन्दूना। यत्तु पातनं । यद्व्यङ्गुलोन्मिते नेत्रे प्रोक्तमाश्चोतनं हि तत् ।" इति । मात्रा च लेखने ८ विन्दवः, स्नेहने १० विन्दवः, रोपणे १२ वि·

ष्टव:, शीते चीणा शीर्ण च शीता विन्दवो भवेयु:। तत्र वाते तिक्तं, पित्ते स्निग्धं, कफे च तिक्तोष्णरूचं हितम्। वै.निघ.।

**आश्रय:** । पुं। आधारे। जटा। गृहे। हे.च.।

**आश्रयाश:** । पुं। चित्रकवृक्षे। अग्नौ। अम.।

**आश्रव:** । पुं। क्लेशे। मे.।

**आश्लेष:** । पुं। आलिङ्गने। रत्ना.।

**आश्वत्थम्** । क्ली। अश्वत्थफले। अम.।

**आश्वयुज:**, **आश्विन:** । पुं। षष्ठमासे, आश्विने मासि। अत्र रवे: कन्याराशिस्थिति:। आश्विन मास। अम.।

**आश्विनेयौ** । पुं। अश्विनीकुमारौ। अम.।

**आश्वीनम्** । क्ली। एकेनाश्वेन एकदिनगम्ये पथि। अम.।

**आषाढ:** । पुं। स्वनामख्याततृतीयमासे। यत्र रवेर्मिथुनराशिस्थिति:। अम.। पलाशदण्डे। मे.।

**आषाढकम्** । क्ली। पलाशवीजे। [व.१२।

**आसङ्गा** । स्त्री। सौराष्ट्रमृत्तिकायां। रा.नि.

**आसङ्गिनी** । स्त्री। चक्रवात्यां। घूर्णि वातास। त्रिका.।

**आसङ्गिम:** । पुं। कर्णबन्धनाकृतिविशेषे। स चाभ्यन्तरदीर्घैकपालि:। सु.स १६अ.।

**आसत्ति:** । स्त्री। सङ्गमे। मे.।

**आसन:** । पुं। जीवकद्रुमे। मेदिनिकं। क्ली। गजस्कन्धे। हला.। पीठिकायां। पिंड़ि।

**आसनपर्णी** । स्त्री। अपराजितायां। संज्ञा कर्णवल्ली। वै.निघ.।

**आसन्द:** । पुं। खट्टाभेदे। मे.दन्तिकं।

**आसन्दी** । स्त्री। लघुखट्टिकायाम्। हारा.।

**आसन्नकाल:** । पुं। मृत्युकाले।

**आसव:** । पुं। मद्यमात्रवचने। वा.टी.हेमा.। मद्यविशेषे। अपक्वौषधसिद्धमद्यम् आसव उच्यते। "यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसव:।" श्री धुरिक्षुरसे: पक्वैरपक्वैरासवो भवेत्। प.प्र.१ख.। गुणा:—"आसवस्य गुणा: ज्ञेया वीजद्रव्यगुणै: समा:। भा.पू.मद्यव.। द्रवेषु चिरकालस्थं द्रव्यं यत् सन्धितं भवेत्। आसवारिष्टभेदैस्तत्प्रोच्यते भेषजोचितम्॥ वै.निघ.सिद्धविधि:। धान्याम्ले। वै.निघ.। See अरिष्ट:। [रा.नि.व.६।

**आसवद्रु: (म:)** । पुं। अश्मन्तवृक्षे। तालवृक्षे।

**आसारण:** । पुं। वृक्षभेदे। भैष.।

**आसीनप्रचलायितम्** । क्ली। निद्रावेशेनोपविश्य दोलने। ढुलुनि। राज.।

**आसुतम्** । क्ली। चिरकालस्थितामं कन्दादियुक्तमासुतमुच्यते तदुक्तं कन्दमूलफलाद्यन्न लवणादिकसंयुतं। सन्धानाच्चिरकालात्तमासुतं परिकीर्त्तितम्॥ वा.टी.हे. । [हे.च.।

**आसुति:** । पुं। मद्यसन्धाने। मद चोयान।

**आसुतीबल:** । पुं। शौण्डिके। हे.च.।

**आसुरम्** । क्ली। विड्लवणे। रा.नि.व.६। विट् लवण। भा.पू.१भ. सामुद्रलवणे। मद.व.२।

**आसुरी** । स्त्री। रक्तसर्षपे। श्वेतसरिषा, कृष्ण राइ। प सु.। र.सा.सं.। च.द.ग्रह.चि.आयामकाशिके। रक्तसर्षपे। राइसरिषा। रा.नि.व.१६। छेदभेदात्मके चिकित्साविशेषे। आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता। श.च.।

**आसेक्य:** । पुं। नपुंसकविशेषे। तल्लक्षणं—"पित्रोरत्यल्पवीर्य्यत्वादासेक्य: पुरुषो भवेत्। स शुक्रं प्राश्य लभते ध्वजोत्थानमसंशयम्"।सु.शा.२अ.।

**आस्कन्दनम्** । क्ली। संशोषणे। मे.नत्रिकं।

**आस्कन्दितम् (कम्)** । क्ली। अश्वस्य पञ्चमगतिभेदे। हे.च.। सा च गति: सम्यग्गतिरित्यमर:।

**आस्तर:** । पुं। करिकम्बले। हे.च.।

**आस्तरणम्** । क्ली। कुथे। हस्तिपृष्ठस्थविचित्रकम्बले। झूल्। हला.।

**आस्तिकमति:** । पुं। उत्तमवैद्ये।

**आस्था** । स्त्री। यत्ने। अपेक्षायाम्। आलम्बने। मे.थद्विकं। जले। हे.च.।

**आस्थागम:** । पुं। जले। हे.च.। [निरूह:।

**आस्थापनम्** । क्ली। निरूहवस्तौ। भा.। See

**आस्थापनोपगवर्ग:** । पुं। आस्थापनयोग्य-

पञ्चविंशमहाकषायवर्गे । यथा —"बिल्वबिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानी"ति दशेमानि आस्थापनोपगानि भवन्ति। বেউড়ী, বিল্ব,পিপুল,কুড়, সরিষা, বচ, ইন্দ্রযব গুলফা, যষ্টিমধু, ময়না ফল। च.सू.४अ.।

**आस्पदम्** । क्ली । स्थाने । हे च. । प्रतिष्ठायां । अम. ।

**आस्पन्दनम्** । क्ली । अतिकम्पे । स्पन्दने ।

**आस्फालः** । पुं । करिकर्णास्फालने । हारा. ।

**आस्फालनम्** । क्ली । ताड़ने । आटोपे ।

**आस्फोटः (कः)** । पुं । अर्कवृक्षे । আকন্দ গাছ । गिरिजपीलुनि । আক্রোটবিশেষ । रा. नि.व.१० । श.र. । [अम. ।

**आस्फोटनी** । स्त्री । वेधनिकायां । ভোমর

**आस्फोटा** । स्त्री । नवमल्लिकायाम् । रा.नि.व. १० । নেয়ালি ফুল । भा. ।

**आस्फोतः (कः)** । पुं । स्वनामख्यातलतागुल्मे । হাপরমালী । र.मा. । रक्तार्कवृक्षे । भा.पू १भ. । भैषज्यरत्ना.चि. । कोविदारवृक्षे । রক্তকাঞ্চন । हि कचनार । मद.व.१ । भूपलाशवृक्षे । प.मु. ।

**आस्फोतका (ता)** । स्त्री। (Clitoria tarnatea) अपराजितासामान्ये। प.मु.। भा.पू.१भ. विषतैले । भा.म.४भ.पूतनाग्रह.चि. । "आस्फोता चैव योज्याः स्युः" । लताविशेषे । হাপরমালী इति ख्याते । तें षड़विमर्लतीगे । गुणाः—कुष्ठविषरोगघ्नो । राज. । कन्दर्पसार तैले । शारिवायाम् । सु.चि.६,१८अ. । वै.निघ.जीर्णज्व.चीरषट्पलादितैले । काष्ठमल्लिकायाम् । प.मु. । रा.नि.व. १२ । श्वेतसारिवायाम् । भा.पू.२भ. । नवमल्लिकायाम् । मे.तत्रिकं । [१८ ।

**आस्यम्** । क्ली । मुखे । मुखाभ्यन्तरे । रा.नि.व.

**आस्यदेशः** । पुं । मुखमध्ये ।

**आस्यपत्रम्** । क्ली । पद्मे । श.च. ।

**आस्यपुष्पः** । पुं । श्वेतकिन्निहीवृक्षे । वै.निघ. ।

**आस्यफलः** । पुं । श्वेतधुस्तूरवृक्षे । শ্বেত ধুতুরা । मं श्वेतधोत्रा । वै.निघ. । [हे.च. ।

**आस्यलाङ्गलः** । पुं । शूकरे । वन्यशूकरे ।

**आस्यलोम** । क्ली। श्मश्रुणि। দাড়ি,গোঁপ ।मे.।

**आस्यवैरस्यम्** । क्ली । मुखविस्वादे ।

**आस्यशाखोटः** । पुं । गुल्मविशेषे । আস্শ্যাওড়া । गुणाः—"वदद्गश्चास्यशाखोटः स पित्तकफनाशनः । वातलश्च क्रमिं हन्ति पाण्डुताज्वरकामलाः ।" अत्रि. । [अम. ।

**आस्या** । स्त्री । उपवेशने । निरुद्योगोपवेशने ।

**आस्यासवः** । पुं। लालायां লাল,থুতু है.च.।

**आस्रवः** । पुं । प्रस्रावे ।

**आस्रावी** । पुं । अश्वस्य पादरोगभेदे । लक्षणं —"आस्राविणं विजानीयात् क्लेदस्रवतलं हयम् ।" ज.द २९अ. ।

**आस्वादः (नम्)** । पुं, क्ली । स्वादग्रहणे ।

**आहकः (ज्वरः)** । पुं । नामाज्वरे । নাসাজ্বর । तल्लक्षणं —"तनना रक्तशोथेन युक्तौ नासापुटान्तरे। गात्रशूलज्वरकरः श्लेष्मणा स्याहकज्वरः।" वै.निघ. । [तत्रिकं ।

**आहतम्** । क्ली । पुरातनवस्त्रे । नववस्त्रे । मे.

**आहरः** । पुं। उच्छ्वासे। अन्तर्मुखनिश्वासे।हे.च.।

**आहरणम्** । क्ली । सञ्चयकरणे । मे. ।

**आहलीवम्** । क्ली । आसालबीज इति गुजराटे प्रसिद्धे । गुणाः— आहलीवं मतं चोष्णं तिक्तं त्वग्दोषनाशनं । वातं गुल्मं नाशयतीत्येवं प्रोक्तं चिकित्सकैः ॥ वै.निघ. ।

**आहा** । स्त्री । वणिक्द्रव्यभेदे । च.द. ।

**आहारः** । पुं । द्रव्यगलाधःकरणे । গেলা, খাওয়া । भोजनद्रव्ये । द्रवाद्रवत्वात्स द्विधा, पुनश्च त्रिविधः —स्वभावगुरुर्मात्रागुरुः संस्कारगुरुश्चेति । वा. । "प्राणिनां पुनर्मूलमाहारः बलवर्णौजसाञ्च स षट्सु रसेष्वायत्तः ब्रह्मादेरपि च लोकस्याहारः स्थित्युत्पत्तिविनाशहेतुराहारादेवाभिवृद्धिर्बलमारोग्यं वर्णेन्द्रियप्रसादश्च, तथाहारवैषम्यादस्वास्थ्यम् ।" सु.सू.४६अ. । गुणाः—बलकृत् सद्यः प्रीणनः देहधारकः । ओजस्तेजःस्वरोत्साहधृतिस्मृतिमतिप्रदश्च । मद.व.११ । तत्पाकप्रकारः—यात्यामाशयमाहारः पूर्वं प्राणानिलेरितः । माधुर्यं फेनभावञ्च षड्रसोऽपि लभेत सः। अथ पाचकपित्तेन

विदग्धश्चाम्लतां व्रजेत्। ततः समाममकता यह-
णीमभिनीयते॥ यहण्यां पच्यते कोष्ठवह्निना
जायते कटुः। रसो भवति सम्यक्वादपक्वादामस-
म्भवः। वह्निर्बलेन माधुर्य्यं स्निग्धतां याति तत्र सः।
पुष्णाति धातूनखिलान् सम्यक् पक्वोऽमृतोपमः।
मन्दवह्निविदग्धश्च कटुरम्लो भवेद्रसः। विषभावं
व्रजेद्वापि कुर्य्याद्वा रोगसङ्करम्॥ शार्ङ्ग.पू.६ष.।
क्ली। भक्ते। प.मु.। भक्ताहारे। विन्यादन्नाहार-
माहारसंज्ञम्। रा.नि.व.२०।

**आहारशोषणः** । पुं,क्ली। कृष्णजीरके। [च.।

**आहारसम्भवः** । पुं। शरीरस्थरसधातौ। हे.

**आहारस्थानम्** । क्ली। निर्जनादिदेशे।
"आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने
विधेयाः।" भा.।

**आहार्य्यः** । पुं। अपालिकभयतो यः स आहा-
र्य्यपालिर्नाम। तन्नामककर्णबन्धनाकृतौ। सु.सू.
१६ष.। त्रि। आहरणार्हे (कर्णमलादौ)। आग-
न्तुके। चिका।

**आहावः** । पुं। निपानजलाशये। চৌবাচ্চা।
हे.च.। अम.।

**आहुली** । स्त्री। आहुल्ये।

**आहुल्यम्** । क्ली। काश्मीरदेशजे 'तरवट्'
इति ख्याते क्षुपविशेषे। हिं भुञ्जितखड़। मं तर-
वड़, भावेर। गुणाः—आहुल्यं तिक्तशीतं चक्षुष्यं
पित्तदाहघ्नं मुखरोगघ्नं कुष्ठकण्डूतिजन्तु शूलव्रण-
घ्नञ्च। रा.नि.व.४।

**आह्वरफेनम्** । क्ली। अहिफेने। भैष.शोथ चि.
लोचपालरसे।

**आहेयम्** । क्ली। विषे। त्रि। अहिसम्बन्धिनि।

**आह्निकम्** । क्ली। भोजने। हारा.। मे.।

**आचारणा** । स्त्री। मैथुनं प्रत्याक्रोशे। छे-
नालि अपवाद। अम.।

**आचिकः** । पुं। आच्छुकवृक्षे। আচ্ফুলের
গাছ। र मा.। छागज्वरे। गज.वै.।

**आचिकशीधुः** । पुं। विभीतकगुड़कृते धा-
तकीपुष्पकृततीक्ष्णमद्ये। गुणाः—आचिकः पाण्डु-
रोगघ्नः बल्यः संग्राहको लघुः। कषायमधुरः शी-
धुः पित्तघ्नोऽसृक्प्रसादनः॥ सु.सू.४५ष.।

**आचिकी(सुरा)** । स्त्री। विभीतकलककशालि-
तण्डुलकृतसुरायाम्। सा च पाण्डुशोफार्शःपित्ता-
स्रकफकुष्ठघ्नी किञ्चिद्वातकरी रुच्या दीपनी रेचनी
लघुश्च। मद.व.८। तिनिशकृतसुरेति केचित्।

**आचीवः** । पुं। शोभाञ्जनवृक्षे। সজিনা গা-
ছ। श टी.रा.।

**आचेपः (कः)** । पुं। वातरोगविशेषे। कुपि-
तो वायुर्धमनीं प्राप्य मुहुः सञ्चरणाद्देहं चालयन्
आचेपकं जनयति। लक्षणम्—यदा तु धमनीः
सर्व्वाः कुपितोऽभ्येति मारुतः। तदा क्षिपत्याशु
मुहुः मुहुर्देहं मुहुश्चरः। मुहुर्मुहुस्तदाचेपादाचेपक
इति स्मृतः॥ मा.नि.वा.व्या.। स चतुर्धा—वाता-
दिभेदेन। गदाधरस्तु आचेपकमेकमेव कारणभेदा-
च्चतुर्विधं कथयति। पित्तश्लेष्माचितो वायुर्वायु-
रेव च केवलः। कुर्य्यादाचेपकं चान्यञ्चतुर्थमभिघा-
तजः॥ आचेपके शिरां विध्येत् कुर्य्याद्वातहरीं
क्रियां। तीक्ष्णैः प्रधमनैर्नस्यैस्तथा संज्ञां स विन्दति॥
इति। अम्बस्याचेपकलक्षणं यथा—"गत्वा यः
पूर्व्वकायेन पुनः पश्चाच्च गच्छति। तस्याङ्गे वेद-
नार्त्तस्य तस्याचेपकमादिशेत्॥" ज.द.५५ष.।

**आचोटः** । पुं। गिरिजाचोटवृक्षे। আক্-
রোট্ গাছ इति लोके। श.र.। See अचोटः।

**आचोड़ः** । पुं। आचोटवृक्षे। श.टी.भ.।

# इ

**इः** । पुं। पुरुषोत्तमे। हला.।

**इकटः** । पुं। वंशाङ्कुरे।

**इक्कटः** । पुं। तृणविशेषे। ইকড়। प.मु.
। बदरवृक्षे। रत्ना.।

**इङ्गः** । त्रि। जङ्गमे। हे.च.।

**इङ्गलः** । पुं। इङ्गुदीवृक्षे। গিয়াপুতা। हिं
गणवेंटे। वै.निघ.।

**इङ्गुदः (दी)** । पुं,स्त्री। स्वनामख्यातमहगन्धि-

वृक्षे। জিয়াপুতা, ইঙ্গোট इति च प्रसिद्धे। सु.सू.३९अ.। कफशमने। "पुत्रजीवके पुत्रजीवकफले।" सि.यी.कास-चि.मनःशिलादिधूमपाने वृन्दः। "सुखेङ्गुदैः पिबेत्।" वृन्दः। गुणाः—मदगन्धिः कटुकश्च फेनिला लघुः रसायनी क्रिमिवातकफव्रणघ्नी च। रा.नि.व.८। कुष्ठभूतग्रहव्रणविषक्रिमिघ्न उष्णः श्वित्रशूलघ्नः तिक्तः कटुश्च। भा.पू.१भ.वटादिः। मद.व.५। "अस्य पुष्पन्तु मधुरं स्निग्धञ्चोष्णञ्च तिक्तकं। वातं कफं नाशयति च।" वै.निघ.। तत्फलं—"स्निग्धोष्णं तिक्तमधुरं वातश्लेष्मघ्नमैङ्गुदम्।" सु.सू.४६अ.। पारावतपद्यां। লতাফট্কী। प.मु.।

**इङ्गुदीतैलम्**। क्ली। इङ्गुदीफलोत्थतैले। गुणाः—स्निग्धं मधुरं पित्तघ्नं शीतलं बल्यं कान्तिदं श्लेष्मलं केशवर्द्धनञ्च। रा.नि.व.१५। [१अ.।

**इङ्गुदीचारः**। पुं। तन्नामकवृक्षचारे। च.चि.

**इङ्गुलः (ली)**। पुं, स्त्री। इङ्गुदीवृक्षे। रा.नि.व.८। क्ली। हिङ्गुले। भा.नि.विज.र.।

**इच्छाभेदी**। पुं। भेदकरसविशेषे। "तुल्यं टङ्गणपारदं समरिचं तुल्यांशकं गन्धकं विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं चिपेत्। गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्।" अत्र प्रत्येकमेकभागतुल्यं जैपालचूर्णस्य नवगुणत्वं। द्वितीये पाठे जैपालस्याष्टौ भागाः गन्धकस्य द्वौ भागौ। स यथा—"जैपालाष्टौ द्विकौ गन्धशुण्ठी मरिचं द्विकं। एकः सूतः सोहगेका गुञ्जामात्रा वटीकृता" इत्यादि॥ तृतीये गदमुरारीच्छाभेदिरसे वलिर्गन्धके, गगनमभ्रे, अर्कस्ताम्रे, जैपालचूर्णं सर्व्वचूर्णसमं भङ्गराजरसैः दिनद्वयं मर्द्दम्। पाठो यथा—"रसवलिगगनार्कं शुद्धतालं विषञ्च त्रिकटुत्रिफलमेतत् टङ्गणं भृङ्गमभिः। सममिह जयपालीक्कृतचूर्णं विमर्द्य द्विनिशमनिशमेतद्भृङ्गराजोत्थवारा॥" चतुर्थो यथा—"शुण्ठी मरिचसंयुक्तं रसगन्धकटङ्गणं। जैपालास्त्रिगुणाः प्रोक्ताः सर्व्वमेकत्र चूर्णयेत्। इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत्। यावत्तचुलुकाः पीतास्तावद्वारान् विरेचयेत्॥" तक्रोदनं खादितव्यम्। र.सा.सं.विरेकाधिकारे।

**इच्छाभेदी(गुड़िका)**। स्त्री। भेदकरसभेदे। अत्र जैपालचूर्णं सर्व्वतुल्यं ग्राह्यं। "पारदं गन्धकं कुर्य्यात्सौभाग्यं पिप्पलीसमं। समानि जयपालानि क्रियन्ते रेचनाय च। शीतेन रेचयेत्कम्पगुणेनैव प्रशाम्यति।" र.सा.सं.। [गाछ्। श.च.।

**इच्छ्कः**। पुं। मातुलुङ्गवृक्षे। টাবা লেবু

**इज्जलः**। पुं। (Barringtonia acutangula, Syn. Euginia acutangula.) हिज्जलवृक्षे। হিজল। समुद्रफले इति च लोके। गुणाः—'शीतलः संग्राही वातकोपनः विशेषेण विषघ्नश्च। मद.व.५। कुष्ठहृत् वातकोपनश्च। भा.पू.१भ.। इज्जलिरिति। है.च.। See हिज्जलः।

**इञ्चाकः**। पुं। मत्स्यविशेषे। এঁচ্লা মাছ। त्रिका.।

**इञ्चुकः**। पुं। इञ्चाकमत्स्ये। हारा.।

**इट्चरः**। पुं। षण्डे। ষাঁড়। श्रम.।

**इडवः**। पुं। गोपतौ। ষাঁড়। है.च.।

**इडा**। स्त्री। शरीरवामभागस्थनाड्यां। वाममुष्काधःस्था धनुर्वक्रा वामनासिकापर्य्यन्तगता या नाड़ी सा इड़ा इत्युच्यते। है.च.।

**इड़ाचिका**। स्त्री। वरटायाम्। বোলতা। श.च.। गन्धोल्याम्।

**इड़ाजातः**। पुं। भूमिजगुग्गुलौ।

**इड़िकः (कः)**। पुं। वन्यच्छागे। वानरे। हारा.।

**इडूरः**। पुं। वृषे। श्र.टी.। स्वामी।

**इण्डरी**। स्त्री। पक्वान्नविशेषे।

**इत्कटः (रः)**। पुं। स्वनामख्यातक्षुपविशेषे। ইৎকড়, ওকড়া, ইকড় इति च। र.मा.। च.सू.४अ.।

**इत्कटा**। स्त्री। मूत्रपत्रिका-दीर्घलोहितयष्टिका-काष्ठविशेषे। वा.सू.१५अ.वेल्लन्तरादिव.। "गोकण्टकेत्कटसहाचरवाणकाशाः।"

**इत्किला**। स्त्री। गोरोचनाख्यगन्धद्रव्ये। श.च.।

**इदङ्कार्य्या**। स्त्री। दुरालभायाम्। श.च.।

**इद्धम्**। क्ली। रौद्रे। दीप्तौ। मे.। [श्रम.।

**इध्मम्**। क्ली। अग्निदीपनकाष्ठे। আলানিকাঠ।

**इनानी**। स्त्री। वटपत्रीवृक्षे। পাথরকুচাবিশেষ। रा.नि.व.५।

**इन्दम्बरम्** । क्ली । (Nymphaea coerulea) नीलकमले, नीलपद्मे । श.मा. ।

**इन्दिन्दिरः** । पुं । भ्रमरे । त्रिका. ।

**इन्दिरा** । स्त्री । लक्ष्म्यां । त्रिका. ।

**इन्दिरामन्दिरम्** । क्ली । विष्णौ । राज. ।

**इन्दिरालयः** । पुं । (Nymphaea lotus.) पद्मे । श.र. ।

**इन्दिरावरम्** । क्ली । नीलपद्मे । प.मु श.र. ।

**इन्दि(न्दी)वरम्** । क्ली । नीलपद्मे । নীল-শুন্দি । प.मु श.मा. । एतत् श्वेतपद्मादिगुणयुक्तं परं किञ्चिद्धीनगुणम् । भा पू.१भ. । See नीलोत्पलम् ।

**इन्दीवरः** । पुं । स्थलपद्मवृक्षे । सु म.३८अ. । कुकण्टकभेदे । "कुकण्टकाभेदः दीर्घपत्रो बहुलपुष्पः ।" ड.सु.चि.७अ. ।

**इन्दीवरा (री)** । स्त्री । शतमूल्याम् । प मु. रा.नि.व.१० । अजशृङ्ग्याम् । ভেড়াশৃঙ্গী । प.मु । इन्द्रचिर्भट्याम् । রাখালশশা । रा.नि.व.३ । कदलीवृक्षे । वै निघ. । See इन्द्रवारुणी ।

**इन्दीवरिणी** । स्त्री । उत्पलिन्याम् । কুমুদের ঝাড় । रा.नि.व.१० ।

**इन्दीवारम्** । क्ली । नीलपद्मे । मे.राज. ।

**इन्दुः** । पुं । कर्पूरे । अम.रा.नि व.८ । भा.म.४भ.नेत्ररोग.चि. । "स्फटिकशङ्खनाभेन्दवः ।" भा.म.१भ त न्वक्ष्व.चि. । "तुरङ्गलालाञ्जनवर्णतमेन्दु । लवङ्गेन्दुसुवासितम् ।" भा.पू.पानकव. ।

**इन्दुकः** । पुं । अश्मन्तकवृक्षे । रा.नि.व.९ । केमुककन्दे । वै.निघ. ।

**इन्दुकमलम्** । क्ली । कुमुदे । শ্বেতোৎপল, শ্বেত শুন্দি ফুল । रा.नि.व १० ।

**इन्दुकलिका** । स्त्री । केतकीवृक्षे । কেয়া গাছ । श्वेतकेतक्याम् । रा.नि.व.१० ।

**इन्दुकान्तः** । पुं । चन्द्रकान्तमणौ । रा.नि.व. १३ । स्त्री । रात्रौ । हे.च. । [रा.नि.व.६ ।

**इन्दुखण्डा** । स्त्री । कर्कटशृङ्ग्यां । काँकड़ाशृङ्गी ।

**इन्दुचन्दनम्** । क्ली । हरिचन्दने । वै.निघ. ।

**इन्दुपत्रः** । पुं । भूर्जवृक्षे । संग्रहः ।

**इन्दुपुष्पिका (ष्पी)** । स्त्री । लाङ्गलीवृक्षे । ঈশলাঙ্গুলে । रा नि.व.३ । [म रा.नि.व.२२ ।

**इन्दुपोदकी** । स्त्री । वेल्लिकायां । লতাবিশে-

**इन्दुफलः** । पुं, क्ली । आम्रातके । আমড়া গাছ, আমড়া । वै.निघ. । वै.निघ. ।

**इन्दुमुखी** । स्त्री । पद्मिन्याम् । পদ্মের ঝাড় ।

**इन्दुरः** । पुं मूषिके । अयं विलेशयः, विलेशयत्वादेतन्मांसं वातघ्नं मधुरं बृंहणं बद्धविण्मूत्रं वीर्य्यशाच । भा.पू १भ. ।

**इन्दुरकर्णिका (र्णी)** । स्त्री । आखुकर्णीलतायाम् । ইন্দুরকাণী । हिं मूषाकाणी । [१३।

**इन्दुरत्नम्** । क्ली । मुक्तायाम् । प.मु.रा.नि.व.

**इन्दुरसा** । स्त्री । पिष्टकभेदे । আঁদলসা । यथा—"षष्टिकानाञ्च शालीनां पिष्टं वंशाच शर्करां । किञ्चिद्दधा च संमर्द्य द्वितीये दिवसे ततः । वर्तुलान् वटकान् कृत्वा घृते पक्वा प्रयत्नतः । गुणाः —नेऽतिशीताश्च हृद्याश्च बलपुष्टिकरा मताः ।" वै.निघ. ।

**इन्दुरा** । स्त्री । सोमराज्याम् । वै.निघ. ।

**इन्दुराजिः(जी)** । स्त्री । सोमराज्यां । वै.निघ. ।

**इन्दुलेखा** । स्त्री । (Asclipias acida.) गुडूच्याम् । त्रिका. । सोमराज्याम् । वै.निघ. । सोमलतायाम् मे.खचतुष्कं । अमान्यां । श.मा. ।

**इन्दुलोह(कम्)** । क्ली । रौप्ये । रा.नि.व.१३ ।

**इन्दुवल्लिका (ल्ली)** । स्त्री । सोमलतायाम् । गुडूच्या । जटा. । सोमराज्यां । यमान्यां । वै.निघ. ।

**इन्दुशकला** । स्त्री । सोमराज्यां । वै.निघ. ।

**इन्दुशफरी** । स्त्री । अश्मन्तकवृक्षे । रा.नि.व.९ ।

**इन्दूरः** । पुं । मूषिके । रा.नि.व.९ ।

**इन्द्रः** । पुं देवराजे । मे. । कूटजवृक्षे । भा.पू. १भ. । इन्द्रयवे । भैष.भल्लात-गुड़े. । च.द.पित्तश्लेष्म. ज्व.चि.कण्टकार्य्यादिः । "नागरेन्द्रयवासकं ।" भा. म.४भ.मसू.चि. । "त्रिफलेन्द्रयवासकम् ।" चक्षै । रबा. । योगभेदे । मे.रद्विकं । अन्तरात्मनि । स्थावरविषभेदे । हे.च. । क्षुद्रमहाकालकलतायां । वै.निघ. ।

**इन्द्रकर्णिका:** । पुं । रक्तैरण्डे । लाल भेरेण्डा ।

**इन्द्रकोष:** । पुं । निर्यूहे । निर्यासे । तमङ्गके । गोँजला । हे.च.हला. । [टी.भ. ।

**इन्द्रगुप्तम्** । क्ली । उशीरे । बेणार मूल । श.

**इन्द्रगोप:** । पुं । (Coccinella of various kinds.) अग्निगोपे । तीज वीरवहूटी इति च प्रसिद्धे । मखमली, छोट केन्नुई इति लोके । हारा. । रा.नि.व.१९ । [स.नि.व १२ ।

**इन्द्रचन्दनम्** । क्ली । हरिचन्दने । रक्तचन्दने ।

**इन्द्रचिर्भिटा (टी)** । स्त्री । इन्द्रवारुणीलतायां । युग्मफललतायां । राखालशशा । मं लघकाबरल । गुणा:—कटु: शीता पित्तश्लेष्मकामदोषव्रणकृमिघ्नी चक्षुष्या च । रा.नि.व.३ ।

**इन्द्रच्छन्दम्** । क्ली । सहस्रगुच्छहारे । हे.च. ।

**इन्द्रज:** । पुं । इन्द्रयवे । वै निघ.२भ.ज्व चि.य ष्याादिकपाथे । कुटजवृक्षे । वै.निघ.श सा.चि. कुटजचूर्णे ।

**इन्द्रजतु** । क्ली । शिलाजतुनि । वै निघ. ।

**इन्द्रजम्बूकवत्याख्या** । स्त्री । कृष्णसारिवायां । भा.पू.१भ. । See कृष्णसारिवा अनन्ता च ।

**इन्द्रजिह्वा** । स्त्री । लाङ्गलीवृक्षे । ईशलाङ्गुले ।

**इन्द्रतरु:** । पुं । अर्जुनवृक्षे । वै निघ. ।

**इन्द्रतूल(क)म्** । क्ली । आकाशे उड्डीयमानसूत्रे । आकाशबुड़ीर सूता । कार्पासे । अर्कवृक्षतूलके । त्रिका. । [चं । भा.पू.१भ. ।

**इन्द्रदारु:** । पुं । देवदारुवृक्षे । तैलदेवदारुवृ-

**इन्द्रद्युति** । क्ली । चन्दने । वै.निघ. ।

**इन्द्रद्रु: (म:)** । पुं । अर्जुनवृक्षे । श.र. । अम. । कुटजवृक्षे । रा.नि.व.९ देवदारुवृक्षे । भा.पू.अने. ।

**इन्द्रनील:** । पुं । मरकतमणौ । नीलकान्तमणि, पान्ना । हे.च. । भा.पू.१भ. । "क्षीरमध्ये क्षिपेन्नीलं क्षीरश्चेन्नीलतां व्रजेत् । इन्द्रनीलमिति ख्यातम् ।" इति परीक्षा । (क:) श.र. ।

**इन्द्रपर्णी** । स्त्री । इन्द्रवारुण्यां । राखालशशा । लाङ्गलिकायां । ईशलाङ्गुले । सु.चि.१७अ. ।

**इन्द्रपुष्पम्** । क्ली । लवङ्गे । र.सा.सं.पूर्णचन्द्ररसे ।

**इन्द्रपुष्पा (ष्पिका) (ष्पी)** । स्त्री । लाङ्गलीवृक्षे । ईशलाङ्गुले । प.मु.रवा. । पूतीकरञ्जे । नाटा । कण्टकीकरञ्जपुष्पकरञ्ज:,कलिकारिकेत्यन्ये । सु.सू.३७अ.अर्कादि.ड. ।

**इन्द्रब्रह्मवटी** । स्त्री । अपस्माराधिकारे । अभ्र तारं रौप्यम् । ताप्यं स्वर्णमाक्षिकम् । पाठ:—"सूतमृताभ्रकं तीक्ष्णं तारं ताप्यं विषं समं । पद्मकेशरसंयुक्तं दिनैकं मर्दयेद्द्रवै: । कुमारीविजयैरण्डवचानिष्पावशूरणै: । निर्गुण्ड्याश्च द्रवैर्मर्द्यं तद्गोलं पाचयेत्पुन: । कटुकीसर्षपोत्थेन तैलेन गन्धसंयुतं । तत: पक्वा समुद्धृत्य चणमात्रा वटीकृता ।" अनुपानमार्द्रकरस: । र.सा.सं. । रससिन्दूर, अभ्र, लोह, रूपा, स्वर्णमाक्षिक, विष, पद्मकेशर समभाग । मर्दनद्रव्य—मनशासिज, चिते, सिद्धि,एरण्ड,वच, शिम, ओल एवं इक्षुर रस ।

**इन्द्रभेषजम्** । क्ली । शुण्ठ्याम् । श.र. ।

**इन्द्रमद:** । पुं । तरुगुल्मज्वरे । शब्दचे. ।

**इन्द्रमहाकामुक:** । पुं । कुक्कुरे । त्रिका. ।

**इन्द्रयव: (वम्)** । पुं, क्ली । (Seed of holarrhena antidysenterica.) कुटजबीजे । इन्द्रयव । हिं उत्. इन्द्रयव । मं इन्द्रयव, कुडाचेंवीं । कं कौड़सिगेयबीज । इन्द्रशब्दपर्य्यायमात्रं कुटजवाचकम् । धन्वन्तरि: । भा पू.१भ. । वा.सू. १५अ । "आरग्वधेन्द्रयवपाटलिकाकतिक्ता ।" च. द.पित्तज्व.चि. । "तिक्ताश्चेन्द्रयवै: कृतम् ।" गुणा: —कटु: तिक्त: शीतल: कफवातरक्तपित्तहर: दाहातीसारघ्न: नानाज्वरघ्न: शूलघ्नश्च । रा.नि.व.९ । त्रिदोषघ्नं धारकं कटुशीतं दीपनं ज्वरातीसाररक्तार्शोविमिवीसर्पकुष्ठवातरक्तकफशूलघ्नश्च । भा.पू. १भ. । इन्द्रयवा इति राजनिघण्टु: ।

**इन्द्रलुप्त(क)म्** । क्ली । Baldness. श्मश्रुकेशघ्नरोगे । टाक् रोग । मं चाइगेग । तस्य लक्षणम्—"रोमकूपानुगं पित्तं वातेन सह मूर्च्छितं । प्रच्यावयति रोमाणि तत: श्लेष्मा सशोणित: । रुणद्धि रोमकूपांश्च ततोऽन्येषामसम्भव: । तदिन्द्रलुप्तं खालित्यं रुज्येति च विभाव्यते । सु.नि.१३अ. । इन्द्रलुप्तं श्मश्रुणि भवति खालित्यं शिरोरुहेष्विति कश्या सवेदनेति कार्त्तिककुण्ड: । मा.नि.विज.र. । रुज्येति । विज.र.भीज: । पुं । रा नि.व.२० ।

**इन्द्रलोहकम्** । क्ली । रौप्ये ।

**इन्द्रवचा** । स्त्री । इन्द्रयवे । रा.नि.व.६ ।

**इन्द्रवटी** । स्त्री । प्रमेहाधिकारे । पाठः--"मृतं सूतं मृतं वङ्गमर्जुनस्य त्वचान्वितं । तुल्यांशं मर्द्दयेत्खल्ले शाल्मल्या मूलजद्रवैः । मात्रा १ मा. । र.सा.सं. । सा.कौ. । রসসিন্দূর, বঙ্গ এবং অর্জ্জুনছাল সমভাগ ।

**इन्द्रवल्लरी** । स्त्री । इन्द्रवारुणीलतायां । রাখালশশা । रा.नि.व.३ । वै.निघ.२भ.कर्षक.स न्निपात रोहितकादिलेपे । [मलता । सु. ।

**इन्द्रवल्लिका (ल्ली)** । स्त्री । इन्द्रवल्ल्यां । সো-

**इन्द्रवस्तिः** । पुं । तन्नामकमर्म्मस्थाने । পায়ের ডিম । तस्य स्थानं प्रतिपार्ष्णिजङ्घयोः सन्धिः । सु.शा.६ष. ।

**इन्द्रवारुणिका (णी)** । स्त्री । (Eucumis madraspatanus, cunnis melo. ऐन्द्री-वामलतायाम् । प.मु. । রাখাল নাড়ু, রাখাল শশা, कुँदरुकी । हिं इन्द्रायण,बड़ी इन्द्रफला । मं इन्द्रवारुणी । गुणाः—तिक्ता कटुः शीता रेचनी गुल्मपित्तोदरश्लेष्मक्रमिकुष्ठज्वरघ्नी च । रा.नि.व.३ । सा क्षुद्रदीर्घभेदेन द्विधा । लघुः उष्णा कामलापित्तकफप्लीहोदरश्वासकासकुष्ठगुल्मग्रन्थिव्रणप्रमेहमूढ़गर्भगलगण्डविषघ्नी च । भा.पू.१भ. । "लघ्वीन्द्रवारुणी प्रोक्ता पाके कट्वी च तिक्तका । शीता सरोष्णवीर्य्या च लघ्वी चैव प्रकीर्त्तिता । ...... । अन्येन्द्रवारुणी कण्ठरुजघ्नी श्रीमदं तथा । नाशयेदिति संप्रोक्ता गुणाश्चान्ये तु पूर्व्ववत् । रसे वीर्य्ये च पाके चाधिका चोक्ता गुणैरियम् ॥" वै.निघ. । गोरक्षकर्कट्याम् । च.द लाक्षातैले ।

**इन्द्रवि(द्र)द्धा** । स्त्री । वातपित्तजन्यक्षुद्ररोगान्तर्गतव्रणरोगविशेषे । लक्षणं—"पद्मकर्णिकवन्मध्ये पिड़काभि पिड़काचिताम् । इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषगिति ॥" मा.नि. । तन्नामक्षुद्ररोगे । See इन्द्रवृद्धः ।

**इन्द्रवीजम्** । क्ली । इन्द्रयवे । च.द.सि यो.सान्निपातिकज्व.चि.अष्टादशाङ्गे । "तिक्तेन्द्रवीजधनिकेभकणाकषायः ।"

**इन्द्रवृद्धः** । पुं । मुष्कवर्जितकुलक्षणाश्वविशेषे । लक्षणं यथा—"विरोधं नैव यो याति हृशायां मुष्कवर्जितः । इन्द्रवृद्धः स विख्यातो भर्त्तुश्च कुलनाशनः ॥" अ.द.३ष. ।

**इन्द्रवृक्षः** । पुं । देवदारुवृक्षे । जटा. । श्वेतकुटजवृक्षे । अर्जुनवृक्षे । भा.म.४भ. । "सोमवल्लीमिन्द्रवृक्षम् ।"

**इन्द्रसुतः** । पुं । अर्जुनवृक्षे । रा.नि.व.६ ।

**इन्द्रसुरसः (सा)** । पुं, स्त्री । निर्गुण्डीवृक्षे । নিশিন্দা গাছ । रत्ना. । See निर्गुण्डी ।

**इन्द्रसुरा** । स्त्री । गोरक्षकर्कटिकायां । রাখাল শশা । सु.चि.२७ष. । "गुड़ूचीन्द्रसुरा ।"

**इन्द्रसुरिषः (सः)** । पुं । निर्गुण्डीवृक्षे । নিশিন্দা গাছ । मौण्डी इति कश्मीरम् । र.मा.श्वम. ।

**इन्द्रसूनुः** । पुं । अर्जुनवृक्षे । रा.नि.व.६ ।

**इन्द्रस्वरसः** । पुं । हस्तिजले । च.द.अर्श.चि. नागार्जुनयोगे ।

**इन्द्रा** । स्त्री । फणिजझकवृक्षे । কাঁটা জামীর । मे.रत्रिकं । भा.म.२भ.मेद-चि. । इन्द्रवारुण्याम् । रा.नि.व.३ ।

**इन्द्राग्निधूमः** । पुं । हिमे । हारा. ।

**इन्द्राणिका** । स्त्री । निर्गुण्डीवृक्षे । प.मु. । नीलसिन्दुवारे । रा.नि.व.४ । जातीफलादिवटिकायां । [जातीफला.वटी. ।

**इन्द्राणिकापत्रम्** । क्ली । निर्गुण्डीपत्रे ।

**इन्द्राणी** । स्त्री । (Vitex nigundo.) कृष्णनिर्गुण्ड्याम् । কাল নিশিন্দা । हिं श्यमलु । स्त्रीन्द्रिये । "इन्द्राणी करणं स्त्रीणां पौलोमासिन्दुवारयोः ।" मे.णत्रिकं । सूक्ष्मैलायां, स्थूलैलायाम् । रा.नि.व.६ ।

**इन्द्राभा** । स्त्री । कङ्कपक्षिभेदे । वै.निघ. ।

**इन्द्रायुधम्** । क्ली । वज्रकमणौ । হীরক । रा.नि.व.१३ । स्थावरविषान्तर्गतकन्दविषे । वा.उ.३५ष. । च.चि.२६ष. । स्त्री । इन्द्रायुधवद्दूर्द्धराजि-सविषजलायुकायाम् । सु.सू.१३ष. । See जलायुका ।

**इन्द्राह्वपादपः** । पुं । क्रमुकवृक्षे । গুপারি গাছ । रा.नि.व.११ । See क्रमोटः ।

**इन्द्राशनः (कः)** । पुं । (Abrus precato-

rius.) संविदाख्ये। सिद्धिगाछ। जातीफलादिवर्ग्यां। गुञ्जायाम्। कुँच। कुष्ठौषधे। कुड़। जारा। [व.१।

**इन्द्राहा।** स्त्री। इन्द्रवारुणीलतायाम्। मद.

**इन्द्राश्वः।** पुं। ऋषभकनामलताकन्दे। ऋषभक। भा.पू.१भ.इ.व.मद.व.१।

**इन्द्रियम्।** क्ली। (Organs of senses.) ज्ञानकर्म्मादिसाधनेषु चक्षुरादिषु। জ্ঞান ও কর্ম্ম-সাধনের উপায়ভূত চক্ষুঃ প্রভৃতি। इन्द्रियाणि त्रिविधानि बुद्धीन्द्रियकर्म्मेन्द्रियान्तरिन्द्रियभेदेन, तेषु श्रोत्रत्वक्चक्षुरसनाघ्राणाभिधानानि ज्ञानेन्द्रियाणि, वाक्पाणिपायुपादोपस्थनामानि कर्म्मेन्द्रियाणि, एतदुभयात्मकं मनः, समष्टा एकादशेन्द्रियाणि। तथाहि—"वैकारिकादहङ्कारात्तैजससहायात्तल्लक्षणान्येकादशेन्द्रियाण्युत्पद्यन्ते। तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति। तत्र पूर्व्वाणि पञ्च बुद्धीन्द्रियाणि। इतराणि पञ्च कर्म्मेन्द्रियाणि। उभयात्मकं मनः। भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते। तद्यथा - शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तेषां विशेषाः शब्दस्पर्शरूपरसगन्धास्तेभ्यो भूतानि व्योमानिलानलजलोर्व्व्यः। एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता। तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः कर्म्मेन्द्रियाणां यथासंख्यं वचनादानानन्दविसर्गविहरणानि। अव्यक्तं महानहङ्कारः पञ्च तन्मात्राणि चेत्यष्टौ प्रकृतयः शेषाः षोड़श विकाराः। स्वः स्वश्चैषां विषयोऽधिभूतं। स्वयमध्यात्ममधिदैवतञ्च। अथ बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्य्यश्चक्षुषोः, रसनस्यापः, पृथ्वी घ्राणस्य, वचसोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रं, प्रजापतिरुपस्थस्येति। आयुर्व्वेदे भौतिकानीन्द्रियाणीन्द्रियार्थाश्च वर्ण्याः।" सु.शा.१अ.। अन्तरिन्द्रियाणि पुनः चत्वारि मनोबुद्ध्यहङ्कारचित्तानि। मनस्तावदिन्द्रियनियामकं। एवं चतुर्दशेन्द्रियाणां नियन्तारश्चतुर्दशदेवताः। तत्र कर्णस्य देवता दिक्,त्वचो वातः,नेत्रस्य सूर्य्यः, रसनाया वरुणः, घ्राणस्याश्विनौ,वाचो वह्निः,हस्तस्येन्द्रः, पादस्य विष्णुः, पायोर्मित्रः, उपस्थस्य प्रजापतिः, मनसश्चन्द्रः, बुद्धेश्चतुर्मुखः, अहङ्कारस्य शिवः, चित्तस्याच्युतः इति वेदान्तः। रैतसि। रा.नि.व.१८। मे.यत्रिकं। त्रिका। भा.म ३भ.ज्व.व.चि.।

**इन्द्रियकर्म्म।** क्ली। चक्षुरादीनां शब्दाकर्षण-स्पर्शग्रहण रूपदर्शन-रसग्रहण गन्धग्रहणवचनादान-विसर्गगमनानन्दाख्यानि। सु.शा.१अ.।

**इन्द्रियगोचरः।** त्रि। इन्द्रियविषये।

**इन्द्रियग्रामः।** पुं। शरीरे। वै.निघ.। इन्द्रियसमूहे। [छानी।

**इन्द्रियघ्नः।** पुं। चक्षूरोगविशेषे। চক্ষের

**इन्द्रियज्ञानम्।** क्ली। इन्द्रियजन्यज्ञाने।

**इन्द्रियबुद्धिः।** स्त्री। इन्द्रियजन्यज्ञाने।

**इन्द्रियवर्गः।** पुं। एकादशेन्द्रियेषु, इन्द्रियसमूहे। See इन्द्रियम्। [वै.निघ.।

**इन्द्रियवैकल्यम्।** क्ली। इन्द्रियदुर्ब्बलतायां।

**इन्द्रियसन्तापः।** पुं। इन्द्रियवैकृते।

**इन्द्रियस्वापः।** पुं। प्रलये। निद्रायाम्। चैतन्यनाशे। रा.नि.व.२०।

**इन्द्रियागोचरः।** त्रि। अतीन्द्रिये।

**इन्द्रियायतनम्।** क्ली। शरीरे। है.च.।

**इन्द्रियार्थः।** पुं। इन्द्रियजन्यज्ञानविषयेषु। यथा—रूपरसगन्धस्पर्शशब्दाः। अम.।

**इन्द्रोक्तरसायनम्।** क्ली। इन्द्रकथितरसायनवर्गे। ऐन्द्र्यां। রাখালশশা। महाश्रावण्याम्। বড় থুলকুড়ি। च.चि.१अ.।

**इन्द्रोपलम्।** क्ली। नीलहीरके। प.मु.।

**इन्धनम्।** क्ली। काष्ठे। अग्निज्वालनार्थकाष्ठे। अम.।

**इभः।** पुं। हस्तिनि। अम। नागकेशरे। च.।

**इभकणा।** स्त्री। (Pothos officinalis.) गजपिप्पल्याम्। र.मा.। भा.पू.१भ.। च.द.सि.यो.सान्निपातिकज्व.अटाङ्गकषाये। 'धनिकेभकणा-कषायः।'

**इभकृष्णः (ष्णा)।** पुं, स्त्री। गजपिप्पल्याम्। भैष च.द यक्ष्मा-चि.कल्याणगुड़े।

**इभकेश(स)रः** । पुं। नागकेशरवृक्षे । भैष.। क्ली। नागकेसरपुष्पे । चि.क्ष.क.प्रदरचि.। सु.चि.३८अ.।

**इभगन्धा (न्धिका)** । स्त्री । स्थावरविषान्तर्गततन्नामकफलविषे । सु.कल्प.२अ.।

**इभदन्ता** । स्त्री । हस्तिशुण्डीवृक्षे । হাতিশুঁড়ে । रत्ना. । नागदन्त्याम् । र.मा ।

**इभदन्ताह्वा** । स्त्री । नागदन्त्यां । र.मा.रत्ना.।

**इभपत्रिका** । स्त्री । चिल्लीशाके । वै.निघ. ।

**इभपुष्पम्** । क्ली । नागकेशरे । भैष.सु.रो.चि. बृहत्खदिरवट्यां ।

**इभपोटा** । स्त्री । करिशावके । [वासाद्यघृते ।

**इभबला** । स्त्री। नागबलायां। वै.निघ क्षय चि.

**इभमज्जकः** । पुं। पुत्रदात्रीलतायां । वै.निघ.।

**इभमाचलः** । पुं । सिंहे । [वै.निघ. ।

**इभमूलकम्** । क्ली । हस्तिमूलके । गन्धतृणे ।

**इभशुण्डी** । स्त्री । हस्तिशुण्ड्याम् । [र.मा. ।

**इभषा** । स्त्री । स्वर्णक्षीरीवृक्षे । সোণাখিরুই ।

**इभाख्यः** । पुं । (Musaferrea.) नागकेशरवृक्षे । त्रिका. ।

**इभावती** । स्त्री । वटपत्रीवृक्षे । পাথরকুচা ।

**इभी** । स्त्री । हस्तिन्याम् । হাতিনী ।

**इभोषणा** । स्त्री । गजपिप्पल्याम् । श.च. ।

**इभ्या** । स्त्री । (Boswellia thurifera or serrata.) शल्लकीवृक्षे । करिण्यां । मे.यत्रिकं ।

**इरणम्** । क्ली। ऊषरभूमौ। अ.टी.र.।रा.नि.व.२।

**इरा** । स्त्री । सुरायाम् । जले । मे. । [त्रिका. ।

**इराचरम्** । क्ली । करकायाम्। বর্ষার শীল ।

**इरावती** । स्त्री । वटपत्रीपाषाणभेदे । বড় পাথরকুচা । रा.नि.व.५ । [इरिवेल्लिका ।

**इरावेल्लिका** । स्त्री । इरिवेल्लिकायाम् । See

**इरिकीलः** । पुं । अङ्कोलवृक्षे । আঁকোড় । वै.निघ. । [अजय. । रा.नि.व.२ ।

**इरिणम्** । क्ली । ऊषरभूमौ । লোণা ভূমি ।

**इरिमेदः (कः)** । पुं । अरिमेदे । বিট্ খদির । रा.नि.व.८ । भा.पू.४भ सु.रो.चि. । "कर्क्कोटनलाखदिरैरिमेद··· ।" See अरिमेदः ।

**इरिवेल्लिः (का)** । स्त्री। सन्निपातजन्ये शिरोजातव्रणजन्यपीडाविशेषे। तस्य लक्षणम् —"पिड़कामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वरां । सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिवेल्लिकां ॥" निदानम् ।

**इर्म्म (म्)** । क्ली । व्रणे । क्षते । अम ।

**इर्व्वारुः** । पुं स्त्री । कर्कटीनामफलशाके । কাঁকুড় গাছ । प मु. । रोमशकर्कटीति । ड. । सु मु.४२अ.मधुरव. ।

**इर्व्वारुशुक्तिः (का)** । स्त्री । फुटीतिख्यातनिर्भिन्नकर्कट्याम् । ফুটী । क्षारा. । [अ.टी.रा. ।

**इर्व्वालुः** । पुं,स्त्री । कर्कटिकायाम् । কাঁকুড় ।

**इलि(ली)(ल्लि)शः** । पुं । मत्स्यविशेषे । ইলীশ মাছ । हिं हीलसा । क्षारा.। गुणाः—"इल्लिशो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तकृत्कफकृत्किञ्चिल्लघुर्बल्योऽनिलापहः ।" भा.पू.२भ.। पित्तघ्नोऽग्निवर्द्धकः मधुरः हृद्यश्च । राज. ।

**इली** । स्त्री । करबालिकायाम् । ছুরি, কাটারি । अ.टी.रा. ।

**इल्ललः** । पु । पक्षिभेदे । श.च. ।

**इल्वलः** । पुं । मत्स्यभेदे । मे.लत्रिकं ।

**इशि(शी)का** । स्त्री । गजाक्षिगोलके । शरकाण्डे । শরকাঠি । अ.टी.भ. ।

**इषः** । पुं । आश्विनमासे । अम. ।

**इषिका** । स्त्री । गजाक्षिगोलके । अ.टी.रा. ।

**इषिरः** । पुं । अग्नौ । [अ.टी.भ. ।

**इषीका** । स्त्री । काशतृणे । हला.। शरकाण्डे ।

**इषुः (कः)** । पुं । शरतृणे । प.मु. ।

**इषुगोलकः** । पुं । कोकिलाक्षवृक्षे ।

**इषुपत्रिका (त्री)** । स्त्री । अर्कमूलायाम् । ঈশের মূল । र.मा. ।

**इषुपुङ्खा (ङ्खिका)** । स्त्री । शरपुङ्खायाम् । বন নীল । हिं शरफोंका । रा.नि.व.४ ।

**इष्टः** । पुं । एरण्डवृक्षे । श.च. । क्ली । उशीरे । अ.टी.भ. ।

**इष्टका ।** स्त्री । गृहादिनिर्म्माणार्थदग्धमृत्खण्डे । ইট্ । संग्रहे । [বেণার মূল । रा.नि.व.१२ ।

**इष्टकापथम् ।** क्ली । लामज्जके, वीरणमूले ।

**इष्ट(ष्टि)कापथकम् ।** क्ली । लामज्जके । भा.पू.१भ. । मद.व.३ । [लुके । मे.धचतुष्कं ।

**इष्टगन्धः ।** त्रि । सुगन्धौ । अम. । क्ली । वा-

**इष्टा ।** स्त्री । शमीवृत्ते । रा.नि.व.८ ।

**इक्षवः ।** पुं । इक्षुसाधारणे । श.र. ।

**इक्षुः ।** पुं । Sugarcane. (Saccharum officinarum.) स्वनामख्यातमधुरवृक्षे । আক গাছ । हिं गाण्डा, उख् । तें चेरकु । प्रा.ऊँस् । स द्वादशविधः—पौण्ड्रकः, भीरुकः, वंशकः, शतपारकः, कान्तारः, तापसेक्षुः (काण्डेक्षुः), काष्ठेक्षुः, सूचिपत्रकः, नैपालः, दीर्घपत्रकः, नीलकः, कोशकृवेति । भा.पू.२भ. । श्वेतपुण्ड्रकरक्तकृष्णरक्त-भेदात्पञ्चधा । रा.नि.व.१४ । स वर्णतः षड्भेदः, श्वेतकृष्णताम्ररसालपत्कृष्णमिश्रवर्ण इति । स च पौण्ड्रकानुवासिकशतपर्व्वकान्तारनैपालदीर्घपत्रादि भेदाद्बहुविधः । वा.टी.हेमा. । एतद्विशेषास्तत्त-त्स्थाने द्रष्टव्याः । सा.गुणाः—“इक्षुदण्डो रसे पाके मधुरो वातकारकः । स्निग्धो गुरुर्मूत्रलश्च शीतो वृष्यो बलप्रदः । कफपुष्टिकृमिश्लेष्मकान्त्यानन्दकरः सरः । रक्तरुग्वातपित्तानां नाशनो मुनिभिः स्मृतः ॥” वै.निघ. । “अभुक्ते पित्तहाश्चैते भुक्ते वातप्रकोपनाः । भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रयः ॥ पित्तदाहहरो वृष्यस्तेजोबलविवर्द्धनः । वृष्यो रक्तास्रपित्तश्रमशमनपटुः शीतलः श्रमदोऽल्पस्निग्धो हृद्यश्च रुच्यो रचयति च मुदं मूत्रशुद्धिं विधत्ते । कान्तिं देहस्य दत्ते बलमतिकुरुते हृंहणस्त्वभिदायी दन्तैर्निष्पीड्य काण्डं मृदुयति रसितो मोहनश्चेक्षुदण्डः ॥” रा.नि.व.१४ । इक्षुः मूले मध्ये च मधुरः, अग्रे ग्रन्थौ च लवणरसः । बालेक्षुः कफकरो मेदोमेहकरश्च । युवा च वातघ्नः स्वादुः पित्तघ्नः ईषत्तीक्ष्णश्च । भा.राज. । मूलादूर्द्ध्वं मधुरा मध्येऽतिमधुरास्तथा । इक्षवस्तेऽग्रभागेषु क्रमाल्लवणनीरसाः । इति चक्रदत्तमूलमध्याग्रगुणाः । रा.नि.व.१४. कोकिलाक्षवृत्ते । কুলেখাড়া । रा.नि.व.४ ।

**इक्षुकः ।** पुं । इक्षौ । इक्षुगन्धायां । काशतृण । भूमिकुष्माण्डे । काकोल्यां । वै.निघ. ।

**इक्षुकाण्डिका ।** स्त्री । इक्षुकाण्डे । काकोल्यां । भूमिकुष्माण्डे । वै.निघ. । वा.टी. हेमा. ।

**इक्षुकान्दा ।** स्त्री । श्वेतभूमिकुष्माण्डे । वै.निघ. ।

**इक्षुकाण्डः ।** पुं । काशतृणे । কেশে । रा.नि.व.८ । मुञ्जायाम् । শরমাঞ্জা । श.च. ।

**इक्षुकाशः ।** पुं । काशतृणे । मद.व.१ ।

**इक्षुकीयः ।** त्रि । इक्षुयुक्तदेशे ।

**इक्षुगण्डिका ।** स्त्री । काशतृणे । वै.निघ. ।

**इक्षुगन्धः ।** पुं । काशतृणे । भा. । क्षुद्रगोक्षुरकवृत्ते । रा.नि.व.४ ।

**इक्षुगन्धा (न्धिका) ।** स्त्री । कोकिलाक्षे । কুলেখাড়া । मद.व.१,म. । गोक्षुरके । प.मु.भा. । क्षीरविदार्य्याम् । ভুঁইকুমড়া । मद.व.१ श.र., रा.नि.व.७ वाराहीकन्दे, काशतृणे । भा.पु.१भ., मे. । शृगाल्याम् । भा.अने. । मे.धचतुष्कं । श्वेत भूमिकुष्माण्डे । अम.मे. । भूमिकुष्माण्डे । श.र. ।

**इक्षुजटा ।** स्त्री । इक्षुमूले । चि.क.क.प्रदर्शच. ।

**इक्षुतुल्या ।** स्त्री । इक्षालिकायां । আনাথ, ইক্ষুবিশেষ, খাগড়া । प.मु. । काशतृणे । र.मा. । यावनाले । যোওয়ার, যনার ।

**इक्षुदर्भा ।** स्त्री । स्वनामख्याततृणविशेषे । नटौ । मं आम्वालु । गुणाः—मधुरा स्निग्धा ईषत्कषाया कफपित्तघ्नी रुच्या लघुः सन्तर्पणी च । रा.नि.व.८ ।

**इक्षुनेत्रम् ।** क्ली । इक्षुमूले । येनेक्षुः प्ररुह्यते । আকের মূল, আকের ডগা বা চোক । रा.नि.व.१४ ।

**इक्षुपत्रः (कः)** पुं । यावनाल इति शिम्बीधान्ये । जोन्धोयारा इति लोके । रा.नि.व.१६ ।

**इक्षुपत्री (र्णी) ।** स्त्री । वचायां । शुक्लभूमिकुष्माण्डे । वै.निघ. ।

**इक्षुपाकः ।** पुं । गुडे ।

**इक्षुपुष्पा ।** स्त्री । शरपुष्पायाम् । रा.नि.व.४ ।

**इक्षुमः ।** पुं । शरतृणे । रा.नि.व.८ ।

**इक्षुबालिका ।** स्त्री । खागड़िकायां । খাগড়া । रा.नि.व.८,च.सू.४अ.शूल चि. । कोकिलाक्षे ।

कुलेखाड़ा। हिं तालमाखना। भा.पु.१भ.। मद.व.१। इक्षुतुल्यायाम्। र.मा.। काशतृणे। रा.नि.व.८।

**इक्षुभक्षिका** । स्त्री। इक्षुरसनिष्कासनयन्त्रे। आक् गाड़ा कल। वै.निघ.।

**इक्षुमद्यम्** । क्ली। इक्षुविकारजमद्ये। "इक्षुदण्डं मरीचञ्च बदरञ्च तथा दधि। शेषे तु लवणं दत्त्वा इक्षुमद्यं प्रकीर्त्तितम्॥" वै.निघ.।

**इक्षुमूलम्** । क्ली। इक्षोर्मूले। आकेर मूल। राज.। च.सू.४अ.।

**इक्षुमेद:** । पुं। इक्षुवाटिकायां। आक्बाड़ी।

**इक्षुमेह:** । पुं। तन्नामककफजमूत्रदोषविशेषे। लक्षणं—"इक्षोरसमिवात्यर्थं मधुरञ्चेक्षुमेहत:।" मा.नि.। [मेहो। अयं पुण्ड्रकभेद:। रा.नि.व.१४।

**इक्षुयोनि:** । पुं। पुण्ड्रकेक्षौ। करङ्कशालिना-

**इक्षुर: (क:)** । पुं। कोकिलाक्षे। कुलेखाड़ा। हिं तालमाखना। र.मा.भा.उ.ख.। "द्राक्षा सेक्षुरगोक्षुराश्च महती।" अत्र तद्बीजं ग्राह्यम्। सा.कौ.महाकामेश्वरमोदके। च.सू.४अ.। इक्षौ। गोक्षुरके। श.र.। काशतृणे। (केशे। स्थूलशरे। रा.नि.व.८। "स्वयङ्गुप्तेक्षुरकयो:।" सु.चि.२६अ.। भा.म.१भ.मू.घा.चि.। शरतृणे। काशतृणे। रा.नि.व.८। क्षणेक्षौ। रा.नि.व.१४। [ध्व.भ.चि.।

**इक्षुरबीजम्** । क्ली। कोकिलाक्षबीजे। भैष.।

**इक्षुरस:** । पुं। काशतृणे। भा.पू.१भ.गु व.। इक्षो:रसे। आकेर रस। तद्गुणा:—स मधुर: वातं वर्द्धयति शीतवीर्य्यत्वात् सु.सू.४०अ.। "इक्षो रसो गुरु: स्निग्धो बृंहण: कफमूत्रकृत्। वृष्य: शीतोऽस्रपित्तघ्न: स्वादुपाकरस: सर:।" चारपाणि:। एतदग्रभागरसगुणा:—"शीतेग्रे सलवण:। मध्यकाण्डेषु माधुर्य्यमिक्षोर्मूलाग्रपर्व्वसु। माधुर्य्ये साम्ललवणं विदाही तेन यान्त्रिक:।" हेमाद्रौ.चारपाणि:। दन्तपीड़ितरसगुणा:—दन्तपीड़ित: शर्करासम: दाहघ्नत्वादिभिर्गुणै:। वा.टी.हेमा.। यन्त्रपीड़ितरसगुणा:—"विदाही गुरुर्विष्टम्भी च।" वा.टी.हेमा.। "यन्त्रेण पीड़ितरस: कथितो गुरुश्च हृद्य: कफञ्च कुरुतेऽथ सुशीतलश्च। पाके विदाहिबलकृच्च सुशोभनश्च संसेवितो रुधिरपित्तहरं निहन्ति॥ दन्तैर्निपीड़ितरसो रुचिकृत् हृद्यश्च सन्तर्पणो बलकर: कफकृच्छ्रमघ्न:। विष्टम्भकारिरुधिरस्य तथैव पित्तदोषं निहन्ति सकलं वमनञ्च शोषम्॥" अथ पर्य्युषितरसगुणा:—रस: पर्य्युषितो नेष्टस्तापहैकमते गुरु:। कफपित्तकर: शोषी भेदनी वाथ मूत्रल:॥ अथ पक्वरसगुणा:—पक्वो गुरुरत: स्निग्ध: सुतीक्ष्णकफवातहा। पित्तघ्नोऽपि विशेषेण गुल्मातीसारकासहा॥ अथ फाणितरसगुणा:—फाणितं गुर्व्वभिष्यन्दि बृंहणं शुक्रलञ्च तत्। पित्तघ्नञ्च श्रमहरं रक्तदोषनिसूदनं॥" अत्रि.१०अ.। पीयूषोपमितस्त्रिदोषशमन: स्याद्दन्तनिष्पीड़ित:। यन्त्रजो रस: शोकं वाग्निहर: वातजनन: जाड्यकर: प्रतिश्यायकरश्च। तथा पर्य्युषित: स कफवातकरश्च भवति। पक्व इक्षुरस: स्निग्ध: कफवातघ्न: अतिगुरु: अविपाकेन विदाही। रा.नि.व.१४।

**इक्षुरसक्वाथ:** । पुं। इक्षुगुड़े। है.च.।

**इक्षुरसविकार:** । पुं। इक्षुगुड़े। इक्षुरसस्य समलत्वंशार्द्रात्निर्मलविकार फाणितगुडमत्स्यण्डिकाशर्कराभेदात्पञ्चविध:। गुणा: —"यतश्चोत्तरा हृद्या रक्तपित्तानिलापहा:। मत्स्यण्डिका: खण्डसिता: क्रमेण गुणवत्तरा:॥" वा.टी.हेमा.।

**इक्षुरसशुक्तम्** । क्ली। इक्षुरसेन सतैलेन कन्दशाकफलैराप्लुतमम्लतां गतमिक्षुरसशुक्तम्। प.प्र १ख.। गुणा:—गुरु अनभिस्यन्दि च। सु.सू.४५अ.।

**इक्षुरालिका** । स्त्री। इक्षालिकायाम्। आनाखु। रत्ना.। च.चि.२अ.बृंहणीवट्यां।

**इक्षुवल्लकी (री) (ल्ली)** । स्त्री। क्षणक्षीरविदार्य्याम्। काल भूँइकुमड़ा। रा.नि.व.७।

**इक्षुवाटिका (टी)** । स्त्री। पुण्ड्रकेक्षौ। पूँड़ि आख। करङ्कशालीक्षौ। रा.नि.व.१४।

**इक्षुविकृति:** । स्त्री। खण्डे। थाँड़। रत्ना.।

**इक्षुविदारिका (री)** । स्त्री। भूमिकुष्माण्डे। प.मु.। [गु.व.।

**इक्षुवेष्ट: (ल:)** । पुं। मुञ्जतृणे। भा.पू.१भ.

**इक्षुशाकट(किन)म्** । क्ली। इक्षुक्षेत्रे।

**इक्षुसार:** । पुं। इक्षुगुड़े। आखेर गुड़। रा.नि.व.१८।

**इक्षूरक(वीज)म्** । क्ली । कोकिलाक्षवीजे । কুলিয়াখাড়ার বীজ । योगरत्न.वेशरपाके म-हाकामेश्वरमोदके च ।

**इक्ष्वाकुः** । स्त्री । A bitter gourd emetic. तिक्ततुम्ब्याम् । তিৎলাউ । प.मु.सु.मृ ४२ अ.। भा.म.४भ.यो.व्या.चि. । 'इक्ष्वाकुबीजदन्ती ।' See कटुतुम्बी ।

**इक्ष्वादः** । त्रि । इक्षुभक्षके । च.चि,२अ. ।

**इक्ष्वारिः (कः)** । पुं । काशतृणे । रा.नि.व. ८ मद.व.१ ।

**इक्ष्वालिः (कः)(का)** । पुं,स्त्री । काशतृणे । मद.व.१। र.मा.। वै.निघ.कास.चि इक्ष्वाद्यवलेहे । इक्षुविशेषे । আনাখু, খাগড়া इति केचित् । वनखड़िकायां । च.द.तथा शि.यो.यक्ष्म.चि.यक्षा-द्यघृते । 'इक्ष्वालिका विषयन्थि ।'

**इज्या** । स्त्री । भूमौ । गवि । वै.निघ. ।

**इड़ा** । स्त्री । नाड्याम् । নাড়ীবিশেষ ।

**इध्या** । स्त्री । भूम्यामलक्याम् । वै.निघ.ज्व.चि. । "गोपीध्यामलकी ।"

**ईतिः** । स्त्री । डिम्बे । मे । राज्योपद्रवविशेषे । सा षड़्विधा—अतिवृष्टिरनावृष्टिः शलभा मूषिकाः शुकाः । अत्यासन्नाश्च राजानः षड़ेते ईतयः स्मृताः॥

**ईप्सितफलः** । पुं । नारिकेलवृक्षे । वै.निघ. ।

**ईरिणम्** । क्ली । ऊषरक्षेत्रे । নোণা জায়গা । "ईरिणं तूषरे ।" मे.णत्रिकं ।

**ईरितः** । त्रि । कम्पिते । क्षिप्ते । अम. ।

**ईर्मम्** । क्ली । व्रणे । हारा.। चर्त । घा । अम.।

**ईर्वारुः** । पुं,स्त्री । कर्कट्याम् । কাঁকুড় গাছ । स्फुट्याम् । फुटी । श.र. ।

**ईर्वारुशुक्तिका** । स्त्री । खर्मूज इति प्रसिद्ध-फललतायाम् । वै.निघ. ।

**ईर्ष्यकः** । पुं । दृष्टियोन्याख्यक्लीवे । लक्षणं—"दृ-ष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स तु विज्ञेयो दृष्टियोनिश्च स स्मृतः ॥" सु. ।

**ईशः** । पुं । पारदे । अञ्जनरसे । र.सा.सं. । प-ञ्चवक्त्ररसे । वै.निघ.ज्व.चि. ।

**ईशलिङ्गिनी (ङ्गी)** । स्त्री । भवलिङ्गीलता-यां । पञ्चगुलि इति पाश्चात्ये । भा.म.४भ.यो.व्या. चि. । "विषघ्नकालेशलिङ्गिनी ।"

**ईशा** । स्त्री । लाङ्गलदण्डे । मे.शद्विकं ।

**ईशादन्तः** । पुं । हस्तिदन्ते । श.र. । (न्तः,न्ती) उदग्रदन्तिनि । हे.च. । त्रिका. ।

**ईशानः** । पुं । शमीवृक्षे । रा.नि.व.२३ ।

**ईशानवायुः** । पुं । तद्दिग्भववाते । स च क-टुकः । वै.निघ. ।

**ईशाना (नी)** । स्त्री । शमीवृक्षे । रा.नि व.८।

**ईशावसः** । पुं । कर्पूरभेदे । गुणाः—"भेदी ह-र्षी मदापहः । अतिगुर्वोन्मादतृष्णाश्रमकासक्लमि-क्षयान् । स्वेदश्चैवाङ्गदाहञ्च नाशयेत् ।" वै.निघ. ।

**ईशिरः** । पुं । अग्नौ । त्रिका. ।

**ईश्वरः** । पुं । पारदे । भैष.ध्व.भ.चि.चन्द्रोद. मकरध्वजे । पिप्पलि । रस.र.एकादशायसे ।

**ईश्वरमल्लिका** । स्त्री । वकवृक्षे । वै.निघ. ।

**ईश्वरमूलकः** । पुं,क्ली । तद्भेदे । ঈশের মূল। भैष.कुष्ठ-चि,कन्दर्पसारतैले ।

**ईश्वरी** । स्त्री । वन्ध्याकर्कोटकीलतायाम् । वै. निघ.२भ.वा.व्या.महाविषगर्भतैले । लिङ्गिन्याम् । जीवन्त्याम् । नागदमन्याम् । नाकुलीकन्दे । रुद्र-जटायाम् । জটালক্ষা । रा.नि.व.३ ।

**ईषः** । पुं । आश्विने मासि । अ.टी.भ. ।

**ईषत्पाण्डुः** । पुं । धूसरवर्णे । अम. ।

**ईषदुष्णः** । त्रि । कवोष्णे । অল্প তপ্ত । हे.च.। वै.निघ. । [वै.निघ. ।

**ईषद्दीर्घम्** । क्ली । वातामफले । বাদাম ফল ।

**ईषद्बीजा।** स्त्री। वेदाना इति ख्यातफलवृक्षे।

**ईषादन्तः।** पुं। दीर्घदन्तगजे। हे.च.।

**ईषिका।** स्त्री। अक्षिकूटे। गजाक्षिगोलके। तूलिकायाम्। हे.च.।

**ईषिकास्त्रम्।** क्ली। अस्त्रविशेषे। येन वासवोऽश्वानां पक्षच्छेदः कृतः। "ईषिकास्त्रं समुत्सृज्य पक्षच्छेदं व्यधादयम्।" नकुलः १अ.।

**ईषीका।** स्त्री। वीरणादिशलाकायाम्।

**ईष्मः।** पुं। वसन्तकाले। उणा.।

**ईहा।** स्त्री। चेष्टायां। वाञ्छायां। त्रिका.।

**ईहामृगः (वृकः)।** पुं। कोके। रबा.। कुकुरवद्धरिणघातिकपिलवर्णजन्तुविशेषे। ঘোগ। रा.नि.व.१८। (वृकः)। श.र.।

**ईक्षणम्।** क्ली। नेत्रे। रा.नि.व.१८। दर्शने। मे.णत्रिकं।

**ईक्षणिकः।** पुं, स्त्री। हस्तरेखाद्यवलोकनेन शुभाशुभकथनजीविनि। গণক।

**ईक्षा।** स्त्री। दृष्टौ।

**उकनाहः।** पुं। पीतरक्तवर्णघोटके। हे.च.। लक्षणं—"रक्तपीतकषायोत्थवर्णजो यस्य दृश्यते। उकनाहः स विख्यातो वर्णो वाहस्य देहजः॥" ज.द.३अ.।

**उकुणः।** पुं। शिरःकीटे। মাথার উকুন।

**उक्लेदः।** पुं। वमौ।

**उख(ष)रम्।** क्ली। क्षारभूमौ। यत्रोप्तं बीजं न रोहति। क्षारमृत्तिकायाम्। সোরা। वै.निघ.। रा.नि.व.२।

**उख(ष)रजम्।** क्ली। पांशुलवणे। সোরা। रोमकनाम्नि अयस्कान्तभेदे। लवणे। रा.नि.व.२०।

**उखर्व्वलः।** पुं। तृणविशेषे। हिं उखल। गुणाः—बलदः रुचिजनकः। पशूनां सदा हितश्च। रा.नि.व.८।

**उखलः।** पुं। उखर्व्वलतृणे। रा.नि.व.८।

**उखा।** स्त्री। रन्धनस्थाल्याम्। রান্ধিবার হাঁড়ী। हिं भरथियाभाड़। अम.। [काबाव। अम.।

**उख्यः।** त्रि। उखासंस्कृते,मांसादौ। हिं हाण्डि-

**उग्रम्।** क्ली। वत्सनाभनामकविषे। रा.नि.व.६। पुं। शोभाञ्जनवृक्षे। श.च.। पृष्ठग्रन्थौ। त्रि। उत्कटे। कटुके। तीक्ष्णे। रौद्रे। मे.।

**उग्रकाण्डः (कः)।** पुं। कारवेल्लके। করেলা গাছ। रा.नि.व.३,मद.व.७। काण्डवल्ल्यां। See काण्डवल्ली।

**उग्रगन्धः।** पुं। शुक्लरसोने। रा.नि.व.७। कट्फलवृक्षे। रा.नि.व.९। रक्तरसोने। अर्जकवृक्षे, चक्रतुलसीवृक्षे। रा.नि.व.१०। रसोनमात्रे। भा.पू.१भ.ह.व.। चम्पकवृक्षे। श.च.। क्ली। हिङ्गुनि। रा.नि.व.६। त्रि। उत्कटगन्धयुक्ते।

**उग्रगन्धा (न्धिका) (न्धी)।** स्त्री। वनयमान्याम्। বনযওয়ান। भा.पू.१भ.,मद.व.२। अजमोदायाम्। রান্ধুনী। भा.पू.१भ.। वचायां। বচ। प.मु.,रा.नि.व.६,भा.अनो.,वै.निघ.सा.ज्व.अर्कादौ। महाभरीवचायाम्। हिं कुलिञ्जन। भा.पू.१भ.ह.व.। इयं सुगन्धवचाप्युच्यते। छिक्किकायां। হেঁচেতা। मे.। अजगन्धायां। रा.नि.व.४। (-गन्धिका) अजमोदायां। বন যওয়ান। रा.नि.व.६। सि.यो.यक्ष्म-चि.एलादिमन्थे। (-गन्धी) शुक्लरसोने। मद.व.७। [हे.च.।

**उग्रनासिकः।** त्रि। दीर्घनासिके। নেকো।

**उग्रपत्रकः।** पुं। महानील्याम्। वै.निघ.।

**उग्रभा।** स्त्री। गोपसवल्लाम्। वै.निघ.।

**उग्रवीर्य्यम्।** क्ली। हिङ्गुनि। रा.नि.व.६।

**उग्रा।** स्त्री। धन्याके। ধনে। रबा.। यमान्यां। रा.नि.व.४। संविदामञ्जर्य्याम्। গাঁজা। अभि.। वचायाम्। भा.म.१भ.कर्णकज्व.चि.। "कटुत्रिकोग्राघनकुष्ठलोभिः।" वै.निघ.ज.चि.वचादिचूर्णे, कुटजलेहे। छिक्किकायाम्। হেঁচেতা। हे.च.।

**उङ्कुणः।** पुं। उत्कुणे। উকুন। श.मा.।

**उचित:** । त्रि । अभ्यस्ते । परिमिते । मे.तत्रिकं ।

**उच्च:** । पुं । नारिकेलवृक्षे । रा.नि.व.११ । सरलदेवदारौ । त्रि । उन्नते ।

**उच्चट:** । पुं । वह्नौ । वै.निघ. ।

**उच्चटा** । स्त्री । (Abrus precatorius.) स्वनामख्यातक्षुपे । ওকড়া,উচ্চটা মূল,কুঁচ গাছ इति च प्रसिद्धे । तें मुंडतुंगमुस्ते । रत्ना. । महाभल्लातकगुडे । लशुनभेदे । हे.च.सू.चि.२६ग्र. । रक्तगुञ्जायाम् । रा.नि.व.३,वै.निघ.२म.वय चि. हृल्लादिमोदके । भूधात्र्याम् । ভুঁই আম্লা । रा.नि.व ५ । नागरमुस्तायाम् । रा.नि.व.६ । श्वेतगुञ्जायां । "श्वेतगुञ्जोच्चटा प्रोक्ता ।" भा.म १भ. ग.व. । तृणविशेषे । নির্বিষী বা চেঁচুয়া । अ टी.भ.। [क्ली । चिञ्चोटकपत्रे ।

**उच्चटापत्र:** । पुं । क्षुद्रतालीशपत्रे । वै.निघ. ।

**उच्चटाफलम्** । क्ली । रक्तगुञ्जायां । লালকুঁচ, ওকড়া ফল । भैष.कुष्ठ चि.महाभल्लातकगुडे ।

**उच्चटामूलम्** । क्ली । चिञ्चोटकमूले । চেঁচকোর মূল, ওকড়ার মূল । सु.चि.२६ग्र. ।

**उच्चतरु:** । पुं । नारिकेलवृक्षे । रा.नि.व.११ ।

**उच्चन्द्र:** । पुं । निशाचतुर्थप्रहरे । श.र. ।

**उच्चय:** । पुं । परिधानवस्त्रग्रन्थौ । हे.च.। राशौ।

**उच्चलम्** । क्ली । मनसि । हे.च. ।

**उच्चललाटा (टिका)** । स्त्री । मरुण्डायां । त्रारा. । उच्चललाटविशिष्टायाम् । त्रिका. ।

**उच्चाटनम्** । क्ली । उत्खातने । উদাসকরণ। षट्कर्मान्तर्गताभिचारकर्मविशेषे । तन्त्रम् ।

**उच्चार:** । पुं । विष्ठायाम् । रत्ना. ।

**उच्चिङ्कट:** । पुं । उच्चिटिङ्गनामकीटे । উচ্চিংড়ে । वर्णगड़मत्स्ये । मे.टचतुष्कं ।

**उच्चिटिङ्ग:** । पुं । A sort of cricket. उच्चिङ्कटे । উচ্চিংড়ে । रा.नि.व.१९ । वातप्रकृतिकीटविशेषे । लक्षणम्—"हृष्टलोमोच्चिटिङ्गेन सम्भविक्तो भृशार्तिमान् । दष्ट: शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥" तद्दष्टे वातजन्यरोगा भवन्ति ॥ सु.कल्प,८अ. ।

**उच्चूल:** । पुं । अजीर्णमुखकूर्चे । हे.च. ।

**उच्चै:श्रवा:** । त्रि । बधिरे । पुं । घोटकभेदे ।

**उच्छादनम्** । क्ली । गन्धद्रव्येन शरीरमार्जने । भ.टी. । [क छाती । भागवते ।

**उच्छिलीन्ध्रम्** । क्ली । गोमयच्छत्राके । কোঁড়-

**उच्छिष्टमोदनम्** । क्ली। सिक्थके।रा.नि.व.।

**उच्छीर्षकम्** । क्ली । उपधाने । তাকিয়া । हला. । पुं । शय्यादोषविशेषे । सु.चि.२६ग्र. ।

**उच्छून:** । त्रि । स्फीते । वर्द्धिते ।

**उच्छेद:** । पुं । उन्मूलने ।

**उच्छ्र(च्छ्रा)य:** । पुं । उच्चतायां । अम. ।

**उच्छ्रित:** । पुं । सरलदेवदारुवृक्षे । वै.निघ. ।

**उच्छ्वसित:** । त्रि । प्रफुल्ले, विकसिते । हे.च. ।

**उच्छ्वास:** । पुं । प्राणने । मे.सत्रिकं । अन्तर्मुखश्वासे । हे.च. ।

**उज्जासनम्** । क्ली । मारणे । अम. । [म. ।

**उज्जृम्भित:** । त्रि । प्रफुल्ले । क्ली। चेष्टायां । अ-

**उज्ज्वल(न)म्** । क्ली । सुवर्णे । रा.नि.व.१३ । पुं । धान्यभेदे । च. । [त्रि. ।

**उज्ज्वला** । स्त्री । कृष्णमरिचे । লঙ্কামরিচ । अ-

**उज्झटा** । स्त्री। भूम्यामलक्यां । ভুঁই আম্লা।

**उञ्छ:** । पुं । उञ्छशिले । जटा. ।

**उट:** । पुं । शुष्कतृणे । वै.निघ. । [वै.निघ. ।

**उटजा** । स्त्री । पानीयशालायां । पर्णशालायां।

**उटि:(ड़ि:)का** । पुं,स्त्री। नीवारधान्ये । উড়িধান । मद.व.१० । गुणा:—"उड़िका तत्र कथिता बल्या श्लेष्मविवर्द्धनी ।" राज. ।

**उट्टङ्कम्** । क्ली । सूत्रे । अस्त्रभेदे ।

**उडु** । क्ली । उदके । भ.टी.भ. ।

**उडुपति:** । पुं । सोमलताभेदे । सु.चि.१९ग्र। See सोम: । चन्द्रे । [ड़ । मद.व.१।

**उडुपप्रिया** । स्त्री । कमलिन्यां । পদ্মের ঝা-

**उडुम्बर:** । पुं, क्ली । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । अम.। कुष्ठरोगविशेषे । मे. । लक्षणम्—

"उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत् ॥" मा.नि.। ताम्रे । प.मु. । कर्षमाने (२ तो.) । प.प्र. ।

**उडुम्बरदला** । स्त्री । दन्तीवृक्षे। रा.नि.व.६।

**उडुम्बरपर्णी** । स्त्री । दन्तीवृक्षे । श.च. ।

**उड्डामररसः** । पुं । पित्तगुल्माधिकारे रसः। पाठः—"शुद्धसूतं समं गन्धं सूतांशं मृततामकं। पञ्चांशं शाकवृक्षस्य द्रवैर्मर्द्यं दिनद्वयम् । सर्पाक्ष्यो श्चैर्द्रवैश्चाक्षि कृत्वा गजपुटे पचेत् । पश्चधा भूधरे वाथ चूर्णं जैपालतुल्यकं । त्रिगुञ्जं भक्षयेच्चाज्यैः पित्तगुल्मप्रशान्तये। द्राक्षाहरीतकीक्वाथमनुपानं प्रकल्पयेत् ॥" रस र.गुल्म चि.। পারা ১ ভ. গন্ধক ১ ভ. তাম্র ।• সিকি ভ.। শেগুণ বা শিরীষ এবং নাগেশ্বরের রস মর্দ্দনীয় দ্রব্যের পঞ্চমাংশ দ্বারা দুই দিন মর্দ্দনপূর্ব্বক গজপুটে ভূধরযন্ত্রে পাক করিয়া দিবাভাগে চূর্ণ কর। শীতল হইলে পরে ঔষধ সমভাগ জয়পাল চূর্ণের সহিত মিশ্রিত করিয়া ৩ কুঁচ ঘৃতে মাড়িয়া সেবন করিবে।

**उड्रः(पुष्पः)** । पुं, क्ली । जवापुष्पवृक्षे । जवापुष्पे । वै.निघ. । [চীনদেশীয় গোলাপ । Wil.

**उद्रः** । पुं, क्ली। जपापुष्पवृक्षे । जवापुष्पे । জবা,

। पुं । मलाशये । सु.शा.५अ. । स चान्त्रदेशस्थः शोणितकिट्टप्रभवः। सु.शा.४अ.। "फुस्फुसस्यावरण्यौ द्वे जर्हतस्तद्द्वयं तयोः। उण्डुकः शैशवे मध्ये मध्यान्ते महतां न हि॥" अत्रि.।

**उत्कटः** । पुं । (Sachharum sara.) शरकाण्डे । শর গাছ । रा.नि.व.८। क्षुद्रक्षुपविशेषे । ওকড়া, কালিয়াবিষর । प.मु. । इक्षौ । रक्तेक्षौ । रा.नि.व.१४ । मद्ये । श.र.,भैष.ने.रो.चि.। मत्तहस्तिनि । हारा. । क्ली । Woody cassia or its bark. त्वचभेदे । लताविशेषे। শালসা । Wil. गुड़त्वचि । দারচিনি । प.मु.,रा.नि.व.६, हारा. । गन्धकुसुमे । हारा. । तेजपत्रे । श.टी.भ. । त्रि । उत्ताले । तीव्रे ।

**उत्कटा** । स्त्री । सिंहलीपिप्पल्याम् । বন পিপুল । हिं श्वेतघुंघुची । मं राणपिंपलि, उट्कटारा । गुणाः—"सैंहली कटुका च जन्तुघ्नी दीपनी परा । कफश्वाससमीरार्त्तिशमनी कोष्ठशोधनी ॥" रा.नि.व.६ । "उत्कटा कथिता चोष्णा तिक्ता तथाप्युदाहृता । मूत्रकृच्छ्रं पित्तवातं मेहं तृष्णाञ्च हृद्रुजं । विस्फोटकं नाशयति बीजमस्यास्तु शीतलं। वृष्यं तृप्तिकरञ्चैव मधुरञ्च प्रकीर्त्तितम् ॥" वै.निघ. । [निरासनस्थितौ । सु.चि.६अ. ।

**उत्कटा(टुका)सनम्** । क्ली । कठिनासने ।

**उत्कण्टकम्** । क्ली । ওকড়া इति ख्याते वृक्षभेदे । च.चि.१अ. । [र्यां । अम. ।

**उत्कण्ठा** । स्त्री । इष्टलाभे कालक्षेपासहिष्णुता-

**उत्कता** । स्त्री । (Pothos officinalis.) गजपिप्पल्याम् । श.च. । उत्कण्ठायाम् ।

**उत्करः** । पुं । रक्तेक्षौ । রক্ত ইক্ষু । रा.नि.व.१४ । धान्यादिराशौ । अम. । उत्कारिकायाम् । পুল্টিশ্ । भैष.शूल.चि. ।

**उत्कर्णः** । पुं । वायुजन्याश्वरोगे । अनाश्वस्य कर्णपुच्छगात्राणि स्तब्धीभवन्ति । "कर्णौ स्तब्धौ तथा पुच्छं स्तब्धं गात्रमकिञ्चनं । वातात्मकेन वाहस्य भवेदुत्कर्णकेन हि ॥" ज.द.५४अ. ।

**उत्कर्षणम्** । क्ली । अधोगतस्य जङ्घाकर्षणे । सु.चि.१५अ. । [कलिकायाम् । কুঁড়ি । त्रिका. ।

**उत्कलिका** । स्त्री । उत्कण्ठायाम् । हारा. ।

**उत्काका** । स्त्री। प्रतिवर्षप्रसूतायां गवि। श.च.।

**उत्कारिका** । स्त्री । रोटिकायां । রুটী । वा.टी.हेमा.। यवमाषैरण्डबीजातसीकुसुम्भबीजादिभिः पिष्टस्विन्नैर्लप्सिकाकृतिर्यः स्वेदनोपायः स उत्कारिका । পুল্টিশ । अरुणः,वा.सू.१७अ. । गुटिकायाम् । বড়ি । सु.चि.२६अ.। लप्सिकायां । কাই, মোহনভোগ । सु.चि.१४अ. । [च.द.यक्ष्म.चि. ।

**उत्कासः (नम्)** । पुं,क्ली। कासे । উৎকাসি।

**उत्कुञ्चिः (का)** । पुं, स्त्री । (Nigela indica.) स्थूलकृष्णजीरके । মোটা কৃষ্ণজীরে । रत्ना. । कुलिञ्जनवृक्षे । মহাভরী বচ ।

**उत्कुटम्** । क्ली । उत्तानशयने । চিৎ হইয়া শয়ন । हारा. ।

**उत्कुणः** । पुं । केशकीटे । উকুণ । हे.च. ।

**उत्काटः** । पुं । उणवारणे । हारा. ।

**उत्कोठः।** पुं। कोठरोगभेदे। लक्षणं यथा—"असम्यग्वमनोदीर्णपित्तश्लेष्मानिलग्रहैः। मण्डलानि सकण्डूनि रागवन्ति बहूनि च। सानुबन्धस्तु स प्रोक्तश्चोत्कोठ इति कथ्यते।" भा.म.४भ.शी.पि.चि.।

**उत्क्रोशः।** पुं। पेचके। वै.निघ.। मत्स्यघातिपक्षिणि। माछराङा पाखी। रत्ना.। गुणाः—रक्तपित्तघ्नः शीतलः स्निग्धः वृष्यः वातकरः रसे पाके च मधुरः। सु.सू.४६अ.। कुररपक्षिणि। कर्कटे पाखी। हला.। [See क्लिष्टवर्त्म।

**उत्क्लिष्टवर्त्म।** क्ली। क्लिष्टवर्त्मनामरोगविशेषे।

**उत्क्लेशः (दः)** । पुं। शरीरस्थदोषस्य उपस्थितवमनमलमिव। वमनेच्छायां। च.द.ज्व.चि.। "उत्क्लेशश्चोपशाम्यति।" वमनोपस्थितिरित्र। भा.म. भ श्लेष्म.ज्व.चि.। "गौरवं शीतमुत्क्लेशः।" "उत्क्लिश्यान्नं न निर्गच्छेत्प्रसेकष्ठीवनेरितं। हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत्।" सु.शा.४अ.।

**उत्क्लेशकः।** पुं। अग्निप्रकृतिकीटविशेषे। तेन दष्टे पित्तजन्यरोगा भवन्ति। सु.कल्प.८अ।

**उत्क्लेशनवस्तिः।** पुं, स्त्री। वस्तिभेदे। यः पूर्व्वम् एरण्डवीजादिकल्केन उत्क्लेशनार्थं दीयते। "दद्यादुत्क्लेशनं पूर्व्वम्—एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा। हपुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः॥" वै.निघ.वस्तिविधिः। [श.च.।

**उत्खला।** स्त्री। मुरानामगन्धद्रव्ये। मुरामांसी।

**उत्तः।** त्रि। आर्द्रद्रव्ये। भिजा द्रव्य। अम.।

**उत्तमम्।** क्ली। मत्स्यमांसे। त्रि। तप्ते। स्नाते। मे.।

**उत्तमः।** त्रि। उत्कृष्टे। पुं। अश्वविशेषे। लक्षणं—"अजन्याश्च महासाराः संग्रामे चैव पूजिताः। अपि शस्त्रहताङ्गास्तु नैव मुञ्चन्ति सादिनं॥" ज.द.३अ.।

**उत्तमफलिनी।** स्त्री। (Aclepias rasea.) दुग्धिकायाम्। छोट थिकड़े। प.मु.।

**उत्तमवारि।** क्ली। तण्डुलोदके। च.द.मधुकादौ। उत्कृष्टजले।

**उत्तमवैद्यः।** पुं। कृतसाङ्गवेदाध्ययने वैद्ये।

**उत्तमा।** स्त्री। दुग्धिकायाम्। छोटथिकड़े। प.मु.,रत्ना.। मनःशिलायाम्। प.मु.। भूम्यामलक्याम्। वै निघ.। त्रिफलायां। भा.म.१भ.सन्निकज्व.चि.। "अटीसुरतरूत्तमा।" सुरसायां। वै.घ.। तन्नामकशूकदोषविशेषे। "मुद्गमाषोपमा रक्ता पिड़का रक्तपित्तजा। उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा॥" सु.नि.शू.दी.चि.१४अ.।

**उत्तमाङ्गम्।** क्ली। मस्तके। रा.नि.व.१८। त्रि। उत्कृष्टाङ्गे।

**उत्तमारणी।** स्त्री। इन्दीवरालतायाम्। इन्दुचिर्भिट्यां। रा.नि.व.३। इन्द्रवारुण्याम्। वा.उ.३७अ.। योधामल्लिकायां। यूँई। सु.चि.६अ.।

**उत्तरकालः।** पुं। भाविकाले।

**उत्तरङ्गम्।** क्ली। द्वारस्योपरितिर्य्यक्काष्ठविशेषे। "उत्तरङ्गं मतं तिर्य्यक् द्वारस्योपरि दारु यत्।" हला.।

**उत्तरवस्तिः।** स्त्री। निरूहोत्तरदेयवस्तौ। निरूहेर पर देय पिचकारि। निरूहाद्दुत्तरं दानादुत्तरवस्तिसंज्ञा। तत्र नेत्रपरिमाणं १२ अङ्गुलम्। तच्छिद्रं मालतीवृन्तच्छिद्रपरिमितं। स्नेहमात्रा पञ्चवर्षीये बाले अर्द्ध प. तदूर्द्ध १ प.। स्त्रीणाञ्च कनिष्ठिकास्थूलं दशाङ्गुलं नेत्रं। स्नेहमात्रा च २ प.। तदुक्तं—"द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकं। मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमं। बालानां पञ्चवर्षाणामथो मात्रार्द्धपालिकी। तदूर्द्ध पलमात्रा च स्नेहस्योक्ता भिषग्वरैः। अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः। स्थितस्य जानुमात्रेण चापि स्निग्धशलाकया। स्निग्धया मेढ्रमार्गञ्च ततो नेत्रं नियोजयेत्। शनैः शनैर्घृताभ्यक्तं मेढ्रस्याङ्गुलानि षट्। ततश्च पीड़येद्वस्तिं शनैर्नेत्रञ्च निर्हरेत्। ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः। स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्य्याद्दशाङ्गुलं। शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः। योनिमार्गेषु नारीणां स्नेहमात्रां द्विपालिकीं। उत्तानायै स्त्रियै दद्यादूर्द्धजान्वै विचक्षणः। अप्रत्यागच्छति भिषक् वस्तावुत्तरसंज्ञिते। भूयो वस्तिर्विधातव्यः संयुक्तः शोधनैर्गणैः। फलवर्त्तिं निदध्याद्वा योनिमार्गे दृढ़ां भिषक्। मूत्रैर्विनिःसृतां स्निग्धां शोधनद्रव्यसंयुताम्। दह्यमाने तथा वस्तौ दद्याद्वस्तिविशारदः॥" शार्ङ्ग। पलार्द्धमुत्तरो वस्तिः मात्रावस्तिः पलद्वयं। शापनाद्धेहृच्छी न दत्तौ पट्पल-

न्विती। पिच्छावसिर्भवेत्पथः पादीनः कीर्तितो ऽपरः॥ आनन्दखानः।

**उत्तरवायुः** । पुं। तद्दिग्भवमारुते। स च शी तः स्निग्धः दोषप्रकोपकरः क्लेदनः प्रकृतिस्थानां बलदः मृदुः चतचीणविषार्त्तानां विशेषेण गुणकरच। मद.व.२३।

**उत्तरवारुणी** । स्त्री। इन्द्रवारुण्याम्। रा-थालशशा। र.सा.सं.वैक्रान्तमारणे। भैष.कुष्ठ चि.। "शिला चीत्तरवारुणी।" ज्व.चि.कुलवधूरसे। उत्तमारणीति वा.उ.१७अ.,वै.निघ.२भ.कास चि. वारुणीपत्रधूमे।

**उत्तरायणम्** । क्ली। मकरसंक्रान्तितो मिथुन संक्रान्तिसमाप्तिपर्यन्तकाले, सवितुरुत्तरमार्गगति रूपे वा काले। तचादानं जानीयात्, यतस्तदा नृणां प्रतिदिनं सारमादत्ते, आदित्यपवनयोः भुवः सौम्यगुणहरत्वात्। वा.सू.३अ.। [अम.।

**उत्तरासङ्गः** । पुं। उत्तरीयवस्त्रे। উড়ুনি।

**उत्तरिणी** । स्त्री। उत्तमारण्याम्। गुणाः— "उत्तरिणी तु कटुका शीता नेत्र्या लघुः स्मृता। उष्णा स्निग्धा सारका च तुवरा व्रणरोपणी। कासव्रणकृमिश्वासज्वरपित्तप्रमेहकान्। कफकुष्ठ-प्रलापांश्च वातं तन्द्राञ्च दद्रुकं। चयकासं मूत्रकृच्छ्रं योनिरोगञ्च शोथकं। नाशयेदिति सम्प्रोक्ता सुख प्रसवकारिणी। शाकास्तस्याश्चोष्णवीर्य्या तिक्ता कृम्यर्शःकुष्ठहृत्। कफवातहरा प्रोक्ता फलं तस्याः पटु स्मृतं। तिक्तमुष्णञ्च कटुकं लघु चाग्निप्रदीपकं। पित्तकोपकरञ्चैव शिवदं विषनाशनम्॥" वै.निघ.।

**उत्तानः** । त्रि। ऊर्द्ध्वास्यशयिते। मे.नत्रिकं। क्ली। जले। हे.च.।

**उत्तानकः** । पुं। (Cyperus.) मुस्ताभेदे। नागरमुस्ता। उच्चटायां। চেঁচুয়া, নিৰ্বিষী। र. मा.। रत्ना.।

**उत्तानपत्रः (कः)** । पुं। रक्तैरण्डे। रा.नि. व.८। भा.पू.१भ.गु.व.। मद.व.१। श्वेतैरण्डे। वै.निघ.। [शो। अम.।

**उत्तानशयः** । पुं। स्तन्यपायिशिशौ। अतिशि-

**उत्तानशायी** । त्रि। उत्तानशायिनि। वै.निघ।

**उत्तापः** । पुं। तेजसि। उष्णतायाम्।

**उत्तापनम्** । क्ली। उष्णताकरणे।

**उत्तारः** । पुं। वमने। [त्कटे।

**उत्तालः** । पुं। मर्कटे। मे.लत्रिकं। त्रि। उ

**उत्तुण्डकी** । स्त्री। करञ्जके। वै.निघ.।

**उत्तुण्डितः** । त्रि। निर्गते। सु.चि.२अ.।

**उत्तुषः** । पुं। लाजायाम्। খই। হারা.।

**उत्तेजि(रि)तम्** । क्ली। अश्वस्य मध्यवेगगति-विशेषे। इयं चतुर्थपञ्चमगतिः। "उत्प्लुत्योत्प्लुत्य गमनं कोपादिवाखिलैः पदैः।" हे.च.।

**उत्तोलनम्** । क्ली। उत्क्षेपणे।

**उत्थानम्** । क्ली। मलोत्सर्गे। रत्ना। मलरोगे। पौरुषे। हर्षे। हे.च.मे.नत्रिकं।

**उत्थितः** । पुं। सरलवृक्षे। रा.नि.व.१२। त्रि। उत्पन्ने। मे.तत्रिकं। [च.।

**उत्थिताङ्गुलिः** । पुं। चपटे। চাপড়। श

**उत्पतः** । पुं। पक्षिणि। त्रिका.।

**उत्पतनम् (पत्तिः)** । क्ली, स्त्री। उत्पत्तौ। ऊर्द्ध्वगमने। मे.नचतुष्कं। जन्मनि।

**उत्पल(क)म्** । क्ली। Blue lotus. नील-कमले। নীলপদ্ম। रा.नि.व.१०। सु.सू.३८अ. उत्पलादौ ड.। च.सू.४अ.। च.द.र.पि.चि.। कुष्ठे। কুড়। তেঁ চেংগলিকোষ্টু। प.मु.विश्व.। प्र.क-ल्पगीमोदके। र.सा.सं.। च.द.पि.ज्व.लोध्रादिः। "लोध्रोत्पलामृतापद्म।" लाचादितैले। वै.निघ. अर्शः-चि.क्षीवेरघृते। शालूके। प.मु.। स्वनाम-ख्यातकमलजातीयपुष्पे। শুন্দি ফুল,হেলা ফুল। हि कौञि। मं उत्पल। सु.चि.३अ.। गुणाः— कषायं मधुरं शीतलं पित्तकफरक्तघ्नञ्च। राज.। शीतलं स्वादु रक्तपित्तघ्नं दाहश्रमवमिभ्रान्तिकृमि-हरञ्च। रा.नि.व.१०। सामान्येनोत्पलं शीतं स्वादु-दाहहरं मतं। रक्तदोषं श्रमं वान्तिं भ्रान्तिं जूर्त्तिं कृमीन् जयेत्॥ द्रव्यगुणः। नीलोत्पले। নীলশুন্দি। सि.यो.र.पि.चि.सिद्धतमयोगे, श्रीकण्ठः। "वासा कषायोत्पलमृत्प्रियङ्गु।" सि.यो.यक्ष्म-चि.च्यवन-प्राशे। वा.सू.१५अ,अञ्जनादि। पद्मकाष्ठे। "प-द्मोत्पलधान्यरोहिणीविश्वैः।" च.द.ज्वराती.चि.च-न्दनलादिः। पुष्पे। मे.। जलजातपुष्पमात्रे। अम.।

**उत्पलः ।** त्रि । मांसशून्ये । हे.च. ।

**उत्पलकः ।** पुं । नेत्रकरीषे । वनघुँटे । प्र. र.ञा.स. कृष्णमारखे । नीलोत्पले । नीलशुन्दि । रा.नि.व.१० ।

**उत्पलकन्दः ।** पुं । शालूके । रबा. ।

**उत्पलकुष्ठकः ।** पुं । कुष्ठौषधौ । वै.निघ ।

**उत्पलकेसरम् ।** क्ली । पद्मकेशरे । भैष.क्षुद्ररो.चि.कनकतैले । [विशेषे । श मा. ।

**उत्पलगन्धिकम् ।** क्ली । अतिसुरभिचन्दन-

**उत्पलगोपा ।** स्त्री । श्वेतशारिवायाम् । শ্বেত শ্যামালতা । वै.निघ. ।

**उत्पलदलम् ।** क्ली । तन्नामकास्त्रविशेषे । तच्च छेदने भेदने च प्रयुज्यते। लक्षणं यथा—"उत्पलाध्यर्द्धधाराख्ये भेदने छेदने तथा ।" अत्रि. ।

**उत्पलपत्र(क)म् ।** क्ली । वैद्यकास्त्रविशेषे छेदने भेदने च । तत्परिमाणं षड़ङ्गुलम् । सु.सू. ८अ. । मद.व.१४अ. । तिलके । धरणिः । कुवलयपत्रे । हे.च. ।

**उत्पलभेद्यकः ।** पुं । हस्तायतसमोभयपालिकर्णबन्धनाकृतिविशेषे । सु.सू.१६अ.। [र.पि.चि.।

**उत्पलसृत् ।** स्त्री । सौराष्ट्रमृत्तिकायां । च.द.

**उत्पलशारिवा ।** स्त्री । श्यामालतायाम् । प. मु.। र.मा.। अनन्तमूले । अम. । भैष.भ्र.भ.चि.।

**उत्पलषट्कम् ।** क्ली । योगविशेषे । "उत्पलं धान्यकं शुण्ठी पृश्निपर्णी बलायुतं । बालबिल्वं गवां तक्रेणाप्युत्क्षेन च पेषयेत्। तेन लाजकृतं मण्डं देयमानीय शीतलम् । ज्वरातिसारशमनं हुताशनबलप्रदम् ॥" हा.अत्रि.३स्था.२अ. ।

**उत्पलादिः ।** पुं । कषायवर्गविशेषे । उत्पलरक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकानि मधुकञ्चेति । गुणाः—"उत्पलादिरयं दाहपित्तरक्तप्रणाशनः । पिपासाविषहृद्रोगच्छर्दिमूर्च्छाहरो गणः" इति ॥ सु.सू.३८अ.। भावप्रकाशे त्वन्यविधः । यथा —"उत्पलं नीलमारक्तं कह्लारं कुमुदं तथा । श्वेताम्भोजञ्च मधुकमुत्पलादिरयं गणः ॥ सुशीतलो हरत्येवं दाहं तृष्णां हृदामयम् । रक्तपित्तञ्च मूर्च्छाञ्च तथा छर्दिमरोचकम् ॥" इति ।

**उत्पलिनी ।** स्त्री । कुमुदषण्डे । শুন্দিফুলের ঝাড় । लघुकमलिन्यां । हिं कोअिकोटी । गुणाः — हिमा तिक्ता रक्तामयघ्नी पित्तघ्नी तापकफकासतृष्णाश्रमवमिघ्नी च । तस्या बीजगुणाः— स्वादु रुच्यं हिमं गुरु च । रा.नि.व.१० । [मि.लघिर्का ।

**उत्पली ।** स्त्री । तुषचर्पट्याम् তুষের চাপড়া ।

**उत्पाटः (तः) ।** पुं। कर्णपालीगतरोगे। तल्लक्षणं—"गुर्व्वाभरणसंयोगात्ताड़नाद्दर्षणादपि। शोथः पाल्यां भवेच्छ्यावः दाहपाकरुजान्वितः । रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥" मा. नि. । कर्णपाल्या उपद्रवे । सु.उ.२०अ. ।

**उत्पाटनम् ।** क्ली । वायुजन्यव्रणवेदनाविशेषे । उन्मूलने । सु.सू.२२अ. ।

**उत्पादकः ।** पुं । शरभे । हे.च. ।

**उत्पादशयनः ।** पुं। टिट्टिभपक्षिणि । हे.च.।

**उत्पादिका ।** स्त्री । उपजिह्विकायाम् । हारा.। हिलमोचिकायाम् । শিঞ্চে । उपदिकायां । पूँई । त्रिका.। देहिकानामकीटविशेषे । श.च. ।

**उत्पारः ।** पुं । शुक्रघृते ।

**उत्पाली ।** स्त्री । आरोग्ये । श च. ।

**उत्पिञ्जलः ।** त्रि । भृशमाकुले । हे.च. ।

**उत्पिष्टसन्धिः ।** पुं । सन्ध्युत्पेषणे, अस्थिसन्धौ घर्षणे । तेन सन्धावुभयतः शोफो वेदना च भवति । सु.नि.१५अ. । See भग्नम् ।

**उत्पीड़ः ।** पुं । सुरामण्डे । फेने ।

**उत्पुटकः ।** पुं । कर्णपालीगतरोगविशेषे । सु. सू.१६अ. । कर्णपालीविधोपद्रवे । सु. ।

**उत्प्राणः ।** पुं। श्वासे । वै.निघ.। [न्द्रिये । मे. ।

**उत्फुल्लः ।** त्रि । विकसिते । हे.च.। क्लो । स्त्री

**उत्सङ्गः ।** पुं। क्रोड़े । रा.नि.व.१८। "क्रोड़मङ्कमथोत्सङ्गः प्राग्भागो वपुषः स्मृतः ।" राज.। व्रणवस्तुप्रदेशे । सु.चि.१अ. । पर्व्वतमध्यदेशाकारव्रणबन्धविशेषे । वा.सृ.२८अ. ।

**उत्सङ्गपिड़का ।** स्त्री । लक्षणं—नेत्रवर्त्मगतरोगविशेषे । नेत्राधोवर्त्मनि सञ्जातपिड़कायां। सा च स्थूला कण्डुमती, अधोवर्त्मनि सोत्सङ्गा दर्का-

भ्यन्तरमुखी, बहिस्तामान्तःपूया च। "अभ्यन्तरमुखी नाम्ना बाह्यतो वर्त्मनश्च या। सोत्सङ्गोत्सङ्गपिड़का सर्व्वजा स्थूलकण्डुरा॥" मा.नि.।

**उत्सङ्गी** । पुं। नाड़ीव्रणविशेषे। नाली घा। सु.।

**उत्सर्जनम्** । क्ली। दाने। अम.।

**उत्सर्जनी** । स्त्री। गुदस्य द्वितीयवली। लक्षणं यथा—"उत्सर्जनी तु तदधः सा सार्द्धाङ्गुलसम्मिता।" भा.।

**उत्सर्य्या** । स्त्री। प्राप्तप्रजननकालायां गवि। পাল লইবার যোগ্য গাভী। जटा.।

**उत्सवः** । पुं। इच्छाप्रसवे। उत्सेके। उत्साहे। क्रोधे। मे.वत्रिकं।

**उत्सादनम्** । क्ली। उद्वर्त्तने। भा.म.४भ.ने.रो.चि.। "ताः शोचणोत्सादनलेपनादीन्।" "उत्सादनाद्भवेत्स्त्रीणां विशेषात्कान्तिमद्वपुः।" सु.चि.२४अ.। उत्सवे। रत्ना.अने.। समुल्लेखने। मे.नचतुष्कं। निम्नस्य व्रणस्य उन्नतीकरणे। सु.चि.१अ.।

**उत्साहः** । पुं। मनस उल्लासे। अम.।

**उत्साहयुक्तः** । पुं। शरभे। मद.व.१२।

**उत्साही** । पुं। भक्तरोगिणि। [वा.सू.।

**उत्सिंहनम्** । क्ली। नासया ऊर्द्ध्वश्वासधारणे।

**उत्सुकः** । त्रि। उत्कण्ठिते। व्यग्रे।

**उत्सूरः** । पुं। सन्ध्याकाले, दिनावसाने। हे.च.।

**उत्सृष्टः** । त्रि। त्यक्ते। अम.।

**उत्सेधः** । पुं। शरीरोन्नत्ये। देहे। अम.।

**उत्स्मयः** । पुं। मन्दहास्ये। वै.निघ.।

**उत्त्विमः** । पुं। धुस्तूरफले। श.च.।

**उत्क्षिप्तिका** । स्त्री। आतङ्कविशेषे। हे.च.।

**उँत्क्षेपणम्** । क्ली। व्यजने। धान्यमर्द्दनवस्तुनि। हे.च.।

**उत्क्षेपमर्म्म** । क्ली। शङ्खयोपरिकेशप्रान्तस्थमर्म्मणि। तत्र विशल्यमर्म्मणां युगलं तन्नाम्नैव तिष्ठति। सु.शा.६अ.।

**उद(क)म्** । क्ली। जले। श.र.,रा,नि,व,१४। पुं। करिमञ्जलायाम्। हला.।

**उदकप्रक्षेपणम्** । क्ली। जलप्रक्षेपेण जलस्य शीतीकरणोपाये। सु.सू.४५अ.।

**उदकमञ्चिका** । स्त्री। जलप्रसाधनार्थमाधारविशेषे। सु सू.४५अ.।

**उदकमञ्जरीरसः** । पुं। रसोऽयं निरामज्वरे देयः। मात्रा २ र. अनुपानं आर्द्रकरसः। अत्र ऊषणं मरिचं शर्करा विषं। मतान्तरे शर्करा सर्व्वद्रव्यसमा। त्रिरात्रं २४ प्रहरपर्य्यन्तम्। पाठः—"सूतो गन्धटङ्कणः सोषणः स्यादेतैस्तुल्या शर्करा मत्स्यपित्तैः। भूयो भूयो भावयेच्च त्रिरात्रं वल्लो देयः शङ्करेवस्य वारा॥" পারা ১ ভ. গন্ধক ১ ভ. সোহাগার খৈ ১ ভ. মরিচ ১ ভ. বিষ ৪ ভ। কেহ কেহ চিনি ৪ ভাগ বলেন। अत्र शर्करास्थाने मनःशिलादानेन चन्द्रशेखररसो भवति। र.सा.सं.।

**उदकमेहः** । पुं। कफोत्थमेहविशेषे। लक्षणं—"अच्छं बहुसितं शीतं निर्गन्धमुदकोपमं। मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम्।" मा.नि..।

**उदकवहस्रोतः** । क्ली। जलवहनाड्यां। ते च द्वे तयोर्मूलं तालु क्लोम च। सु.शा.९अ.।

**उदकवहा** । स्त्री। मूत्रवस्तिमभिप्रपन्ने धमनीद्वये। तयोर्मूलं तालु क्लोम च। सु.शा.९।

**उदकषट्पल(घृत)म्** । क्ली। अर्शोरोगे। तिलतैलं ४ श. वारि १२ श. दुग्धं ४ श. यवक्षारादीनां प्रत्येकं पलं कल्कं दत्त्वा पचेत्। पाठः—"सक्षारैः पञ्चकोलैस्तु पालिकैस्त्रिगुणोदके। सक्षीरं घृतप्रस्थं ज्वरार्शःप्लीहकासहृत्॥" ঘৃত ৪ শ. জল ১২ শ. দুগ্ধ ৪ শ. পঞ্চকোল, যবক্ষার প্রত্যেকে ১ প. (৮ তো.)। ইহা কল্ক। च.द.अर्शः-चि.। [रा.नि व.४।

**उदकिका** । स्त्री। बलानामक्षुपे। বেলেড়া।

**उदकी** । स्त्री। पाठायाम्। আকনাদি। वै.निघ.ग्रह.चि.२अतिविषादिः।

**उदकीर्णः (र्य्यः)** । पुं। महाकरञ्जे। ডহরকরঞ্জ। हिं अरारि। रा.नि.व.९। र.मा.भा.पू.१भ.गु.व.।

**उदकीर्य्या** । स्त्री। पूतीकरञ्जे। নাটাকরঞ্জ।

वा.टी.हेमा.। वा मृ.१५अ.मर्कादि:। "प्रत्यक्पुष्पीपीततैलोदकीर्थ्या।" च.मृ.२अ.वमने, फलिनोव. १अ.। सु.सू.३९अ.कफशमने। [दकोदरम्।

**उदकोदरम्** । क्ली। जलोदरनामरोगे। See

**उदक्या** । स्त्री। रज.स्वलायाम्। अम.।

**उदगयनम्** । क्ली। उत्तरायणे। अम.।

**उदग्रदन्** । त्रि। महादन्तकरिणि। हे.च.।

**उदञ्चनम्** । क्ली। पिधाने। ঢাকনী। हला.।

**उदण्डपालः** । पुं। मत्स्यविशेषे। দানকোণা মাছ। मी.लपञ्चकं। [পড়ে। रा.नि.व.१९।

**उदद्या** । स्त्री। तैलपिपीलिकायाम्। লালপ-

**उदधिः** । पुं। समुद्रे। रत्ना.। [अब्धिकफः।

**उदधिकफः** । पुं। समुद्रफेने। च.द.। See

**उदधिफलम्** । क्ली। समुद्रफेने। वै.निघ.।

**उदधिफेनः** । पुं। समुद्रफेने। च.द.रस.र. बाल.चि.। See अब्धिकफः।

**उदधिमलः** । पुं। समुद्रफेने। राज.।

**उदधिलवणम्** । क्ली। सामुद्रलवणे। भा.।

**उदधिशुक्तिः** । स्त्री। मुक्तास्फोटे। সমুদ্রের ঝিণুক। [लवण। भा.पू.१भ.।

**उदधिसम्भवम्** । क्ली। सामुद्रलवणे। পাঙ্গা

**उदन्तिका** । स्त्री। तृप्तौ। हारा.।

**उदन्या** । स्त्री। पिपासायाम्। रा.नि.व.२०। See तृष्णा।

**उदपर्णी** । पुं। कुधान्यविशेषे। सु.सू.३८अ.।

**उदपानः** । पुं, क्ली। कूपे। अम.।

**उदमन्थः** । पुं। उदकप्रधानमन्थे। च.सू.६अ.। जलालोड़ितसघृतशक्तौ। स च ग्रीष्मे सेव्यः। भा.। प.सु.।

**उदमानम्** । क्ली। वारिमानाढ़के।

**उदम्बरः** । पुं। शरीरजक्रिमिभेदे। शार्ङ्ग.७अ.। See क्रिमिः। क्ली। ताम्रे। তামা। अ.टी.।

**उदयः** । पुं। उत्पत्तौ।

**उदयभास्करकर्पूरः** । पुं। स्वनामख्यातकपूरे। स च पक्वः। सदलनिर्दलभेदेन द्विभेदः। गुणाः—'पीतः सरः स्वच्छकः सम्प्रोक्तः कठिनः कटुः समुदितः स्याद्दीपकोऽग्नेर्लघुः। शीदः पित्तकरः कफक्रिमिविषान् वातञ्च नाशाश्रुतिं लाला-स्रावगलग्रहौ च शमयेत् जिह्वाजड़त्वापहः।" वै. निघ.।

**उदयभास्कररसः** । पुं। कुष्ठाधिकारे रसः। अत्र केवलं गन्धकेन मृतं ताम्रं दशभागम्। अमृतं विषं, तस्य द्वौ भागौ। र.सा.सं.। पाठः—"गन्धकेन मृतं ताम्रं दशभागं समुद्धरेत्। उषणं (वा) पञ्चभागं (गा) स्यादमृतञ्च द्विभागकं। श्लक्ष्णचूर्णीकृतं सर्व्वं रक्तिकैकप्रमाणतः। दातव्यं कुष्ठिने…… ॥ उषणं स्थाने चूषणमिति। रसे.चि.। "पिप्पली पञ्चभागा स्यादिति।" सा.कौ.। তামা ১০ তো. পিপুল ৫ তো. শৃঙ্গ বিষ ২ তো. जलेन पिष्टा रक्तिप्रमाणा वटी कार्य्या। মতান্তরে পিপুলমূল ৫ তো. অন্যমতে ত্রিকটু ৫ তো.। अन्यः हिक्काश्वासे।. पाठः—"धान्याभ्रं सूतकं गन्धं श्वेतापामार्गजद्रवैः। तुल्यांशं मर्द्दयेच्चाग्नियन्त्रे पातालके पचेत्। ऊर्द्धलग्नन्तु संग्राह्यो रसो ह्युदयभास्करः। श्वासं पञ्चविधं हन्ति द्विगुञ्जमनुपानतः॥ रस.र.। অভ্র, পারা, গন্ধক সমানভাগে শ্বেত আপাংরসে মাড়িয়া পাতালযন্ত্রে পাক করিলে যন্ত্রের ঊর্দ্ধভাগে যে বস্তু লাগে, তাহা উদয়ভাস্কর-রস।

**उदरम्** । क्ली: नाभिस्तनमध्यभागे। পেট। रा.नि.व.१८। तन्नामकरोगे। উদরি রোগ। तदष्टविधम्—वातपित्तकफसन्निपातैः चतुर्विधं प्लीहजन्यं मलसञ्चयजन्यं चतजन्यं जलसञ्चयजन्यञ्चेति। अस्य निदानं—अग्निमान्द्याजीर्णमलसञ्चयादिकम्। कुपितवातादिभिः स्वेदवहाम्बुवहस्रोतसि रुद्धे, तथा प्राणापानाभ्यामग्नौ दूषिते तदुत्पद्यते। साधारणलक्षणं—"आध्मानं गमनेऽशक्तिर्दौर्ब्बल्यं दुर्ब्बलाग्निता। शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः। दाहस्तृष्णा च सर्व्वेषु जठरेषु भवन्ति हि॥" सु.नि.७अ.। "सर्व्वमेवोदरं प्रायो दोषसंहतिजं मतं। अतो वातादिशमनी क्रिया सर्व्वा प्रशस्यते। वह्निर्मन्दत्वमायाति कुक्षौ दोषप्रपूरिते। अजीर्णान्मलिनैश्चान्नैर्मन्दाग्नौ मलसञ्चयात्॥ रुद्धाः स्वेदा-

गुरादिभ्यो जनयन्त्युदरं नृणां। आध्मानमामताश्चलं गतिरल्पा कृशाङ्गता ॥ शोथः सदनमङ्गानां दाह सन्द्रा विवर्णता। विड्वातसङ्गः पादाभ्यां शोथ आगमलक्षणम् ॥ पूर्व्वरूपम्। मौदकानूपजं मांसं शाकं पिष्टकृतं तिला:। व्यायामाध्वदिवास्वप्रयान पानं विवर्ज्जयेत् ॥ तथोष्णलवणाम्लानि विदाहीनि गुरूणि च। नाद्यादन्नानि जठरी तोयपानं विवर्ज्जयेत् ॥ रस.र.।

**उदरग्रन्थिः।** पुं। अश्मरीरोगे। गुल्मरोगे। हे.च.। अर्ब्ब। আংড়ী। प्लीह्नि। Wil.

**उदरनाड़ी।** स्त्री। अन्ननाड्याम्।

**उदरपरीक्षा।** स्त्री। जठरपरीक्षायाम्।

**उदरपिशाचः।** पुं। सर्व्वान्नभक्षके। हे.च.।

**उदरपीड़ा।** स्त्री। उदरामये।

**उदरभङ्गः।** पुं। अतिसाररोगे।

**उदररसः।** पुं। उदरस्थपाचकरसे।

**उदरव्याधिः।** पुं। उदरामये।

**उदरस्फुटा।** स्त्री। नागवल्ल्याम्। वै.निघ.।

**उदराग्निः।** पुं। जठराग्नौ। [निघ.।

**उदरानलपत्रकः।** पुं। लघुतालीशपत्रे। वै.

**उदरामयः।** पुं। अतिसाररोगे। See अ-तीसारः।

**उदरामयकुम्भकेशरी।** पुं। प्लीहाधिकारे रसः। अत्र शुल्वं ताम्रं, कटुकं त्रिकटुकम्, लवणानि पञ्चलवणानि, कणामूलं पिप्पलीमूलम्। अत्र हृद्याः चव्यं चित्रकचूर्णञ्च न प्रयच्छन्ति। पाठः—"रसगन्धकभस्मताम्रकं कटुकक्षारयुतं सटङ्कणं। कणमूलकचव्यचित्रकं सयमानीलवणानि रामठं। समभागमिदं विभावयेत् खरतापे लथ जम्बुशारिणा॥ उदरामयकुम्भकेशरी रस एष प्रथितोऽस्य माषकः॥ सुरवार्य्यनु दापयेद्भिषक्......। र.सा.सं.। পারা, গন্ধক, তামা, ত্রিকটু, যবক্ষার, সোহাগার খৈ, পিপুলমূল, চই, চিতেরমূল, পঞ্চলবণ,যমান এবং হিং প্রত্যেক সমান ভাগ। লেবুর রসে মর্দ্দন। মাত্রা ১মাষা।

**उदरारिरसः।** पुं। उदराधिकारे रसः। वश्चीचीरैण स्नुहीचीरेण। पाठः—"पारदं शुल्कितुत्थञ्च जैपालं पिप्पलीसमं। आरग्वधफलान्मज्जा वश्चीचीरेण मर्द्दयेत्॥ माषमात्रां वटीं खादेत् स्त्रीणां जलोदरं जयेत्। चिञ्चाकञ्जरसञ्चानु पथ्यं दध्योदनं हितम्॥" र.सा.सं.।

**उदरावर्त्तः।** पुं। नाभौ। रा.नि.व.१८।

**उदरावेष्टः।** पुं। शारीरकृमिभेदे। পাটাকৃমি। शार्ङ्.७अ.। See कृमिः।

**उदरिणी।** स्त्री। गर्भवत्यां। हे.च.। [हे.च.।

**उदरिलः।** त्रि। महोदरयुक्ते। ভুঁড়িযুক্ত।

**उदरी।** त्रि। उदरिले। हे.च.।

**उदर्कः।** पुं। धुस्तूरवृक्षे। मदनकण्टके। ময়না কাঁটা। गौ.कचिकं।

**उदर्चिः।** पुं। अग्नौ। मे.।

**उदर्दः।** पुं। Erysipelas. रोगविशेषे। तल्लक्षणं यथा—"वरटीदष्टसंस्थान: शोथ: सञ्जायते वहि:। सकण्डूस्तोदबहुलः छर्द्दिज्वरविदाहवान्। उदर्द्दमिति तं विद्याच्छीतपित्तमथापरे। वाताधिकं शीतपित्तमुदर्द्दश्च कफाधिकम्॥" मा.नि.।

**उदर्दप्रशमनवर्गः।** पुं। उदर्दशमनयोगविशेषे। यथा—तिन्दुकपियालबदरखदिरकदरसमपर्णाश्वकर्णार्जुनासनारिमेदा इति दश। তেঁদ, পেয়াল, কুল, খদির, শ্বেতখদির, ছাতিম, শাল, অর্জ্জুন, পীতশাল, বিট্‌খদির। च.सू. ४अ.। [Wil.

**उदर्षः।** पुं। Scarlet fever. ज्वरविशेषे।

**उदलावणिकः।** त्रि। लवणोदकसिद्धव्यञ्जने। ह्ला.।

**उदश्वित्।** क्ली। अर्द्धजलतक्रे। অর্দ্ধেক জল ঘোল। र.मा.अम.। "दध्यम्भसी यदि समे तदुदश्विदाहुः।" रा नि.व.१५। प.प्र.१ख.। गुणा:—लेपेन कुष्ठनाशनं तृष्णादाहसुखशोषघ्नश्च। राज.। पित्तश्लेष्मघ्नम्। रा.नि.व.१५। [वै निघ.।

**उदात्यूहः।** पुं। जलकाके। পানকৌড়ী।

**उदानः।** पुं। कण्ठस्थवायौ। "उदानः कण्ठदेशस्थः।" भा.। "उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च। वाक्प्रवृत्तिः प्रयत्नोर्जोबलवर्णादिकर्म्म च॥" च.। "उदानो नाम यस्तूर्द्ध्वमुपैति

पवनोत्तम: । तेन भावितगीतादिविशेषोऽभिपव र्त्तते । ऊर्द्ध्वजत्रुगतान् रोगान् करोति च विशेषत: ॥" सु.नि १अ.। "तत्कर्म ऊर्द्ध्वनयनम् ।" वा. मू.११अ.। उदरावर्त्ते। सर्पे । नाभौ । मे.नत्रिकं । पद्मरिण । ग्र.र. ।

**उदार:** । पुं । दीर्घशालौ । शस्यविशेष ।

**उदावर्त्त:** । पुं । नाभौ । सर्पविशेषे । Disease of the bowells, iliac passion. रोगविशेषे । मूदो । मे । हे.च । रोगेणानेन मलमूत्रवायुरोधो भवति । तस्य निदानं सम्प्राप्तिश्च । "वातविण्मूत्रजृम्भाश्रुचवोद्गारवमीन्द्रियजत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भव: ॥" क्रमेण लक्षणं यथा —वातमूत्रपुरीषाणां सङ्गोध्मानं क्लमोरुजा । जठरे वातजाश्चान्ये रोगा: स्यु: वातनिग्रहात् ॥ आटोपशूलौ परिकर्त्तिका च सङ्ग: पुरीषस्य तथोर्द्ध्ववात: । पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ वस्तिमेहनयो: शूलं मूत्रकृच्छ्रं शिरोरुजा । विनामो वङ्क्षणानाह: स्याल्लिङ्गं मूत्रनिग्रहे ॥ मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात् पवनात्मका: स्यु: । तथाचिनासावदनामयाश्च भवन्ति तीव्रा: सहकर्णरोगै: ॥ आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि । शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्रा: सह पीनसेन ॥ मन्यास्तम्भ: शिर:शूलं अर्दितार्द्धावभेदकौ । इन्द्रियार्थाश्च दौर्ब्बल्यं चवथो: स्याद्विधारणात् ॥ कण्ठास्यपूर्णत्वमतीव तोद: कूजश्च वायोरथवा प्रवृत्ति: । उद्गारवेगेऽभिहते भवन्ति घोरा विकारा: पवनप्रभूता: ॥ कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वरा: । कुष्ठवीसर्पहृल्लासा: छर्द्दिनिग्रहजा गदा: ॥ मूत्राशये वै गुदमुष्कयोश्च शोथोरुजा मूत्रविनिग्रहश्च । शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते च शुक्रे ॥ तन्द्राङ्गमर्द्दावरुचि: श्रमश्च क्षुधाभिघातात् कृशता च दृष्टे: । कण्ठास्यशोष: श्रवणावरोध: तृष्णाभिघातात् हृदये व्यथा च ॥ श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्म: । जृम्भाङ्गमर्द्दोऽक्षिशिरोऽतिजाड्यं निद्राभिघातादथवापि तन्द्रा ॥ वायु: कोष्ठानुगो रूक्षै: कषायकटुतिक्तकै: । भोजनै: कुपित: सद्य उदावर्त्तं करोति च ॥ वातमूत्रपुरीषासृक्कफमेदोवहानि वै । स्रोतांस्युदावर्त्तयति पुरीषं चातिवर्त्तयेत् ॥ ततो हृद्वस्तिशूलार्त्त: हृल्लासारतिपीडित: । वातमूत्रपुरीषाणि कृच्छ्रेण लभते नर: ॥ इति । मा.नि.। "त्रिवृत्सुधापत्रतिलादिशाकग्राम्यौदकानूपरसैर्यवान्नं । अन्यैश्च सृष्टानिलविड्भिरद्यात् तथा प्रसन्ना गुड़शीधुपायी ॥ रस.र. ।

**उदावर्त्ता (वृत्ता)** । स्त्री । Difficult menstruation. वायुजन्यस्त्रीयोनिरोगविशेषे । सा कष्टेन सफेनिलं रजो मुञ्चति । "सफेनिलमुदावृत्ता रज: कृच्छ्रेण मुञ्चति ।" भा.म.४भ.योनिरो चि. ।

**उदित:** । पुं । नीवारे । उड़िधान । प.मु. ।

**उदीच्यम्** । क्ली । ह्रीबेरे । सुगन्ध वाला । प. मु. । रा.नि.व.१० । तें कुरुवेरु । सि.यो.ज्व.चि. षड़ङ्गपानीये । "चन्दनोदीच्यनागरै: ।" सि.यो. ज्व.चि.किराताद्ये । "चन्दनोदीच्यवत्सकै: ।"

**उदीच्यकाष्ठम्** । क्ली। तोपचिनीतिख्यातद्रव्ये। वै निघ. ।

**उदीक्षणम्** । क्ली । दर्शने ।

**उदु(दू)खलम्** । क्ली । गुग्गुलौ । मे. । लौहभाण्डे । हागानदिस्ते इति लोके । तण्डुलकण्डनार्थपात्रे । उँथ्ली इति च लोके । अम. ।

**उदुम्बर:** । पुं । Glomerous fig tree, (Ficus glomerata.) यज्ञाङ्गवृक्षे । यज्ञडुमुर गाछ । गुर्ज. हिं गुलार । मं उम्बराचेझाड़ । उत्. उदुम्बर । ज.द. । सु.सू.३८अ.न्यग्रोधादि: । गुणा:—"उदुम्बर: शीतल: स्याद्भग्नसन्धानकारक:। व्रणरोपणकृद्रुक्षो मधुरस्तुवरो गुरु: । अस्थिसन्धानकृद्वर्ण्यो कफपित्तातिसारकान् । योनिरोगं नाशयति वल्कश्चैवास्य शीतलं। दुग्धदं तुवरं गर्भ्यं व्रणनाशकरं स्मृतं । कोमलञ्चास्य च फलं स्तम्भकृत्तुवरं मतं । हितकारि तृषापित्तकफरक्तरुजापहं । मध्यमं कोमलं स्वादु शीतलं तुवरं मतम् । पित्ततृषामोदकरं रक्तस्रुतिवमोहरम् ॥ वै.निघ.। अन्यः: गुरु: कफपित्तरक्तघ्नश्च । हिम: रूक्ष: पित्तकफास्रजित् मधुर: वर्ण्य: व्रणशोधनरोपणश्च । मद.व.पू। भा.पू.१भ.वटादिव. । तथा अस्य पक्वफलगुणा: मधुरं हिमं क्रमिकरं रक्तपित्ततृष्णादाहमूर्च्छाघ्नञ्च। सुपक्वफलगुणा:—अतिशीतलं मधुरं पित्तश्रमशोषघ्नञ्च । अपक्वफलगुणा:—कषायत्वं दीपनत्वं रु-

श्विकरत्वं मांसकरत्वं शोणितविकारजनकत्वञ्च । अस्य वल्कलगुणाः—शीतं कषायं व्रणघ्नं गर्भसंरक्षणं स्तन्यजनकञ्च । रा.नि.व.११ । कुष्ठविशेषे । ताम्रे । रा.नि.व.१३ । जन्तुफले । भा.पु.१भ. । क्ली । कर्षे, २ तो. । प.प्र.१ख. । ताम्रे । मद.व. ४ । तोलमात्रे । वै निघ.पामा.चि.त्रिफलादिलेह्ये । मेढ्रे । त्रिका. । [व.१ ।

**उदुम्बरच्छदा** । स्त्री । क्षुद्रदन्तीवृक्षे । मद.

**उदुम्बरदला** । स्त्री । क्षुद्रदन्तीवृक्षे । रा.नि. व.६ । [मा.। लघुदन्तीवृक्षे । भा.पु.१भ. ।

**उदुम्बरपर्णी** । स्त्री । दन्तीवृक्षे । प.मु. । र.

**उदुम्बरमशकः** । पुं । मूषिके । वै.निघ. ।

**उदुम्बरी** । स्त्री । काकोदुम्बरिकायाम् । मं काळाउंबर । रा.नि.व.११ ।

**उदूखलम्** । क्ली । तण्डुलादिकण्डनार्थं काष्ठपात्रे । উখলি । गुग्गुलौ । मे.लत्रिकं ।

**उदूखलसन्धिः** । पुं । उदूखलाकारग्रीवोद्गत सन्धौ । भा. । कक्षावङ्क्षणदशनसन्धिः । सु.शा ५अ. ।

**उद्गमः** । पुं । वान्तौ । वमि । वै.निघ. ।

**उद्गमनीयम्** । क्ली । धौतवस्त्रे । ধোওয়া কাপড় । अम. ।

**उद्गारः** । पुं । उद्वमने । कण्ठगर्जने । ঢেকুর इति भाषा । जटा. । "ग्लानेरोजःक्षयाद्दुःखादजीर्णाच्च श्रमोद्भवात् । उदानकोपादाहारस्यास्थिरत्वाच्च यद्भवेत् । पवनस्योर्द्ध्वगमनं तमुद्गारं प्रचक्षते ॥" शार्ङ्ग.२६अ. । कर्द्याम् । रा.नि.व.२० ।

**उद्गारकमणिः** । पुं । प्रवाले । পলা । मं पोंवळे । रा.नि.व.१३ ।

**उद्गारणम्** । क्ली । उद्गारकरणे ।

**उद्गारशुद्धिः** । स्त्री । उद्गारानवरोधे, सधूमाम्लोद्गाराभावे । [जीरके । भा.पु.१भ. ।

**उद्गारशोधनः** । पुं, क्ली । श्वेतजीरके, कृष्ण-

**उद्गारशोधिनी** । स्त्री । जीरके । वै.निघ. ।

**उद्गि(द्गी)रणम्** । क्ली । उद्गारे । वमने । वि-ज.र. ।

**उद्ग्राहः** । पुं । उद्गारे । ঢেকুর । वै.निघ. ।

**उद्घः** । पुं । देहस्थवायौ । मे.घत्रिकं । हस्तपुटे । हे.च. ।

**उद्घटम्** । क्ली । वार्त्ताकुपुष्पे । वै.निघ. ।

**उद्घर्षणम्** । क्ली । गात्रादिघर्षणे । इष्टकाखण्डेनोद्घर्षणे कण्डूकोठनाशः शिरामुखकारकत्वञ्च । राज. ।

**उद्घसम्** । क्ली । मांसे । हारा. ।

**उद्घाटकम्** । क्ली । घटीयन्त्रे । हे.च. ।

**उद्घातः** । पुं । पादस्खलने । कालभेदे । मे.तत्रिकं । पवनाभ्यासयोगाय कुम्भकादित्रये । विश्व. तत्रिकं । मस्ते । त्रिका. । [कीटे । ডাঁশ ।

**उद्दंशः** । पुं । मत्कुणे । উকুণ । हे.च. । दंश-

**उद्दण्डपालः** । पुं । मत्स्यविशेषे । দাঁড়িকা গাছ । सर्पविशेषे । मे. ।

**उद्दानकः** । पुं । शिरीषवृक्षे । रा.नि.व.९ । तैं कॉंडगोगुपुल्यु । चुल्ल्यां । विश्व. ।

**उद्दन्तुरः** । त्रि । उत्कटदन्ते, करालदन्ते । मे. ।

**उद्दारदा** । स्त्री । शाकतरौ । সেগুন । मं साग । वै.निघ. ।

**उद्दारा (री)** । स्त्री । गुडूच्याम् । श.च. ।

**उद्दालः (कः)** । पुं । (Cordia myxa or Latifolia.) बहुवारवृक्षे । চালিতা গাছ । हिं बहुआरि, लसोड़ा । प.मु. । अम.रा.नि.व.११ । See बहुवारः । वारण्यकोद्रवे । मद.व.१० ।

**उद्दाला** । स्त्री । भारी इति महाराष्ट्रे ।

**उद्दिष्टः** । पुं । बदरवृक्षे ।

**उद्दीपः (प्रः)** । पुं । गुग्गुलौ । श.टी.भ. ।

**उद्देशः** । पुं । गिरिगण्डकूपे । हारा. । समासकथने । "समासकथनमुद्देशः, यथा शल्यमिति ।" सु.उ.६५अ. । उपदेशे । हारा. ।

**उद्देहिका** । स्त्री । उत्पादिकायां । वालवी इति ख्याते महाराष्ट्रीयकीटविशेषे । পেদোপোকা । हारा. ।

**उद्धमः** । पुं । कष्टश्वासे ।

**उद्धर्षणम्** । क्ली । रोमाञ्चे ।

उद्रान्तः । पुं । निर्मदकरिणि । अम. ।

उद्गारा । स्त्री । गुडूच्याम् । अ.च. ।

उद्गूलनम् । क्ली । सतैलसवङ्गकर्पूरकस्तूरीमरिचलवङ्गचूर्णेषु । पाकराजः ।

उद्गूषणम् । क्ली । रोमाञ्चे । हला. ।

उद्गृतः । त्रि । परिभुक्तोज्झिते । मे.तत्रिकं ।

उद्घटः । पुं । कच्छपे । सूर्पे । मे.टत्रिकं ।

उद्भवः । पुं । उत्पत्तौ । अम. ।

उद्भावः । पुं । उत्पत्तिः ।

उद्भिजः । त्रि । उद्भिज्जे । अ.टी.र. ।

उद्भिज्जः । त्रि । उद्भिदो जाते । इन्द्रगोपमण्डूकादौ । अम. ।

उद्भित् (द्) । त्रि । गुल्मादौ । तत्र पञ्चधा— तरुः गुल्मः लता वल्ली तृणञ्च । अम. ।

उद्भिदम् । क्ली । भूमिमुद्भिद्य उद्गमञ्जलस्थाने । वा टी.हेमा.। सामुद्रलवणे । পাঙা লবণ । र.मा.। Culinary salt. साम्बिलवणे । रस.र.अर्शः चि. । त्रि । तर्वादौ ।

उद्भूतः । त्रि । उत्पन्ने, जाते ।

उद्भेदः । पुं । अङ्कुरे । रा.नि.व.२ ।

उद्भ्रमः । पुं । उद्वेगे । अम. ।

उद्यमः । पुं । उद्योगे ।

उद्यानम् । क्ली । उपवने । उद्यानं स्वयमपरैः समन्तु लोकैरन्येषां विभववताञ्च पुष्पवाटी । हला. ।

उद्यावः । पुं । मिश्रणे । संयोजने ।

उद्योगः । पुं । चेष्टायाम् ।

उद्रः । पुं । जलमार्जारे । উদ্বিড়াল । हारा. । जलनकुले । ধেঁড়ে इति भाषा । त्रिका. ।

उद्रथः । पुं । द्रुमविशेषे । कुक्कुरशौका । ताम्रचूडे । कुकड़ा । मे. । पाचके ।

उद्राङ्कः । पुं । रक्तचित्रके । वै.निघ. ।

उद्रिक्तचित्तता । स्त्री । पानात्ययरोगे । मत्ततायाम् । रा.नि.व.२० ।

उद्रेकः । पुं । रजोगुणे । रा.नि.व.२१ । मद्यातिरेके । भा.म.१भ. ।

उद्वत्सरः । पुं । संवत्सरे । हे.च. । [कच्चा ।

उद्वमनम् । क्ली । उद्गिरणे, वान्तौ । वमि

उद्वर्त्तनम् । क्ली । विलेपने । घर्षणे । मे.नचतुष्कं । तद्गुणाः—"उद्वर्त्तनं वातहरं कफमेदोऽनिलापहम् । स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परं । उद्वर्त्तनं हरिद्राद्यैः कण्डूवैवर्ण्यरौक्ष्यजित् । तिलैर्नीवर्त्तनं कण्डूरौक्ष्यत्वग्दोषनाशनम् ॥" राज. । "उद्वर्त्तनं कफहरं मेदसः प्रविलापनम् । स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ।" वा.सू.२अ. । "उद्वर्त्तनं वातहरं भ्राजकानलदीपनं । गात्रस्थिरत्वसुखिताल्वक्प्रसादमृदुत्वकृत् ॥" मद.व.१२ । अर्द्दने । च.द.विसूचि. । [याम् ।

उद्वहः । पुं । पुत्रे । उदानवायौ । स्त्री । कन्या-

उद्वान्तः । पुं । निर्मदगजे । त्रि । उद्वमिते । मे.तत्रिकं ।

उद्वाहनी । स्त्री । वराटके ।

उद्विड़ालः । पुं । जलविड़ाले । उद्बेताल इति भाषा । ধেঁড়ে इत्यपि क्वचित् ।

उद्वृत्तः । त्रि । उत्थिते । [त्रिका. । चाश्लध्ये ।

उद्वेगम् । क्ली । गुवाकफले । रा नि.व १२ ।

उधस् । क्ली । आपीने । গাভীর পালান । हला. ।

उध्मान(र)म् । क्ली । चुल्लाम् । अ.टी.भ. ।

उन्दकः । पुं । धवलयावनाले । শাদা জনার, যওয়ারা । रा.नि.व.१६ ।

उन्दरः । पुं । मूषिके ।

उन्दिरमारी । स्त्री । मूषिकार्यां, तन्नाम्ना कोङ्कणे प्रसिद्धायां । इन्दूरमारी । गुणाः—"मूषकारी तु कटुका नेत्र्या चाखुविषापहा । व्रणदोषं नेत्ररोगं नाशयेदिति च स्मृतम् ॥" रा.नि.व.४ ।

उन्दुकः । पुं । शरीरैकदेशे । भा. ।

उन्दुरः । पुं । मूषिके । [वा. ।

उन्दुरुः (कः) । पुं । मूषिके । वन्यमूषिके । व-

उन्दुरुकर्णी (र्णिका) (र्णी) । स्त्री । आखुकर्णीलतायाम् । इन्दूरकाणी । रा.नि.व.३ । दन्तीभेदे । उन्दुरुकर्णी द्रवन्तीति ड. ।

**उन्दुरुपर्णी** । स्त्री । आखुकर्णी । रा.नि.व.३।

**उन्दूवरम्** । क्ली । ताम्रे । भा. ।

**उन्द्रः** । पुं । कूलचरपशुभेदे । উদ্বিড়াল । सु.
शा.३८अ. । See कूलेचरः ।

**उन्नम्** । क्ली । सुरते । त्रि । क्लिन्ने । मे.नद्विकं ।

**उन्नाहम्** । क्ली । काञ्जिके । अम. ।

**उन्मत्तः** । पुं । श्वेतधुस्तूरे । শ্বেত ধুতুরা । धु-
स्तूरवृक्षे । प.मु. । र.मा.,रा.नि.व.१० । मुचकुन्द-
वृक्षे । त्रि । उन्मादविशिष्टे । मे. ।

**उन्मत्तकारिणी** / **उन्मत्ता** } स्त्री । दुग्धिकायाम् । हिं दुधियार ।

**उन्मत्तरसः** । पुं । शीताङ्गसन्निपाते रसः । "र
सगन्धकतुल्यांशं धुस्तूरफलजद्रवैः । मर्द्दयेद्दिनमेकन्तु
तुल्यांशं त्रिकटुं क्षिपेत् ॥" त्रिकटुमिति त्रिकटुचूर्णं
प्रत्येकं रसतुल्यं । र.सा.सं.शीताङ्ग.सान्निपात ज्व. ।

**उन्मनः** । पुं । उन्मादवायौ । द्रोणपरिमाणे
(१६ श्र.) । प.प्र.१भ. । |२०।

**उन्मनायितम्** । क्ली । उन्मादे । रा.नि.व.

**उन्मन्थकः** । पुं । कर्णपालीगतरोगविशेषे ।
तल्लक्षणं—"कर्णं बलाद्वर्द्धयतः पाल्यां वायुः प्रकु-
प्यति । कफं संगृह्य कुरुते शोथं स्तम्भवेदनम् ।
उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ मा.
नि. । सु.चि.२५अ. ।

**उन्मादः** । पुं । (Mania.) वायुरोगे । পাগল
রোগ । स च मानसिको व्याधिः षड्विधश्च वात
पित्तकफसन्निपातदुःखविषसेवनाद्भवति । सम्प्राप्तिः
—मदयन्त्युन्मदा दोषा यस्मादुन्मार्गगामिनः ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः ॥
एकैकशः सर्व्वशश्च दोषैरत्यर्थमूर्च्छितैः । मान-
सेन च दुःखेन स पञ्चविध उच्यते ॥ विषा-
द्भवति षष्ठश्च यथास्वं तत्र भेषजं । स चाप्रवृद्धस्त-
रुणो मदसंज्ञां बिभर्त्ति च ॥ विरुद्धदुष्टाशुचिभोज-
नानि प्रधर्षणं देवगुरुद्विजानां । उन्मादहेतुर्भय-
हर्षपूर्व्वो मनोविघातो विषमाश्च चेष्टाः ॥ इति
तद्धेतुनिदानम् । मा.नि. । यद्युन्मादः समुद्दिष्टः
श्लेष्मपित्तसमुद्भवः । तथापि न विना वातादुन्मादो
जायते ध्रुवम् ॥ पथ्यं यथा अभ्यञ्जनं स्नापनमास
नश्च निद्रा सुशीतान्यनुलेपनानि । गोधूममुद्गारुण-
शालयश्च धारोष्णदुग्धं शतधौतसर्पिः ॥ घृतं नवी-
नश्च पुरातनश्च कूर्म्मामिषं धन्वरसा रसालं । पु-
राणकुष्माण्डफलं पटोलं ब्राह्मीदलं वास्तुकतण्डुली-
यं ॥ खराश्वमूत्रं गगनाम्बु पथ्या सुवर्णचूर्णानि च
नारिकेलं । द्राक्षा कपित्थं पनसश्च वैद्यैः विधेयमु-
न्मादगदेषु पथ्यम् ॥ राज । अश्वस्योन्मादरोगे । ल-
क्षणं यथा —"प्रकोपकारणैः प्रोक्तैः कुपिते मात-
रिश्वनि । उन्मादो जायतेऽश्वस्य तस्य रूपञ्च वक्ष्य
ते । वातुमिच्छति यः स्थित्वा रज्जुं दन्तैश्च खा-
दति । खादत्यकस्मात्यवसं पुनश्चैव न खादति ।
कदाचिद्बुध्यते संज्ञां कदाचिच्च न बुध्यते ॥" ज.
द.५६अ. । उन्मादयत्ने । अ.टी. ।

**उन्मादगजाङ्कुशः** । पुं । उन्मादाधिकारे
रसः । अत्र महाराष्ट्री ब्रह्मयष्टिः । বামুনহাটী ।
विषमुष्टिः । कुचिला । अर्कचक्रिका, ताम्रचक्रि-
कायां । पाठः—त्रिदिनं कनकद्रावैः महाराष्ट्रीद्रवैः
पुनः । विषमुष्टिजलैः सूतं समुत्थाप्यार्कचक्रिकां ।
कृत्वा तस्यां सगन्धां तां युक्त्या बन्धनमाचरेत्॥ तत्स-
मं कानकं बीजमभ्रकं गन्धकं विषं । मर्द्दयेत्त्रिदिनं
सर्व्वं वल्लमात्रं प्रयोजयेत् ॥…… । পারা যথেচ্ছ
পরিমাণে লইয়া ধুতুরা, বামনহাটী এবং কু-
চিলার রসে এক এক দিন ঊর্দ্ধপাতন করি-
বে। পরে তাহার সহিত সমভাগ গন্ধক মি-
শাইয়া বন্ধনার্থ অর্কচক্রিকায় রাখিয়া অগ্নি
পুট দিবে। পরে উহার সহিত সমভাগ ধু-
তুরাবীজ, অভ্র, গন্ধক এবং বিষ দিয়া এক-
ত্র জলে মর্দ্দন করিবে। र.सा.सं. ।

**उन्मादपर्पटीरसः** । पुं । उन्मादाधिकारे
रसः । अत्र पर्पटीरसः क्षेत्रपर्पटीरसः । ক্ষেৎ-
পাপ্ড়ার রস। "कृष्णधुस्तूरजैर्बीजैः पञ्चभिः प
र्पटीरसः । सम्प्रयोज्यः प्रशान्त्यर्थमुन्मादं भूतसम्भ-
वम् ॥" र.सा.सं. ।

**उन्मादभञ्जनरसः** । पुं । उन्मादाधिकारे ।
अत्र किरातं भूनिम्बं । इन्द्रवारुणी गोरक्षकर्कटी।
রাখালশশা । पाठः—त्रिकटु त्रिफला चैव गज-
पिप्पलिका तथा । विडङ्गञ्च देवदारु किरातं
कटुकी तथा । कण्टकारी च यष्टीन्द्रयवं चित्रका-
स्तैव च । बला च पिप्पलीमूलं मूलञ्च वीरणस्य

च। शोभाञ्जनस्य बीजानि त्रिफला चेन्द्रवारुणी। बङ्गं रूप्यमभ्रकञ्च प्रवालं समभागिकं। सर्व्वचूर्णसमं लौहं सलिलेन विमर्द्दयेत्॥……। र.सा.सं.।

**उन्मादभञ्जिनी**। स्त्री। उन्मादाधिकारे रसविशेषे। अत्र कटुरोहिणी कटुकी। गिरिमल्लीबीजं कुटजबीजं। पाठः—"शुद्धं मनःशिलाचूर्णं सैन्धवं कटुरोहिणी। वचा शिरीषबीजञ्च हिङ्गु च श्वेतसर्षपं। करञ्जबीजं त्रिकटु मलं पारावतस्य च। एतानि समभागानि गोमूत्रैर्वटिकां कुरु। गिरिमल्लीबीजसमां छायाशुष्कांश्च कारयेत्। प्रातःसन्ध्यानिशाकाले चक्षुषोरञ्जनं हितम्। मधुरादिरसैश्चाद्य रात्रावपि जलेन च॥"……। र.सा.सं.।

**उन्मादाङ्कुशरसः**। पुं। उन्मादे रसः। पाठः—त्रिदिनं कनकद्रावैर्महाराष्ट्रीरसैः पुनः। विषमुष्टिद्रवैः सूतं समुत्थाप्यार्कचक्रिकां। कृत्वा तस्यां सगन्धान्तां युक्त्या बन्धनमाचरेत्। तत्समं कानकं बीजमभ्रकं गन्धकं विषं। मर्द्दयेत्त्रिदिनं सर्व्वं वल्लमात्रं प्रयोजयेत्। कनकं धुस्तूरबीजं। महाराष्ट्री जलपिप्पली भार्गी वा। विषमुष्टिः कुचेलकं। एभिरूर्द्धपातनं कार्य्यं। पारदादिकं समभागं ग्राह्यम्। उन्मादगजाङ्कुश इति नामान्तरम्। भैष.रसे.चि.।

**उन्मादिनी**। विजयायाम्। सिद्धि।

**उन्मानम्**। क्ली। द्रव्यतोलकपरिमाणे। पुं। द्रोणपरिमाणे। प.प्र.१ख.।

**उन्मार्गी**। पुं। पञ्चविधभगन्दरान्यतमभगन्दररोगविशेषे। अर्शभगन्दर। तस्य लक्षणम्—"मूढेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदावगाढ़पुरीषोन्मिश्रमपानेनाधःप्रेरितं असम्यगागतं गुदं क्षिणोति, तदा क्षतनिमित्तः कोथ उपजायते। तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथं भूमाविव जलप्रक्लिन्नायां क्रिमयः सञ्जायन्ते। ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति,तस्य तैर्मार्गैः क्रिमिकृतैः वातमूत्रपुरीषरेतांसि अतिनिःसरन्ति तं भगन्दरं उन्मार्गिणमित्याचक्षते।" सु.नि.४अ.।

**उन्मीलनम्**। क्ली। उन्मेषे। है.च.।

**उन्मेषः**। पुं। नेत्रोन्मीलने। है.च.।

**उपकण्ठम्**। क्ली। अश्वस्याक्रन्दिते। कण्ठसमीपे। है.च.।

**उपकरणम्**। क्ली। उपादाने।

**उपकर्णिका**। स्त्री। मूषकर्णिकायाम्। वै.निघ.१भ.अर्श-चि.विड़ङ्गादिचूर्णलेहे।

**उपकारिका**। स्त्री। पिष्टकभेदे। मे.कत्रिकं।

**उपकालिका**। स्त्री। जीरकभेदे। श्वेतजीरके। कलोञ्जीजीरके। मद.व.२। कृष्णजीरके। भा.पू.१भ.। पिप्पल्याम्।

**उपकुञ्चः (कः)**। पुं। कृष्णजीरके। वै.निघ.।

**उपकुञ्चिः (का) (ञ्ची)**। स्त्री। कलोञ्जीजीरके। वृहज्जीरके। सूक्ष्मैलायाम्। अम.। कृष्णजीरके। स्वल्पजीरके। छोट जीरा। भा.पू.१भ.रवा.। गुणाः—"तिक्ता कट्वी चोष्णा च दीपनी। हृष्या चाजीर्णशमनी गर्भाशयविशोधिनी। आमानवातगुल्मञ्च रक्तपित्तं क्रमींस्तथा। कफं पित्तं चामदोष वातं शूलञ्च नाशयेत्॥" वै.निघ.।

**उपकुम्भा**। स्त्री। दन्तीवृक्षे। वै.निघ.।

**उपकुल्या (का)**। स्त्री। पिप्पल्याम्। प.मु.,रा.नि.व.६। च.द.अश्म चि.एलादौ।

**उपकुशः**। पुं। Gum-boil. तन्नामकदन्तवेष्टजपित्तरक्तजरोगविशेषे। तत्र वेष्टदाहपाकाट्लचलनं आघट्टिते रक्तस्रावविदने, स्रुते च रक्ते स्फीतिर्मुखपूतिता च जायते। लक्षणं—"वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च। आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनं। आध्मायन्ते स्रुते रक्ते मुखं पूतिः च जायते। भा.म.४भ.मु.रो.चि.। अश्वमुखरोगे, तत्र दन्तमांसाद्रुधिरस्रावः दन्तचलनञ्च भवति। ज.द.।

**उपकूपः**। पुं। दीर्घिकायाम्। है.च.।

**उपकोलिका**। स्त्री। कृष्णजीरके। भा.।

**उपक्रमः**। पुं। चिकित्सायाम्। रा.नि.व.२०। आरम्भे। मे.मचतुष्कं।

**उपक्रोष्टा**। पुं, स्त्री। गर्द्दभे।

**उपघातः**। पुं। रोगे। रा.नि.व.२०।

**उपघातकः**। पुं। आरग्वधवृक्षे। वै.निघ.।

**उपघ्नः**। पुं। निकटाश्रये। अम.।

**उपचक्रः**। पुं। हंसविशेषे। टकोर। "चक्रो-

दानुपचक्रकान् ।" च.चि.२६अ.। गुणाः—"कषायः स्वादुलवणस्तथः केश्यो रुचिप्रदः ।" सु.सू.४६अ.। हृद्यं लघु उष्णवीर्य्यं कटुपाकि बलाग्निवर्द्धकञ्च । राज.। See चक्रवाकः । [रा.नि.व.२०। हला.।

**उपचर्य्या** । स्त्री । चिकित्सायाम् । सेवायाम् ।

**उपचक्षुः** । क्ली । चक्षुःप्रतिनिधौ । चश्मा इति भाषा । [नि.व.२० । हे.च. ।

**उपचारः** । पुं । चिकित्सायां । सेवायाम् । रा.

**उपचार्य्यः** । पुं । चिकित्सायाम् । हे.च. ।

**उपचितः** । त्रि । दग्धे । मे. ।

**उपचित्रः(त्रा)** । पुं, स्त्री । उपचित्रः इति म-द.व.१। पृश्निपर्णीरूपे। চাকুলিয়া । रा.नि.व.४ । दन्तीद्रवे । प.मु.। र.मा.। आखुकर्ण्याम् । ইন্দুরকাণী পানা । मे. । बृहद्दन्त्यां । भा.पू.१भ. । वै. निघ.वा.व्या.विषगर्भतैले ।

**उपचित्रका** । स्त्री । क्षुद्रदन्त्याम् ।

**उपचिल्ली** । स्त्री । श्वेतचिल्लीशाके । শ্বেত চিল্লী (বেতোশাক)। रा.नि.व.७ ।

**उपजिह्वा (ह्विका)** । स्त्री । जिह्वागतमुखरोगे । दुष्टकफरक्ते जिह्वामुन्नमय्य निस्रती लालास्रावकण्डूदाहशोथानुत्पादयतः । मा.नि.। लक्षणम् —"जिह्वाग्ररूढ़ः श्वयथुर्हि जिह्वामुन्नम्यजातः कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति॥" सु.नि.१६अ.। कीटविशेषे । উপদো পোকা । हे.च. । मूलजिह्वायाम् । আলজিব । रा.नि.व.१८ । अश्वस्य मुखरोगभेदे । अत्र जिह्वाधःस्फीतिः । लक्षणम्—"अधस्तादथ जिह्वायाः श्वयथुर्यस्य जायते। तं विन्द्यादुपजिह्वाख्यं मुखरोगन्तु वाजिनाम् ॥" ज.द.२९अ. ।

**उपतप्ता** । पुं । रोगे । अ.टी.भ. ।

**उपतापः** । पुं । रोगे । उत्तापे । मे.पचतुष्कं ।

**उपदग्धः** । त्रि। ईषद्दग्धे। আঁকা। सु.सू.४६अ.।

**उपदन्तः** । पुं । कलुञ्जुरी । কাঁচা ধনে।

**उपदंशः** । पुं । The venereal disease. सप्तशीलरूपे । रा.नि.व.४ । शिग्रौ वृक्षे । সজিনা গাছ। रा.नि.व.७ । चवके । চাট্‌ । हला. । सि. यी,मद्रा.चि.। "स्त्रग्वी सभक्ता पिशितोपदंशाम्।" व्यञ्जने । रा.नि.व.२० । मेढ्ररोगे । বাও রোগ । निदानादि—"हस्ताभिघातान्नखदन्तपातादधावनादत्युपसेवनाद्वा । योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधाप्रचारैः॥" स च वातादिभेदात्पञ्चधा। तल्लक्षणं—"सतोदभेदैः स्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशं। पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तात्पिशितावभासैः। स्फोटैः सकृष्णैः रुधिरं स्रवन्तं रक्तात्मकं पित्तसमानलिङ्गं । सकण्डुरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन । नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम् ॥"मा. नि. । "अतिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामां अचौक्ष्यसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषयुक्तनिपातनादर्द्दनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्ष्यसलिलप्रक्षालनादवपीड़नाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाप्रक्षालनादिभिर्मेढ्रमार्गस्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति तमुपदंशमाचक्षते।" सु.नि.१२ । विशीर्णमांसं क्रमिभिः प्रजग्धं मुष्कावशेषं परिवर्ज्जयेत्तम्...... । असाध्यलक्षणं। पथ्यं यथा—छर्द्दिर्विरेको ध्वजमध्यनाड़ीवेधो जलौका परिपातनञ्च । सेकः प्रलेपो यवशालयश्च धन्वामिषं मुद्गरसो घृतानि । कठिल्लकं शिग्रुफलं पटोलं शालिञ्चशाकं वनमूलकञ्च । तिक्तं कषायं मधु कूपवारि तैलञ्च हन्यादुपदंशरोगम्" इति । अपथ्यं यथा—"दिवानिद्रां मूत्रवेगं गुर्व्वन्नं मैथुनं गुड़म् । आयासमम्लं तक्रञ्च वर्ज्जयेदुपदंशवान् ॥" पथ्यापथ्यम् ।

**उपदंशक्षमः** । पुं । शिग्रुवृक्षे । वै.निघ. ।

**उपदलम्** । क्ली । पुष्पदले । ফুলের পাপড়ী।

**उपदी** । स्त्री । वन्दाके । মান্দড়া । मं वादांगुल । रा.नि.व.५ ।

**उपदीका** । स्त्री । उपजिह्वाख्यकीटे । हे.च.।

**उपदेवता** । स्त्री । यक्षभूतपिशाचादौ ।

**उपदेशः** । पुं । सूतके । हे.च. । हितकथने । एवमित्युपदेशः यथा—"तथा 'न आत्मवाद्यात्मो

दिवास्वप्नञ्च वर्ज्जयेत् ।" सु.उ.६५अ. । [निघ. ।

**उपदेहः** । पुं । उपलेपे । প্রলেপ, গলম্ । वै.

**उपदेहिका** । स्त्री । उपजिह्वाकीटे । हे.च. ।

**उपद्रवः** । पुं । उपसर्गे । तल्लक्षणम्—"रोगारम्भकदोषस्य प्रकोपादुपजायते । योऽन्यो विकारः स बुधैरुपद्रव इहोदितः ॥" भा. ।

**उपधातुः** । पुं । Secondary secretion. देहस्थसप्तविधधातुषु । यथा—"स्तन्यं रजो वसा स्वेदो दन्ताः केशास्तथैव च । ओजश्च सप्तधातूनां क्रमात्सप्तोपधातवः ॥" भा. । स्तन्यरजोवसास्वेददन्तकेशौजांसि धातूनां सप्तोपधातव इति शार्ङ्ग. । A semi-metal. स्वर्णमाक्षिकादिगौणधातुषु । ते च सप्तविधाः—स्वर्णमाक्षिकं, तारमाक्षिकं, तुत्थं, कांस्यं, पित्तलं, सिन्दूरं, शिलाजतु चेति । तत्र स्वर्णमाक्षिकं स्वर्णस्य, तारमाक्षिकं रौप्यस्य, तुत्थं ताम्रस्य, कांस्यं ताम्ररङ्गयोः, पित्तलं ताम्रयशदयोः, सिन्दूरं शीषकस्य, शिलाजतु च लौहस्योपधातुः । मतान्तरे तु माक्षिकतुत्यकाभ्रनीलाञ्जनरसाञ्जनमनःशिलाहरितालेषु । गुणाः—"उपधातुषु सर्व्वेषु तत्तद्धातुगुणा अपि । सन्ति किं तेषु तेऽन्नीनास्तत्तदंशाल्पभावतः ॥" भा.म.१भ.धातुव. ।

**उपधानम्** । क्ली । विषे । उपवर्हे । বালিশ । मे.नचतुष्कं । [आसन्नमरणे । मे. ।

**उपधूपितः** । त्रि । आसन्नास्तमये । हारा. ।

**उपनखम्** । क्ली । चिप्पतुल्यरोगे । আঙুলহাড়া । लक्षणं—"नखमांसमधिष्ठाय पित्तं वातश्च वेदनां । करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत् । तदेव क्षतरोगाख्यं तथोपनखमित्यपि ॥" सु.नि.१३अ. ।

**उपनयनम्** । क्ली । वर्णत्रयाणां यज्ञसूत्रधारणरूपसंस्कारविशेषे । পৈতে দেওয়া । त्रिका. ।

**उपनाहः** । पुं । स्वेदविशेषे (शाल्वणादौ) । সেক । वचाकिण्वशताह्वादेवदार्व्वादिभिः यः क्रियते स्वेदः स उपनाहः । वा.टी.हेमा. । लेपे । विश्व.हचतुष्कं । नेत्रसन्धिरोगे । लक्षणमस्फुलदृष्टिमध्यसन्धौ ईषत्पाकी स्वल्पवेदनः कण्डूबहुलो ग्रन्थिर्जायते ॥ लक्षणम्—"ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाहः ॥" मा.नि. । अरिद्धेषाम् । विश्वः ।

**उपनाहनम्** । क्ली । लेपने । च.द.वा.व्या.चि. ।

**उपनाहस्वेदः** । पुं । उपनाहजन्यघर्म्मे । वातकफजन्यशोफयोरुपक्रमभेदे । "अथोपनाहस्वेदञ्च कुर्य्याद्वातहरौषधैः । प्रदिह्य देहं वातार्त्तं क्षीरमांसरसान्वितैः ॥ आम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः ।" एवमेव महाशाल्वणादिर्ज्ञेयः । सु. चि.१अ. । [हारा. ।

**उपपुष्पिका** । स्त्री । हाफिकायाम् । হাই ।

**उपप्लुता** । स्त्री । Morbid sensibility of the uterus. योनिरोगे । लक्षणं यथा—"गर्भिण्याः श्लेष्मलाभ्यासात् छर्द्दिश्वासविनिग्रहात् । वायुः क्रुद्धः कफं योनिमुपनीय प्रदूषयेत् ॥ पाण्डुं सतोदमास्रावं श्वेतं स्रवति वा कफम् । कफवातामयव्याप्ता सा स्याद्योनिरुपप्लुता ॥" चर. ।

**उपभूती** । स्त्री । महानील्यां । वै.निघ. । [म. ।

**उपभोगः** । पुं । भोगे । भोजनाधिकभोगे । अ-

**उपमाता** । स्त्री । धात्र्यां । ধাই ।

**उपमेतः** । पुं । शालवृक्षे । श.च. ।

**उपयन्त्रम्** । क्ली । पञ्चविंशतिविधशल्याहरणोपाययन्त्रभेदेषु । तानि प्रायशो लौहानि भवन्ति । तानि च रज्जुवेणिकापट्टचर्मान्तवल्कललतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखबालाश्वकटकशाखाष्ठीवनप्रवाहणहर्षायस्कान्तमयानि क्षाराग्निभेषजानि । सु.सू.७अ. । [आनुकूल्ये ।

**उपयोगः** । पुं । औषधक्रियायां । औषधसेवने ।

**उपरत्नम्** । क्ली । गौणरत्ने । भा. । गोमेद-पद्मराग-वैदूर्य्यप्रवालेषु । प.मु. । काच स्फटिक-शुक्तिशङ्खेषु । "उपरत्नानि काचश्च कर्पूराश्मा तथैव च । मुक्ताशुक्तिस्तथा शङ्खः इत्यादीनि बहून्यपि ॥" गुणाः—रत्नतुल्याः किन्तु किञ्चिद्धीनाः । भा.पू.१भ. ।

**उपरन्ध्रम्** । क्ली । अश्वस्य उदरगह्वरोपरिभागे । ज.द.२अ. ।

**उपरसः** । पुं । A secondary mineral. गौणरसेषु, उपधातुगणे । ते च हिङ्गुलाभ्रतालकशिलास्रोतोऽञ्जनटङ्कणराजावर्त्तकचुम्बक-स्फटिक-शङ्ख खटी-गैरिक-कासीसरसक-कपर्द्द-सिकता-बोलाः कङ्कुष्ठं सौराष्ट्री च । गुणैः सूतस्य किञ्चि-

क्षुम्बयुताः। भा.पू १भ.धातुव.। यथा - "खेचराञ्जनकङ्कुष्ठगन्धाश्मं गैरिकं चितिः। शैलेयाञ्जन समिश्राः संप्रत्युपरसा बुधाः॥ कम्पिल्लगौरीचपलाकपर्दमशैलमिन्दूरकवङ्किजारान्। पाषाणिनौवादरशङ्खयुक्तानित्यष्टकं सूतसमानमाहुः॥ रा.नि.व.२२। गन्धकं वज्रवैक्रान्तं ,हीरकं दग्धहीरकञ्च) वज्राभं तालकं शिला। खर्परं शिखितुण्डञ्च विमलं हेममाक्षिकम्। काशीशं कान्तपाषाणं वराटाञ्जनहिङ्गुलम्॥ गैरिकं शङ्खभूनागं टङ्कणञ्च शिलाजतु। एते चोपरसाः प्रोक्ताः··· । र.सा.सं.।

**उपरोधकम्**। क्ली। गर्भगृहे। श च।

**उपलः**। पुं। पाषाणे। रत्ने। मे.।

**उपलभित्**। पुं। पाषाणभेदके। रा.नि.व.५।

**उपलभेदः (दी)**। पुं। करञ्जोड़िपाषाणभेदके। रा.नि.व.५।

**उपलवीरत्**। स्त्री। गुञ्जिन्याम्। हे.च.।

**उपला**। स्त्री। शर्करायां। वालुकायाम्। मे.।

**उपलाख्यकः**। पुं। ददुघ्नवृक्षे। दादमर्द्दनी।

**उपलालिका**। स्त्री। तृष्णायाम्। वै.निघ.।

**उपलासिता**। स्त्री। खटीशर्करायां। वै.निघ।

**उपलिङ्गम्**। क्ली। उपद्रवे। अरिष्टे। हे.च.।

**उपलेपः**। पुं। चन्दनादिलेपने। मुखलिप्तता याम्। सु.चि.३३अ.।

**उपलेपनम्**। क्ली। गोमयादिलेपने। त्रिका.।

**उपलोहम्**। क्ली। स्वर्णादिधातुविशेषेषु। यथा —"स्वर्णं तारं ताम्रनागं रसं कान्तञ्च तीक्ष्णकं। मुख्यान्नमष्टधा लौहं कांस्यारं घोषकं तथा। उपलौहाः समाख्याताः···॥ वै.संग्रहे।

**उपवटः**। पुं। पियालवृक्षे। चारवृक्षे। रा.नि.व.११। See चखहः।

**उपवनम्**। क्ली। वहिरुद्याने। अम.।

**उपवनस्थः**। पुं। तुरुष्के।

**उपवशिका (शी)**। स्त्री। अमृतस्रवालतायाम्। रा.नि.व.३। [लिश, ताकिश्रा। हला.।

**उपवर्हः (णम्)**। पुं, क्ली। उपधाने। वृा-

**उपवस्तम्**। क्ली। उपवासे। अम.।

**उपवासः**। पुं। लङ्घने। क्रोधादिपरित्यागे। "उपावृत्तस्य पापेभ्यः सहवासो गुणै हि यः। उपवासः स विज्ञेयो न शरीरस्य शोषणं॥" च.म.१अ.।

**उपवाह्यः**। पुं। राजवाहकहस्तिनि। हे.च.।

**उपविषम्**। क्ली। कृत्रिमविषे। हे.च.। गौणविषमिति। भा.। तच्च अष्टविधं।

**उपविषपञ्चकम्**। क्ली। स्नुह्यर्ककरवीरलाङ्गलिकचेलकेषु। रा.नि.व.१२। करवीरार्कधुस्तूरलाङ्गलीगुञ्जाहिफेनं वज्रञ्च। प.मु.। अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः। गुञ्जाहिफेनधुस्तूरश्चेति सप्त। भा.। दुग्धपूर्णपात्रे दोलायन्त्रेण तत्सर्वं शोधितं भवति। र.सा.सं.। [षायाम्। रा.नि.व.६।

**उपविषा**। स्त्री। रक्तातिविषायाम्। अतिवि-

**उपविषाणिका**। स्त्री। कृष्णातिविषायाम्। मद.व १।

**उपविष्टकः**। पुं। गर्भजरोगे।

**उपवीतम्**। क्ली। यज्ञसूत्रे। अम.।

**उपवेदः**। पुं। आयुर्वेदे।

**उपवेशः**। पुं। उपवेशने।

**उपवेशनम्**। क्ली। स्थितौ। वसा। गुणाः— मेदोदोषिश्लेष्मसौकुमार्य्यसुखकरम्। राज.।

**उपव्याघ्रः**। पुं। चित्रके। চিতে বাঘ। रा.नि.व.१९।

**उपशमः**। पुं। शान्तौ। हे.च.।

**उपशमकमः**। पुं। साधारणौषधे। वै.निघ.।

**उपशयः**। पुं। व्याधिज्ञानहेतौ। लक्षणं— "हेतुव्याधिविपर्य्यस्त विपर्य्यस्तार्थकारिणाम्। औषधान्न विहाराणामुपयोगं सुखावहं। नृणामुपशयं विद्यात् स हि सात्म्यमिति स्मृतः॥" मा.नि.।

**उपशान्तिः**। स्त्री। आरोग्ये।

**उपशायिता**। स्त्री। रोगमुक्तिसाधनभूतपथ्ये।

**उपशीर्षकः**। पुं। बालरोगे। कपालरोगे।

**उपसत्त्ववर्त्तनम्**। क्ली। दुष्टव्रणविशेषे। अष्टा

**उपसम्पन्नम्** । क्ली । हते । हला. । चि । निहते । सुसंस्कृते । "उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते ।" मे.नपञ्चकं ।

**उपसंव्यानम्** । क्ली । परिधानवस्त्रे । अम. ।

**उपसत्तिः** । स्त्री सेवायाम् । मे.तचतुष्कं ।

**उपसरः** । पुं । प्रथमगर्भधारणे । [मे.रचतुष्कं ।

**उपसर्गः** । पुं। पिशाचादिबाधायां । मिथरोगे।

**उपसर्य्या** । स्त्री । वर्षप्रसविन्यां गवि । बछुर-बिउनी गाभी । हला. ।

**उपसृष्टम्** । क्ली । मैथुने । त्रिका. ।

**उपसेकः** । पुं। व्यञ्जने । येनौदनं भुज्यते । वा.।

**उपस्करः** । पुं । वेसवारे । बाटना । हला. ।

**उपस्थः** । पुं । शिश्ने । योनौ । रा.नि.व.१८ । मलद्वारे । अ.र. । क्रोड़ । मे. ।

**उपस्थपत्त्रम्** । क्ली। अश्वत्थपत्रके । "पित्तश्लेष्मणि शस्यन्ते सूपे वा लेपेषु चे.त ।" चर. ।

**उपस्थाता** । पुं । परिचारके । रबा. ।

**उपस्नेहः** । पुं । उपलेपे । स्नेहयुक्ततायां । स्नेहयुक्तान्नरसे । सु.नि.६,७अ. ।

**उपस्पर्शः** । पुं। स्नाने । आचमने । मे.शचतुष्कं

**उपाङ्गः** । पुं । चित्रके । जटा. ।

**उपाङ्गचिकित्सा** । स्त्री । छिन्नादिप्रतीकारे। यथा—"छिन्नं भिन्नं तथा भग्नं व्रतं पिच्चितमेव च। तेषां दग्धप्रतीकारः प्रोक्तश्चोपाङ्गसंज्ञकः ॥" वै.निघ. । अचि.१स्था.२अ. ।

**उपाञ्जनम्** । क्ली । अनुलेपने ।

**उपात्तः** । पुं । अमदगजे । हला. ।

**उपाधानम्** । क्ली । उपधाने । বালিশ ।

**उपानद्धारणम्** । क्ली । चर्म्मादिपादुकाधारणे । জুতো পরা । गुणाः—"उपानद्धारणं नेत्र्यमायुष्यं पादरोगहृत् । सुखप्रचारमोजस्यं वृष्यञ्च परिकीर्त्तितम्। पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणां । अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् ॥" वै.निघ. ।

**उपाश्रयः** । पुं । अवष्टम्भे । हला. ।

**उपासः** । पुं। उपवासे । [मे । मे. ।

**उपासनम्** । क्ली । शुश्रूषायाम् । अम. । आस-

**उपासना** । स्त्री । सेवायां । अम. ।

**उपास्तिः** । स्त्री । सेवायां । हे.च. । [अम. ।

**उपास्थि** । क्ली । कोमलास्थिनि। কচি হাড় ।

**उपेक्षा** । स्त्री । त्यागे । अनादरे ।

**उपोदी (दका) (दकी)** । स्त्री । A pot-herb. (**Basella rubra or lucida.**) पूतीकायाम् । বড় পুঁই শাক । मं राजगिरा, माड़वी, रुदवेलि, मयाला खण्डपालक्येति च ख्याता । गुणाः—गुर्व्वी सरा मदघ्नी च । वा.सू. ६अ. । कषायोष्णा कटुका मधुरा निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकरी च । रा.नि.व.७ । स्वादु-पाकरसा वृष्या वातपित्तमदापहा । उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ सु.सू. ४५अ.। उपोदकी त्रिधा सामान्या क्षुद्रपत्रा वनजा चेति । द्वितीया रसवीर्य्यविपाकेषु पूर्व्वसमा । तृतीया तिक्ता कटूष्णा रोचनी च । रा.नि.व.७ । "सारकत्वं स्निग्धत्वं बल्यत्वं श्लेष्मकरत्वं हिमत्वञ्च ।" राज. ।

**उपोदि(दी)का** । स्त्री । उपोदक्याम् । বড় পুঁই । पुदिनेति च ख्याता । च.सू.२अ. । See उपोदकी ।

**उपोदिकातैलम्** । क्ली । क्षुद्ररोगे हितं । उपोदकीनां क्षारः २ श. वारि १६ श. एकविंश-तिवारं विस्राव्य क्षारोदकं कार्य्यम् । तैलं ४ श. लवणं १ श. एकत्र पाच्यम् । च.द.क्षुद्ररो.चि. ।

**उपोषः** । पुं । उपवासे ।

**उपोषणम्** । क्ली । उपवासे ।

**उप्यम्** । क्ली । वपनक्षेत्रे । रा.नि.व.२।

**उप्तः** । त्रि । कृतवपने । [भा. ।

**उभयकण्टका** । स्त्री । बदरवृक्षे। কুলগাছ।

**उभयभागहरम्** । क्ली । ऊर्द्ध्वाधोभागहरौषधे । বামক ও রেচক ঔষধ । सु.सू.४१अ. ।

**उभयलिङ्गिनी** । स्त्री । लिङ्गिन्याम् । पञ्चगुड़ियेति लोके प्रसिद्धा । चि.क.क.वन्ध्या.चि. ।

**उमा ।** स्त्री । अतस्याम् । मशिना । रा.नि.व. १६ । हरिद्रायाम् । कान्तौ । मे.मत्रिकं ।

**उमाकट: ।** पुं । उमाधूली । मशिनार धूलि ।

**उम्पा(म्पिका)(शालि:) ।** स्त्री । शालिधान्यविशेषे । गुणा: मधुरा स्निग्धा सुगन्धा कषाया पित्तश्लेष्मघ्नी रूक्षा वातघ्नी च । रा.नि.व.१६ ।

**उम्बर: ।** पुं । उदुम्बरवृक्षे । यज्ञडुमुर गाछ । हे.च. । गुणा:—स्निग्ध: स्वाद्वादिगुणयुक्त: उष्णवीर्य्य: कफपित्तकरो गुरुश्च । वा. ।

**उम्बिका (म्बी) ।** स्त्री । यमान्याम् । अर्द्धपक्वयवानलसंभृष्टयवगोधूमसम्बर्य्याम् । गुणा:— "कफकरत्वं बलकरत्वं लघुत्वं पित्तानिलापहारित्वञ्च ।" भा. ।

**उम्यम् ।** क्ली । Field of linseed. (Linum utilatissimum.) अतसीक्षेत्रे । हरिद्राक्षेत्रे । भ.दिरूपाचरकोषश्च ।

**उर: ।** क्ली । वक्षसि । अम. ।

**उर:क्षतम् ।** क्ली । उरोव्रणे । क्षयरोगे ।

**उर:क्षतकास: ।** पुं । क्षयकासरोगे । हृदये क्षत कास । "अतिव्यवायभाराध्वयुद्धाश्वगजनिग्रहै: । रूक्षस्योर:क्षतं वायुर्गृहीत्वा कासमावहेत् ॥" निदानम् ।

**उरग: (ङ्ग:) (ङ्गम:) ।** पुं । सर्पे । क्ली । सीसके । मद.व.१४ । रस.र.ह.चि.एकादशायसे । नागकेशरवृक्षे ।

**उरगगृहम् ।** क्ली । सर्पगृहे ।

**उरगारि: ।** पुं । क्रौञ्चपक्षिणि ।

**उरगाशन: ।** पुं । गरुडे । जटा. ।

**उरगेन्द्रसुमन: ।** क्ली । नागकेशरे । भा.म.४ भ. । "व्योषाम्बोदलोरगेन्द्रसुमन: ।"

**उरच्छ: ।** पुं । गुन्द्रे । गोंदपटेर इति पाश्चात्यभाषा । भा.पू.१भ. ।

**उरण: ।** पुं । मेषे । अम. । क्ली । रौप्ये ।

**उरणा ।** स्त्री । मेष्याम् । ভেড়ী ।

**उरणाख्य:(क्ष:)क: ।** पुं । दद्रुघ्नवृक्षे । दादमर्दन । हिं एड़ाँच । চাকন্দা গাছ इति च केचित् । भ.टी.स्वा. । श.र. । आरग्वधवृक्षे ।

**उरभ्र: ।** पुं । मेषपक्षी । प.मु. ।

**उरभ्रमारिका ।** स्त्री । वातप्रकृतिकीटविशेषे । तद्दष्टे वायुजरोगा भवन्ति । सु.कल्प.८अ. ।

**उरसिज: ।** पुं । स्तने । रा.नि.व.१८ ।

**उराह: ।** पुं । कृष्णजान्वीषत्पाण्डुवर्णाश्वे । लक्षणं —"उराह: कृष्णजानुस्तु मनाक्पाण्डुस्तु यो भवेत् ।" ज.द.३भ. ।

**उरीहा ।** स्त्री । कारवेल्ल्याम् । करला, উচ্ছে ।

**उरुकाल: (क:) ।** पुं । महाकालनतायाम् । মাকালফলের গাছ । त्रिका. ।

**उरुमाल: ।** पुं । फलशाकविशेषे । आयीफल इति पाश्चात्यभाषा । फलगुणा:—"उरुमालं प्रियालञ्च बृंहणं गुरुशीतलं । स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥" वा. ।

**उरुबुक: उरुबूक: उरुवुक: ।** पुं । श्वेतैरण्डे । एरण्डवृक्षे । अम. । र.सा.सं. । उदरवृद्धौ । रक्तैरण्डे । रा.नि.व.८ ।

**उरुस्तम्भा ।** स्त्री । कदलीवृक्षे ।

**उरोग्रह: ।** पुं । हृदयरोगविशेषे । अग्रमास इति भाषा । लक्षणं यथा—"अत्यभिष्यन्दिगुर्व्वम्बुग्रस्तपूत्यामिषाशनात् । सान्द्रं मांसं यकृत्प्लीह्नो: सद्यो वृद्धिर्यदा भवेत् । उरोग्रहं तदा कुर्य्यो कुरुत: कफमारुतौ ॥ न वामपार्श्वे न च दक्षिणांशे वृक्कस्य मध्ये परिवृद्धिमेति । उरोग्रहं तं प्रवदन्ति रोगं वृक्काग्रतस्तस्य शिरातनुत्वं ॥ दौर्ब्बल्यं दुर्ब्बलाग्निश्च कार्श्यं मांसाभिकाङ्क्षितम् । आयते कृष्णवर्णत्वं पीतकञ्चापि जायते । विजिह्मसदृश: कश्चित् कश्चित्काच्छपसन्निभ: । ज्वरोऽरुचि: पिपासा च शोषश्चातिप्रकोपने ॥" नि. । हृदयवेदनायां ।

**उरोज: ।** पुं । स्तने । हे.च. ।

**उरोघात: ।** पुं । हृद्रोगे । च.द. ।

**उर्णनाभ: ।** पुं । See ऊर्णनाभ: ।

**उर्णा ।** स्त्री । See ऊर्णा ।

**उर्णायु: ।** पुं । See ऊर्णायु: ।

**उर्द्द: ।** पुं । जलबिड़ाले । উদ্বিড়াল । श.द. ।

**उर्व्वीकफः** । पुं । समुद्रफेने ।

**उर्व्वा** । स्त्री । श्रीवके ।

**उर्व्वारः** । पुं । इर्व्वारुके । काँकुड़ । भरतःचि-रूपकोषच । भा.म.३भ.चय.चि.वरुणगुड़े ।

**उर्व्वी** । स्त्री । तन्नामकमर्म्मस्थाने । तच स्थान-मूरुमध्यदेशः । सु.शा.६च. । वैकल्यकारमर्म्मान्य-तममर्म्मद्वये । सु.शा.५च. ।

**उल(लु)पः** । पुं । प्रतानवत्यां लतायां । सा तु चपुषीद्राचाताम्बुलीप्रभृतिः । च.टी.सा. । क्ली । तृणविशेषे । उलूथड़ । विश्व. । मे. ।

**उलु(लू)पी** । पुं । शिशुके । शुशोक । चम. । तदाकारमीने । श.र. । उपल इति ख्याते मत्स्ये । शिशुमाराकृतिमत्स्यभेदे, स कलिङ्गादिदेशेषु दृश्यते। शोम इति ख्यातमत्स्ये । भाँगल इति च केचित । शिशुमार इति सर्व्वस्वे । "चुलपः शिशुमारः स्यात् उलुपी शिशुकस्तथा ।" च.टी.भ. ।

**उलुम्बा** । स्त्री । यमान्याम् । वै.निघ. ।

**उलूकः** । पुं । पेचके । পেঁচা । मे.कत्रिकं । प.सु. । र.मा. । तन्मांसं—"उलूकजन्तु यन्मांसं पित्तलं भ्रान्तिकारकं । वातप्रकोपनञ्चैव ...... ।" वै.निघ. । क्ली । खनामख्याततृणे । उलूथड़ ।

**उलूकपादः** । पुं । चवस्य पादरोगविशेषे । लक्षणं—"कूर्चमावृत्य यः शोथो जायतायामुपजायते। उलूकपादो विज्ञेयः ।" ज द.३८च ।

**उलूखल(क)म्** । क्ली । उद्खले । भर । गुग्गुलौ । चम. । [त्विषु । सु.शा.५च. ।

**उलूखलसन्धिः** । पुं । कचावङ्क्षणदशनस

**उल्कामुखी** । स्त्री । शृगालीविशेषे । हारा. ।

**उल्मुकम्** । क्ली । ज्वलदङ्गारे । हारा. ।

**उल्लसः(नकम्)** । पुं,क्ली । रोमाञ्चे । हे च. ।

**उल्लाघः** । पुं । रोगमुक्तौ । रा.नि.व.२० । म-रिचे ।

**उल्ली** । स्त्री । पलाण्डौ । रा.नि.व.७ ।

**उल्बणम्** । त्रि । निरमरं क्लेदनातिशयेनानप-श्चिन्नत्वात् पिष्टमिवोल्बणमपिष्टम् । सु.उ.६४च. ।

**उल्लेखनम्** । क्ली । वमने । र.मा. ।

**उल्लोचः** । पुं । चन्द्रातपे । हला. । [शा.१०च. ।

**उल्वम्** । क्ली । जरायौ । चम. । कलले । सु.

**उल्वणम्** । क्ली । वातादिजन्यविकारे ।

**उशिक्** । पुं । घृते ।

**उशीरः (कः)** । पुं, क्ली । The root of a fragrant grass. (Andropogon muricatum.) खनामख्यातसुगन्धतृणमूले । वीरण-मूले । खस् वा लामज्जक इति पाश्चात्ये । गन्ध-বেণার মূল । मं वाला । तें वट्टिवेरु । च.सू. । गुणाः—शीतलं तिक्तं दाहहरं श्रमघ्नं पित्तज्वरघ्नं जलसौगन्ध्यकरञ्च । रा.नि.व.१२ । उशीरं स्वेद-दौर्गन्ध्य-दाहपित्तास्ररोगजित् । राज. । पाचनं शीतलं स्तम्भनं तिक्तं मधुरं ज्वरघ्नं वान्तिघ्नं उन्मा-दताहरं कफपित्ततृष्णाघ्नं रक्तघ्नं विषघ्नं वीसर्प दाहमूत्रकृच्छ्रव्रणघ्नञ्च । भा पू.१भ । मद.व.३ । बा-लके । रा... । मुस्तादाष्टादशाङ्गे ।

**उशीरादिः** । पुं । तृतीयकज्वरे कषायः । "उ शीरं चन्दनं मुस्तं गुडूचीधान्यनागरं । अम्भसा क-थितं पेयं शर्करामधुयोजितं ॥ भैष.जीर्णज्व.चि । द्वितीयः ज्वरातीसारे । तस्य द्रव्याणि—उशीरं बालकं मुस्तं धन्याकं शुण्ठी वराहक्रान्ता धातकी रोध्रं बिल्वपेशी च । शा.कौ. ।

**उशीरी** । स्त्री । चुद्रकाशतृणे । ছোট কেশে। गुणाः – मधुरशीता पित्तदाहक्षयघ्नी च। रा.नि.व.८।

**उषः** । पुं । गुग्गुलौ । रात्रिशेषे । मे.षद्विकं । चारमृत्तिकायाम् । श.र. । क्ली । पांशुजलवणे । পাঙ্গা নুন লবণ । प.म ।

**उषकः** । पुं । टङ्कणचारे । সোহাগা । रत्ना. । मृत्तिकाभेदे । प.सु. ।

**उषणम्** । क्ली । शुण्ठ्याम् । मरिचे । रत्ना. । भा. पू.१भ । उदकमञ्जरी । च.द.च.भा चि. । "विल्वी षणादिः ।" सि.श्री.श्रग्निमा.चि.वृह.मुक्रसन्धाने । पिप्पलीमूले। रा.नि व.६। "वर्चोषणकणाः समाः।" त्रिकटुके । वै.नि.ध.२भ.ज्व.चि.सैन्धवाद्यञ्जने ।

**उषणा** । स्त्री । पिप्पल्याम् । कणायामुषणा स्त्रियाम् । मे.णत्रिकं । शुण्ठ्याम् । चविकायाम् । र.मा. । गजपिप्पलीमूले । चम. । भा.पु १भ. । कट्फले । मरिचे । सार्पिपाञ्च, चणकादुद्वले ।

.स्वजपिप्पल्याम्। वै.मिघ.२भ.जिह्वकसन्निपा.ज्व. चि.। [रत्ना.।

**उषरा** । स्त्री। चारमृत्तिकायाम्। क्षारिमाटी।

**उषर्बुधः** । पुं। रक्तचित्रके। राङचिते। श.च.।

**उषस्** । क्ली, स्त्री। प्रत्यूषे। मे सत्रिकं।

**उषा** । स्त्री। गवि। गाई। हे.च.।

**उषाकलः** । पुं। कुक्कुटे। त्रिका.।

**उषाधारः** । पुं। टङ्कणे। सोहागा। चारमृत्तिकायाम्। रत्ना.।

**उषितः** । त्रि। दग्धे। व्युषिते। मे.तत्रिकं।

**उषीरः** । पुं, क्ली। वीरणमूले। अ टी.रा.। च.द.र.पि.चि.दूर्व्वाद्यतैले।

**उष्ट्रः** । पुं। स्वनामख्यातपशुविशेषे। उँट। हिं ऊँट्। तन्मांसगुणाः—त्रिदोषशमनं मलपुष्टिप्रदं रुच्यं मधुरं वीर्य्यवर्द्धनञ्च। रा.नि.व.१७। शीतलत्वं लघुत्वं त्रिदोषहरत्वं पुष्टिकरत्वं रुच्यं कोष्ठवर्द्धनत्वञ्च। रा.नि.व.१५। कटु शोफक्रिमिविषहरं दीपनं वातकफघ्नं कुष्ठगुल्मोदरघ्नञ्च। भा.पू.१भ.।

**उष्ट्रकण्टकः** । पुं। सकण्टकगुल्मविशेषे। ठाकुरकाँटा। च.द.। गोक्षुरे। भैष.अश्वगं.चि."उष्ट्र कण्टकमूलं।"

**उष्ट्रकाण्डिका (ण्डी)** । स्त्री। पुष्पवृक्षविशेषे। ऊँटाटी इति भाषा। मं उट्कटारा, उटांटी। गुणाः—तिक्ता उष्णा रुच्या हृद्रोगहरी। तद्बीजं मधुरं शीतं वृष्यं सन्तर्पणञ्च। रा.नि.व.१०।

**उष्ट्रग्रीवः** । पुं,क्ली। पित्तजभगन्दररोगभेदे। "पित्तन्तु प्रकुपितं अनिलेनाधःप्रणुन्नं पूर्व्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिडकां जनयति। सास्य कण्ड्वादीन् वेदनाविशेषान् जनयति। अप्रतिक्रियमाणा च पाकमुपैति। व्रणश्च कठिनः संरम्भी कक्षप्रायः पिच्छिलमजस्रमास्रावं स्रवति। उपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति। तं भगन्दरं परिस्राविणमित्याचक्षते।" सु.नि.४अ.। प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिड़कां गुदागताम्। तदाशुपाकां हिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत्॥ नि.।

**उष्ट्रधूसरपुच्छिका** । स्त्री। वृश्चिकाल्याम्। विछाति। र.मा.।

**उष्ट्रपादिका** । स्त्री। मदनमालायाम्। मदन माली, हापरमाली च इति लोके। र.मा.।

**उष्ट्रप्रमाणः** । पुं। काश्मीरदेशीयशरभे। मद. व.१२।

**उष्ट्रप्रियः** । पुं। मरुभूमिजातकण्टकवृक्षविशेषे। टाकुरकाँटा गाछ। हिं करील, टाउर। गुणाः करीरशब्दे सृग्याः। भा.पू.१भ.। [नि व ४।

**उष्ट्रभक्षिका** । स्त्री। चद्रदुरालभायां। रा.

**उष्ट्रभक्ष्यः** । पुं। वंशकरीरे। बाँशेर कोँड़। पम।

**उष्ट्रमूत्रम्** । क्ली। उष्ट्रस्य मूत्रे। गुणाः—कटु तिक्तोष्णं लवणं पित्तकोपनं बल्यम् उदररोगघ्नं वातदोषघ्नञ्च। रा.नि.व.१५।

**उष्ट्रशिरोधरम्** । क्ली। उष्ट्रग्रीवभगन्दरे।

**उष्ट्रिका (ष्ट्री)** । स्त्री। वृश्चिकालिक्षुपे। बिछाति। रा.नि.व.८। मृद्भाण्डविशेषे। हारा.। उष्ट्रभार्य्यायाम्। उँटिनी। मे.कत्रिकं। तत्क्षीर गुणाः—कुष्ठशोथपित्तार्शःकफाटोपानाहोदरस्थज-न्तुगुल्मश्वासनाशित्वम्, ईषद्रूक्षोष्णलवणं, कुष्ठ-शोफघ्नं पित्तघ्नं अर्शोघ्नं कफाटोपघ्नं आनाहहरं क्रिमिगुल्मोदरश्वासघ्नञ्च। रा.नि.व.१५। लघु स्वादु लवणं दीपनं तथा क्रिमिकुष्ठकफानाहशोथोदर-हरं परम्। भा.पू.१भ.। रुच्यं तथोष्णं लवणं कफस्य निवारणं वातविकारहारि। लघु प्रशस्तं कटुकं। दधिगुणाः—अर्शःकुष्ठक्रिमिशूलोदररोगनाशित्वं कटुत्वं स्वादुत्वञ्च। नवनीतगुणाः—विपाके शीतलत्वं लघुत्वं व्रणक्रिमिकफकासवातविषघ्नत्वञ्च। घृतगुणाः—शीतमधुरत्वं विपाके कटुत्वं क्रिमिकुष्ठ-गुल्मोदरनाशित्वञ्च। पाके कटु शोषक्रिमिविषघ्नं दीपनं वातकफघ्नं कुष्ठगुल्मोदरघ्नञ्च। अत्रि.८अ.।

**उष्ट्रीक्षीरम्** । क्ली। उष्ट्रीदुग्धे। See उष्ट्री।

**उष्णः** । पुं। ग्रीष्मे। त्रि। उष्णस्पर्शे, उष्णवीर्य्ये। पलाण्डौ। रा.नि व.। क्ली। शूरणविशेषे। उष्णं वातकफौ हन्यात्। भा.। [आतुरे। धर.। मे.।

**उष्णकः** । पुं। पूगवृक्षे। ज्वरे। शीघ्रकर्म्मणि। त्रि।

**उष्णगणः** । पुं। भद्रदार्व्वादौ। पिप्पल्यादौ। सु.चि.१७अ.।

**उष्णगन्धा ।** स्त्री । कुलिञ्जनवृत्ते । महाभरी वच । वै.निघ. ।

**उष्णजलम् ।** क्ली । See उष्णोदकं ।

**उष्णफला ।** स्त्री । लताविशेषे । कुन्दूरुकी । मं गोड़ितोंडली । वै.निघ. ।

**उष्णमल(मूत्र)त्वम् ।** क्ली । पित्तजन्यरोगे ।

**उष्णरश्मिः ।** पुं । अर्कवृत्ते । अम. ।

**उष्णवल्ली ।** स्त्री । सारिवायाम् । अनन्तमूल ।

**उष्णवातः ।** पुं । मूत्राघातविशेषे । लक्षणं यथा —"व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलावृतं । वस्तिं मेढ्रं गुदञ्चैव प्रदहन् स्रावयेदधः । मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा । कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम् ॥" भा. ।

**उष्णवारणम् ।** क्ली । छत्रे । छाता । ।

**उष्णवाष्पः ।** पुं । नेत्रजले । स्वेदे । वै.निघ. ।

**उष्णविदग्धदृष्टिः ।** पुं । दृष्टिगतरोगविशेषे ।

**उष्णवीर्य्यः ।** पुं । शिशुमारे । हे च. । क्ली । कट्वम्लद्रव्याश्रयधर्म्मे । गुणाः —"लघु कफवातघ्नं पित्तकरं वृष्यं भ्रमतृड्ग्लानिस्वेददाहाशुपाकतां करोति । सु.सू.४१अ. । त्रि । तीक्ष्णवीर्य्ये । [तर्क ।

**उष्णसुन्दरः ।** पुं, क्ली । विभीतकवृत्ते । विभी-

**उष्णस्निग्धः ।** त्रि । तत् यद्वातघ्नं वस्तु । सु. सू.४१अ. । [वै.निघ. । रा.नि.व.२० ।

**उष्णा(ष्मा) ।** स्त्री । क्षयरोगे । सन्तापे । पित्ते ।

**उष्णा(भि)गमः ।** पुं । ग्रीष्मकाले । अम. ।

**उष्णाङ्गत्वम् ।** क्ली । पित्तजन्यरोगे ।

**उष्णान्नम् ।** क्ली । उष्णभक्ते । See अन्नम् ।

**उष्णाम्बु ।** क्ली । सुखोदके । "उष्णाम्बु च सुखोदकम् ।" प.प्र.३ख. । See उष्णोदकम् ।

**उष्णासहः ।** पुं । शरत्काले ।

**उष्णिका ।** स्त्री । यवागवाम् । याउ । रत्ना. ।

**उष्णीषः ।** पुं, क्ली । शिरस्त्राणे । पागड़ी । हिं पाग । धारणगुणाः—शुचिदं केश्यं रजोवातातपघ्नञ्च । मद.व.१२। चक्षुष्यमायुर्वर्द्धकत्वं शीतोष्णादिनिवारणञ्च ॥ राज. ।

**उष्णोदकम् ।** क्ली । अष्टमांशावशिष्टे, चतुर्थांशावशिष्टे, अर्द्धशिष्टे वा पक्वजले । प.प्र.१ख. । तच्च त्रिविधं पादहीनार्द्धहीनत्रिभागहीनत्वात् । "तत्पादहीनं वातघ्नमर्द्धहीनन्तु पित्तनुत् । कफघ्नं पादशेषन्त्यं पानीयं लघु दीपनम् ॥" पादहीनं हिमर्त्तौ, पादार्द्धोनं शरदि, तथार्द्धावशेषितं प्रावृड्वसन्तग्रीष्मेषु हितं पथ्यञ्च । विशेषाः स्वस्वपर्य्यायेषु मृग्याः । गुणाः — सदापथ्यं कासज्वरविबन्धकफवातघ्नं दीपनं वस्तिशोधनञ्च । रात्रौ तप्तं श्लेष्मघ्नत्वं वातकर्षितं अजीर्णजारकत्वञ्च । दिवातप्तं वारि नक्तं जाड्यं गच्छति अतस्तन्न रात्रौ पेयं । एवं रात्रितप्तमपि दिवा गुरु स्यात्, अतस्तदपि दिवा न पेयं । तदात्वमेव तप्तं जलं सदा पेयम् । रा.नि.व.१४ ।

**उष्णोपगमः ।** पुं । ग्रीष्मकाले । अम. ।

**उष्मः (का:) ।** पुं । क्षारे । र.मा. । क्षयरोगे । रा.नि.व.२० । ग्रीष्मर्त्तौ । अम । वसन्तकाले । उष्णतायां । आतपे । मे.कचित्कं ।

**उष्मजम् ।** क्ली । लवणसाधारणे । रत्ना. ।

**उष्मस्वेदः ।** पुं । उष्मजन्यधर्म्मे । यथा—"उष्मस्वेदः प्रयोक्तव्यः लौहपिण्डेष्टिकादिभिः । प्रतप्तैरम्लसिक्तैश्च कार्य्यं वस्त्रकर्वेष्टितैः ॥ अथवा वातनिर्णाशी द्रव्यक्वाथरसादिभिः । उष्णोधटं पूरयित्वा पार्श्वे छिद्रं निधाय च । विमुद्यास्यं त्रिखण्डाञ्च धातुजां काष्ठवंशजाम् । ...... । सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतं । हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ अत्र वातघ्नद्रव्यभागाः— शालपर्णी १ भ. पृश्निपर्णी २ भ कण्टकारी ३ भ. बृहती ४ भ. गोक्षुरं ५ भ. विल्वं ६ भ. गणिकारी ७ भ. श्योणाकः ८ भ. पाटलिः ९ भ. गाम्भारी १० भ. । वै.निघ.स्वेद. ।

**उष्मा (मन्) ।** पुं । सन्तापे । पित्ते । क्षयव्याधौ । रा.नि.व.२० । ग्रीष्मर्त्तौ । भ.टी.नीलकण्ठः ।

**उष्मागमः ।** पुं । ग्रीष्मकाले । उत्तापे ।

**उस्रः (स्रा) ।** पुं, स्त्री । वृषे । पञ्जुन्या । गाई । उपचित्रायाम् । आखुकर्ण्याम् । इन्दुरकाणी । मे.रत्निकं ।

**उस्तः ।** त्रि । धौते । सिक्ते ।

**उस्रसम् ।** क्ली । सेवने ।

**उग्रतरः** । पुं । महाव्रणे । हे.च. ।

**उग्रा (न्)** । पुं । वृषभे । भा.पू.१भ. । ऋषभ-कौषधे । रा.नि.व.५ ।

**उग्राभद्रः** । पुं । वृषे । वै.निघ. ।

**उग्रालः** । पुं । वानरे । वै.निघ. ।

**ऊची** । स्त्री । भष्टद्रव्ये । इरा पोड़ा इति लोके । See ऊम्बी ।

**ऊञ्जः** । पुं । बले । चर. ।

**ऊधः** । क्ली । आपीने । अम. ।

**ऊधस्यम्** । क्ली । दुग्धे । रा.नि.व.१५ ।

**ऊम्बी** । स्त्री । यवगोधूमयोरर्द्धपक्वमञ्जरी तृणाग्निना भर्जिता ऊम्बीत्युच्यते । "मञ्जरी त्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन संभ्रष्टा बुधैरुम्बीति सा स्मृता ॥" गुणाः—कफदा बल्या लघ्वी पित्तानिलघ्नी च । भा.पू.१भ. ।

**ऊरणः** । पुं । मेषे । प.मु. । [१८ ।

**ऊरुः** । पुं । जानूपरिभागे । ऊरु । रा.नि.व.

**ऊरुपर्व्वा** । पुं, क्ली । जानौ । हाँटू । अम. ।

**ऊरुमाणः** । पुं । माषीफले । सु.सू.४६अ. । See उरुमाणः ।

**ऊरुसन्धिः** । पुं । जानूपरिस्थसन्धिस्थाने । सु. ।

**ऊरुस्तम्भः** । पुं । Paralysis of the lower extremities. वायुजन्यस्फोटकरोगविशेषे । आढ्यवात इति केचित् । निदानं सम्प्राप्तिः यथा—"शीतोष्णद्रव्यसंयुक्तगुरुस्निग्धैः निषेवितैः । जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरैः । —सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम् । अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते । सक्थ्यस्थिनी प्रपूर्य्यान्तःश्लेष्मणा स्तिमितेन च । तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ इति । परकीयाविव गुरू स्यातामतिभृशव्यथौ । ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राछर्द्यरुचिज्वरैः । संयुक्तौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥" इति रूपम् । मा.नि. । ऊरुस्तम्भे विधिः कार्य्यो वातकोपो कफापहः । युक्त्या जित्वा कफं रुक्षैः पश्चाद्वातं जयेद्भिषक् । पुराणशालिश्यामाकयवक्रोद्रवभोदनं । अघृतैर्जाङ्गलैर्मांसैः तथाचालवणैर्हितम् । वास्तूकवायसीनिम्बवेत्राग्रकुलकादिभिः । शुष्कमूलकयूषेण पटोलस्य रसेन वा । कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत् । स्थानान्याक्रामयेत् प्रातः प्रतिस्रोतो नदीन्तरेत् ॥ पथ्यम् । रस.र. ।

**ऊरुस्तम्भा** । स्त्री । कदलीवृक्षे । रा.नि.व.११ ।

**ऊर्ज्जः (कः)** । पुं । कार्त्तिकमासे । हे.च. । क्ली । जले । श.र. ।

**ऊर्ज्जाः** । पुं । उत्साहे । वा.सू.२अ. ।

**ऊर्णनाभः** । पुं । मर्कटके । माकड़शा । अम. ।

**ऊर्णनाभिः** । पुं । ऊर्णनाभे । श.र. ।

**ऊर्णा** । स्त्री । मेषलोम्नि । "ऊर्णा मेषादिलोम्नि स्यात् ।" भ्रूमध्यावर्त्ते । "अन्तरावर्त्तके भ्रुवोः ।" मे.णद्विकं । [नाभौ । हे.च. ।

**ऊर्णायुः** । पुं । कम्बले । मेषे । प.मु. । ऊर्ण-

**ऊर्द्धकण्टा (ण्टिका) (ण्टी)** । स्त्री । महाशतावर्य्याम् । रा.नि.व.४ ।

**ऊर्द्धका** । स्त्री । वायुजन्यरोगविशेषे । ऊर्द्धक् ।

**ऊर्द्धगः** । पुं । अस्थिभङ्गरोगे । [सु.सू.४१अ. ।

**ऊर्द्धगुणभूयिष्ठः** । त्रि । वमनद्रव्यमात्रे ।

**ऊर्द्धगुदः** । पुं । गुदोर्द्धगरोगे ।

**ऊर्द्धग्रहः** । पुं । अश्वस्य ग्रहदोषजन्यरोगविशेषे । तस्य लक्षणं—जिह्वास्यकृष्णत्वं दर्शनश्रवणनाशश्चेति । "श्यामं जिह्वामुखं यस्य नष्टदृष्टिश्रुतिर्भवेत् । ऊर्द्धग्रहकृतं दोषं तस्य दोनस्य निर्द्दिशेत् ॥" ज.द.५७अ. ।

**ऊर्द्धजत्रु** । क्ली । स्कन्धसन्धेरूर्द्धभागः । स्कन्धसन्धिर ऊर्द्धभाग । "ऊर्द्धजत्रुगरोगघ्नी । तत्र रोगेषु ।" च.द.ज्व.चि. । [जानुके । भा. ।

**ऊर्द्धजानुः (ज्ञुः)** । त्रि । ऊर्द्धगे । उपरिस्थ-

**ऊर्द्धतिलः (कः)** । पुं । नेपालनिम्बे ।

**ऊर्द्धनाड़ी** । स्त्री । नाड़ीविशेषे ।

**ऊर्द्धपातनम्** । क्ली । रसस्योर्द्ध्वक्षेपणकर्मणि यथा —रस २ भ. ताम्र १ भ. जम्बीररसेन ताव-न्मर्द्दयेत्, यावन्न पिण्डतां गच्छति । अथ ऊर्द्धपा तनायन्त्रं विद्याधरयन्त्रं वा परिकल्प्य तं पिण्डं त-लस्थभाण्डे संस्थाप्य तदुपरिस्थभाण्डे जलं दत्त्वा यत्नसन्धिं सम्यक् निरोधयेत् । अथ तदधः वह्निं ज्वालयेत् । "स्थालीमूर्ध्नि जलं दत्त्वा वह्निं प्रज्वा-लयेदधः । एतद्विद्याधरं यन्त्रं पातनायन्त्रमित्यपि॥" पातनायन्त्रमित्यूर्द्धपातनायन्त्रम् । "हण्डिकोपरि-तलभागेऽन्यां हण्डिकामधोर्द्धमुखीं विन्यस्याधोहण्डि-काभ्यन्तरे पाच्यसूतादिकं निवेश्य च द्वयोः सन्धिं निरोधयेत् । तत उपरितलस्थाल्यां जलं दत्त्वा अधो वह्निं प्रज्वालयेदिति ।" र.सा.सं. । একটী হাঁড়ির ভিতর পিণ্ডিত সতাম্র রস রাখিয়া তাহার মুখে আর একটী হাঁড়ি বসাইয়া উভয়ের সন্ধিমুখ উত্তমরূপে লেপিয়া শুষ্ক করিবে। পরে উপরিস্থ হণ্ডিকায় জল পূরণ করিয়া জ্বাল দিবে। সিদ্ধ হইলে নামাইয়া হাঁড়ির গায়ে যে ভূষা লাগিয়াছে,তাহা যত্নে লইয়া তাহা হইতে পারা বাহির করিবে।

**ऊर्द्धपादः** । पुं । काश्मीरदेशीयशरभमृगे । अष्टपादपशुविशेषे । [See वमनं ।

**ऊर्द्धभागहरः** । त्रि । वमनद्रव्ये । सु.सू.६अ. ।

**ऊर्द्धवर्त्तिः** । पुं । तन्नामकाश्वमूलरोगे । लक्षणं यथा—"यवसन्नादनञ्चैव यो वाजी खादितं पुनः । मुखेन प्रोद्गिरत्याशु तं विद्यादूर्द्धवर्त्तिनम् ॥" ज.द. ४३अ. ।

**ऊर्द्धवातः** । पुं । वायुरोगभेदे । उद्गारे । ঢেকুর । लक्षणं—"अधःप्रतिहतो वायुः श्लेष्मणा मारुतेन च । करोत्युद्गारबाहुल्यमूर्द्धवातः स उच्य-ते ॥" निदानम् । [श्वासरोगे । भा.ज्व.चि. ।

**ऊर्द्धवायुः** । पुं । ऊर्द्धगतवायौ । उद्गारबाहुल्ये ।

**ऊर्द्धशोधनम्** । क्ली । अरिष्टकफले । রীঠা ফল । वमने ।

**ऊर्द्धश्वासः** । पुं । श्वासरोगभेदे । "ऊर्द्धं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः । श्लेष्मावृतमुखस्रोता कुद्धगन्धवहार्दितः ॥ ऊर्द्धदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः । प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीड़ि-तः । ऊर्द्धश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते । मुह्यतस्ताम्यतश्चोर्द्धं श्वासस्तस्यैव हन्त्यसून्॥" मा.नि । See श्वासः ।

**ऊर्द्धस्थितिः** । पुं । अश्वस्योर्द्धावर्त्ते । त्रिका. ।

**ऊर्द्धासितः** । पुं । कारवेल्ले । করলা উচ্ছে । त्रिका. ।

**ऊर्म्मणः** । पुं । द्रोणपरिमाणे ।

**ऊर्म्मिः** । पुं, स्त्री । तरङ्गे । दुःखे । वेदनायां । पीड़ायां । वेगे । भङ्गे । मे.मदिकं ।

**ऊर्म्मिकः** । पुं । अश्वस्य पादरोगभेदे । लक्षणं —"ऊर्म्मिकर्षोर्म्मिसंस्थानैर्बलिभिः खुरसम्भवैः ।" ज.द.३८अ. ।

**ऊर्व्वः** । पुं । वाड़वाग्नौ ।

**ऊर्व्वी** । स्त्री । ऊरुस्थमर्म्मभेदे । सु ।

**ऊर्व्याङ्गम्** । क्ली । गोमयच्छत्रिकायाम् । গুবুরে ছাতা । हारा. ।

**ऊर्षा** । स्त्री । देवताड़कहवे । प्र.च. ।

**ऊलुपी** । पुं । शिशुमारे । भ.टी. ।

**ऊलूकः** । पुं । पेचके । अयं प्रसहजातीयः । एतन्मांसम् उष्णवीर्य्यम् । एतद्भक्षणात् शोषभक्ष-कोन्मादाः चौर्य्यकृता च जायन्ते । भा.पू.१भ. । "उलूकपललं भ्रान्तिकरं वातप्रकोपकरञ्च ।" म-द.व. । [रश्मे । मे. । क्ली । प्रभाते । श.र. ।

**ऊषः** । पुं । क्षारमृत्तिकायां । अम. । सन्ध्यायां ।

**ऊषकः** । पुं । कन्नर इति प्रसिद्धे द्रव्यकन्दे । वा.सू.१५अ.ऊषकादि. । "ऊषकस्तुत्थकं हिङ्गु ।" क्षारमृत्तिकायाम् । "ऊषकः क्षारमृत्तिका, वारा-णसीसमीपे वभद्रदेशे बाहुल्येन भवति । अन्ये तद्भवं द्रव्यान्तरमाहुः ।" सु.सू.३८अ.ड. । क्ली । प्रत्यूषे । श.र. ।

**ऊषकादिगणः** । पुं । ऊषकतुत्थकहिङ्गुका-सीसद्वयसैन्धवशिलाजतूनीति गणः । गुणाः—मू-त्रकृच्छ्राश्मरीगुल्ममेदःकफघ्नः । "ऊषकस्तुत्थकौ हिङ्गुकासीसद्वयसैन्धवं सशिलाजतु ।" वा.सू.१५ अ. । च.द.कषायस्तुते ।

**ऊषणम्** । क्ली । मरिचे । "ऊषणं मरिचे क्लीबम् ।" मेदिनी । प.मु.। भा.पू.१भ.ह.व.। पिप्पल्यां । च.द.कफज्व.चि.सिन्दुवारादिः । "सिन्दुवारदलक्काथः सोषणः कफजे ज्वरे ।" शुण्ठ्याम् । भा.पू.१भ.ह.व.। पिप्पलीमूले । भा.पू.१भ.ह.व.। पुं । चित्रकवृक्षे । भा.पू.१भ.ह.व. ।

**ऊषणा** । स्त्री । पिप्पल्याम् । रा.नि.व.६ । भा.पू.१भ.ह.व. । चविकायाम् । प.मु. । See चव्यम् । शुण्ठ्यां । वै.निघ. ।

**ऊषरः** । पुं । क्षारभूमौ । रा.नि.व.२ ।

**ऊषरक(ज)म्** । क्ली । औषरके । पांशुलवणे । औषरलवणे। रोमकनामायस्मात्तभिदं रा.नि.व.१३।

**ऊषरतृणम्** । क्ली । स्वनामख्याततृणे, घासविशेषे । गुणाः—बलदं रुच्यं पशूनां हितञ्च । रा.नि.व.८ ।

**ऊषवान्** । त्रि । ऊषरे । अम. ।

**ऊषसूतम्** । क्ली । मृत्तिकालवणे । "ऊषसूतं वालुकेलं शैलमूलाकरोद्भवं । लवणं कटुकं क्वेदि विहितं कटु चोच्यते ॥" सु.सू.४६अ. ।

**ऊषक्षारः** । पुं । क्षारमृत्तिकायाम् । लोणामाटी । गुणाः—"उष्णोऽनिलघ्नः प्रक्लेदी ऊषक्षारो बलापहः ।" सु.सू.४६अ. ।

**ऊषाकरः** । पुं । कुक्कुटे । श.र. ।

**ऊषापानम्** । क्ली । प्रत्यूषजलपाने । तस्य विधिगुणाः—"अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत् । वातपित्तकफान् जित्वा जीवेद्वर्षशतं सुखीति ॥ तथा—अर्शःशोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकाराः मूत्राघातास्तु पित्तश्रवणगलशिरःश्रोणिशूलाक्षिरोगाः । ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तोस्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः ॥ विगतघननिशीथे प्रातरुत्थाय नित्यं पिबति खलु नरो यो घ्राणरन्ध्रेण वारि । स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो वलिपलितविहीनः सर्व्वरोगैर्विमुक्तः॥" भा.।

**ऊष्मकः** । पुं । पित्ते । रा.नि.व. । ग्रीष्मऋतौ । ज्यैष्ठाषाढौ ग्रीष्मऋतुः ।

**ऊष्मा** । पुं । उष्णतायाम् । क्षयरोगे । वै.निघ.।

**ऊष्मापहः** । पुं । हेमन्तऋतौ । वै.निघ. ।

**ऊहः** । पुं । तर्के ।

**ऊहिनी** । स्त्री । सम्मार्ज्जन्याम् । झाँटा ।

**ऊह्यम्** । क्ली। "यदनिर्द्दिष्टं बुद्धिमता तदूह्यं ।" सु.उ.६५अ. ।

## ऋ

**ऋक्थम्** । क्ली । स्वर्णे । धने । अम. । सु.सू.३८अ. । [च. ।

**ऋची(जी)षम्** । क्ली । भ्राष्टे । ताओया । हे.

**ऋजीकः** । पुं । धूमे ।

**ऋजुश्रेणी** । स्त्री । मूर्वायां । रत्ना. ।

**ऋजुसर्पः** । पुं । सर्पविशेषे । दर्व्वीकरसर्पे । सु.कल्प.४अ. । See सर्पः ।

**ऋतम्** । क्ली । जले । मे. ।

**ऋतुः** । पुं । वसन्तादिषड्विधकाले । रवे राशिसंक्रमात् यत्र दोषाणां चयकोपशमा भवन्ति ते ऋतव उच्यन्ते । "चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात् ॥" भा.पू.१भ.ऋतुचर्य्या । ते च शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तसंज्ञाः दोषोपचयप्रकोपोपशमननिमित्तानि भवन्ति । तदुक्तं—"माघादयो द्वादशमासा द्विमासिकमृतुङ्कृत्वा षड़ृतवो भवन्ति । ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताः । तेषां तपस्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः, शुचिशुक्रौ ग्रीष्मः, नभोनभस्यौ वर्षाः, इषोर्जौ शरत्, सहःसहस्यौ हेमन्तः इति । भाद्रपदाश्वयुजौ शरत्, कार्त्तिकमार्गशीर्षौ हेमन्तः, पौषमाघौ शीतः, फाल्गुनचैत्रौ वसन्तः, वैशाखज्यैष्ठौ ग्रीष्मः, आषाढ़श्रावणौ प्रावृड़िति" च मतान्तरं । सु.सू.६अ. । ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ । सिंहकन्ये स्मृता वर्षाः तुला वृश्चिकयोः शरत् धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः । भा. ।

ऋतौ तु तस्य भेदत्रयं स्वीकुर्व्वन्ति यथा—शीतग्रीष्मवर्षाः। तत्र फाल्गुनादिज्यैष्ठान्ताः ग्रीष्मः, आषाढ़ाद्याश्विनान्ता वर्षाः, कार्त्तिकादिमाघान्ताः शीत इति। ऋतुलक्षणादिकं यथा—"तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भाग्नीनां विदह्यन्ते, विदाहात्पित्तसञ्चयमापादयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात्परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयन्ति, स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति।…तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृषः प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्रमपि वर्षमिव शीतोष्णलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात्। ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणानि यथा—वायुर्व्वात्युत्तरः शीतो रजोधूमाकुला दिशः। छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः॥ दर्पिताध्वाङ्क्षखङ्गाह्वमहिषोरभ्रकुञ्जराः। रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये॥ शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः। शेषं हेमन्तवत्सर्व्वं विज्ञेयं लक्षणं बुधैः॥ दिशो वसन्ते विमलाः काननैरुपशोभिताः। किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः॥ कोकिलाषट्पदगणैरुपगीता मनोहराः। दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः॥ ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः। भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्वलिता इव॥ भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः। ध्वस्तवीरुत्तृणलता विपर्णाञ्चितपादपाः॥ प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः। अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः॥ कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही। कदम्बनीपकुटजसर्ज्जकेतकिभूषिता॥ तत्र वर्षासु नद्यम्भःपूरोच्छ्रितटद्रुमाः। वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः॥ भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता। नातिगर्ज्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः॥ बन्धूकाः शरद्यर्काः श्वेताभ्रविमलं नभः। तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः॥ पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः। बाणसप्ताह्वबन्धूककाशासनविराजिता॥ स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः। विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम्॥ हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत्। वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात्॥" सु.सू.६अ.। स्त्रीकुसुमे। अम.। See पुष्पं, आर्त्तवञ्च।

**ऋतुजन्मा।** स्त्री। पुनर्नवायाम्।

**ऋतुपरीक्षा।** स्त्री। आर्त्तवपरीक्षायाम्। तद्यथा—"ऋतौ कण्डूयनं योनौ क्वचिदङ्गे च वेदना। बाहुल्यं स्वल्पता वापि चानुबन्धित्वमस्य वा। संरोधः सर्व्वथा वापि वैद्यान्येतानि यत्नतः। आमधर्व्वाखिलेष्वेव भिषग्भिर्योपितां सदा॥" अत्रि.।

**ऋतुमती।** त्रि। रजःस्वलायां स्त्रियाम्। तल्लक्षणं यथा—"पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम्। नरकाम्यां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्॥ स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम्। हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति। नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्। ईषत्कृष्णं विदग्धञ्च वायुर्योनिमुखं नयेत्॥ तद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुनः। जरापक्वशरीराणां याति पञ्चाशतः क्षयम्॥" सु.शा.२।३अ.।

**ऋतुराजः।** पुं। वसन्तऋतौ। रा.नि.व.२१।

**ऋतुविपर्य्ययः।** पुं। ऋतुव्यापदि। वसन्तादिस्थाने शरदादिधर्म्मप्रवृत्तौ।

**ऋतुवैषम्यम्।** क्ली। ऋतुचर्य्याविपरीताचरणे। भा.म.४भ.। "क्रोधर्त्तुवैषम्यशिरोभितापैः।"

**ऋतुशूलम्।** क्ली। ऋतुकाले रजोरोधजन्यशूलरोगे। "पुष्पस्य वातादिभिर्हतत्वं तस्य कारणं।

बहुलं पिच्छिलं स्निग्धं घनं स्रवति 'शोणितं । शी-ध्रो मार्गौ तु मलानि ऋतौ परमदारुणम्॥" रस.र.यो.व्या.चि. ।

**ऋतुषट्कम्** । क्ली । हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु । "चयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवेराशिषु संक्रमात् ॥" भा. ।

**ऋतुसन्धिः** । पुं । ऋतुद्वयसंश्लेषसमये ; स च ऋतुद्वयस्याद्यन्तसप्ताहरूप: । तदुक्तं "ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृत: । तत्र पूर्व्वोविधिस्त्याज्य: सेवनीय: परो विधिरिति ॥" वा. ।

**ऋतुसम्भिता** । स्त्री । मुनिखर्जूरिकायाम् । वै.निघ. ।

**ऋतुस्नाता** । स्त्री । रजोदर्शनाच्चतुर्थेऽह्नि स्नातायाम् । "पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत्पुत्रं तत: पश्येत्पतिं प्रियं ॥" सु.शा. २अ. ।

**ऋतुहरीतकी** । स्त्री । ऋतौ ऋतौ हरीतकीभक्षणविधौ । यथा—"सिन्धूत्थशर्कराशुण्ठीकणामधुगुडै: क्रमात् । वर्षादिष्वभया सेव्या रसायनगुणैषिणा॥" च.द.। भट्टारस्तु ग्रीष्ममधिकृत्याह । ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे सार्द्धं शर्करया शरत्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितामित्थं प्राश्य हरीतकीमिव रुजो नश्यन्तु ते शत्रव: ॥ प्रयोगा.वाजी.। [धान्ये । निर्वुषीकृतधान्ये । श.टी.।

**ऋद्धम्** । क्ली । सम्पक्वधान्ये । अम. । पक्वमर्द्दित-

**ऋद्धि:** । स्त्री । कोशयामलप्रसिद्धे ऋद्धिवृद्धीति च गौड़प्रसिद्धे स्वनामख्यातलताकन्दे। तदुक्तं "ऋद्धिर्वृद्धिश्च द्वौ कन्दौ भवत: कोशयामले । श्वेतरोमान्वित: कन्दो लताजात: सरन्ध्रक: । तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा। प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत् ॥ रा.नि.व.५ । गुणा:—वृद्धिगुणतुल्या बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु: बलैश्वर्य्यकरी मूर्च्छारक्तपित्तहरी च । भा.पू. १भ. । महाश्रावण्यां । वा.सू.१५अ.पद्मकादौ पठ्य:। "पद्मकपुण्ड्रावृद्धितुगर्द्ध्य:। एतदभावे वाराही योज्या ।"

**ऋद्धिजा** । स्त्री । सर्पगन्धायां । गन्धराखायां । प.मु. । अस्या: कन्दोग्राह्य: । भा.म.१भ. ।

**ऋश्य:** (**श्य:**) । मृगे । बहुमृगे ।"ऋश्यो नीलाङ्गको लोके स रोह इति कीर्त्तित:।" भा.म.१भ.। तन्मांसगुणा:—कषायं मधुरं वातघ्नं पित्तघ्नं हृद्यं तीक्ष्णं वस्तिशोधनञ्च । सु.सू.४६अ. ।

**ऋषभ:** । पुं । ऋषभके । कर्णरन्ध्रे । कुम्भीरपुच्छे। मे.। सु.चि.१७अ. बलीवर्द्दे । वृष । मांसगुणा:—अतिगुरु स्निग्धं पित्तश्लेष्मवर्द्धनं वृंहणं वातघ्नं बल्यं पीनसघ्नञ्च । भा.पू.१भ. ।

**ऋषभक:** । पुं । One of the eight medicaments,carpopogon pruriens. स्वनामख्यातौषधि । ऋषभ इति गौड़े काश्मीरे च प्रसिद्ध: । ऋषभक । जीवकर्षभकयोरुत्पत्तिमाह मिश्रभाव:—"जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ नि:सारौ सूक्ष्मपत्रकौ। जीवक: कूर्चकाकार: ऋषभो वृषशृङ्गवत् ॥" गुणा: —जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । एतदभावे विदारीमूलं प्रयोज्यम् । भा.पू.१भ. । मधुर: शीत: पित्तरक्तविरेकनुत् । शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च स: । रा.नि.व.५ । "ऋषभको वृषभक: ।" सु.चि.८अ. ।

**ऋषभी** । स्त्री । कपिकच्छुलतायाम् । आलाकुशी । र.मा. । नराकारयोषिति । शिरालायाम् । विधवायाम् । मे.भचिकं ।

**ऋषि:** । पुं । गोरोचनायां । वै.निघ. । [प.मु.।

**ऋषिकम्** । क्ली। लताविशेषे । सियाड़िलता ।

**ऋषिजाङ्गलक:** (**ला**) (**लिका,की**) । स्त्री । ऋचगन्धायाम् । सर्पगन्धा । रत्ना. ।

**ऋषिपुत्रक:** । पुं । दमनकवृक्षे । वै.निघ. ।

**ऋषिप्रोक्ता** । स्त्री । माषपर्णीलतायां । प.मु.।

**ऋषिश्रेष्ठ:** । पुं । पुष्करीवृक्षे । ऋद्धौ ।

**ऋषिश्रेष्ठा** । स्त्री । ऋद्धौ । वृद्धौ । वै.निघ. ।

**ऋषिसृष्टा** । स्त्री । ऋद्धौ । मद.व.१ ।

**ऋषीक:** । पुं । काशवृक्षे । मद.व.१ ।

**ऋष्य:** । पुं । हरिणे । श्वेतकुष्ठे । गवयच्छमी ।

भीरुहरिषे। एतन्मांसं कफघ्नं पित्तघ्नं किञ्चिद्वा-तवर्द्धकं लघु बल्यञ्च। भा.पू.१भ.।

**ऋष्यगता**। स्त्री। माषपर्ण्यां। माषाणी। श.र.।

**ऋष्यगन्धा (न्धिका)**। स्त्री। ऋषिजाङ्गलायां। र.मा.। अतिबलायाम्। क्षीरविदार्य्यां। श.र.। श्वेतशर्करकन्दे, रक्तशर्करकन्दे। वै.निघ.।

**ऋष्यजिह्व(क)म्**। क्ली। महाकुष्ठभेदे। तस्य लक्षणम्—"ऋष्यजिह्वाप्रकाशखरत्वानि ऋष्यजिह्वानि।" सु.नि.५अ.।

**ऋष्यपुष्पी**। स्त्री। अतिबलायाम्। वै.निघ.।

**ऋष्यप्रोक्ता**। स्त्री। श्वेतवाट्यालके। प.मु.। शतमूल्याम्। महाशतावर्य्याम्। महाबलायाम्। कपिकच्छुलतायाम्। भा.पू.१भ.ग व.। पीतवाट्यालके। रमा.। माषपर्ण्याम्। च.सू.४अ.। "ऋष्यप्रोक्ताशतावर्य्यतिबलाशुकशिम्बिषु।" मे.तचतुष्कं।

**ऋष्याह्वा**। स्त्री। नागबलायाम्। बलायाम्। বেলেড়া। वै.निघ.।

**ऋक्षः**। पुं। भल्लूके। रा.नि.व.१९। तन्मांस-गुणाः—स्निग्धं गुरु उष्णं स्वादु उष्णं वातघ्नम्। मद.व.१२। हरिणे। हला.। क्षतवेधने। ঘোষা লতা। मे.षद्विकं। श्योनाकवृक्षे। रा.नि.व.९।

**ऋक्षगन्धा**। स्त्री। वृद्धदारकवृक्षे। বীজতাড়ক। ऋषिजाङ्गलायां। र मा च सू.४अ.वृंहणी। श्वेतभूमिकुष्माण्डे। वै.निघ.।

**ऋक्षगन्धिका**। स्त्री। कृष्णभूमिकुष्माण्डे। वृद्धदारकलतायां। वै.निघ.।

**ऋक्षप्रियः**। पुं। ऋषभकक्षुपे। रा.नि व.५।

**ऋक्षमुखयन्त्रम्**। क्ली। सन्दंशगुल्मे यन्त्रविशेषे। अत्रि.।

**ऋक्षविट्**। स्त्री। तैलपायिविष्टायाम्। আর্শোলার নাদি। वै निघ.२भ.अर्शः-चि.कृष्णाशिरीषलेपे। [व.५।

**ऋक्षाह्वा**। स्त्री। महामेदालताक्षुपे। रा.नि.

**एककन्दः**। पुं। पानीयालुके। पाखशाक इति प्रसिद्धे कन्दशाके। শোলাকচু। प.मु.।

**एककुष्ठम्**। क्ली। क्षुद्रकुष्ठभेदे। लक्षणम्—अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं। तदेककुष्ठम्। मा.नि.। एककुष्ठं चर्म्मदलमिति केचित्। कृष्णारुणं येन भवेच्छरीरं। तदेककुष्ठं प्रवदन्त्यसाध्यम्। सु.नि.५अ.।

**एकचरः**। पुं। गण्डके। গণ্ডার। त्रिका.।

**एकदृक् (ष्टिः)**। पुं। काके। हला.। त्रि। काणे। কাণা। हे.च.।

**एकपत्रः (कः)**। पुं। कण्डालकन्दविशेषे। रा.नि.व.७। श्वेततुलस्यां। र.मा.।

**एकपत्रा (त्रिका)**। स्त्री। सुगन्धशट्याम्। गन्धशटी। मालवे पलाश इति ख्याते गन्धपत्रवृक्षे। रा.नि.व.६। पाण्डुरतुलसीवृक्षे।

**एकपत्री**। स्त्री। नागवल्लीलतायाम्। वै.निघ.।

**एकमूलः**। पुं। पुण्डरीकवृक्षे। পুণ্ডরিয়া। वै.निघ.।

**एकमूला**। स्त्री। शालपर्ण्याम्। अतस्याम्। মশিনা। मग्रहः। [ভেঙ্গরাজ। জটা।

**एकरजः**। पुं। भृङ्गराजवृक्षे। ভীমরাজ,

**एकरन्ध्रः**। पुं। नदीवटे। वै.निघ.।

**एकवर्षीया**। स्त्री। एकहायन्यां गवि। এক বছরের বাছুর। हे.च.।

**एकविंशतिगुग्गुलुः**। पुं। कुष्ठरोगे। च.द. कुष्ठ-चि.। चित्रकं त्रिफलां व्योषमजाजीं कारवीं वचाम्। सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम्। विडङ्गान्यजमोदाञ्च मुस्तान्यमरदारु च। याव-न्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुं। सङ्क्षुद्य सर्पिषा सार्द्धं गुडिकां कारयेद्भिषक्। प्रातर्भोजन-काले च भक्षयेत्तु यथाबलम्……। চিতামূল, ত্রিফলা, ত্রিকটু, জীরে, কৃষ্ণজীরে, বচ, সৈন্ধব, আতইচ,কুড়, চই, এলাইচ, যবক্ষার, বিড়ঙ্গ, যমানী, মুতা, দেবদারু প্রত্যেকে সমভাগ। সর্ব্বচূর্ণ সমান গুগ্গুল, ঘৃতের সহিত মর্দ্দনপূর্ব্বক গুড়িকা করিবে।

**एकवीरः** । पुं। स्वनामख्याततरुविशेषे । एक-वीर । गंडुविकीक । गुणाः—कटुकः तीदवातघ्नः उष्णः गृध्रसीकटिशूलाभिघातघ्नः । रा.नि.व.८ ।

**एकवीरा** । स्त्री । वन्ध्याकर्कोट्याम् । गुणाः—"एकवीरा स्मृता तिक्ता चात्युष्णा वातहा स्मृता । पक्षाघातं पृष्ठकटीशूलञ्चैव विनाशयेत्॥" वै.निघ. ।

**एकवृन्दः** । पुं । तन्नामककण्ठरोगविशेषे । येन दुष्टकफशोणिताभ्यां कण्ठे दाहकण्डूमदोषपाकी-षञ्च मृदुरुन्नतो वृत्तश्च शोथो जायते । लक्षणं—"वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्य-मृदुर्गुरुश्च । नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधि र्बलासक्षतजप्रसूतः ॥" सु.नि.१६अ. । मा.नि. ।

**एकवृत्तः** । पुं । गलरोगे । वै.निघ. ।

**एकशफः** । पुं । घोटके । त्रिका. । एकखुर-जन्तुमात्रे । यथा—"खरोऽश्वोऽश्वतरो गौरः शर-भश्चमरी तथा । एते चैकशफाः ख्याताः ।" भा. ।

**एकशफक्षीरम्** । क्ली। अविभागखुरपशुदुग्धे । খুরযোড়া পশুমাত্রের দুধ। गुणाः—उष्णं त्वे कशफं लघु शाखावातहरं साम्लमीषल्लवणं जड़ता करमिति । वा.टी.हेमा. । [प.सु. ।

**एकशिखा** । स्त्री । पाठायाम् । আকনাদি ।

**एकशृङ्गः** । पुं । गण्डके । গণ্ডার । वै.निघ. ।

**एकहस्ती** । स्त्री । अश्वस्य शोभनवल्गामेदे । "द्विहस्ती चैकहस्ती च शुभगा शोभना मता ।" ज.द.७अ. ।

**एकहायनी** । स्त्री। एकवर्षीयायां गवि । अम.।

**एकाङ्गम्** । क्ली । चन्दने । हारा. ।

**एकाङ्गवातः** । पुं। पक्षवधरोगे । পক্ষাঘাত। मा.नि. । See पक्षवधः । अश्वस्य वातव्याधिरोग-विशेषे । "एकः प्रलम्बते कर्णः शरीरार्द्धञ्च शुष्य-ति । शूनो भवति चाश्वस्य रोगे एकाङ्गसंज्ञके ॥" ज.द.५५अ. ।

**एकाङ्गी** । स्त्री । मुरामांस्याम् । মুরামাংসী নামক গন্ধদ্রব্যবিশেষ। गुणाः—तिक्ता हिमा स्वादी लघुः वातपित्तघ्नी ज्वरभूतरक्तरक्षोघ्नी कुष्ठ-कासघ्नी च । भा.पू.१भ. । कटुः कषाया भ्रमसू-र्च्छातृष्णाविषदाहघ्नी च । रा.नि.व.१२ ।

**एकाण्डः** । पुं । तन्नामकदोषान्विताश्वे । "ए-केन लम्बमानेन मुष्कणैकाण्डसंज्ञकः । ज.द.३अ.।

**एकादशशतिकमहाप्रसारणीतैलम्** । क्ली । वातव्याधौ । "शाखामूलदलैः प्रसारणितुला-मितैः कुरण्टीतुलि, छिन्नायाश्च तुलिं तुलिं रुवुकतो रास्नाशिरीषात्तुलां। देवाह्वाच्च सकेतकाद्दशटशते निः-क्वाथ्य कुम्भांशिके, तोये तैलघटं तुषाम्बुकलसौ द-द्यादाढ़कं मस्तुनः ॥ शुक्ताच्छागरसाद्दधीक्षुरसतः क्षी-राञ्च दद्यादाढ़कं,पृक्काकर्कटजीवकाद्यविकषा काको-लिकाकच्छुराः । सूक्ष्मैला घनसारकुन्दुसरला का-श्मीरमांसीनखैः, कालीयोत्पलपद्मकाह्वयनिशा क-क्कोलकग्रन्थिकैः ॥ चाम्पेयाभयचोचपूगकटुकाजा-तीफलाभीरुभिः, श्रीवासामरदारुचन्दनवचाशैलि-यसिन्धूद्भवैः । तैलाम्भोदकटम्भराङ्घ्रिनलिनाह्वशीर-कक्षीरकैः,कस्तूरीदशमूलकेतकनतश्यामाश्वगन्धाम्बु-भिः । कौन्तीतार्क्ष्यजशल्लकीफललघुश्यामाशताह्वाम-यैः, भल्लातत्रिफलाजकेशरमहाश्यामालवङ्गान्वितैः । मञ्जिष्ठैस्त्रिपलैर्महीयसि पचेन्मन्देन पात्रेऽग्निना ॥" তিলতৈল ৬৪শ. কাথার্থ সমূলপত্রশাখ গন্ধ-ভাদুলিয়া ৩১৷৷০শ. নীলঝাঁটী, গুলুঞ্চ, এরগু-মূল প্রত্যেকে ২৫শ. রাস্না, শিরীষছাল, দে-বদারু, কেয়ার মূল প্রত্যেকে ৬।০ শ. জল ৬৪০০ শ. শে ৬৪ শ. কাঁজি ৬৪ শ. দধিমণ্ড ১৬শ. শুক্ত ১৬শ. ছাগমাংস ৮শ. জল ৬৪শ. শে ১৬ শ. ইক্ষুরস ১৬ শ. দুগ্ধ ১৬ শ. । ক-ল্কার্থ পিড়িং ফল, কাঁকড়াশৃঙ্গী, জীবনীয় দ-শক বা অষ্টবর্গ, কাকোলী, মঞ্জিষ্ঠা, ক্ষীর-কাকোলী, আলাকুশীর মূল, ছোট এলাইচ, কর্পূর, কুন্দুরুখোটী, সরলকাষ্ঠ, কুঙ্কুম, জ-টামাংসী, নখী, কৃষ্ণাগুরু, নীলোৎপল, পদ্ম-কাষ্ঠ, হরিদ্রা, কক্কোল, গেঁঠেলা চাঁপাকলি বা নাগেশ্বর, বেণার মূল, গুড়ত্বক্, শুপারি, জায়ফল, লতাকস্তুরী, শতমূলী, লবণখোটী, দেবদারু, শ্বেতচন্দন, বচ, শৈলজ, সৈন্ধব, শিলারস, মুতা, গন্ধভাদুলিমূল, পুনর্নবা, নালুকা, গন্ধশটী, মৃগনাভি, দশমূল, ময়না-ফল, প্রিয়ঙ্গু, শাল, কেয়া, তগরমূল, অশ্বগ-ন্ধা, বালা, রেণুকা, রসাঞ্জন, শিমুলমূল, কট্-ফল, অগুরু, শ্যামালতা বা অনন্তমূল, কুড়-ভেলার মুটী,ত্রিফলা, শুলফা, পদ্ম নাগেশ্বর,

लवङ्ग, त्रिकटु প্রত্যেকে ৩পল। प्रयोगा.भैष। ध्यामसिति पाठे गन्धतृणम्।

**एकादशायसः** । पुं । ग्रहणाधिकारे। पाठः—"लृमायः पुरुषः शुल्वं खगो दरदगन्धकौ। गगनं पुष्परागश्च शोणितश्चेश्वरोरगौ। विड़ङ्गत्रिफलाहिङ्गुयमानीजीरकद्वयं। सर्जीफलवचाश्रृङ्गी मरिचं पिप्पलीद्वयं चवी दुरालभा वह्निः शुण्ठीद्रावैर्विमर्द्दयेत्॥" पुरुषः रसः। खगः स्वर्णमाचिकम्। पुष्परागः तन्नामकमणिः रसाञ्जनं वा। शोणितं कुङ्कुमं। ईश्वरः पित्तलं। रस र.ग्रह-चि.। प्रयोगामृते तु शुल्वस्थाने शुद्धः, शुण्ठीद्रावैर्विमर्द्दयेदित्यत्र 'भावयेदार्द्रकद्रवैः' इति पाठान्तर। प्रयोगामृते पुरुषः गुग्गुलुः। पष्परागं रसाञ्जनं। शोणितं ताम्रं। ईश्वरः रसः। जारितलौहं पारदः गन्धः ताम्रं स्वर्णमाचिकं अभ्रं हिङ्गुलं कुङ्कुमं पोखराजमणिः शीषं पित्तलं विड़ङ्ग त्रिफला हिङ्गु यमानी जीरकं कृष्णजीरकं पियालफलं वचा कर्कटशृङ्गी मरिचं पिप्पली गजपिप्पली चवी दुरालभा चित्रकमूलं एषां प्रति समभागः। आर्द्रकरसेन भाव्यं।

**एकादशेन्द्रियम्** । क्ली। श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्पाणिपायूपस्थपादमनःसु। एषु प्रथमं पञ्चज्ञानेन्द्रियं, अन्यञ्च कर्म्मेन्द्रियं। सु.शा.१अ.।

**एकादिवीरः** । पुं। एकवीरशब्दे। वै.निघ.।

**एकान्तः** । पुं। यदवधारणोच्यते। यथा—"त्रिवृद्विरेचयति मदनफलं वामयतीति।" सु.उ. ६५अ.। [वै.निघ.।

**एकाष्ठी** । स्त्री। कार्पास्यां। कार्पासवीजकोषे।

**एकाष्ठीका** । स्त्री। पाठायाम्। আকনাদি, নিমুকা। वै.निघ.।

**एकाष्ठीलः (ला)** पुं,स्त्री। वकवृक्षे। अम। हिं वकवोल, सरी। भा.पू.१भ.। (ला) पाठायां। र०मा.। रा.नि.व.६। वनतिक्तिकायाम्। मे.लचतुष्कं। पुष्पवृक्षभेदे। भा.पू.१भ.। See अगस्त्यः।

**एकाब्दा** । स्त्री। एकवर्षायां गवि। अम.।

**एकाक्षः** । पुं। काके। त्रि। एकनेत्रे। काणा। श.च.। [—हिमं पित्तघ्नं वातश्लेष्मकृच्च। मद.।

**एकैषिकतैलम्** । क्ली। तन्नामकतैले। गुणाः

**एकैषि(कोशि)का** । स्त्री। वकपुष्पवृक्षे। पाठायाम्। আকনাদি। त्रिवृतायाम्। "एकैशिकाजशृङ्गी च"। सु.सू.३६अ चि.१७,१८अ.। तत्तैलं मधुरम् अतिशीतं पित्तहरं वातकोपनं श्लेष्मवर्द्धनञ्च। सु.सू.४५अ.। [झाड़मूल। वै.निघ.।

**एकैषी** । स्त्री। पाठायां। আকনাদি। सं प-

**एकोशि(षि)का** । स्त्री। पाठायाम्। আকনাদি। र.मा.। वकवृक्षे इति केचित्।

**एड़ः** । त्रि। बधिरे। কালা। अम.।

**एड़कः (काख्यः)** । पुं। पृथुशृङ्गमेषे। ভেড়া। प.सु। वनच्छगले। त्रिका.। 'एड़कः पृथुशृङ्गः स्यान्मेदः पुच्छस्तु दुम्बकः। एड़कस्य पलं ज्ञेयं मेषामिषसमं गुणैः। मेद.पुच्छोद्भवं मांसं हृद्यं वृष्यं श्रमापहम्। पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनम्। भा.पू.१भ.मांसव.। तृणत्रिशीर्षे। ছোগলা। सु.चि.७अ.। मञ्जिष्ठायां। च.।

**एड़कघृतम्** । क्ली। एड़कनवनीतोत्थघृते। गुणाः—अतिगुरुत्वादरुच्यं सुकुमाराणाम्, बुद्धिपाटवकरं बलकरञ्च। रा.नि.व.१५।

**एड़का** । स्त्री। मेष्यां। ভেড়ী। अ.टी.रा।

**एड़गजः (जा)** । पुं, स्त्री। चक्रमर्द्दक्षुपे। চাকন্দা গাছ, চাটাকাটা इति च भाषा। रा.नि.व.५। भा.पू.१भ.सोमराजतैले। च.सू. ३अ.। वन्यैलायां। বন এলাচ। च.द.कुष्ठ चि.।

**एड़मूकः** । त्रि। बधिरे। वाक्श्रुतिवर्ज्जिते। কালা বোবা। मे.कचतुष्कं।

**एड़हस्ती** । पुं। चक्रमर्द्दे। চাকন্দা গাছ।

**एड़ुकः** । त्रि। बधिरे। मे.।

**एणः** । पुं। हरिणे। रा.नि.व.१९। कृष्णमृगविशेषे। কৃষ্ণসার হরিণ। हिं करीसाइलहरिण। अयं जङ्गलजातीयः। अस्य मांसगुणाः—कषायं मधुरं हृद्यं रक्तपित्तकफवातघ्नं रुचिकरं धारकं बल्यं। सु.सू.४६अ.। भा पू.१भ.। विशेषतो ज्वरे प्रशस्तमिति चक्रपाणिः। लघुशीतलं वृष्यं त्रिदोषहरं षड्रसजं रुच्यञ्च। रा.नि.व १७। "शृङ्गिणां हरिणः श्रेष्ठः बल्यो रोचनदीपनः। त्रिदोषघ्नो लघुः पाके मधुरो ज्वरिणां हितः॥ क्षते क्षयार्शसोः पाण्डावरोचकनिपीड़िते। कासश्वासातुराणाञ्च एणमांसं सुखावहम्॥" भैष.२०अ.।

**एणकः** । पुं । हरिणे । श.र. । कृष्णसारे ।

**एणीदाहः** । पुं । सन्निपातज्वरविशेषे । लक्षणं—"परिधावतीव गात्रे रुक्पार्श्वे भुजङ्गपतङ्गहरिणगणः । वेपथुमतः सदाहस्यैणीदाहज्वरार्त्तस्य ।" भा.म.१भ. । [See सर्पः ।

**एणीपदः** । पुं । मण्डलिसर्पे । सु.कल्प.४अ. ।

**एणीपदी** । स्त्री । असाध्यलूताभेदे । सु.कल्प.८अ. । See लूता ।

**एतः** । पुं । हरिणे । श.र. । घोटके ।

**एतनः** । पुं । निश्वासे । हे.च. ।

**एता** । स्त्री । हरिण्याम् । वै.निघ. ।

**एधतुः** । पुं । पुरुषे । [निघ. । See एरका ।

**एरकम्** । क्ली । होगलतृणे । হোগলা । वै.

**एरका** । स्त्री । मुस्तातृणे । तृणविशेषे । হোগলা । मं मोथीतृण । च.सू.३अ.। गुणाः—हिमा शुक्रवृद्धिकरी चक्षुष्या वातकोपना। मूत्रकृच्छ्राश्मरी दाहपित्तशोणितघ्नी च । रा.नि.व.८। शीता वृष्या चक्षुष्या वातकोपनी मूत्रकृच्छ्राश्मरीदाहपित्तशोणितघ्नी च । भा.पू.१भ. ।

**एरङ्गः (ङ्गी)** । पुं, स्त्री । मत्स्यभेदे। অরঙ্গা মাছ, এলেং মাছ, রাগকড়া । हिं अरङ्गा । गुणाः—मधुरः स्निग्धः विष्टम्भी शीतलः गुरुश्च । भा.पू.१भ.मत्स्यव. । मञ्जिष्ठायाम् । च. ।

**एरण्डः** । पुं । Castor oil plant. (Ricinus communis.) स्वनामख्यातवृक्षविशेषे । ভেরেণ্ডা গাছ । हिं एरण्ड, रेंढ़ि । तें आमिदमुचेट्टु । एरण्डः त्रिविधः स्थूलशुक्लरक्तभेदेन गुणाः—मधुरोष्णः गुरुः शूलशोथकटिशूलवस्तिशूलशिरःशूलोदरज्वरवध्नश्वासकफानाहकासकुष्ठामदोषवातहरश्च । तत्कोमलपत्रं गुल्मवस्तिशूलकफवायुकृमिकृमिघ्नम् । तन्मज्जगुणाः—मलभेदकः वातकफोदरघ्नश्च । भा.पू.१भ.गु.व.। श्वेतैरण्डस्य मूलगुणाः—शूलवायुकफनाशित्वं शुक्रजनकत्वं। आमवातनाशित्वं अतिदीपनत्वं पित्तकोपनत्वञ्च। राज.। श्वेतादीनां गुणाः स्वस्वपर्य्याये मृग्याः ।

**एरण्डकः** । पुं । एरण्डे । भरत. ।

**एरण्डजम्** । क्ली । एरण्डतैले । श. ।

**एरण्डतैलम्** । क्ली । Castor oil. एरण्डवीजोद्भवतैले । प्रा.एरंतेल । ভেরেণ্ডার তৈল । हिं रेंढ़िका तेल । गुणाः—मधुरगुरुश्लेष्मवर्द्धकत्वं वातरक्तगुल्महृद्रोगाजीर्णज्वरघ्नत्वञ्च । राज. । ईषत्तिक्तं ईषत्कटुकं रेचकं गुल्मानिलकफोदरमुष्कवृद्धिविषमज्वरकव्यादिशोथरुजश्च जयेत् । तीक्ष्णोष्णं पिच्छिलं विस्रञ्चेति रक्तैरण्डजतैलगुणाः । वा.टी. हेमा तैलव. । एरण्डतैलं कृमिदोषनाशनं वातामयघ्नं सर्व्वाङ्गशूलघ्नं । कुष्ठघ्नं स्वादु रसायने श्रेष्ठं पित्तकोपनं अतिदीपनञ्च । रा नि व.१५ । "एरण्डजं घनञ्चापि शीतमेव मृदुस्मृतं । हृद्वस्तिजङ्घाकट्यूरुशूलानाहविबन्धनुत् ॥ तैलमैरण्डजं बल्यं गुरूष्णं मधुरं तथा । तीक्ष्णोष्णं पिच्छिलं विस्ररक्तमैरण्डसम्भवम् ॥ अत्रि.१४अ. ।

**एरण्डतैलमूर्च्छा** । स्त्री । मूर्च्छाद्रव्याणि—मञ्जिष्ठा मुस्तकं धान्यं त्रिफला जयन्तीपत्रं बालकं वनखर्ज्जूरी वटशृङ्गा हरिद्रा दारुहरिद्रा नलिका केतकी (কেয়ার নামাল) दधि काञ्जिकञ्च । हरिद्रादिपर्य्यायेण पूर्व्ववत् मूर्च्छा कार्य्या ।

**एरण्डपत्रविटपा (त्रिका) (त्री)** । स्त्री। ह्रस्वदन्तीवृक्षे । रा.नि व.६ ।

**एरण्डफला** । स्त्री । ह्रस्वदन्तीवृक्षे । रा.नि. व.६ । भा.पू.१भ. ।

**एरण्डमूलम्** । क्ली । एरण्डशिफायां । च.द. विषमज्व.चि.' एरण्डमूलसिद्धं वा ।"

**एरण्डवीजम्** । क्ली । एरण्डफले ।

**एरण्डशिफा** । स्त्री। एरण्डमूले । भा.वा.व्या.।

**एरण्डसप्त(द्वादश)कः** । पुं । शूलरोगे । अत्र क्षारादीनां माषचतुष्टयं प्रक्षेप्यम् । पाचनादिद्रव्यात्कर्षात्पादिकः । प्रक्षेपः पादिकः क्वाथ्यात् । तथा माषिकं हिङ्गुसिन्धूत्थं जरणाद्यास्तु शाणिकाः। इति परिभाषानियमात् । पृश्निपर्णीद्वयस्यैका चाकुलिया, अन्या कलम्बीपत्रतुल्यदीर्घपत्रा च । च.द. शूल.चि. । এরণ্ডমূল, বেলছাল, চাকুলিয়া, সিংহপুচ্ছীচাকুলিয়া, ছোলঙ্গমূল, পাথরকুচি, গোক্ষুর প্রত্যেকে ২৩ রতি । যবক্ষার, হিঙ্গু, সৈন্ধব, এরণ্ডতৈল প্রত্যেকে ১ মাষা । इति एरण्डसप्तकः । এরণ্ডবীজ, এরণ্ডমূল, বৃহতী, কণ্টিকারী, গোক্ষুর, শালপাণি, চাকুলিয়া,

मुगानी, माषाणी, ডানকুনী, সিংহপুচ্ছীচাকুলিয়া,থাগড়ামূল প্রত্যেকে ১৩৷৹র৷ প্রক্ষেপ যবক্ষার ৪ মা. । एरण्डादमक: ।

**एरण्डा** । स्त्री । हस्तिह्नीहचे । मद.व.१ । पिप्पल्याम् । श.च. ।

**एरण्डादि:** । पुं । तदादिद्रव्यवर्गे । यथा— "एरण्डशारिवाद्राक्षा शिरीषश्च प्रसारणी । माषमुद्गाख्यपर्णिन्यौ विदारीकन्दकेतकी । एरण्डादिमणो ह्येष वातपित्तविकारजुत् ॥" रसचन्द्रिका । এরণ্ডমূল, অনন্তমূল, কিস্‌মিস্‌, শিরীষ, পঞ্চভাতুলিয়া, মুগানী, মাষাণী, ভূঁইকুম্‌ড়া, কেতকীমূল প্রত্যেকে ১৮ র. ।

**एर्व्वारु: (रुका)** । पुं, स्त्री । कर्कटीलतायां । কাঁকুড় বা ফুটী গাছ । हिं फुट । तें नक्कदोस । ग्रीष्मकर्कटी । विज.र. । सा महत्त्तुद्रभेदेन द्विविधा । गुणा:—पित्तहरी शीतला मधुरा मूत्रदोषघ्नी रुचिकरी सन्तापमूर्च्छाहरी च । अति सेवनात् वातकोपकरी च । रा.नि.व.७ । शीतला रुक्षा मधुरा ग्राहिणी गुरु: । आमा सा रुच्या पित्तघ्नी च, पक्वा तृष्णाग्निपित्तकरी च । भा.पू. १भ.शा.व. । कोमलैर्व्वारुकं तिक्तं लघु स्वादुतिमूत्रलम् । शीतं रुक्षं रक्तपित्तमूत्रकृच्छ्रासदोषजं । तत्पक्वं पित्तलं चाग्निदीपनञ्च तृषापहं । उष्णं त्रिदोषशमनं क्लमिदाहहरं मतम् । गहे जीर्णन्तु तज्ज्ञेयमुष्णं पित्तकरं मतं । कफवायूर्नाशकरं प्रोक्तमायुर्व्विदेर्जनै: । चुद्रमेर्व्वारुकं शीतं मधुरं रुचिकारकं । कासपीनसकारि स्यात् पाचकं श्रमपित्तहं । आध्मानवायुो: शमनं । वै.निघ. । विलेशयफगी । [र.मा. । भेष.चुद्ररी.चि. ।

**एर्व्वारुकम्** । क्ली । कर्कटिकफले । কাঁকুড় ।

**एर्व्वारुतैलम्** । क्ली । कर्कटीवीजतैलं । কাঁকুড়বীজের তৈল । गुणा:—विभीतकतैलगुणम् । वातपित्तघ्नं केश्यं श्लेष्मकरं गुरु शीतलञ्च । वा.तैलव. ।

**एल:** । पुं । एलायां । एलवालुके । सि.यी.अरोच.चि.श्रीकण्ठ: । "रातैलहिङ्कुलवणोत्तमानां ।" च.द.वात.ज्व.रात्वादि: ।

**एलक:** । पुं । मेषे । रा.नि.व.१९ ।

**एलङ्ग:** । पुं । मत्स्यविशेषे । रायकड़ा । रायखाँड़ा, এলঙ্গা । गुणा:—मधुरो रुच्य: वाजी कफवातघ्न: मेधाग्निपुष्टिकर: शीतल: गुरुश्च । रा.नि.व.१९ ।

**एलवालम्** । क्ली । एलवालुके । भा.म.४भ. नेत्ररो.चि.सामान्याञ्जने । "सैन्धवं चैलवालम् ।"

**एलवालु (कम्)** । क्ली । Name of a perfume, a red powder sold under those names, seed of some plant. स्वनामप्रसिद्धगन्धद्रव्यविशेषे । अम. । श.र. । कक्कोलसदृशं कुष्ठगन्धि । भा.म.१भ. । নালুকা, এলাবালুক । हिं एलुवा । मं कलंगडली । तें कुनुरुवुड़मचेटू । गुणा:—कटुपाकं कषायं लघु शीतलं कण्डूकुष्ठक्लमिघ्नं तृष्णाच्छर्दिकफपित्तरक्तमूत्रहरं । भा.पू.१भ. । मद.व ३ । अत्युग्रं कषायं कफवातनुत् मूर्च्छाज्वरदाहघ्नं रोचनञ्च । रा.नि.व.४ । वा.सू. १५अ.रोध्रादि. । कुष्ठघ्नं क्लमिघ्नं विषघ्नं हृद्रोगहरञ्च । प.मु. । "सैलबालुपरिपेलवमोचा: ।" তেজবল इति च.सू.४अ । बालके । বালা । वै. निघ.२भ.र.पि चि.दृश्यायन्ते ।

**एला** । स्त्री । Cardamom, the seed of Elettaria cardamomum. स्वनामख्यातपण्यद्रव्ये । এলাইচ । हिं इलाँचीपूरवी । मं एलची । तें यवडुलक्कि, एलुकचेटु । एला द्विधा —सूक्ष्मा स्थूला च । सूक्ष्मा गुजराटी, स्थूला च बड़एलाचि इति भाषा । एतदुभयगुणा:—शीत-लतिक्तोष्णसुगन्धि पित्तघ्नं कफघ्नं हृद्रोगकरं मलार्त्तिवान्तिपुंस्त्वघ्नं । रा.नि.व.६। पित्तकफनाशित्वं शूलकोष्ठकृच्छ्रतातृष्णाच्छर्दिवायुनाशित्वम् । राज. । सूक्ष्मैलाविशेषगुणा:—मूत्रकृच्छ्रनाशित्वं कफश्वासकासार्शोहरत्वञ्च । स्थूलैला कटुकी पाके रसे चानलक्लल्लघु: । रुचोष्णा श्लेष्मपित्तासकण्डूश्वासतृषापहा । हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ॥ भा.पू.१भ. । नील्याम् । [व.४ ।

**एलागन्धिकम्** । क्ली । एलवालुके । रा.नि.

**एलादिगुड़िका** । स्त्री। रक्तपित्ते हिता। मधुना तोलकद्वयं भक्ष्यं। एलापत्रत्वचोऽर्द्धाक्षा: पिप्पल्यर्द्धपलं तथा । सितामधुकखर्ज्जूरमद्वीकाश्च पलोन्मिता: । सञ्चूर्ण्य मधुना युक्ता गुड़िका कारयेद्भिषक् ॥ च.द. । रस.र. । এলাবীজ, তেজপত্র,

গুড়ত্বক্ প্রত্যেকে ১ তো. পিপুল ৪ তো. শর্করা,যষ্টিমধু, পিণ্ডখেজুর, দ্রাক্ষা প্রত্যেকে ৮ তো. সম্চূর্ণ্য मधुना गुड़ी कार्य्या । सा.कौ.।

**एलादिगणः** । पुं । एलादिद्रव्यवर्गः । स च एलायुग्मतुरुष्क कुष्ठफलिनी मांसी जल ध्यामकस्पृक्का चोरक-चोच-पत्र तगरस्थौणेयजातीरस शुक्ति-व्याघ्रनखामरदारुगुरुश्रीवासककुङ्कुमचण्डा गुग्गुलु-देवधूपखपुरपुन्नागनागाह्वयात्मकः । गुणाः—वातकफघ्नो विषघ्नो वर्णप्रसादनः कण्डूपिटिकाकोठघ्नश्च । वा.सू.१५अ. । वा.टी.हेमा. ।

**एलादिचूर्णम्** । क्ली । छर्द्यधिकारे । च.द. भेष. । पाठः—"एलात्वक् मरिचं शुण्ठी पिप्पली नागकेशरं । यथोत्तरं भागवृद्ध्या चूर्णन्तु सितया समं ॥" रस.र.राजयक्ष्म चि. ।

**एलादितैलम्** । क्ली । वातव्याधौ । तिलतैलं ४ श. एलादीनां कल्कः मिलितशरावमितः दुग्धं १६ श. दधि १६ श. वाट्यालकक्काथः १६ श. वाट्यालकं १२॥०श. जल ६४ श. शे १६श. । एला सुरामांसी सरलकाष्ठं शैलजं देवदारु रेणुकं चोरपुष्पी शटी जटामांसी चम्पकलो नागकेसरं ग्रन्थिपर्णं गन्धरसः खट्टासी तेजपत्रम् उशीरमूलं चन्दनं कुन्दुरुखोटी नखी बालकं गुड़त्वकं कुष्ठं कालागुरु मुस्तकं सामुद्रकर्कटः श्वेतचन्दनं मञ्जिष्ठा जातीफलं कुङ्कुमं पिड़िङ्गपुष्पं शिलारसः अगुरु एषां प्रति २ तो. । च.द. ।

**एलादिमन्थः** । पुं । यक्ष्मरोगे । एलादीनां (एला यमानी आमलकं हरीतकी विभीतकं खदिरसारः निम्बः पीतशालः शालः विड़ङ्गं भल्लातकास्थि चित्रकमूलं त्रिकटुकं मुस्तकं पर्पटी) प्रत्येकं ८ प. एकत्र १५ श. जलेन साधयित्वा ३॥० शरावावशिष्टे क्वाथं वस्त्रपूतं ग्राह्यं । तेन घृतं (३२प.) विपाच्य पाकशेषे शर्करायाः ३०प. वंशलोचनायाः ६ प. मधुनः ३२प. प्रक्षिप्य मन्थनदण्डेनालोड़येत् । च.द.रा.य.चि. । इयं वाभटोक्ता प्रक्रिया ज्ञेया । मतान्तरे तु एलादीनां प्रत्येकं २ प. ६ तो. ६ र. जलं ६४ श. ।

**एलानम्** । क्ली । फलविशेषे । नारেঙ্গা লেবু । मं हिरंवेकल । गुणाः—"आममेलानमम्लं स्यात्तरं चोष्णं गुरु स्मृतम् । वातघ्नञ्चैव सम्प्रोक्तं पक्वं तच्छीतलं मधु । बलकृद्वातपित्तघ्नमृषिभिः परिकीर्तितम् ॥ रा.नि.व.११ ।

**एलापर्णी** । स्त्री । वृक्षविशेषे । কাঁটা আমরুলী, এলানি । रास्नायाम् । भा.पू.१भ. ।

**एलाफलम्** । क्ली । एलवालुके । रा.नि.व.४ । पुं । मधूकवृक्षे । ময়ূল গাছ । वै.निघ. ।

**एलाबालुकम्** । क्ली । एलबालुके । रा.नि.व.४ । कुष्ठगन्धिफलसदृशे । कट्फलसदृशे । सु.सू.३७अ. ।

**एलाबूः** । स्त्री । अलाब्वाम् । লাউ । अ.टी. ।

**एलायुग्मम्** । क्ली । एका सूक्ष्मा अन्या स्थूला च । ছোট এলাচ, বড় এলাচ । वा.सू.१५अ. एलादिः । 'एलायुग्मतुरुष्ककुष्ठफलिनी ।"

**एलालु (कम्)** । क्ली । एलवालुके । रा.नि.व.६ । भा.पू.१भ. ।

**एलाह्वम्** । क्ली । एलवालुके । रा.नि.व.४ ।

**एलीका** । स्त्री । सूक्ष्मैलायाम् । रा.नि.व.६ ।

**एलीयः** । पुं । एलवालुके । वै.निघ. ।

**एलुकम् (काख्या)** । क्ली,स्त्री । एलबालुके । सु.चि.१६अ. ।

**एल्वम्** । क्ली । एलवालुके । सु.चि.१६अ. ।

**एल्ववालु(ल्वालु)कम्** । क्ली । एलाबालुके । रा.नि.व.४ । मद.व.३ ।

**एषणः** । पुं । सम्भकीटवृक्षे । वै.निघ. ।

**एषणिका** । स्त्री । स्वर्णादिपरिमाणतुलायाम् । निक्ति । अम. ।

**एषणी** । स्त्री । Probe. व्रणमार्गानुसारिशलाकायाम् । सा च गण्डूपदाकारमुखी । गतिरन्वेषणी शस्ता गण्डूपदमुखैषणी । भेदनार्थेऽपरा सूची मुखामूलनिविष्टखा । इति ॥ सु.सू.८अ.। तुलाभिदि । निक्ति । "एषणीव्रणमार्गानुसारिण्याच तुलाभिदि ।" मे.णत्रिकं ।

**एष्यः** । त्रि । एषणार्हे । नाड्यादौ रोगे ।

**एष्या** । स्त्री । आमलकीवृक्षे । रत्ना. ।



**ऐकशफम्** । क्ली । गर्द्दभीदुग्धे । सु. । See गर्द्दभीदुग्धम् । त्रि । एकखुरसम्बन्धीये ।

**ऐकाह्निकः** । त्रि । एकदिवससम्पन्ने । एकदिनान्तरभवे । [See अन्येद्युष्कः ।

**ऐकाह्निकज्वरः** । पुं । एकदिनान्तरगतज्वरे ।

**ऐङ्गुदः** । पुं । इङ्गुदीवृक्षे । क्ली । इङ्गुदीफले । अम. । भैष. ।

**ऐणः(णेयः)** । त्रि । एणमृगचर्म्मादौ ।

**ऐणेयकम्** । क्ली । एलवालुके ।

**ऐन्दवी** । स्त्री । सोमराज्याम् । रा.नि.व.४ ।

**ऐन्द्रः** । पुं । देवसर्षपवृक्षे । क्ली । मूलविशेषे । বন আদা । गुणाः—कटुत्वं रुचिबल्याग्निकरत्वञ्च । रा.नि व.१ ।

**ऐन्द्रयवः** । पुं । इन्द्रयवे । मद.व.१ ।

**ऐन्द्रलुप्तिकः** । त्रि । इन्द्रलुप्तरोगविशिष्टे । টেকো । [রাখালশশা । मद.व.१ ।

**ऐन्द्रवारुणी** । स्त्री । इन्द्रवारुणीलतायाम् ।

**ऐन्द्रिः** । पुं । काके । मे.रद्विकं ।

**ऐन्द्री** । स्त्री । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा.नि.व.६ । वै.निघ.२भ.तालीशादिचूर्णे । इन्द्रवारुण्यां। রাখালশশা । प.मु.रा.नि.व.३,च.सू.४अ.। গোরক্ষকর্কট্যাং । च.सू.४अ.प्रजास्थापने । भा.अने.।

**ऐन्द्रीफलम्** । क्ली । इन्द्रवारुणीफले । রাখালশশাফল । च.द.उ.मा.चि. । "पक्वैन्द्रीफलसूत्रमम् ।"

**ऐन्द्रीरसायनम्** । क्ली । रसायनविशेषे। अत्र ऐन्द्री (গোরক্ষচাকুলে), मत्स्याक्षी (তণ্ডুলীয়মূল), ब्रह्मसुवर्चला (সুবর্চলা ভেদ), शङ्खपुष्पी (ডানকুনী), ऐन्द्र्यादिविषान्तानां प्रत्येकं यवत्रयं केवलं स्वर्णं यवद्वयं विषस्य तिलं घृतस्य च पलं । च.चि.१अ. ।

**ऐभी** । स्त्री । हस्तिघोषालतायाम् । रा.नि.व.३।

**ऐरावतः** । पुं । लकुचवृक्षे । মান্দার । नागरङ्गे । নারাঙ্গা লেবু । मे.तचतुष्कं । रा.नि.व. ११, प.मु. । चुद्रदीपान्तरखर्ज्जूरे । क्ली । एतत्कर्व्वीरे । रत्ना. । ऐरावतफले । तत्फलं अम्लरक्तपित्तकृद्गुरुशठञ्च । सु.सू.४६अ. ।

**ऐरावतकः** । पुं । हस्तिशुण्ड्यां । হাতিশুঁড়ে । च.चि.३अ. । नागरङ्गवृक्षे । वै.निघ. ।

**ऐरावतपदी** । स्त्री । काकजङ्घायाम् । महाज्योतिष्मतीलतायाम् । বড় লতাফটকী ।

**ऐरावती** । स्त्री । वटपत्रपाषाणभेदक्षुपे । বড় পাথরকুচি । रा नि.व ५ । नागरङ्गवृक्षे । भा. । गुणाः—"ऐरावती रसे पाके लम्लोष्णा च सुगन्धिका । वातं कासं श्वासरुजं नाशयेदिति कीर्त्तिता ॥" वै.निघ. । [नि.व ५ ।

**ऐरिणम्** । क्ली । सैन्धवलवणे, पांशुलवणे । रा.

**ऐरेयम्** । क्ली । मद्ये । वै.निघ. । एलबालुके । अम. ।

**ऐर्व्वारुः** । पुं । कर्कटीविशेषे । বড় কাঁকুড়। मद.व.७। च.द.प्रदर.चि.।See एर्व्वारुः, कर्कटी ।

**ऐलबालुकम्** । एलबालुके । श.र. ।

**ऐलेय(क)म्** । क्ली । नलुकायाम् । एलबालुके । अम. । "ऐलेयविश्वधान्याकम् ।" सि.यो., च.द.र. पि.चि.वासाखण्डकुष्माण्डे ।

**ऐल्वालु** । क्ली । एलवालुके । मद.व.३ ।

**ऐशमूलम्** । क्ली । लाङ्गलीमूले । ঈশলাঙ্গুলিয়ার মূল । रस.र.बाल.चि. ।

**ऐशानः** । पुं । ईशानकोणभववायौ । स च कटुकः शीतलश्च । भा. ।

**ऐश्वर्य्यम्** । क्ली । श्वेतधुस्तूरके । वै.निघ. ।

**ऐषिका** । स्त्री । पाठायाम् । त्रिवृतायाम् । वै. निघ । [मद्ये । जटा. ।

**ऐक्षवम्** । क्ली । इक्षुविकारे, गुड़ादौ । इक्षु-

**ऐक्षवी(सुरा)**। स्त्री । इक्षुरसकृतमद्ये । तस्याः गुणाः—शीतलं अतिमादकञ्च । रा.नि.व.१५ ।

# ओ

**ओकः** । पुं, क्ली (कस्) । गृहे । आश्रये । अम. ।

**ओकणः** । पुं । केशकीटे । উকুণ । श.र. ।

**ओकणिः (नी)** । पुं, स्त्री । उकुणे । श.र ।

**ओकोदनी** । स्त्री । यूके । উকুণ । श.र. ।

**ओक्कणी** । स्त्री । उकुणे । श.र. ।

**ओजः (स्)** । क्ली । बले । मे.सन्तिकं । तेजसि । रसादिसर्व्वधातुसारभागधातुविशेषे । गुणाः — सर्व्वशरीरस्थितत्वं स्निग्धत्वं शीतलत्वं स्थिरत्वं शुक्लवर्णत्वं कफात्मकत्वं शरीरबलपुष्टिकारित्वञ्च । हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकं । ओजः शरीरे सङ्ख्यातं तन्नाशान्नाशमृच्छति । वै.निघ. । अष्टविन्दुप्रमाणं तदीषद्रक्तं सपीतकं । अग्निसोमात्मकत्वेन विरूपं वर्णितञ्च तत् ॥ चर. । ओजश्च तेजोधातूनां शुक्रान्तानां परं स्मृतम् । हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ वा. । दीप्तौ । मे. ।

**ओजस्करः** । त्रि । ओजोधातुवर्द्धके ।

**ओड़िका (ड़ी)** । स्त्री । नीवारे । উড়িধান্য । प.मु. । गुणाः — शोषणी रूक्षा कफवायुवर्द्धिकरी पित्तनाशिनी च । राज. । See नीवारः ।

**ओड्रः (कः)** । पुं । The China rose. (Hibiscus mutabilis.) जवाकुसुमवृक्षे । জবাফুলের গাছ । हिं औड़हुल । मं जासविन्द । रा.नि.व.१० । गुणाः — संग्राही केशहितश्च । भा.पू.१भ.पुष्पव. । मलमूत्रस्तम्भनरञ्जनश्च । राज. । कटुकषायः इन्द्रलुप्तहरः विच्छर्द्दिजन्तुजनकः सूर्य्याराधनश्च । रा.नि.व.१० । माचा २भा. । [नि.व.१० ।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्षे । रा.

**ओड्रपर्य्यायः** । पुं । सूर्य्यकान्तपुष्पवृक्षे स्वनामख्याते । जवा । अम. । [फूल । प.मु. । See ओड्रः ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुमे । रक्तजवा

**ओड्रपुष्पा** । स्त्री । जवावृक्षे । वै.निघ. ।

**ओड़ापलक्षणा** । स्त्री । गोरक्षमुण्ड्याम् । वै.निघ. । [वनविड़ाले । वै.निघ. ।

**ओतुः** । पुं, स्त्री । विड़ाले । বিড়াল । अम. ।

**ओदः** । पुं । अन्ने ।

**ओदनः** । पुं । अद्रवे सिक्थे । स च अन्नादिभ्यो गुरुः । वा.टी.हेमा. । क्ली । भक्ते । प.मु. । अन्ने । रा.नि.व.२० । পিটুলি । सा.कौ.ज्य.वचि. ।

**ओदनपाकी** । पुं । नीलझिण्ट्याम् । प.वि.२श.चन्द.तैले ।

**ओदना (निका) (नी)** । स्त्री । महासमङ्गायाम् । বেলেড়াবিশেষ । वाट्यालके । বেলেড়া । रा.नि.व.४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां । रा.नि.व.४ । वाट्यालके । हिं खिरिहिटी । मद.व.१ ।

**ओलः (ल्लः)** । पुं । स्वनामख्यातकन्दशाके । ওল গাছ । र.मा.,भा.पू.१भ. । गुणाः — अग्निकरः कफघ्नः रुचिकरः लघुः अर्शसि पथ्यः । ग्राम्यकन्दस्तु दोषल इति । राज. । See शूरणः । त्रि आर्द्रे । मे.लन्तिकं ।

**ओल(ल्ल)कन्दः** । पुं । शूरणे । ওল । र.मा. । वनौल्ले । বুনা ওল । पानीयभक्तवट्याम् ।

**ओषः** । पुं । दाहे । प्लोषः शोषः इति पर्य्यायशब्दः । अम.भरतः ।

**ओषणः (णिः)** । पुं । कटुकरसे । झाल । हे.च. । (णी) पुरातिशाके । পুরতিশাক । गुणः — कफवायुनाशित्वम् । राज. । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे ।

**ओषधिः** । स्त्री । फलपाकान्तवृक्षादौ, कदलीधान्यादिके । हे.च. । द्रव्येषु । तानि पुनरौषधयः । ताश्च द्विविधाः स्थावराः जङ्गमाश्च । तासां स्थावराः चतुर्धा यथा — वनस्पतिः वृक्षः, वीरुत्, ओषधिरिति । तासु अपुष्पफलवान् वनस्पतिः, पुष्पफलवान् वृक्षः, प्रतानवती लता, फलपाकनिष्ठा च ओषधिः । जङ्गमा अपि चतुर्धा जरायुजाण्डजस्वेदजोद्भिज्जभेदेन । तत्र पशुमनुष्यव्यालादयो जरायुजाः । खगसर्पसरीसृपप्रभृतयोऽण्डजाः । कृमिकीटप्रभृतयः स्वेदजाः । मण्डूकादयः उद्भिज्जा इति । सु.सू.१अ. ।

**ओषधिगणः** । पुं । रासायनिकौषधिगणे । ताः सोमसमवीर्य्या महौषधय इति ख्याताः ।

तासाञ्च सोमवत्त्रियाशीःसुनयः शास्त्रे कथिताः । तत्राष्टादशधा — अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणुः अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति । एताश्चार्बुदगिर्य्यादिषु लभ्याः — "यासाञ्च याः क्षीरवत्यस्तासां क्षीरं कुड़वमितं सकृदेव उपभुञ्जीत । यास्तु अक्षीरा मूलवत्यः तासां प्रदेशिनी प्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे । श्वेतकापोती समूलपत्रा भक्षयितव्या । गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपभुञ्जीत । चक्रकायाः पयः सकृदेव । ब्रह्मसुवर्चलाः सप्तरात्रमुपभोक्तव्याः । भव्यकल्पेन शेषाणां पञ्च पलानि क्षीराढ़कक्वथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत । सोमवदाहारविहारौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदानिर्गमादिति । अथासां पृथग्विज्ञानमुच्यते — मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी । पञ्चारत्निप्रमाणा वा विज्ञेयाजगरी बुधैः ॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलिसम्मिता । सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते ॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां । द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिं ॥ सक्षीरां रोमशां मृद्वीं रसेनेक्षुसमोपमां । एवं रूपरसाञ्चापि कृष्णकापोतिमादिशेत् ॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा । एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा ॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे । जरामृत्युनिवारिण्यौ श्वेतकापोतिसंस्थिते ॥ कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः । कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी ॥ करेणुः सुबहुक्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥ अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥ श्वेतां विचित्रकुसुमां काकादन्याः समां क्षुपां । चक्रकामौषधिं विद्याज्जरामृत्युनिवारिणीम् ॥ मूलिनी पञ्चभिः पत्रैः सुरक्तैः मृदुकोमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी ॥ कनकाभा जलान्तेषु सर्व्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥ अरत्निमात्रक्षुपका पत्रैर्द्व्यङ्गुलसम्मितैः । पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः, श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा । गोलोमी चाजलोमी च रोमशे कन्दसम्भवे ॥ हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः । अथवा शङ्खपुष्पी च समाना सर्व्वरूपतः ॥ वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा । एषा वेगवतीनाम जायते ह्यम्बुदक्षये ॥···देवसुन्दे हृदवरे तथा सिन्धौ महानदे । दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला ॥ आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये । दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥ काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् । करेणुस्तत्र कन्या च छत्रातिच्छत्रिके तथा ॥ गोलोमी चाजलोमी च महती श्रावणी तथा । वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते ॥ कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वतः । क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयं ॥ विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु । मलये नलसेतौ च वेगवत्यौषधी ध्रुवा ॥ कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषितः । सोमवच्चात्र वर्त्तेत फलं तावच्च कीर्त्तितम् ॥" इत्यादि । गुणाः — युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनं । कुर्य्युरेताः क्रमेणैव द्विसहस्रायुषं नरम् ॥ अङ्गदी कुण्डली मौली दिव्यस्रकचन्दनाम्बरः । चरत्यमोघसङ्कल्पो नभश्चाम्बुदुर्गमं ॥ व्रजन्ति पक्षिणो येन जललब्धाश्च तोयदाः । गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा ॥ सुश्रुते चि. ३० अ. ।

**ओषधी** । स्त्री । ओषधी । भरतः । लघुद्रव्ये । [वै निघ. ।

**ओषधीपतिः** । पुं । कर्पूरे । हे.च. ।

**ओषधीशः** । पुं । कर्पूरे । अम. । [व.१८ ।

**ओष्ठः** । पुं । दन्तच्छदे । উপরঠোঁট । रा.नि.

**ओष्ठधरः** । पुं । ओष्ठे । ঠোঁট । [व्रण । मा.नि. ।

**ओष्ठपाकः** । पुं । तन्नामकरोगविशेषे । ওষ্ঠ-

**ओष्ठपुष्पः** । पुं । बन्धुजीवपुष्पवृक्षे । বান্ধুলী গাছ । रा.नि.व.१० । See बन्धुजीवः ।

**ओष्ठप्रान्तः** । पुं । सृक्कभागे । रत्ना. ।

**ओष्ठफला (भा)** । स्त्री । विम्बीलतायाम् । তেলাকুচা । मं गोडतोंडली । वै.निघ. ।

**ओष्ठरञ्जनी** । स्त्री । ताम्बूले । পান । प.मु. ।

**ओष्ठरोगः** । पुं । ओष्ठाश्रयरोगविशेषे; ओष्ठ-

अलादी। वातजपित्तजश्लैष्मिकसान्निपातिकरक्तजमांसजमेदोजाभिघातजभेदादष्टविधः। तत्र कर्कशत्वादिलक्षणा वातजाः, पिड़काचितत्वादिलक्षणा पित्तजाः, कण्डूमत्त्वादिलक्षणा कफजाः, कृष्णपीतश्वेतत्वादिसर्व्वलक्षणयुक्ताः सन्निपातजाः, स्रवद्रक्तखर्ज्जूरफलवर्णत्वादिलिङ्गा रक्तजाः, गुरुस्थूलत्वादिलक्षणा मांसजाः, सर्पिर्मण्डसवर्णत्वादिलक्षणा मेदोजाः,क्षतजातत्वादिलक्षणा अभिघातजा इति। भा.म ४भ.मुखरो.चि.। "आलूपपिप्पिलक्षीरदधिमत्स्यातिसेवनात्। मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषा कफोत्तराः॥ इति। मा.नि.। [प.मु.।

**ओष्ठा (ष्ठी)** । स्त्री। बिम्बर्यां। তেলাকুচা।

**ओष्ठाधरौ (रं)** । पुं, क्ली। ओष्ठद्वये।

**ओष्ठोपमफला (लिका)** । स्त्री। बिम्बिकायां। তেলাকুচা গাছ। हिं कुन्दुरु। भा.पू.१भ.।

—∞∞—

## औ

**औड़(ड़)म्बरम्** । क्ली। कुष्ठरोगविशेषे। मे.। तस्य लक्षणं—"दग्दाहरागकण्डूभिः परीतं लोमपिञ्जरं। औदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत्॥" मा.नि.। ताम्रे। जटा.। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औड्रपुष्पम्** । क्ली। जवापुष्पे। हे.च.।

**औत्सुक्यम्** । क्ली। उत्कण्ठायाम्। हे.च.।

**औदनिकः** । पुं। सूपकारे। अम.। [पेटूके।

**औदरिकः** । त्रि। क्षुधिते। उदरमात्रपोषके।

**औदर्य्यम्** । क्ली। ताम्रे। मदनफले। उदुम्बरफले। [हे.च.।

**औदश्वित(त्क)म्** । क्ली। अर्द्धजलयुक्तघोले।

**औदुम्बरम्** । क्ली। ताम्रे। ঢারা। महाकुष्ठरोगविशेषे। गुणाः—"पित्तेन पक्वोदुम्बरफलाकृतिवर्णानि औदुम्बराणि।" सु.नि.५अ.। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औदुम्बरच्छदः** । पुं। दन्तीवृते। वै.निघ.।

**औदुम्बरी** । स्त्री। कृमिभेदे।

**औद्दाल(क)म्** । क्ली। स्वर्णवर्णे वल्मीककारिकीटकृतमधुनि। উইমধু। रा.नि.व.१४। गुणाः—कषायम् उष्णं कटु कुष्ठविषनाशि च। राज.। राजनिघण्टु नु भूमिः उद्दलनात् औद्दालकाभिधाः कपिलकीटाः तैः वल्मीकसमीपे सञ्चितं मधु। "औद्दालाः कपिलाः कीटा भूमिदृद्दलनात् स्मृताः। वल्मीकात्तदुत्पन्नमौद्दालकमुदीर्य्यते। कुष्ठादिदोषघ्नं सर्व्वसिद्धिदश्वेति।" रा.नि.व.१४। "प्रायोवल्मीकमध्यस्थाः कपिला स्वल्पकीटकाः। कुर्व्वन्ति कपिलं स्वल्पं तस्मादौद्दालकं मधु॥" रुच्यं स्वर्य्यं कुष्ठविषघ्नं कषायं उष्णमम्लं कटुपाकं पित्तकरञ्च। भा.पू.२भ.मधुव.।

**औद्दालकशर्करा** । स्त्री। औद्दालमधुकृतशर्करायां। सा गुणैरौद्दालमधुसदृशी। रा.नि.व.१४।

**औद्भिज्जम्** । क्ली। पांशुलवणे। সোরা। रा.नि.व.६। शाम्भरिलवणे। [राज.।

**औद्भिदम्** । क्ली। औद्भिदलवणे। সোরা।

**औद्भिदजलम्** । क्ली। उद्भिदी जाते जले। प्रस्रवसलिले। तस्य गुणाः—मधुरं पित्तशमनं अविदाहि च। राज.। लघु। रा.नि.व.१४। "विदार्य्य भूमिं निम्नां यत् महत्यां धारया स्रवेत्। तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः॥ औद्भिदं वारि पित्तघ्नं अविदाह्यतिशीतलं। प्रीणनं मधुरं बल्यमीषद्वातकरं लघु॥" भा.पू.१भ.वारिव.। वर्षासु औद्भिदं पथ्यम्। मद.।

**औद्भिदद्रव्यम्** । क्ली। उद्भिद्य पृथिवीं जायते इत्युद्भित्। तच्च वनस्पतिलतावानस्पत्यौषधात्मकम्। See च.सू.१अ.वनस्पत्यादिः।

**औद्भिदलवणम्** । क्ली। पांशुलवणापरनाम सैन्धवलवणं,यत्तु गर्भतः स्वयमुत्पद्यते। সোরা। सि.यो.यक्ष्म.चि.चित्रगुड़िकायां। च.द.षड्पलघृते। गुणाः—क्षारयुक्तं गुरु कटु स्निग्धं शीतं वातघ्नञ्च। भा.पू.१भ.ह.व.। रक्तलं सूक्ष्मं लघु वातानुलोमनञ्च। मद.व.२। तीक्ष्णं उत्क्लेदजनकं क्षारयुक्तं कटु तिक्तं कोष्ठबद्धतानाहशूलघ्नञ्च। राज.।

**औधस्यम्** । क्ली। पशुदुग्धे।

**औनीतम्** । क्ली। अश्वरोगविशेषे। गुरुभीम-

नाभिष्यन्दियासयत्वाच्छीसैवावर्ज्जनात् शुक्रं स्वस्था नच्युतं मेहने प्रतिहन्यते,तेन मूत्रकृच्छ्रं भवेत्। ततः शोणितं कुपितं मेहने शूलं जनयति। मेहनञ्च क्लिन्नं पक्वं कण्डूनत्पिड़कायुक्तं मक्षिकावृतं भवति, स्वस्थानञ्च न प्रविशति। ज.द.५१ष.।

**औन्दूवरम्** । क्ली। ताम्रे। भा.म.१भ.।

**औपवस्तम्** । क्ली। उपवासे। लङ्घने। हे.च.।

**औपसर्गिकः** । पुं। सन्निपातादिरोगविशेषे। तस्य लक्षणं—"कफोऽनुलोमवातेन यदि पित्तानुगो भवेत्। स्वेदशैत्यादिभिर्जुष्टस्तदा भवति मानवः॥ प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात्। औपसर्गिक एवान्यः सन्निपात उदाहृतः॥" वैद्यशास्त्रं।

**औपस्थ्यम्** । क्ली। उपस्थेन्द्रियसुखे।

**औपीनम्** । क्ली। उप्यचेत्रे। रा.नि.व.२।

**औमीनम्** । क्ली। अतसीक्षेत्रे। মশিনার ক্ষেত্র।

**औरभ्रः (कः)** । पुं। कम्बलमृगे। मेषे। हे.च.। क्ली। मेषमांसे। ম্যাড়ার মাংস। मं भेड़ीकरमांस। गुणाः—मधुरं शीतलं गुरु विष्टम्भि बृंहणञ्च। मेषसमूहे। ऊर्णावस्त्रे। रा.नि.व.१७।

**औरिणम्** । क्ली। मृत्तिकालवणे। यवक्षारे। সোরা। वै.निघ.।

**औरुवुकम्** । क्ली। एरण्डतैले। च.द.।

**और्व्वम्** । क्ली। मृत्तिकालवणे। यवक्षारे। पांशुलवणे। रा.नि.व.६।

**औलम्** । क्ली। श्वेतशूरणे। वै.निघ.।

**औलूकम्** । क्ली। उलूकसमूहे। जटा.।

**औशीरम्** । क्ली, पुं। बालके। বালা। चामरदण्डे। आसने। त्रि। उशीरजे। मे.रत्रिकं।

**औषणम्** । क्ली। कटुरसे।

**औषधम्** । क्ली। गण्डग्राम्। र.सा.सं.औषधमारणगणे। रोगघ्नद्रव्ये। ঔষধ। "वैद्यो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम्"। अत्रि.। औषधं पञ्चविधम्। यथा—रसचूर्णकषायावलेहकल्काः। "तच्च पञ्चविधं प्रोक्तं स्वसंयोगविशेषतः। रसचूर्णं कषायश्चावलेहः कल्क इत्यपि॥" तच्च पुनः द्विविधं शोधनशमनलक्षणं। तयोः शोधनरूपं वस्तिविरेकवमनम्। कुपितदोषान् वहिर्निःसार्य्य रोगोपशमनं करोति। शमनरूपं तैलघृतमधुरूपं स्वस्थावस्थितानामेव साम्यहेतुः। वा.टी. अरुणः। तत्र वातस्य वस्तिः (गुदप्रणिधेयस्नेहादि)। पित्तस्य विरेकः (मुखपीतं गुदमार्गेणान्तःस्थितस्य निःसारणं)। कफस्य वमनं (मुखेन पीतं तेनैव दोषस्य निःसारणम्)। शमनं—वातस्य तैलं, पित्तस्य घृतं, कफस्य च मधु। विन्ध्यशैलजानि औषधानि क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि। वल्मीकश्मशानादिजानि न ग्राह्याणि। औषधोद्धरणमन्त्रोऽप्यस्ति स्थानाभावान्नोक्तः। औषधद्रव्याङ्गग्रहणं यथा—खदिरादीनां सारः,निम्बादीनां त्वक्, दाड़िमादीनां फलं,पटोलादेश्च छदः ग्राह्यः। सारः स्यात् खदिरादीनामित्यादि। शार्ङ्गधरमते न्यग्रोधादेः त्वक् वीजकादेः सारः तालीशादेः पत्रं त्रिफलादेश्च फलं ग्राह्यमिति। काष्ठगर्भमहामूलानां वल्कलं क्षुद्रमूलानां सर्व्वांशो ग्राह्यमिति। अति स्थूलजटायास्त्वचः तथा सूक्ष्ममूलानि सर्व्वांशो ग्राह्याणि। यत्र द्रव्याङ्गावयवो यादृशो निर्द्दिष्टः, तत्र तादृश एव ग्राह्यः। यथामृतादिकषाये अमृतादीनां पत्रमेव ग्राह्यम्। अङ्गसामान्योक्तौ मूलवल्कलम्, "अङ्गेऽप्यनुक्ते विहितन्तु मूल"मिति वचनात्। विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि स्वरसौषधं सर्व्वकार्य्यार्थं, विरेकवमनार्थं वसन्ते। शिशिरे मूलं, ग्रीष्मे पत्रं, वर्षावसन्तयोः त्वक्कन्दौ, शरदि क्षीरं यथर्त्तुपुष्पं फलञ्च हेमन्ते सारञ्च ग्राह्यम्। सामान्योक्तौ—मृत्पात्रं, उत्पले नीलोत्पलं, शकृद्रसे गोमयरसः, चन्दने रक्तचन्दनं, सर्षपे सिद्धार्थः, लवणे सैन्धवं मूत्रे गोमूत्रं, घृतदुग्धेषु गव्यमेव, चतुष्पदे स्त्रीः, पक्षिणि पुमान्, वयस्थजाङ्गलानां चर्म्मादि हित्वा ग्राह्यम्। मांसे कथिते छागं क्षीरञ्च प्रगृह्णीयात्। अनुक्ते ग्रहणं यथा—कालेऽनुक्ते प्रभातं, अङ्गेऽनुक्ते जटा, भागेऽनुक्ते साम्यं, द्रवेऽनुक्ते जलं। प.प्र.१ख.। चूर्णलेहासवकार्य्ये तु श्वेतचन्दनं क्वाथप्रलेपे रक्तचन्दनं ग्राह्यम्। भक्षणीयौषधविधाने--अजमोदोक्तौ यमानी, वाह्यप्रलेपे तु वचा ग्राह्या। भा.।

**औषधकालः** । पुं। औषधसेवनस्य समये। स च दशविधः—"निर्भक्तं प्राग्भक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरञ्चेति। तत्र निर्भक्तं केवलमौषधमुपयुज्यते। प्राग्भक्तं यत्तु प्राग्भक्तस्योपयुज्यते। अधोभक्तं यद्भक्तान्ते

पीयते। मध्येभक्तं यन्मध्ये भक्तस्य पीयते। अन्तराभक्तं नाम यदन्तरा पीयते पूर्व्वापरयोर्भक्तयोः। सभक्तं औषधेषु यत्साध्यते भक्तम्। सामुद्गं नाम यद्भक्तस्यादावन्ते च पीयते। मुहुर्मुहुर्यासं सभक्तम भक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते। ग्रासान्तरं यत्पिण्डग्रासमिश्रम्।" तत्र निर्भक्तगुणाः—"वीर्य्याधिकं भवति भेषजमन्नहीन"मित्यादि। प्राग्भक्तस्य यथा—"शीघ्रं विपाकमुपयाति बलं न हिंस्यादित्यादि।" अधोभक्तस्य यथा—"पीतं यदन्नमुपभुज्य तदूर्द्धकाये हन्याद्गदान् बहुविधांश्च बलं ददाति।" मध्येभक्तस्य यथा—"मध्ये तु पीतमुपहन्त्यविसारिभावाद् ये मध्यदेहमभिभूय भवन्ति रोगाः।" अन्तराभक्तस्य यथा—"हृद्यं मनोबलकरन्त्वग्निदीपनीयम्।" सभक्तस्य यथा—"पथ्यं सभक्तमबलाबलयोर्हि नित्यमित्यादि।" सु.उ.६४अ.।

**औषधालयः**। पुं। औषधगृहे। ঔষধের ঘর।

**औषधिः (धी)**। स्त्री। गुडूच्यां। रास्नायां। दूर्व्वायाम्। श्वेतदूर्व्वायाम्। हरीतक्याम्। मद्ये। औषधे। रत्ना.। फलपाकान्तवृक्षादौ। हे.च.।

**औषधिगन्धः**। पुं। आघ्राणेन ज्वरादिकरौषधीनां गन्धे। च.द.ज्वरातिसार-चि.।

**औषधिप्रतिनिधिः**। पुं। यदौषधं न लभ्यते तस्य स्थाने तत्समगुणद्रव्यान्तरग्रहणं। यथा—मेदाभावे अश्वगन्धा महामेदे च शारिवा। जीवकर्षभकाभावे गुडूची वंशलोचना इत्यादि। चित्रकाभावे दन्ती अपामार्गक्षारो वा, धन्वयासाभावे दुरालभा, तगराभावे कुष्ठं, मुर्व्वाभावे जिङ्गिनीलक्, अहिंस्रालक्षणाभावे मानकमयूरपुच्छग्रहणं, वकुलाभावे कह्लारोत्पलपद्मग्रहणम्। नीलोत्पलाभावे कुमुदं, जातीपुष्पाभावे लवङ्गं, अर्कादिक्षीराभावे तत्पत्ररसः, पुष्करमूलाभावे कुष्ठं, लाङ्गलकीग्रन्थिपर्णाभावे कुष्ठञ्च ग्राह्यं। भा.पू.१भ.। चविकाभावे गजपिप्पली, पिप्पलीमूलम्, सोमराज्याभावे चक्रमर्द्दफलम्, दार्व्वीभावे हरिद्रा, रसाञ्जनस्याभावे दार्व्वीक्वाथः, सौराष्ट्रमृदभावे फटिकारी, तालीशाभावे स्वर्णतालो, भार्ग्यभावे तालीशं कण्टकारीमूलं वा, रुचकस्याभावे पांशुलवणं, यष्टीमध्वभावे धातकीपुष्पम्, अम्लवेतसाभावे चुक्रं। द्राक्षाभावे गाम्भारीफलम्, तदभावे पीतशालपुष्पं, नखाभावे लवङ्गम्, काकुर्थ्यभावे काकोली, तदभावे जातीपुष्पम्. कर्पूराभावे ग्रन्थिपर्णी (গাঁঠিয়ালা) सुगन्धिमुस्तकं वा, कुङ्कुमाभावे कुसुम्भं. श्रीखण्डचन्दनाभावे कर्पूरम् तदुभयाभावे रक्तचन्दनं ग्राह्यं। मध्वभावे जीर्णगुड़ः, पुरातनाभावे यामचतुष्टयशुष्कः गुड़ः, चोराभावे मौद्गो मासुरस्य रसः, शर्कराभावे खण्डं, शाल्यभावे षष्टिकं, दाड़िमाभावे वृक्षाम्लं, सौराष्ट्रमृदभावे पङ्कपर्पटी, लौहाभावे तन्मलं, चव्यगजपिप्पल्यभावे पिप्पलीमूलं, मुस्तकाभावे तालमुस्तं ग्राह्यम्। मातुफलमिति केचित्। प.प्र.१ख.।

**औषधिवीर्य्यम्**। क्ली। शीतोष्णादिरूपे। तच्च शीतमुष्णं रुक्षं स्निग्धं तीक्ष्णं मृदु पिच्छिलं तीव्रं विशदञ्चेति। तदुक्तं "वीर्यं द्विविधमुष्णं शीतञ्चाग्निसोमीयत्वाज्जगतः। केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रुक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म्म कुर्व्वन्तीति।" सु.सू.४०अ.।

**औषधीपञ्चामृतम्**। क्ली। गुडूचीगोक्षुरमुषलीमुण्डीशतावरीषु।

**औषर(क)म्**। क्ली। अयस्कान्तभेदे। पांशुलवणे। कृत्तिकालवणे। খারী নুন্। सैन्धवलवणे। ऊषरदेशजलवणे। गुणाः—क्षारं तिक्तं वातकफघ्नं विदाहि पित्तकृत् ग्राहि मूत्रशोषकञ्च। रा.नि.व.६। चारे। मद.व.२।

**औष्ट्रकम्**। क्ली। उष्ट्रसमूहे।

**औष्ट्रतक्रम्**। क्ली। उष्ट्रीदुग्धजातघोले। गुणाः—"औष्ट्रं तक्रन्तु विरसं गुरुहृद्यञ्च दोषलम्। पीनसश्वासकासेषु शस्तमुक्तम्।" वै.निघ.।

**औष्ट्रनवनीतम्**। क्ली। उष्ट्रीदुग्धजातनवनीते। गुणाः—लघुपाकं शीतलं व्रणकृमिककफरक्तदोषघ्नं वातघ्नं विषघ्नञ्च। रा.नि.व.१५।

**औष्ट्रमूत्रम्**। क्ली। उष्ट्रमूत्रे। गुणाः—उन्मादशोफार्शःकृमिशूलोदरघ्नञ्च। मद.व.८।

**औष्ट्रक्षीरम्**। क्ली। उष्ट्रीदुग्धे। See उष्ट्री।

**औष्ट्रीघृतम्**। क्ली। उष्ट्रीनवनीतजघृते। गुणाः—मधुरं पाके कटु शीतलं कृमिकुष्ठहरं वातकफगुल्मोदरघ्नञ्च। रा.नि.व.१५।

**औष्णम्**। क्ली। उष्णतायाम्।

## क

**कम्** । क्ली जले । रा.नि.व.१४ । सुखे । मे. । केशे । अर. । [पानपत्रे । श टी. ।

**कंसः** । पुं, क्ली । कंसमाक्षिके (महाद्रावके) ।

**कंसम्** । क्ली, पुं । ताम्रवङ्गयोरुपधातौ, कांस्यधातौ । काँसा । प.मु । आढ़कपरिमाणे (८श.) । भा. । तैजसपात्रमात्रे । त्रिका. । [हे.च. ।

**कंसकम्** । क्ली । पुष्पकाशीशे । इदं श्वेतवर्णम् ।

**कंसहरीतकी** । स्त्री । शोथाधिकारे । हरीतकी १०० शतं, दशमूलं प्रत्येकं ६प. ३तो. १॥० माषा मिलितं ६४प. वारि ५१२ प. (६४श.) शे. १२८ प. (१६ श.) पुरातनगुड़ः १०० प. । पक्वा लेहवच्छृते, शुण्ठीचूर्णं ८ तो. मरिचचूर्णं ८ तो. पिप्पलीचूर्णं ८ तो. यवक्षारः ८ तो. गुड़त्वक् २ तो. तेजपत्रं २ तो. एलाचूर्णञ्च २ तो. प्रक्षेप्यो देयः । मधु २ श. वा १६ प. । मतान्तरे क्राथः ८ श. । पाठः—"द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुड़ाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च । प्रस्थार्द्धमानं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्, एकान्ततः प्राश्य ततश्च लेहात् शुक्तिं निहन्ति श्वयथुं प्रवृद्धं"-मित्यादि । शा.को. ।

**कंसास्थि** । क्ली । कांस्यधातौ । काँसा । "कंसे तु कांस्यं कंसास्थि" । त्रिका. । [च. ।

**कंसोद्भवा** । स्त्री । सौराष्ट्रमृत्तिकायाम् । हे.

**ककन्दः** । पुं । स्वर्णे । उणा. ।

**ककारीमुखः** । पुं । केशे । रा.नि.व.१८ ।

**ककारपूर्व्वद्रव्यम्** । क्ली । ककारपूर्व्वकद्रव्येषु । तानि यथा—कटुकः, कालशाकं, कुष्माण्डं, कर्कटी, कर्कन्धुः, कर्कोटकः, कलिङ्गः, करमर्द्दः, करीरः, कतकः, कशेरुः, काञ्जिकञ्चेति रक्तपित्ते वर्ज्यम् । भा.म.र.पि.चि. ।

**ककुङ्गिनी** । स्त्री । ज्योतिष्मतीलतायाम् । लताफट्की । भा.म.१भ. । [राज. ।

**ककुञ्जलः (ला)** । पुं, स्त्री । चातकपक्षिणि ।

**ककुण(न)कः** । पुं, क्ली । बालरोगविशेषे । See ककूणकः ।

**ककुत् (दः)** । स्त्री, पुं, क्ली । वृषाङ्गे । षाँड़ेर झुँटि । प्राधान्ये । अम. । ध्वजे । मे । दर्व्वीकरसर्पभेदे । सु.कल्प.४अ. । See सर्पः ।

**ककुद्मती** । स्त्री । कटौ । पाछा, नितम्ब । अम. । त्रि । ककुद्विशिष्टे । [वृषे । हे.च. ।

**ककुद्मान्** । पुं । ऋषभकवृक्षे । रा.नि.व.५ ।

**ककुन्दरम्** । क्ली । नितम्बगर्त्ताधिष्ठाने वैकल्यकरे पृष्ठसन्धिमर्म्मद्वये । मेरुदण्डोभयतः पार्श्वजघनबहिर्भागे ईषदधस्तस्य स्थानम् । तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च । सु.शा ६अ. । ककुन्दरौ तु सर्व्वेषां स्यातां जघनकूपकौ । रा.नि.व.१८ । पुं । वृक्षविशेषे । गुणाः—"ककुन्दरः कटुस्तिक्तः ज्वरप्रशोषकृन्मतः । रक्तकफदाहानां तृषायाश्च विनाशनः ॥" अस्यार्द्रमूलञ्च मुखे धारितं मुखदोषनुत् । वै.निघ. । [भषितं ।

**ककुप्** । स्त्री । चम्पकमालायां । प्रवेण्याम् । मे.

**ककुभः** । पुं । अर्ज्जुनवृक्षे । प.मु. । वृषे ।

**ककुभत्वक्** । स्त्री । अर्ज्जुनवृक्षवल्कले । च.द. । सि.यो.यक्ष्म.चि.ककुभादौ ।

**ककुभशाखा** । स्त्री । भार्ग्याम् । रत्ना. । [च. ।

**ककुभादनी** । स्त्री । नलीनामकगन्धद्रव्ये । श.

**ककूणकः** । पुं, क्ली । शिशूनेत्रवर्त्मजरोगे । কতে। हिं कोथुआह । लक्षणं यथा—"ककूणकः क्षीरदोषाच्छिशूनामक्षिवर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहुः । शिशुः कुर्य्याल्ललाटाक्षिकूटनासावघर्षणं । शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ मा.बालरो.नि. । ककूणकं क्षीरदोषाच्छिशूनामक्षिवर्त्मनि । जायते सरुजं नेत्रं कण्डूरञ्च स्रवेन्मुहुः··· ॥ भा.म.४भ. ।

**ककूल(क)म्** । क्ली, पुं । गोधूमकादिचूर्णभ्राष्ट्रे । वा.टी.भरतः । अपूपपचनार्थं मृण्मयपात्रे । "ककूलं शष्कुभिः कीर्णं स्वभ्रे ना तु तुषानलः । तेन च मृण्मयमुत्तानमपूपपचनपात्रं लक्ष्यते" । वा.टी. हेमा. ।

**ककेरुकः** । पुं । कृमिभेदे । See कृमिः ।

**कक्कोल: (क:)** । पुं, क्ली । (Possibly the fruit of cocculus indicus.) काकोलीतिख्याते सुगन्धद्रव्यभेदे । কাঁকলা । হিং শীতলচিনি । गुणा: —"कक्कोल: कटुकी हृद्य: सुगन्धि: कफवातजित् ।" राज.अनुलेपे । कटुतिक्तोष्णं मुखजाड्यहरं दीपनं पाचनं रुच्यञ्च । रा.नि. व.१२ । "कक्कोलं कोलकं प्रोक्तं तथा कोषफलं स्मृतं । कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदं । आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत् ।" भा.म । च.द.यक्ष्म.चि.लवङ्गाद्यौ, मात्रा २ रति: । गन्धशुण्ठ्यां । च.द.वा.व्या.एकादशशतिकप्रसारणीतैले ।

**कक्खट:** । त्रि । कठिने । पुं । खटिकायाम् । খড়ীমাটী, ফুলখড়ি । अम. ।

**कक्खटपत्रक:** । पुं । (Corchorus olitorius.) वृक्षविशेषे । পাট গাছ, কোষ্টা । तत्पत्रकगुणा:—मधुरं दुर्जरं गुरुपाकि च । राज.शा.व. ।

**कक्खटी** । स्त्री । खटिकायाम् । খড়ি । त्रिका. शैलव. ।

**कगित्थ:** । पुं । कपित्थके । भ.टी. ।

**कङ्क:** । पुं । महाराजचूते । रा.नि.व १६ । चन्दने । पक्षिविशेषे । কাঁক পাখি, কাঁড়গেলা । मे.कद्विकं । हारा. । गुणा:—वृष्यो वीर्य्यविवर्द्धन: कफहर: कटुस्तथा भासक: । अत्रि.२२भ. ।

**कङ्कट: (क:)** । पुं । कवचे । শাঁদা । हारा. ।

**कङ्कटेरी** । स्त्री । हरिद्रायाम् । वै.निघ. ।

**कङ्कणम्** । क्ली । हस्तभूषणे । वै.निघ. ।

**कङ्कत:** । पुं । वृक्षविशेषे । শেয়াকুল, বঁইচী । वै.निघ.२भ.अतिसा.पथ्ये । क्ली । केशमार्ज्जने । কাঁকুই । हला. । गुणा:—धूलीजन्तुमलकण्डूशिरोरोगघ्नम् । "कङ्कती कान्तिजननी कण्डूघ्नी मूर्द्धरोगजित् । केशप्रसादनी केशा रजाजन्यमलापहा ॥" राज. ।

**कङ्कति(ती)का** । स्त्री । केशप्रसाधनार्थद्रव्ये । চিরুণি । কাঁকুই । अम. । अतिबलायाम् । नागबलायां । গোরক্ষচাকুলিয়া । भा.पू.१भ.गु.व. ।

**कङ्कोट: (टि:)** । पुं । स्वनामख्यातमत्स्ये । কাঁকিলা মাছ । त्रिका. । हारा. । जटा. । खल्लिशमत्स्ये । খলিশা মাছ । श.र. ।

**कङ्कदम्** । क्ली । सुवर्णे । वै.निघ. ।

**कङ्कपुरीषम्** । क्ली । कङ्कविष्ठायां । इदं व्रणदारणम् । सु.म.३६भ. ।

**कङ्कभोजन:** । पुं । अर्जुनवृक्षे ।

**कङ्कमुख:** । पुं, क्ली । सन्दंशे । শাঁড়াশী । हे.च. । "शल्यं प्रगृह्योद्धरते च यस्मात् यन्त्रेष्वत: कङ्कमुखं प्रधानम् ।" सु.सू.७भ. । त्रि । कुत्सिते ।

**कङ्करम्** । क्ली । कत्सरे । তক্রবিশেষ । हे.च. ।

**कङ्कराल:** । पुं । पित्ता इति प्रसिद्धे वृक्षे । পেস্তা গাছ । वै.निघ. ।

**कङ्कराल:** । पुं । (Alangium hexapetalum.) निकोचकवृक्षे । আঁকোড় গাছ । श.च. । लताविशेषे । কাঁকরোল ।

**कङ्कलोड्यम्** । क्ली । चिञ्चोटकमूले । চেঁচকো, চিঞ্চোড়মূল । राज. ।

**कङ्कशत्रु:** । पुं । पृश्निपर्ण्याम् । श.च. ।

**कङ्कशाय:** । पुं । कुकुरे । श.मा. ।

**कङ्का** । स्त्री । गोशीर्षचन्दने, पद्मगन्धि । "गोशीर्षं चन्दनं कृष्णताम्रमुत्पलगन्धिकम् । कङ्का" श.मा. ।

**कङ्काल:** । पुं । शरीरास्थिनि । समुदितशरीरास्थिसङ्घाते तन्मांसरहिते । भ.टी.भ. ।

**कङ्काबीजम्** । क्ली । गोशीर्षचन्दनबीजे । योग.रत्न.उ.ख.केशरपाके । [हला. ।

**कङ्किरातम्** । क्ली । कुरुण्टके । রক্তঝাঁটী ।

**कङ्गु:** । पु । कङ्गुलौ । त्रिरूपकोष: ।

**कङ्कुष्ठ(क)म्** । क्ली । हिमवत्पादशिखरजे हरितालवत्पाषाणविशेषे । মুর্দিম इति । र.सा.सं. । पार्व्वतीयमृत्तिकाविशेषे । भेदगुणा:—"कङ्कुष्ठञ्च द्विधा प्रोक्तं तारहेमाभ्रकन्तथा । कटूष्णं कफवातघ्नं रेचकं व्रणशूलहृत् ॥" रा.नि.व.१३ । तथा "हिमवत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैकं रक्तकालं स्यात्तदन्यदण्डकं स्मृतम् ॥ पीतप्रभं गुरुस्निग्धं श्रेष्ठं कङ्कुष्ठमादिशेत् । श्यामं पीतं लघु त्यक्तसत्वं नेष्टं तथाण्डकं ।" शोधनं शङ्खशब्दे मृग्यम् । भा.पू.१भ. ।

**कङ्केत:** । पुं । काकविशेषे । वकपक्षिणि । त्रिका. ।

**कङ्केल: (लि:) (ल्लि:)** । पुं । अशोके । हला. । रा.नि.व.१० । त्रिका. ।

। पुं । वालुकशाके । श.मा. ।

**कङ्केलिः** । पुं । अशोकवृक्षे । हे.च. ।

**कङ्कोल(क)म्** । क्ली । स्वनामख्यातसुगन्धपण्यद्रव्ये । शीतलचिनीति लोके । भा. । गुणाः — कटुतिक्तोष्णं मुखजाड्यहरं दीपनं पाचनं रुच्यं कफवातघ्नं । रा.नि व.१२ । लघु तीक्ष्णं हृद्यं हृद्रोगान्ध्यतापहरञ्च । भा.पू.१भ. । "कङ्कोलकफलं पक्वा" । अभावे जातीपुष्पं, तदभावे लवङ्गम् । भा.म.४भ. कर्पूरी.चि.सामान्याङ्गने। "शुण्ठीकङ्कोलकास्य…."

**कङ्कोलकी (तिक्ता)** । स्त्री । कङ्कोलवृक्षे । कड़वी कङ्कोलेति पश्चिमदेशे । गुणाः—"तिक्तकङ्कोलकी ग्राहिण्युष्णा रुचिकरी मता । मलावष्टम्भकरणी पित्तला चाग्निदीपनी । कफं प्रमेहं कुष्ठञ्च जन्तूंश्चैव विनाशयेत् ॥ वै.निघ. ।

**कङ्गः (गः)** । पुं । क्रौञ्चे । हे.च. ।

**कङ्गुः** । पुं, स्त्री । (Panicum Italicum.) प्रियङ्गुपरनामधेये तृणधान्यविशेषे । कांगनि धान वा दाना । तें फ्रेंकपयुचेड्, कोद्रलु । प.मु. । श्वेतपीतकृष्णरक्तभेदाच्चतुर्धा । भग्नसन्धानी बृंहणी गुरुश्च । वा.टी.हे.धान्यव. । धातुशोधनी पित्तश्लेष्मघ्नी रूक्षा वातवर्द्धका पुष्टिकरी गुरुः भग्नसन्धानकरी च । राज. । मधुरः रुच्यः कषायः स्वादुः शीतलः वातकृत्पित्तदाहघ्नः रूक्षः भग्नसन्धानकृच्च । रा.नि.व.१६ । "कङ्गुधान्यं धातुवृद्धिकरं वातकरं गुरु । अस्थिसन्धानकृद्गुल्मश्वानाच्च हितावहम् । कफघ्नञ्च गुणाधिक्यं पीतं मुनिभिरीरितम् ॥" वै. निघ. ।

**कङ्गुका** । स्त्री । कङ्गौ । प्रियङ्गौ । रत्ना. ।

**कङ्गुणिका (णी)** । स्त्री । महाज्योतिष्मती लतायां । रा.नि.व.३। कङ्गुणीनामतृणधान्ये । कामिनी धान । रा.नि.व.१६ ।

**कङ्गुणीपत्रः (त्रा)** । पुं, स्त्री । पण्यन्धानामतृणविशेषे । रा.नि.व.८ । [नि.व.१६ ।

**कङ्गुनी** । स्त्री । प्रियङ्गौ । कङ्गुणीधान्ये । रा.

**कङ्गुनीका** । स्त्री । कङ्गुणीधान्ये । चक्र. ।

**कङ्गुलः** । पुं । हस्ते । श.च. ।

**कङ्गूः** । स्त्री । कङ्गुधान्ये । भ.टी. ।

**कचः** । पुं । बालके । वाला । भा.म.१भ.तन्द्रिक.ज्व.चि. । "मरिचकचपथ्यचावचावक ।" रा. नि.व.१८ । केशे । अम. । शुष्कव्रणे । मे.चद्विकं । वस्ते । जटा. ।

**कचङ्गलः** । पुं । समुद्रे । त्रिका. ।

**कचटम्** । क्ली । कच्चटशाके । भा.पू.१भ. हरितं । पत्रे । उणा. ।

**कचदग्धिका** । स्त्री । अलाब्वाम् । लाउ ।

**कचद्रावी** । पुं । अम्लवेतसे । प.मु. ।

**कचपक्षः** । पुं । केशसमूहे । अम. ।

**कचमालः** । पुं । धूमे । हारा. ।

**कचरिपुफला** । स्त्री । महाशमीवृक्षे । बड़ शाइ गाछ । रा.नि.व.८ ।

**कचा** । स्त्री । हस्तिन्याम् । मे चद्विकं ।

**कचाकुः** । पुं । विलेशये । सर्पे । मे.कत्रिकं ।

**कचाटुरः** । पुं । पक्षिविशेषे । डहुक । दात्यूहपक्षिणि । त्रिका. । [व.१० ।

**कचामोदम्** । क्ली । ह्रीवेरे । वाला । रा.नि.

**कची** । स्त्री । कुचाग्निवीजे । रस.र.बाल.चि. ।

**कचुः** । स्त्री । An esculent root, (Arum colocasia and other kinds.) स्वनामख्यातवृक्षे । कचु गाछ ।

**कचूरकम्** । क्ली । कचूरे । कचू । वै.निघ.२भ. अर्श.चि.पिपीलिकातैले ।

**कचेरुकः** । पुं । कशेरौ । केशुर । र.मा. ।

**कचोरः** । पुं । कर्चूरे । वै.निघ.२भ.अर्श.चि भ- ल्लातकहरीतक्यां । [ग्री । अत्रि.१५ष. ।

**कचोरा** । स्त्री । शालिधान्यविशेषे । सा पित्त-

**कच्चटम्** । क्ली । जलपिप्पल्याम् । काँचड़ा ।

**कच्चरम्** । क्ली। तक्रे । मे.रत्रिकं । त्रि। मलिने ।

**कच्चूरः** । पुं । कचुनामककन्दशाके । कचुगाछ।

**कच्चोरम्** । क्ली । शठ्याम् । प.मु. ।

**कच्ची** । स्त्री । कचुवृक्षे ।

**कच्छः (कः)** । पुं । अनूपप्रायदेशे । काछाड़ । See अनूपः । तुन्नकद्रुमे । तुन् गाछ । मे.छद्वि-

কলার গাছ। प.मु.। हिङ्गुपत्रे। सोमलताभेदे। सु.चि.२९अ.। See सोमः।

**करवीरकः** । पुं। श्वेतकरवीरवृक्षे। तन्मूलविषे। हे.च.। अर्जुनवृक्षे। रा.नि.व.९।

**करवीरकन्दसंज्ञः** । पुं, क्ली। A species of onion or bulb. तैलकन्दे। পলাণ্ডুবিশেষ। रा.नि.व.७।

**करवीरका** । स्त्री। मनःशिलायां। वै.निघ.।

**करवीरणी** । स्त्री। करवीरणी ककरखिरणी इति कोङ्कणदेशप्रसिद्धे पुष्पवृक्षविशेषे। या रक्तपुष्पा ग्रीष्मे जायते। गुणाः—"तिक्ता चोष्णा च कटी च कफवातविषापहा। आध्मानवातं छर्द्दिञ्च ऊर्द्ध्वश्वासक्रमीञ्जयेत्। इत्थेवं करवीरण्या गुणाः प्रोक्ताः"…। वै.निघ.। रा.नि.व.१०।

**करवीरभुजा** । स्त्री। आढ़क्याम्। हिं रहर। रा.नि.व.१६।

**करवीराद्यतैलम्** । क्ली। भगन्दराधिकारे तैलम्। पाठः—"करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः। मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगन्दरे॥" तिलतैलं ४श. करवीरादिकल्कः १श. वारि १६ श. एकत्र पाच्यम्। च.द., रस.र.। अन्यत् नासारोगे—"रक्तकरवीरपुष्पं जात्यास्तथाशनमल्लिकायाश्च। एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम्॥" च द.। अशनः पीतशाले (পিয়াশাল)। पाकः पूर्व्ववत्। [वै.निघ.।

**करवीरानुजा** । स्त्री। आढक्यां। हिं रहर।

**करवीरिका** । स्त्री। मनःशिलायां। र.सा.सं.।

**करवीर्य्यः** । पुं। चिकित्सकविशेषे।

**करशाखा** । स्त्री। अङ्गुली। रा.नि.व.१८।

**करशीकरः** । पुं। वमने। करिशुण्डनिर्गतजलकणे। हला.।

**करशूकः** । पुं। नखे। त्रिका.।

**करशोथः** । पुं। (Oedematous swelling of hand.) हस्तशोथे। হাতের কজা ফোলা। [लवण। रत्ना.।

**करसम्भवम्** । क्ली। रोमकलवणे। সাম্ভরি

**करसादः** । पुं। हस्तदौर्बल्ये।

**करहाटः (कः)** । पुं। मदनवृक्षे। प.मु., रा.नि.व.८। योगरत्न.छ.ख.केशरपाके.सु.कल्प०७अ.। महापिण्डीतरौ। रा.नि.व.९। सु.चि.१८अ.। पद्मकन्दे। मे.। शर्करायां। আকরকরা। श्वेतमदने। वै.निघ.।

**करागम्** । क्ली। करिपुष्करे। हला.।

**कराग्रपल्लवः** । पुं। अङ्गुली।

**कराघातः** । पुं। हस्ताङ्गुली।

**कराङ्गणम्** । क्ली। हट्टे। हारा.।

**कराचीनः** । पुं। खञ्जने। त्रिरूपकोषः।

**करामर्द्दः** । पुं। करमर्द्दकवृक्षे। श.र.।

**कराम्बुकः** । पुं। पानीयामलकवृक्षे। श.च.।

**कराम्लः (कः)** । पुं। करमर्द्दकवृक्षे। प.मु.।

**करायिका** । स्त्री। पक्षिभेदे। क्षुद्रबके। वै.निघ.।

**करालः (कः)** । पुं,क्ली। पर्णासे। कृष्णतुलसी। प.मु। भा.पू.१भ.। त्रि। दन्तुरे, तुङ्गे, भीषणे। पुं। सर्ज्जरसतैले। গর্জ্জনতেল। मे.लत्रिकं। तन्नामकदन्तरोगे दन्तोपरिदन्तोद्गिदनरूपे। দাঁতের উপর দাঁত ওঠা। तल्लक्षणम्—शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः। करालान् विकटान् दन्तान् करालो न च सिध्यति॥ मा.नि.। कस्तूरीमृगे। सु.सू.४६अ.। गुणाः—जङ्गालवत्। क्ली। कृष्णार्जके। कृष्णवर्व्वरके। तैलेन घृतेन वा कृते वेसवारे। इति पाकराजः।

**करालकलिकः** । पुं। कुन्दपुष्पवृक्षे। प.मु.।

**करालाङ्गम्** । क्ली। विड़ङ्गे। वै.निघ.।

**करालत्रिपुटा** । स्त्री। लङ्कानामप्रसिद्धधान्ये। তেওড়া ধান। रा.नि.व.१६।

**कराला** । स्त्री। अनन्तमूले। অনন্তমূল। प.मु.। विड़ङ्गायाम्।

**करालास्यः** । त्रि। दन्तुरवदने।

**करालिकः** । पुं। वृक्षे। हे.च.।

**कराली** । स्त्री। अग्निजिह्वायाम्। पुं। (लिङ्ग) महादोषान्विताग्रे। यस्य नीचत ऊर्द्ध्वे वा एको दन्तुरो दन्तो जायते स कराली। ज.द.२अ.।

**करिकः** । पुं। विट्खदिरे।

**करिकणा** । स्त्री । गजपिप्पल्याम् । भैष. वाजी.कामेश्वरमोदके । [চই গাছ । रा.नि.व.६ ।

**करिकणावल्ली** । स्त्री । चविकालतायाम् ।

**करिकर्णपलाशः** । पुं । हस्तिकर्णपलाशे । भैष.च.पि.सर्व्वतोभद्ररसे ।

**करिकवलः** । पुं । विधाने । हारा. ।

**करिका** । स्त्री । कारीहवे । কণ্টিকারী । रा.नि.व.८ । नखक्षते ।

**करिकुम्भः** । पुं । गजकुम्भे ।

**करिकुम्भकः** । पुं । नागकेशरचूर्णे । हारा. ।

**करिकुसुम्भः** । पुं । नागकेशरवृक्षे । नागकेशरचूर्णे । हारा. ।

**करिकृष्णा** । स्त्री । गजपिप्पल्याम् ।

**करिकेसरम्** । क्ली । नागकेसरे । वै.निघ.श्वासचि.चुद्रावलेहे ।

**करिचर्म्म** । क्ली । गजचर्म्मणि ।

**करिजः** । पुं । गजशावके । श.मा. ।

**करिणी** । स्त्री । हस्तिन्याम् । अम. ।

**करिदन्तः** । पुं । गजदन्ते ।

**करिदन्ताभम्** । क्ली । मूलके ।

**करिदमनः** । पुं । नागदमने । নাগদনা । भैष.स्त्रीरोगचि. ।

**करिदारकः** । पुं । सिंहे । श.र. ।

**करिनासिका** । स्त्री । यन्त्रविशेषे ।

**करिपत्र(क)म्** । क्ली । तालीशपत्रे । তালীশপত্র । रा.नि.व.६ ।

**करिपिप्पली** । स्त्री । गजपिप्पल्याम् । গজপিঁপুল । प.मु. । भा.पू.१भ. ।

**करिपोतः** । पुं । करिशावके । हला. ।

**करिभः** । पुं । अश्वत्थवृक्षे । चैत्यवृक्षे । त्रिका. ।

**करिमाचलः** । पुं । गजमाचले । सिंहे । त्रिका. ।

**करियादः** । क्ली । जलहस्तिनि ।

**करिरः** । पुं,क्ली । वंशाङ्कुरे । বাঁশের কোঁড় । चकजगुल्मे ।

**करिशावकः** । पुं । दशवर्षपर्य्यन्तहस्तिशिशौ । श.मा. ।

**करिस्कन्धः** । पुं । गजांसस्थले ।

**करी** (इन्) । पुं । हस्तिनि । रत्ना. ।

**करीरः** । पुं, क्ली । वंशाङ्कुरे । বাঁশের কোঁড় । गुणाः—कटुतिक्ताम्लं कषायं लघु शीतलं पित्तरक्तदाहकफघ्नं रुचिकृच्च । एतत्पक्वं निर्गुणं । रा.नि.व.७ । (Capparisaphylla.)मरुजे वृक्षविशेषे । करील, कचड़ा इति लोके । मं नेपती । कं निष्पतिशे । तें एतुगदम्मसुमोदत । रा.नि.व. ८ । गुणाः—"करीरमाध्मानकरं कषायं कटूष्णशीतलकफकारि भूरि । श्वासानिलारोचकसर्व्वशूलहृदर्त्तिखर्जूव्रणदोषहारि ।" रा.नि.व.८ । गुरु भेदि श्लेष्मलञ्च । मद.व.७ । श्लेष्मनाशित्वं कषायत्वं दाहजनकत्वञ्च । राज. । घटे । मे. । क्ली । करीरफले ।

**करीरकुणः** । पुं । करीरफलकाले । [ব্যাতফলে ।

**करीरफलम्** । क्ली । करीरबीजे, टेँट् इति

**करीरा** । स्त्री । हस्तिदन्तमूले । चीरिकायाम् । ঝিঁঝিঁ পোকা । उणा. । मनःशिलायाम् । हे.च. ।

**करीरिका** । स्त्री । हस्तिदन्तमूले । त्रिका. ।

**करीरी** । स्त्री । हस्तिदन्तमूले । चीरिकायाम् । मे.रत्रिकं ।

**करीषः** । पुं, क्ली । शुष्कगोमये । वनभवकरीषे वा । বিলঘ্যাটা । सि.यो.मदा.चि. । 'वन्यकरीषघ्राणात् जलपानात् ।" [ঘুন । हारा. ।

**करीषाग्निः** । पुं । गोमयाग्नौ । ঘুঁটের আ-

**करुणः** । फलितवृक्षे । करुणालु रसे वृक्षे । मे. । मल्लिकावृक्षे । हे.च. । (Citrus Decumana.) स्वनामख्यातनिम्बुकवृक्षे । করুণালেবুর গাছ । प.मु. । गुणाः—कफवायुामभेदोघ्नं पित्तकोपनञ्च । राज.१प. ।

**करुण(णा)मल्ली** । स्त्री । The plant Jasminum Sambac. नवमल्लिकायाम् । श.च. ।

**करुणा** । स्त्री । दयायाम् । करुणाचे । वै.निघ. ।

**करुणी** । स्त्री । पौष्पपुष्पाम् । पुष्पवृक्षविशेषे । रा.नि.व.१० । See करवीरणी ।

**करुषकम्** । क्ली । फलविशेषे ।

**करेटः** । पुं । नखे । त्रिका. । [त्रिका. ।

**करेटव्या** । स्त्री । धनच्छूपक्षिणि । धानमपक्षी ।

**करेटुः (कः)** । पुं । कर्कटेरी । कर्कटिया पाखी । रत्ना. । नखे । त्रिका. ।

**करेडुकः** । पुं । करेटुपक्षिणि । कर्कटे ।

**करेणुः(कः)** । पुं । गजे । स्त्री । हस्तिन्यां । मे.णत्रिकं । कर्णिकारवृक्षे । विश्व. । महौषधिविशेषे । सक्षीरगजाकारकन्दवत्तविशेषे । यथा — करेणुः सबहुक्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥ सा च सोमरसतुल्यगुणा । सु.चि.३०अ. । See ओषधिः ।

**करेणुकन्** । क्ली । कर्णिकारफले । तच्च विषमयमिति ज्ञेयम् ।

**करेणुभूः** । पुं । पालकाप्यमुनौ । त्रिका. ।

**करेणुसुतः** । पुं । पालकमुनौ । त्रिका. ।

**करेनरः (वरः)** । पुं । मूषिके । सिह्लके । शिलारस । वै.निघ. । रा.नि.व.१२ ।

**करोटः (टिः,का,टी)** । पुं, स्त्री । शिरोऽस्थनि । रा.नि.व.१८ ।

**करोद्विजनः** । पुं । कृष्णसर्षपे । वै.निघ. ।

**कर्कः** । पुं । शुक्लवर्णाश्वे । ज.द. । कुलीरके । दर्पणे । घटे । मे.कद्विकं । कर्कटवृक्षे । काँकरोल । रा.नि.व.११ । कङ्कपक्षिणि । मानभेदे । वृक्षविशेषे । काके । शिरोऽवचालने । हे.च. । कङ्करे । वदरीवृक्षे । विल्ववृक्षे । गन्धके । वै.निघ.२भ.यक्ष्मीकवाटरसे । अग्नौ ।

**कर्कचिर्भिटिका (टी)** । स्त्री । Small cocumber. चिर्भिटायाम् । कर्कटीभेदे । रा.नि.व.७ । [टकम् ।

**कर्कटम्** । क्ली । विषभेदे । प.मु. । See कर्कटः ।

**कर्कटः** । पुं । The Numidian crane. कर्करेटौ । कर्कटि पाखी । गुणाः—वातघ्नः शुक्रप्रदः श्रमघ्नश्च । अत्रि.२२अ. । स्वनामख्यातवृक्षे । काँकरोल । तत्फलगुणाः—कटु कषायं अतिदीपनं कफपित्तकरं ग्राहि चक्षुष्यं लघु शीतलञ्च । रा.नि.व.११ । शाकलीफले । बालुकायाम् । मे.टत्रिकं । कुलीरके । सामुद्रकर्कटे । च.द.वा.व्या. एलादितैले । सन्निपातविशेषे । See कर्कटकः । पद्मकन्दे । जटा. । विल्ववृक्षे । रस.र.बालचि. । गोक्षुरे । कर्कटशृङ्गे । काँकड़ाशृङ्गी । च.द.वा.व्या.एकादशशतिकमहाप्रसारणीतैले ।

**कर्कटकम्** । क्ली । काण्डभग्ननामास्थिभग्नविशेषे । तत्र "संमूढमुभयतोऽस्थि मध्यभग्नं यन्निविशेषतम् ।" सु.नि.१५अ. । See भग्नम् । ययोदशविधस्थावरकन्दविषान्यतमविषे । सु.कल्प.२अ. । See कन्दविषम् ।

**कर्कटकः** । पुं । हस्ती । रा.नि.व.१४ । कर्कटे । काँकड़ा । रत्ना. । गुणाः—कर्कटः सृष्टविण्मूत्रः सन्धातानिलपित्तजित् । राज. । तामेची । वै.निघ. २भ.वा.व्या.एलादितैले । पक्षिविशेषे । कर्कटे । काष्ठामलके । मध्यहीनप्रवृद्धवातादिजन्यसन्निपातज्वरे । तेन व्यथावेपथ्वादिश्वासादाहादिगौरवाग्निमान्द्यादिरोगा जायन्ते तथा नर्दाहवाक्यनिरोधादयश्च भवन्ति । भा.म.१भ. । कर्कटशृङ्गे । काँकड़ाशृङ्गी । भैष.च.पि.चि वृहत्सुधावतीगुड़िकायां ।

**कर्कटकास्थि** । क्ली । कुलीरकास्थिनि । काँकड़ार खोला । [कर्कटस्त्रियाम् ।

**कर्कटकी** । स्त्री । कर्कटशृङ्ग्याम् । वा.चि.३अ. ।

**कर्कटचरणः** । पुं । कुलीरकपादे । काँकड़ार पा । रस.र.बाल.चि. ।

**कर्कटच्छदा** । स्त्री । पीतघोषायाम् । पीतघोषा । वै.निघ. । [ग्याम् । अपामार्गे । वै.निघ. ।

**कर्कटवल्ली** । स्त्री । गजपिप्पल्याम् । शुक्लशि-

**कर्कटशृङ्गिका** । स्त्री । कर्कटशृङ्ग्याम् । मद. व.१ ।

**कर्कटशृङ्गी** । स्त्री ।(Rhus succedanea. Syn. Acuminata.) स्वनामख्यातकर्कटदंष्ट्राकारौषधी । काँकड़ाशृङ्गी । हिं काकड़ाशृङ्गी, कक्कुरशिं । मं काकड़ासिंगी । कं तें ककाटशृंगी । गुणाः—गुरुवृष्या तिक्ता वातघ्नी हिक्कातीसारकासघ्नी श्वासरक्तपित्तघ्नी च । रा.नि.व.६ । कषाया वमिघ्नी ज्वरघ्नी तृष्णा चयकासघ्नी ऊर्द्ध्ववातघ्नी च । मद.व.१ । तृष्णारुचिघ्नी । भा.पू.१भ. । महाघोषायाम् । बड़ घोषा ।

**कर्कटा** । स्त्री । कर्कटशृङ्ग्याम् । भैष.बालचि. कर्कटादि. ।

**कर्कटाख्यः (ख्यः)** । पुं । कर्कटिकालतायां ।

**कर्कटाख्या (ख्या)** । स्त्री । कर्कटिकायां । কাঁকুড় । र.मा. । रा.नि.व.६ । सि.यो.हि-श्वा. चि.द्राक्षावलेहे । वै.निघ.ज्व.चि.कुलत्थाद्यघृते । कर्कटशृङ्ग्यां । वै.निघ.क्षय.चि.लघुशिवगुटी. । सु. चि.२अ. । वा.चि.४अ. । भैष.शिलाजतुवटी. ।

**कर्कटादिलेहः** । पुं । बालरोगे । "कर्कटातिविषाशुण्ठीधातकीबिल्वबालकं । मुस्तं मज्जा च कोलस्य मधुना सह लेहयेत् ॥ हन्ति ज्वरमतीसारं दुर्वारं ग्रहणीगदम् ।" रस.र.र.ल.चि.भैष. । কর্কটশৃঙ্গী, আতইচ, শুঁট, ধাইফুল, বেলশুঁট, বালা, মুতা, কুল আঁটির শস্য চূর্ণ সমভাগ ।

**कर्कटाह्वः** । पुं । बिल्ववृक्षे । रा.नि.व.११ ।

**कर्कटाह्वा** । स्त्री । कर्कटशृङ्ग्यां । रा.नि.व.६ ।

**कर्कटिः (का)** । स्त्री । A kind of cucumber (Cucumisutilatissimus Rox.) स्वनामख्यातलतायां । কাঁকুড় গাছ । तें नक्कदोस । हिं कांकड़ि । उत्. फुटिकाँकड़ी । सा द्विधा ह्रस्वदीर्घभेदेन । गुणाः—स्वादुः गुरुः अजीर्णकरी शीतला च । तत्पक्कफलं दाहच्छर्दितृष्णाक्लान्तिघ्नञ्च । राज.३प. । त्वचायां कटुका तिक्ता पाचकाग्निप्रदीपनी । अपक्वा ग्राहिणी प्रोक्ता मूत्रदोषाश्मरीहरा ॥ मूत्रकृच्छ्रं वमिं दाहं श्रमञ्चैव विनाशयेत् । सा पक्वा रक्तदोषस्य कारिण्युष्णा बलप्रदा ॥ इति प्रथमा । द्वितीया त्रपुषी कर्कटी (तौंइकांकड़ी) । गुणाः—रुच्या मधुरा वातकरी शीता मूत्रप्रदा गुर्व्वी कफकृद्दाहनाशिनी । वमिं पित्तं श्रमं मूत्रकृच्छ्रं मूत्राश्मरीं हरेत् ॥ वै.निघ. । सर्व्वाः कर्कटिका वर्षाशरदि जाता न हिताः । परन्तु हेमन्तजा रुचिकरी पित्तघ्नी च भोज्या । सा चार्द्धपक्वा न भक्ष्या तेन पीनसं जनयति । सम्यक्पक्वा मधुरा कफघ्नी च । भा.म.१भ.अश्म. चि. । See एर्वारुः । [प्रा । रा.नि.व.६ ।

**कर्कटिनी** । स्त्री । दारुहरिद्रायां । দারুহরিদ্রা

**कर्कटी** । स्त्री । कर्कटस्त्रियाम् । वनकर्कटिकायाम् । रा.नि.व.२१ । कर्कटिकालतायां । रा.नि.व.७ । हे.च. । वालुकीति हला. । बदर्य्याम् । কুল গাছ । मद.व.५ । घण्टाबदरे । पद्मकर्णिकायाम् । कोमलशाल्मलीफले । वै.निघ. । देवदाल्यां । भा.पू.१भ.गु.व. । गोरक्षकर्कटिकायाम् । र.सा.सं. रसशोधने । शाल्मलीफले । मे. । कर्कटशृङ्ग्यां । रा.नि.व.६ । सर्पे । श.र. ।

**कर्कटीवीजम्** । क्ली । कर्कटीफलवीजे । ফুটির বীজ । च.द.अश्म.चि.कुष्माण्डलेहे । [श.र. ।

**कर्कटुः** । पुं । करेटुपक्षिणि । কর্কট পাখী ।

**कर्कड़ः** । पुं । खटिकायां । খড়িমাটী । र.मा. ।

**कर्कन्दुः (न्धुः, न्धूः)** । पुं, स्त्री । (Zizyphus jujuba.) क्षुद्रबदरवृक्षे । रा.नि.व.२३ । सि.यो.कास.चि.नवाङ्गयूषे वचादियूषे च । 'यवामलकदाड़िमकर्कन्धुमूलकशुण्ठकैः ।' शृगालकोल्यां । শিয়াকুল । च.सू.४अ. ।

**कर्कन्धु(क)म्** । क्ली । बदरीफले । ছোট কুল। गुणाः—मधुरं स्निग्धं गुरु पित्तानिलघ्नं वातपित्तघ्नञ्च । मद.व.६ । बिल्वफले । বেল । वै.निघ. ।

**कर्कन्धुकी** । स्त्री । बदरीभेदे । मद.व.६ । क्षुद्रबदरवृक्षे । ছোট কুল । र.मा.रा.नि.व.२३ ।

**कर्कफलः** । पुं । कर्कटवृक्षे । কাঁকরোল । रा.नि.व.११ ।

**कर्करः** । पुं । कङ्करे । কাঁকর । मुद्गरे । हारा. । अस्थिनि । क्ली । चूर्णजनकपाषाणखण्डे । घुंटिं । दर्पणे । हारा. । तरुणे पशौ । हला. ।

**कर्करटः** । पुं । पक्षिविशेषे । কর্কটে ।

**कर्कराङ्गः** । पुं । खञ्जनपक्षिणि । श.मा. ।

**कर्करादुः (कः)** । पुं । कटाक्षे । जटा. । करेटुपक्षिणि । श.र. ।

**कर्करान्ध(न्धु)कः** । पुं । अन्धकूपे । त्रिका. ।

**कर्करालः** । पुं । चूर्णकुन्तले । हे.च. ।

**कर्कराक्षः** । पुं । खञ्जनपक्षिणि । हारा. ।

**कर्करिका** । स्त्री । चक्षुःखर्व्वाम् । চোক্ করকর করা ।

**कर्करी(रिका)** । स्त्री । समालवलयाम् ।

खारी। अम.। उखा.। तण्डुलधावनपात्रे। गलन्तिकायां। भाण्डविशेषे। घटी। दर्पणे। मे.रत्रिकं।

**कर्करेटुः**। पुं। करेटुपक्षिणि। কর্কটে পাখী। रत्ना.। [स्याम्। शुकशिम्ब्याम्। वै.निघ.।

**कर्कवल्ली**। स्त्री। अपामार्गवृक्षे। गजपिप्प-

**कर्कशः**। पुं। इक्षुभेदे। मे.शत्रिकं। कम्पिल्ले। কমলাগুঁড়ি। अम.। कासमर्दे। पटोले। प सु. रत्ना.। गुड़त्वचि। वै.निघ.। त्रि। अमसृणे। निर्दये। मे.शत्रिकं।

**कर्कशच्छदः**। पुं। पटोले। रा.नि.व.३। पाटलवृक्षे। পারুল গাছ। शाखोटवृक्षे। त्रिका. वनौ.। शाकवृक्षे। कृष्णकुष्माण्डे। वै.निघ.।

**कर्कशच्छदा**। स्त्री। घोषायां। ঝিঙা গাছ। हिं तोरइ। दग्धावृक्षे। रा.नि.व.६।

**कर्कशदलः**। पुं। पटोलफलवृक्षे। र.मा.।

**कर्कशदला**। स्त्री। दग्धिकायाम्। कोङ्कणे कुरड़ीति ख्याता। रा.नि.व.६।

**कर्कशा**। स्त्री। वृश्चिकालीवृक्षे। বিছাতি গাছ। रा.नि.व.६। क्षुद्रमेषशृङ्ग्याम्। वनवदरे। वै.निघ.। [र.मा.।

**कर्कशिका**। स्त्री। वनकोल्यां। বুনো কুল।

**कर्कसारम्**। क्ली। दधिशक्तौ। हारा.।

**कर्काकः**। पुं। कर्कटिकायाम्। কাঁকুড়। पथ्यापथ्ये।

**कर्कारुः**। पुं। (Beninkasa cerifera.) कुष्माण्डभेदे। বিলাতি কুম্ড়া। उत्. कद्दू। कुष्माण्डीवीजं कुष्मावलीहे। कलिङ्गलतायाम्। তরমুজ বা থর্মুজ। रत्ना.। अतिक्षुद्रकुष्माण्डे। हिं कोहड़ी, कोहण्डी। तें गुम्मडितीगे। कुष्माण्डी तु भृशं लघ्वी कर्कारुः परिकीर्त्तिता। गुणाः— कर्कारुः ग्राहिणी शीतला रक्तपित्तघ्नी गुरुः। पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत्। भा.पू.१भ. शाकव.। तैलगुणाः विभीतकतैलवत्। स्त्री। कुष्माण्डीलतायाम्। हला.।

**कर्कारुकः**। पुं। (Convolvulus Paniculatus.) कालिन्दवृक्षे। তরমুজ। मं खड़ुया। रत्ना.। कुष्माण्डे। प.सु.। सु.चि.१८ष.।

**कर्कोरुः**। स्त्री। कुष्माण्डीलतायाम्।

**कर्केतनः (रः)**। पुं। रत्नविशेषे। "कर्केतनास्ते परमाः पवित्राः।" गारुड़े। विषशास्त्रस्य वीर्य्यवद्विषभेदे। "कर्केतनं मरकतं।"वा.उ.२६अ.।

**कर्केधुकी**। स्त्री। भूवदर्य्याम्। वै.निघ.।

**कर्कोटः (कः)**। पुं। बिल्ववृक्षे। मे.कचतुष्कं। কাঁকরোল इति प्रसिद्धफलशाकलतायाम्। च.द.ज्व.चि.शाकविधौ। "कर्कोटकं पर्पटकम्।" एतत्फलस्य स्थावरविषान्तर्गतफलविषे वर्त्तते। सु. कल्प.२अ.। See फलविषम्। एतदुभयगुणाः— कफपित्तघ्नं शुक्रनाशनं रुचिकरञ्च। "कर्कोटकं फलं ज्ञेयं कारवेल्लकवद्गुणे.।" राज.३प.। कर्कोटकं त्रिदोषघ्नं रुचिकृन्मधुरं तथा। अत्रि.१६अ.। इक्षुदण्डे। रा.नि.व.१४। सर्पविशेषे। मे.।

**कर्कोटका (की)**। स्त्री। फलशाकविशेषे। গোল কুমড়া। मं कोहले। गुणाः— मूत्राघातहरं प्रमेहघ्नं कृच्छ्राश्मरीभेदनं विण्मूत्रस्तपनं तृषातिशमनं पुष्टिकरं पथ्यं स्वादु अरोचकघ्नं बल्यं पित्तघ्नञ्च। रा.नि.व.७। कर्कोटकी रुचिकरी कटुः दीपनी तिक्तोष्णा वातकफघ्नी विषपित्तघ्नी च। वै.निघ.। पीतघोषायाम्। পীতঘোষা বা ঝিঙা। मं कटोली, काकली। रत्ना.। कोशातक्याम्।

**कर्कोटकीफलम्**। क्ली। घोषाफले। श्वेतकुष्माण्डे। झिङ्गाफले। वै.निघ.। कर्कोटफले। কাঁকরোল।

**कर्कोटपत्रम्**। क्ली। कर्कोटदले। কাঁকরোলপাতা। एतद्वमने हितम्। वा.ज्व.चि.१अ.।

**कर्कोटमूलम्**। क्ली। कर्कोटकमूले। কাঁকরোলমূল। सि.यो.कास.चि.। "नस्यं कर्कोटमूलं स्यात्।" च.द.पाण्डु.चि.।

**कर्कोटिका**। स्त्री। कुष्माण्डीलतायां। বিলাতিকুম্ড়া। कर्कोटके। কাঁকরোল। रा.नि.व.७।

**कर्कोटिकाकन्दरजः**। क्ली। खेकसामूलचूर्णम्। भा.म.१भ.शीतलाज्व.सा.ज्व.चि.। "कर्कोटिकाकन्दरजः कुलत्थः।"

**कर्कोटी**। स्त्री। कर्कोटिकायां। কাঁকরোল। देवताड़वृक्षे। দেবতাড়া। वै.निघ.।

**कर्क्कोलम्** । क्ली । कक्कोले । कक्कोल । रा.नि. व.१२ ।

**कर्चरिका (री)** । स्त्री । कचुड़ीति प्रसिद्धे पिष्टकभेदे । पाकराजः । [तालविशेषे ।

**कर्चु(र्चू)रम्** । । सुवर्णे । मे.रत्रिकं । हरि-

**कर्चूरः (का:)** । पुं । एकाङ्गीनामगन्धद्रव्ये । एकाङ्गी । हिं कचूरा । तें कीचालोकचेट्टा । मं कं कचोरा । योग.रत्ना.वाजीक. । गुणाः—कटुः तिक्तोष्णः कफकासघ्नः मुखवैशद्यकरः गलगण्डघ्नः । रा.नि.व.६ । दीपनः रुच्यः सुगन्धी कटुपाकः कुष्ठार्शोव्रणकासघ्नः लघुः श्वासगुल्मकृमिघ्नश्च । भा. पू.१भ. । कर्चूरकन्दे । (कः) आम्रहरिद्रायाम् । কাঁচাহলুদ । भ.टी.स्वा. । शट्याम् । मे.रत्रिकं । वै.निघ.२भ.ज्व.चि. । See शटी ।

**कर्णः** । पुं । स्वनामप्रसिद्धदीर्घपत्रवृक्षे । কান-থোড়া গাছ । च.द.वि.ज्व.चि. । "दीर्घपत्रकक-र्णाख्येनैवं खदिरसंयुतम् ।" श्रवणेन्द्रिये । रा.नि. व.१८ । सुवर्णाली । শোণালু । "सुवर्णाली गुना-वपि ।" मे.णद्विकं । मधुरत्वचि । দারচিনি । अ-र्कमन्दारे । वै.निघ. ।

**कर्णकः** । पुं । मत्स्यविशेषे । तन्नामकसन्निपात-विशेषे । কর্ণমূলী । लक्षणं—"दोषत्रयेण जनिता किल कर्णमूले तीव्रा ज्वरे भवति तु श्वयथुर्व्यथा च । कण्ठग्रहो बधिरता श्वसनं प्रलाप प्रस्वेदमोहदह-नानि च कर्णिकाख्ये ॥" भा.ज्व.चि. ।

**कर्णकण्डु(ण्डू:)** । पुं, स्त्री । कर्णस्रोतोगत-रोगविशेषे । तस्य निदानं यथा—"मारुतः कफ-संयुक्तः कर्णकण्डुं करोति च ।" मा.नि. ।

**कर्णकिट्टम्** । क्ली । कर्णमले ।

**कर्णकीटा (टी)** । स्त्री । (Julus cornifex.) कर्णजलौकायाम् । शतपद्याम् । কাণ-কোটারী, কেন্নুই । हिं कानसलाइ । इं.च. ।

**कर्णक्ष्वेड़ः** । पुं । कर्णरोगविशेषे । কাণের ভিতর সর্ব্বদা ভোঁ ভোঁ শব্দ । तस्य लक्षणं—"वायुः पित्तादिभिर्युक्तः वेणुघोषसमं स्वनम् । करोति कर्णयोः क्ष्वेड़ं कर्णक्ष्वेड़ः स उच्यते ।" मा.नि. । अत्र वायुः पित्तादिसहितः कर्णे वेणु-घोषवच्छब्दमुत्पादयति ।

**कर्णगूथः** । पुं । कर्णमले । কাণের খোল । तारा. ।

**कर्णगूथकः** । पुं । कर्णरोगविशेषे । यथा—"पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथक ।" मा नि. ।

**कर्णच्छिद्रम्** । क्ली । कर्णरन्ध्रे ।

**कर्णजलूका** । स्त्री । (Julus.) कर्णजलौका-याम् । श.र. ।

**कर्णजलौका (का:)** । स्त्री,पुं । शतपद्याम् । কাণকোটারী । हिं कानखजूरा । इं.च. । भ. टी.भ. ।

**कर्णजार्शः** । क्ली । कर्णार्शोरोगे । কাণের অর্শ । "प्रकुपिता दोषाः शोताच्छिद्रावदनेषु अ-र्शांस्युपनिवर्त्तयन्ति । तत्र कर्णजेषु बाधिर्य्यं पूतिक-र्णता च ।" सु.नि.२अ. ।

**कर्णजाहम्** । क्ली । कर्णमूले ।

**कर्णजित्** । पुं । गुड़ाकेशे ।

**कर्णजीरकम्** । क्ली । क्षुद्रजीरके । रत्ना. ।

**कर्णज्योतिः** । स्त्री । कर्णस्फोटायाम् । वै. निघ. । [श.मा. ।

**कर्णदुन्दुभिः** । स्त्री । शतपद्याम् । কেন্নুই ।

**कर्णधारिणी** । स्त्री । हस्तिन्यां । হাতিনী ।

**कर्णनादः** । पुं । कर्णस्रोतोगतरोगे । কাণ শোঁ শোঁ রোগ । कर्णस्रोतोगतवायुः कर्णे भेरी-मृदङ्गशङ्खवन्नादमत्यर्थमुत्पादयति । मा.नि. । "य-दा तु नाडीषु विमार्गमागतः स एव शब्दाभिवहा-सु तिष्ठति । शृणोति शब्दान् विविधान् तदा नरः प्रणादमेनं कथयन्ति चामयम् ॥" सु.उ.२०अ. ।

**कर्णपाकः** । पुं । कर्णस्रोतोगतरोगविशेषे । কাণপাকা । "कर्णपाकस्तु पित्तेन कोथविक्लेद-कृद्भवेत् ।" मा.नि. । [কাণের পাতা ।

**कर्णपात्रकः** । पुं । कर्णबाह्यभागविशेषे ।

**कर्णपाली** । स्त्री । कर्णपालीगतरोगे । কাণের পাতার রোগ । स पञ्चविधः—परिपोटोत्पातोन्म-न्थदुःखवर्द्धनपरिलेहिभेदेन, एषां लक्षणानि स्वस-पर्य्याये द्रष्टव्यानि । सु.चि.२५अ. ।

**कर्णपुत्रिका ।** स्त्री । कर्णशष्कुल्याम् । मोरट-लतायाम् । [रटे । रा.नि.व.३ ।

**कर्ण(कीर्ण)पुष्पः ।** पुं । नीलझिण्ट्याम् । मो-

**कर्णपूरः ।** पुं । बालवृक्षे । र.मा.। शिरीषवृक्षे । नीलोत्पले । मे. । अशोकवृक्षे । रा.नि व.१० । नन्दीवृक्षे । त्रिका. ।

**कर्णपूरकः ।** पुं । कदम्बवृक्षे । কদম গাছ । रा.नि.व.८। अशोकवृक्षे । रा.नि.व.१० । तिलके । वै.निघ. ।

**कर्णपूरणम् ।** क्ली । तैलादिभिः कर्णपूरणे । কাণে তেল দেওয়া । "कर्णं प्रपूरयेत्सम्यक् स्ने-हाद्यैर्मात्रया भिषक् । नीचैः श्रुतिर्न बाधिर्य्यं स्या-न्नित्यं कर्णपूरणात् ॥ रसाद्यैः पूरणङ्कर्णे भोजना-त्प्राक् प्रशस्यते । तैलाद्यैः पूरणङ्कर्णे भास्करेऽस्तमु-पागते ॥ स्वेदयेत्कर्णदेशन्तु परिवर्त्तनशायिनः । मूत्रैः स्नेहरसैः कोष्णैः पूरयेच्च ततो भिषक् ॥ स्वस्थस्य पूरितं रक्षेत् मात्राशतमवेदने । शतपत्रं श्रोत्रगदे शिरोरोगे तथैव च ॥" वैद्यकम् ।

**कर्णप्रतिनाहः ।** पुं । कर्णरोगविशेषे । "स कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विका-रो शिरसोऽर्द्धभेदकृत् । मा.नि. ।

**कर्णफलः ।** पुं । (Ophiocephalus kurrawey.) मत्स्यविशेषे । কাণলি মাছ । गुणाः —अजीर्णकफकरः । राज.३प. ।

**कर्णबन्धनाकृतिः ।** स्त्री । कर्णवेधनानन्तरं तद्बन्धनाकृतौ । सा पञ्चदशविधा । यथा—नेमिस-न्धानकः, उत्पलभेद्यकः, वल्लूरकः, आसङ्गिमः, गण्डकर्णः, आहार्य्यः, निर्वेधिमः, व्यायोजिमः, कपाटसन्धिकः, अर्द्धकपाटसन्धिकः, संक्षिप्तः, हीनकर्णः, वल्लीकर्णः, यष्टिकर्णः, काकौष्ठक इति । सु.सू.१६अ. । विशेषाः स्वस्वपर्य्याये ज्ञेयाः ।

**कर्णभूषणम् ।** क्ली, पुं । अशोकवृक्षे । नाग-केशरे । प.मु. ।

**कर्णमद्गुरः ।** पुं । (Silurus unitus.) मत्स्य-भेदे । কাণমাগুর । वै.निघ. ।

**कर्णमलम् ।** क्ली । कर्णगूथे । हारा. ।

**कर्णमूलम् ।** क्ली । कर्णस्य मूलदेशे । কর্ণমূলী। मा.ज्व.नि. ।

**कर्णमोचकः ।** पुं । कर्णस्फोटायाम् । কাণছি-ড়া । वै.निघ २भ.र.पि.चि.दूर्व्वाद्यतैले ।

**कर्णमोटा ।** स्त्री । वर्व्वूरवृक्षे । वै.निघ. ।

**कर्णमोरटः ।** पुं । कर्णस्फोटायां । কাণছিড়ে, কান্দড়া । रसेन्द्र.चि.सूर्य्यपातकनाम्नि । कानछि-ड़ाइयं, "जलस्थलभवः कर्णमोरटः ।" सा.कौ.दू-र्व्वाद्यतैले ।

**कर्णरोगः ।** पुं । कर्णजव्याधौ । কাণের রো-গ । तस्य निदानादि ।—नादोऽतिरुक् कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात् । शोथः सुरा-गोदरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात् । वैश्रुत्यकण्डूस्थिरशोथशुक्लस्निग्धश्रुतिस्वल्परुजः कफाच्च । सर्व्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ।" मा.नि. । कर्णरोगाः साक-ल्येनाष्टाविंशतिविधाः । यथा—"कर्णशूलं प्रणा-दश्च बाधिर्य्यं क्ष्वेड़ एव च । कर्णस्रावः कर्णकण्डूः कर्णगूथस्तथैव च । कृमिकर्णप्रतिनाहौ विद्रधिर्द्वि-विधस्तथा । कर्णपाकः पूतिकर्णः तथैवार्शश्चतुर्व्वि-धम् । तथार्व्वुदं सप्तविधं शोफश्चापि चतुर्विधः । एते कर्णगतारोगा अष्टाविंशतिरीरिताः ॥" वै. निघ. । [कर्णपाली । কাণের পাতা । ই.च. ।

**कर्णलतिका ।** स्त्री । Lobe of the ear.

**कर्णवंशः ।** पुं । मञ्चे । हारा. । [वंशेन ।

**कर्णवर्ज्जितः ।** पुं । सर्पे । श.च. । चि । क-

**कर्णवशः ।** पुं । मत्स्यविशेषे । কালবশ । तस्य लक्षणं—ह्रस्वः गोलः कृष्णः शल्कवांश्च । तन्मांस-गुणाः—दीपनं पाचनं पथ्यं हृद्यं बलपुष्टिकरञ्च । वैद्यकम् ।

**कर्णविद्रधिः ।** पुं । Ulceration of the ear, कर्णस्रोतोगतस्फोटके । स द्विविधः दोष-जागन्तुजभेदेन । तेन तोदधूमनिर्गमवत्पीड़ा दाह-सन्तापा अरुणस्रावाश्च भवन्ति । मा.नि. । अपिच "क्षताभिघातप्रभवस्तु विद्रधिः भवेत्तथा दोषकृतो-ऽपरः पुनः । सरक्तपीतारुणमस्रमास्रवं प्रतोदधू-मायनदाहचोषवान् ।" सु.उ.२०अ. ।

**कर्णविधिः ।** पुं । कर्णक्लेदनादौ । तद्विधिः

यथा —"स्वेदयेत् कर्णदेशन्तु किञ्चिन्नु: पार्श्वशायिन:। मूत्रै: स्नेहैरसैश्चैव श्रोत्रम्भ: प्रपूरयेत्। कर्णश्च पूरितं रचेत् शतं पञ्चशतानि वा। सहस्रं वापि मात्राणां श्रोत्रकण्ठशिरोगदे। मूत्राद्यै: पूरणङ्कर्णे भोजनात्प्राक् प्रशस्यते। तैलाद्यै: पूरणङ्कर्णे भास्करेऽस्तमुपागते॥" भा.।

**कर्णवेधनिका (नी)**। स्त्री। करिकर्णवेधनास्त्रे। हारा.। कर्णवेधनास्त्रे। यथा—"कर्णपालीच बहुला बहुलायाश्च शस्यते। सूचिविभागसुषिरा च्यङ्गुला कर्णवेधनी॥" अत्रि.।

**कर्णव्यधः**। पुं। कर्णवेधने। काणवैँधा। "स च रक्षाभूषणनिमित्त:, षष्ठे सप्तमे वा मासि कर्त्तव्य:। अयञ्च न जन्मकालादूर्द्धं किन्तु संवत्सरादिभाद्रपदाद्य: षष्ठ: माघ: सप्तमी वा फाल्गुनस्तस्मिन् वेध्य:।" सु.सू.१६अ.।

**कर्णशष्कुली**। स्त्री। कर्णगोलके। कर्णमध्यवर्त्तिनि आकाशे। हे.च.।

**कर्णशूलम्**। पुं, क्ली। Ear ache. कर्णस्रोतोगतरोगविशेषे। काण शूलन, काण कामड़ान। तत्र श्रोत्रमारुत: प्रतिलोमं विचरन् दारुणशूलमुत्पादयति। कुपितरक्तं कफेन पित्तेन वा शेन केनचिदावृतं भवेत, तल्लक्षणमपि प्रदर्शयति। मा.नि.। तदुक्तं—"समीरण: श्रोत्रगतोऽन्यथाचर: समन्तत: शूलमतीव कर्णयो:। करोति दोषैश्च यथास्वमावृत: स कर्णशूल: कथितो दुराचर:॥ सु.उ.२०अ.। हनुशङ्खशिरोग्रीवं यस्य भिन्दन्निवानिल:। कर्णयो: कुरुते शूलं कर्णशूलं तदुच्यते॥" सु.नि.१अ.।

**कर्णशूली**। त्रि। कर्णशूलयुक्ते।

**कर्णशेखरः**। पुं। शालवृक्षे। रत्ना.।

**कर्णशोथः (कः)**। पुं। कर्णस्रोतोगतरोगविशेषे। "कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणै:।" मा.नि.। "तेषु तु कपूतिकर्णत्वं वधिरत्वञ्च बाधते।" वा.उ.१७अ.।

**कर्णसंस्रावः**। पुं। The discharge of pus from the ear. कर्णस्रोतोगतरोगविशेषे। काणेर पूंय। तस्य निदानरूपाणि—"शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधे:। स्रवेद्धि पूयं श्रवणोऽनिलावृत: स कर्णसंस्राव इति प्रकीर्त्तित:॥" मा.नि.।

**कर्णसमीपः**। पुं। शङ्खदेशे। रा.नि.व.१८।

**कर्णसूटी**। स्त्री। कीटविशेषे।

**कर्णस्फोटा**। स्त्री। स्वनामख्यातलतायाम्। काणछिड़ा, काणफोटा। मं कानफोड़ी। गुणा:—कटुतिक्तहिमा विषघ्नी ग्रहभूतादिदोषघ्नी। रा.नि.व.३। "कर्णस्फोटा तु कटुका चोष्णा चाग्निप्रदीपनी। वातगुल्मोदरश्लेष्मकर्णव्रणविषापहा। कफपित्तज्वरानाहकफशूलविनाशिनी। सा तु पीता बुधैर्ज्ञेया चाञ्जने च प्रशस्तिका॥" वै.निघ.।

**कर्णस्रावः**। पुं। कर्णसंस्रावे।

**कर्णाख्यः**। पुं। श्वेतकिणिह्याम्। वै.निघ.।

**कर्णाञ्जलिः**। पुं। कर्णशष्कुल्याम्।

**कर्णाटी**। स्त्री। हंसपादीक्षुपे। रा.नि.व.५।

**कर्णान्दुः (न्दूः)**। स्त्री। कर्णपाल्याम्। काण तड़का इति भाषा। हे.च.।

**कर्णाभरणकः**। पुं। आरग्वधवृक्षे। बड़ सोनालू। रा.नि.व.६।

**कर्णारा**। स्त्री। कर्णवेधन्याम्। त्रिका.।

**कर्णारिः**। पुं। अर्जुनवृक्षे। नदीसर्ज्जवृक्षे। आजन् इति लोके। रा.नि.व.६।

**कर्णार्बुदः (र्शः)**। पुं। कर्णस्रोतोगतरोगविशेषे। "कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणै:।" मा.नि.।

**कर्णिकः**। पुं। गणिकारिकायाम्। पद्मकोषे। सन्निपातज्वरविशेषे। लक्षणं—"दोषत्रयेण जनिता किल कर्णमूले तीव्रा ज्वरे भवति तु श्रवणोर्ध्वा च। कण्ठग्रहो वधिरता श्वसनं प्रलाप: प्रस्वेदमोहदहनानि च कर्णिकाख्ये।" भा.म.१भ.।

**कर्णिका**। स्त्री। दारुणपीड़ायां। वा.उ.३८अ.। महाग्निमन्थवृक्षे। बड़ आगगछ। रा.नि.व.६। वै.निघ.२भ.कासरोग.रुद्रपर्प्याम्। करिशुण्डाग्रभागरूपाङ्गुली। करमध्याङ्गुली। हे.च.। कामुकादिच्छटांशे। बोँटा। मे.कर्णिकं। पद्मिनीनाले। हे.च.। स्त्रीयोनौ कर्णिकाकारे मांसग्रन्थिरूपरोगे। भा.म.४भ,योनिरो.। लक्षणं—"क-

र्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्याञ्च जायते ।" मा.नि. । कठिनाम् । मलपथाम् । সেউতি গুলাব । बीजमातृका । बीजकोषे । बीजकोषस्तु कर्णिका । পদ্মচাকি বা ফোপল । चारा. । गुणा: —तिक्ता कषाया मधुरा हिमा मुखवैशद्यकृत् लघ्वी तृष्णास्रकफपित्तघ्नी च । भा.पू.१भ. ।

**कर्णिकार: (क:)** । पुं । A sort of cassia (Cassia fistula.) क्षुद्रस्वर्णालुवृक्षे । ছোট সোণালু গাছ । मं लघुवाहवा । तें किरु-यक्के । गुणा: —तिक्तरस: कटूष्ण: कफशूलघ्न: उदरकृमिमेहघ्न: व्रणघ्न: गुल्मघ्नश्च । रा.नि.व.९ । (Pterospermum acerifolium.) द्रुमोत्पले । ওলট্ কম্বল । हिं कलियार, कनियार । तें रेक्षचेट्टु, कोंड्गोगुचेट्टु, गोगुचेट्टु । गुणा: कटुतिक्त: लघु: शोधनस्तुवर: रञ्जन: सुखद: शोथश्लेष्मरक्तव्रणकुष्ठहरश्च । रा.नि.व.९ । स्वर्णपद्मे । र.मा. । डहुके । डहुया । रत्ना. ।

**कर्णिकारिका** । स्त्री । हारिद्रावृक्षे । वै.निघ. ।

**कर्णिकी (इन्)** । पुं । गजे । जटा. ।

**कर्णिन:** । त्रि । विहङ्गकर्णे ।

**कर्णिनी** । स्त्री । Disease of the Uterus or Polypus uteri. श्लेष्मजन्यस्त्रीयोनिरोगविशेषे । यत्र योनौ श्लेष्मासृग्जा कर्णिकाकारग्रन्थिर्जायते । भा म.४भ.योनिरो.चि. । "कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥" सु. उ.३८भ. । "अकाले वाहमानाया गर्भेण पिहितोऽनिल: । कर्णिकां जनयेद्योनौ श्लेष्मरक्तेन मूर्च्छित: । रक्तमार्गविरोधिन्या सा तया कर्णिनी मता ॥" च. ।

**कर्णी** । पुं । आरग्वधवृक्षे । रा.नि.व.२२ । योवापार्श्वभागे । मक्षिकारिकायाम् । वै.निघ. । त्रि । प्रशस्तकर्णे । कर्णयुक्ते । [थर्थरि,डुगो । श.टी.भ. ।

**कर्णीरथ:** । पुं । स्कन्धवाह्ययाने । চোপালা,

**कर्णीवान्** । पुं । आरग्वधवृक्षे ।

**कर्णेजपमन्त्र:** । पुं । विषनाशनमन्त्रविशेषे । "ओं हर हर नीलग्रीवश्वेताङ्गजटाभमण्डित-अर्द्धेन्दुभूषणमन्त्रकयाय विषमुपसंहर उपसंहर हर हर हर नास्ति विषं नास्ति विषं नास्ति विषं । उच्छिरे उच्छिरे उच्छिरे । इति कर्णेजपमन्त्रेण वारं वारं तालुमुखं सिञ्चेत् शीतवारिणा वारषट्कम् ।" भचि.२स्नान.५६भ. ।

**कर्णेन्द्रियम्** । क्ली । श्रवणेन्द्रिये । কাণ । "अत आकाशतत्त्वाभिनिर्मितम् ।" सु.शा.१भ. ।

**कर्णोर्णम् (र्णा)** । क्ली, स्त्री । कर्णरोम्णि ।

**कर्त्तनम्** । क्ली । छेदने । मे.नत्रिकं । तर्कूटे । त्रिका. ।

**कर्त्तरी** । स्त्री । कृपाण्याम् । কাতারি । श्मश्रुकर्त्तनोपयुक्ते शस्त्रे । কাঁচী, ক্ষুর্ প্রভৃতি । सु. चि.१भ. यथा च "स्नायुस्थिगर्भशल्यानां केशादीनाञ्च कर्त्तने । विविधाकृतयो योज्या: कर्त्तर्य्य: कर्त्तरीनिभा: ॥" भचि. ।

**कर्त्तरीयम्** । क्ली । स्थावरविषान्तर्गतत्वक्सारनिर्यासविषभेदे । सु.कल्प.२भ. । [द्वय ।

**कर्त्तरीयुगम्** । क्ली । सिन्धुवारद्वये । निशिन्दा-

**कर्द्द:** । पुं । कर्द्दमे । श.र. ।

**कर्द्दट:** । पुं । करहाटे । पङ्के । मे.टत्रिकं । सूर्व्वाले । जलजतृणमात्रे । [हे.च. ।

**कर्द्दनम्** । क्ली । कुक्षिशब्दे । পেটের ডাক ।

**कर्द्दमम्** । क्ली । गन्धराजे । रा.नि.व.१२ । सु. चि.२५भ. । मांसे । श.च. । त्रयोदशविधकन्दविषान्यतमविषभेदे । प.सु.सु.कल्प.२भ. । See कन्दविषं । वर्त्मकर्द्दमाख्यनेत्ररोगे । See वर्त्मकर्द्दम: ।

**कर्द्दम: (क:)** । पुं । पङ्के । কাদা । गुणा: — "कर्द्दमो दाहपित्तार्त्तिशोथघ्न: शीतल: सर: ।" भा. । शालिधान्यविशेषे । भा.पू.१भ.शाकव. । See शालि: । पद्मिनीकर्द्दमे । "पुनर्णवा कार्द्दमकण्टकार्य्यौ ।" सु.चि.२५भ. । राजिमत्सर्पविशेषे । सु.कल्प.४भ. । See सर्प: । अन्ने । वै.निघ. ।

**कर्द्दमविसर्प:** । पुं । विसर्परोगभेदे । लक्षणं यथा—"कफपित्ताज्ज्वरस्तम्भो निद्रा तन्द्रा शिरोरुजा । अङ्गावसादविक्षेपौ प्रलेपारोचकभ्रमा: । मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् । आमोपवेशनं लेप: स्रोतसाञ्च विसर्पति । प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् । पीडकैरवकीर्णोऽतिपीतलोहितपाण्डुरै । स्निग्धोऽसितो मेच-

स्त्राभी मलिनः शोफवान् गुरुः। गम्भीरपाकः प्राब्वोषा स्वतः क्रिमीऽवदीर्य्यते। पक्वश्चाविशीर्णमांसश्च स्पष्टस्नायुश्चिराचयः। शवगन्धी च वीसर्पः कर्द्दमाख्यमुशन्ति तम्॥" मा.नि.। [र.।

**कर्द्दमाटकः** । पुं। विष्ठादिनिक्षेपस्थाने। श्र.

**कार्द्दमी** । स्त्री। मुद्गरवृक्षे। मुगुरफुलेर गाछ। रा.नि.व.१०। [नेता, लेकड़ा। श्रम.।

**कर्पटः(कः)** । पुं। लक्तके। लत्ता इति लोके।

**कर्परः** । पुं। खर्परे। घटखण्डे। ज्वालातम-कपाले। तप्त काटखोला। वा चि.१श्र.। "खण्डाकारमपूपपचनपात्रं न्युब्जं कर्पर इत्युच्यते।" ताओया वा चाटु। वा.टी.हेमा.। कपाले। नि.का. शर्करायां। उदुम्बरवृक्षे। श्र.च.। मस्तकास्थिनि माथार खुलि। कटाहे। अस्त्रभेदे। मे.रत्निकं

**कर्परांशः** । पुं। मृत्कपालखण्डे। खोलाकुची श्र.र.। [आकरोट इति भाषा। भा.

**कर्परालः** । पुं। अक्षोटवृक्षे, गिरिजपीलुवृक्षे।

**कर्परिकातुत्थम्** । क्ली। खर्परे। खापर। वै.निघ.। तुत्थविशेषे। तुँते। ह.च.।

**कर्परी** । स्त्री। A collyrium extracted from the Amomum anthorhiza. का-र्षाशवतुल्ये, तुत्थाञ्जने। दारुहरिद्रार काथेर तुँतिया।

**कर्परीतुत्थम्** । क्ली। खर्परे। कर्परिकातुत्थे, रसके। तुँतियाविशेष। हिं खपरियाथोथा। "कर्परीतुत्थकं तुत्थादन्यत् तद्रसकं स्मृतं। ये गु-णास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः॥" वैद्यकं।

**कर्पासः (कः)** । पुं। स्वनामख्यातवृक्षे। का-पास गाछ। ह.च.। मद.व.१।

**कर्पासफलम्** । क्ली। कार्पासवीजे। काया-सेर वीज। "कर्पासफलमित्युक्तं कषायं मधुरं गुरु। वातश्लेष्महरं रुच्यं विशेषेणास्थिवर्ज्जितम्॥"

**कर्पासी** । स्त्री। कार्पासवृक्षे। मद.व.१।

**कर्पूरः (कः)** । पुं, क्ली। (Cinamomum camphora,) Camphor. स्वनामख्यातपण्य-द्रव्ये शुभ्रतर्निर्यासरूपे। कर्पूर। हिं कापुर। तै कर्पूरमु। स पक्वापक्वभेदाद्द्विविधः। तयोरपक्वं गुणवत्तरं भवति। स च पोतास-भीमसेन-सित-कार-शङ्करावास-पांशु पिञ्ज ह्वसार-हिमवालुक जू-तिक-तुषार-हिम शीतल-पक्विकाख्य इति बहु-भेदाः। गुणाः --शीतलः तिक्तः स्निग्धोष्णः कटुः श्लेष्मरक्तपित्तघ्नः तृष्णादाहकण्ठदोषघ्नः। स तिक्तः सुरभिः शीतः कर्पूरो लघुलेखनः। तृष्णायां मुख-शोषे च वैरस्ये चापि पूजितः॥ सु.सू.४६ग्र.। तत्र नूतनकर्पूरः स्निग्धस्तिक्त उष्णासदाहप्रदः। पुरातनः दाहशीतघ्नः। धौतः स शुभदः, इति। स पुनः शिरीमध्यतलजभेदेन त्रिविधः। तत्र शिरी-जातः कर्पूरः स्कन्धाग्रजातः। मध्यजः पर्व्वजातः। तलजः तलजातः। तथा स्कन्धगर्भस्थितः श्रेष्ठः। स्कन्धवाह्यस्थितो मध्यमः। तथा शिरोजो भास्वान् विदग्धपुलकः। मध्यजः सामान्यपुलकः स्वच्छश्च। तलजः गौरवर्णः। यस्तन्मध्यजः स स्वच्छः शुभ-ईषत् हरिद्राभश्च स्यात्। यो वाह्यजातः स सुदृढः शुभकृत्वः पुलकञ्च जनयेत्। इति कर्पूरलक्षणम्। तदुक्तं पोतासो-भीमसेनस्तदनु सितकरः शङ्करावा-ससंज्ञः, पांशुः पिञ्जोऽब्दसारस्तदनु हिमयुता वा-लुका जूतिका च। पश्चादस्तानुषारस्तदुपरि सहिमः शीतलः पक्विकाख्या (पक्विकान्या) कर्पूरस्येति भेदा गुणरसमहसा वैद्यदृश्येन दृष्टाः। इति कर्पूरभेदः। अपिच कर्पूरो नूतनस्तिक्तः स्निग्धश्चोष्णासदाहदः। चिरस्थो दाहशोषघ्नः स धौतः शुभकृत्परः। शिरो मध्यं तलञ्चेति कर्पूरन्त्रिविधं स्मृतम्। शिरस्कन्धा-ग्रसञ्जातं मध्यं पर्व्वदले तलं। भास्वद्विदग्धपुलकं शिरोजातन्तु मध्यमं। सामान्यपुलकं स्वच्छं तले चूर्णन्तु गौरकं। स्कन्धगर्भस्थितं श्रेष्ठं स्कन्धवाह्ये च मध्यमम्। स्वच्छमीषत् हरिद्राभं शुभं तन्मध्यजं स्मृ-तम्। सुदृढं शुभकृत्तच्च पुलकं वाह्यजं वदेत्। अपि च स्वच्छं भङ्गुरपत्रं लघुतरविशदं तोलने तिक्तकं चेत्, स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदसौरभ्य-दायि। निःस्नेहं दार्ढ्यपत्रं शुभतरमिति चेत् राज-योग्यं प्रशस्तम्। कर्पूरं चान्यथा चेत् बहुतरमसने स्फोटदायि प्रयाय॥ रा.नि.व.१२। कर्पूरकन्दे। शठी। आर्द्रहरिद्रायाम्। कांचाहलूद। श्र.च.।

**कर्पूरतुलसी** । क्ली। कर्पूरगन्धितुलसीभेदे। कर्पूरगन्धी तुलसी। वै.निघ.।

**कर्पूरतैलम्** । क्ली। कर्पूरतैले। कर्पूरेर तैल। गुणाः—कटूष्णं वातरोगघ्नं प्रकाशक-

ष्णं दन्तदार्ढ्यकरत्वं पित्तहरत्वञ्च । रा.नि व.१५। ह्रीवेरे । बाला ।

**कर्पूरनालिका** । स्त्री । पक्वान्नविशेषे । कर्पूरनारी, নেওয়ালা इति च ख्याता । यथा— "घृताक्तया समितया कृत्वा लम्बपुटं ततः। लवङ्गीमरिचकर्पूरयुतया सितयान्वितं । पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका । संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका ॥" भा.।

**कर्पूरमणिः** । पुं । पाषाणभेदे । প্রস্তরবিশেষ । गुणाः—"मणिः कर्पूरकलितः कटुष्णो व्रणापहः । तद्दोषवातदोषादीन् नाशयेत् ।" रा. नि.व.१३ ।

**कर्पूररसः** । पुं । रसविशेषेऽतिसाराधिकारे । "हिङ्गुलम् अहिफेनञ्च मुस्तकेन्द्रयवं तथा। जातीफलञ्च कर्पूरं सर्व्वं समभागं यत्नतः । अनेन वटिका कार्य्या द्विगुञ्जापरिमाणतः ॥" इत्यादि । भैष.अतिसा.चि. । रसकर्पूरे । রসকপূর । तत्करणविधिः —"शुद्धसूतसमं कुर्य्यात् प्रत्येकं गैरिकं सुधीः । पुष्टिकां खटिकां तद्वत् स्फटिकां सिन्धुजन्म च । वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिका । सर्व्वाण्येतानि सञ्चूर्ण्य वाससा चापि शोधयेत् । एभिश्चूर्णैर्युतं सूतं यावद्यामं विमर्द्दयेत् । तच्च चूर्णं समस्तञ्च स्थालीमध्ये परिक्षिपेत् । तस्याः स्थाल्या मुखे स्थालीमपरां धारयेत्समाम् । सतश्च कुट्टितमृदा मुद्रयेदनयोर्मुखं । संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत् । सम्यग्विशोष्य मुद्रां तां स्थालीं चुल्ल्यां विधारयेत् । अग्निं निरन्तरं दद्यात् यावद्दिनचतुष्टयं । अङ्गारोपरि तद्यन्त्रं रक्षेयत्नादहर्निशं । शनैरुद्घाटयेद्यन्त्रमूर्द्ध्वस्थालीगतं रसं । कर्पूरवत्सुविमलं गृह्णीयाद्गुणवत्तरम् । तदेव कुसुमचन्दनकस्तूरीकुङ्कुमैर्युतं । खादन् हरति फिरङ्गं व्याधिं सोपद्रवं सपदि । विन्दति वह्निदीप्तिं पुष्टिं वीर्य्यं बलं विपुलं । रमयति रमणीशतकं रसकर्पूरसेवकः सततम् ॥" भा.। গিরিমাটী, ঝিণুক, কুলথড়ি, ফট্‌কিরি, সৈন্ধবলবণ, উইমাটী, খারিলবণ, রাঙামাটী প্রত্যেক চূর্ণ এক এক ভাগ, এক ভাগ পারার সহিত ১ প্রহর মাড়িয়া স্থালীমধ্যে পাক করিবে ।

**कर्पूरहरिद्रा** । स्त्री । स्वनामख्यातद्रव्ये । आम आदा । हिं कर्पूरहलदी । तें कर्पूरहरिद्रमनिवस्तुविशेष । गुणाः—शीतला वातला मधुरा पित्तघ्नी तिक्ता सर्व्वकण्डूघ्नी च । भा.पू.१भ. ।

**कर्पूरा** । स्त्री । तरण्यां ।

**कर्पूरादितैलम्** । क्ली । योनिरोगे हितम् । पाठः -"कर्पूरभल्लातकशङ्खचूर्णं क्षारो यवानाञ्च मनःशिला च । तैलं विपक्वं हरितालमिश्रं रोमाणि निर्मूलयति क्षणेन" । कर्पूरादिभिः कल्कः । सिद्धे हरितालचूर्णं पादिकं प्रक्षेप्यम् । তিলতৈল ১ শ. কল্ক—কর্পূর,ভেলার শুটী, শঙ্খচূর্ণ, যবক্ষার এবং মনছাল প্রত্যেকে ৪ তো. জল ৪ শ.। পাক সিদ্ধ হইলে হরিতাল চূর্ণ এক পোয়া বা ২০ তোলা প্রক্ষেপ দিবে ।

**कर्पूराश्मा** । पुं । उपरत्नविशेषे । हिं कर्पूरचीनिया । स्फटिके । वै.निघ. ।

**कर्बः** । पुं । मूषिके ।

**कर्बरः** । पुं, क्ली । पुण्ड्रकेक्षौ । পুঁড়িইক্ষু । रा. नि.व.१४ । स्वर्णे । धुस्तूरवृक्षे । व्याघ्रे । मे.रत्रिकं ।

**कर्बरी** । स्त्री । शृगाल्यां । व्याघ्रां । मे.रत्रिकं । छिन्नपत्राम् । जटा. ।

**कर्बुदारः (कः)** । पुं । नीलझिण्ट्याम् । अ. च. । श्वेतकाञ्चने । प.मु., च.मू.४अ. । गुणाः— "ग्राहित्वं रक्तपित्ते हितत्वं । राज.। श्वेतस्तु काञ्चनो ग्राही तुवरो मधुरः स्मृतः। रूक्षो रुचः श्वासकासपित्तरक्तविकारहा । क्षतप्रदरगुल्मघ्नो गुणाश्चान्ये तु रक्तवत् ॥" वै.निघ.। च.। (कः,)श्लेष्मान्तकवृक्षे । চালতাগাছ । सु.मू.४२अ. ।

**कर्बुरम्** । क्ली, पुं । स्वर्णे । हे.च. । हरिताले । अम. । (रः) धुस्तूरवृक्षे । गन्धशट्यां । प.मु. । आमहरिद्रायां । কাঁচা হলুদ; वै.निघ.। जले । मे.।

**कर्बु(र्बू)रः (कः)** । पुं (Curcuma Zerumbet Rox.) गन्धशट्यां । अम.। आमहरिद्रायां । हिं कचीहलदी । अ.टी.भ.म.र. । नदीनिष्पावधान्ये । रा.नि व.१६ ।

**कर्बुरफलः** । पुं । सारङ्कवृक्षे । रा.नि.व.६ ।

**कर्बुरा** । स्त्री । सविषजलायुकाभेदे । सु.मू.१३ अ. । See जलायुका । पाटलावृक्षे । वर्ब्बर्य्याम् । বাবুইতুলসী । मे.रत्रिकं ।

**कार्बूरम्** । क्ली । स्वर्णे । हरिताली । चिवा. ।

**कर्म्म** । क्ली । यत् कुर्व्वन्ति, तत्कर्म्म । सु.सू ४१ अ. । तच्च त्रिविधं पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्म चेति । सु.सू.५अ. । [कालतायां । मे.रचतुष्कं ।

**कर्म्मकारी** । स्त्री । मूर्व्वायां । वै.निघ । विश्वि-

**कर्म्मजः** । पुं । वटवृक्षे । जटा. ।

**कर्म्मपुरुषः** । पुं । जीवे, "यस्मिन् चिकित्सा वर्त्तते स एव कर्म्मपुरुषश्चिकित्सिताधिकृतः ।" सु. शा.१अ. ।

**कर्म्मफलम्** । क्ली । कर्म्मरङ्गफले । रत्ना. । कर्म्मविपाके । मे.लचतुष्कं । सुखे । दुःखे । चिवा. ।

**कर्म्ममूलम्** । क्ली । कुशे । कुश । श.च. । शरवणे ।

**कर्म्मरङ्गः** । पुं । (Averrhoa arambola.) स्वनामख्यातवृक्षे । कामराङ्गा गाछ । मं कर्म राघें भाड़।फलगुणाः — अम्लत्वम् उष्णत्वं वातहरत्वं पित्तजनकत्वं । पक्वस्य मधुराम्लत्वं बलपुष्टिरुचिकारत्वञ्च । रा.नि.व.११ । कटुपाकित्वं अम्लपित्तकारित्वं तीक्ष्णत्वञ्च । राज.३प.। "कर्मारस्य फलमामं ग्राह्यकं वातनाशनं । उष्णं पित्तकरञ्चैव तत्पक्वं मधुरं मतं । अम्लञ्च बलपुष्टीनां रुचेश्चैव तु वर्द्धकम् ॥" वै.निघ. । "कर्म्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफवातहृत् ।" भा. ।

**कर्म्मरी** । स्त्री । The manna of the bamboo. वंशलोचनायाम् । वै.निघ. ।

**कर्म्मविपाकः** । पुं । पूर्व्वजन्मकृतशुभाशुभफलभूते रोगादौ ।

**कर्म्मारः** । पुं । वंशे । कर्म्मरङ्गे । रा.नि.व.७।११ ।

**कर्म्मारकः** । पुं । कर्म्मरङ्गवृक्षे । वै.निघ. ।

**कर्म्मार्हः** । पुं । मनुष्ये ।

**कर्म्मोरकः** । पुं । आक्षोटवृक्षे ।

**कर्म्मेन्द्रियम्** । क्ली । कर्म्मसाधनेन्द्रिये पाय्वादिपञ्चके व्यस्ते समस्ते च ।

**कर्वः** । पुं । मूषके । कामे । उणा. ।

**कर्वरः** । पुं । व्याघ्रे । मे ।

**कर्वरी** । स्त्री । हिङ्गुपत्र्याम् ।

**कर्च्चूरः** । पुं । कर्चूरे । आम आदा । हिं कचूर । रा.नि.व.६ ।

**कर्षः** । पुं । चौवधभक्षणादौ मागधीमाने । स च षोडशमाषात्मकः । १६० र. । च. । तोलकद्वयात्मकपरिमाणादिमाने । "कोलद्वयन्तु कर्षः स्यात् ।" प.प्र.१ख. । दशमाषकात्मककालिङ्गमाने । "कर्षः स्याद्दशमाषकः ।" शार्ङ्ग.पू.१अ. । सुश्रुतस्तु पञ्चरक्तिकमाषमुक्त्वा १६माषात्मकं कर्षं कथयति । धरणद्वयात्मकब्रीह्यादिमाने ८०र.। विभीतकवृक्षे । श.र. । क्ली । सुवर्णे ।

**कर्षकः** । पुं । अयस्कान्तमणौ ।

**कर्षणम्** । क्ली । कृशीकरणे । हे. च. ।

**कर्षणिः** । स्त्री । अतसीवृक्षे । मसिना गाछ । उणा. । [श्वेतवचायां । वै.निघ. ।

**कर्षणी** । स्त्री । चीरिणीक्षुपे । रा.नि.व.५ ।

**कर्षणीया** । स्त्री । काश्मर्यबीजे । वै.निघ. ।

**कर्षफलः** । पुं । विभीतकवृक्षे । वहेड़ा वृक्ष । रा.नि.व.११ । भा.पू.१भ.। भल्लातकवृक्षे । वै.निघ. ।

**कर्षफला** । स्त्री । आमलकवृक्षे । आमला गाछ । रत्ना. ।

**कर्षार्द्धम्** । क्ली । तोलकपरिमाणे । प.प्र.१ख. ।

**कर्षिका** । स्त्री । काश्मर्यबीजे । वै.निघ. ।

**कर्षिणी** । स्त्री । चीरिणीक्षुपे । क्षीरुई गाछ । रा.नि.व.५ । वै.निघ. । [हिक्का ।

**कर्षुः** । पुं । करीषाग्नौ । जीविकायाम् । मे.ष-

**कर्षूः** । स्त्री । अभ्यन्तरप्रशस्ते सङ्कीर्णमुखे खातविशेषे । च.सू.१४अ. । करीषाग्नौ । वै.निघ. ।

**कर्षूस्वेदः** । स्वेदविशेषे । लक्षणं यथा—"स्थानेऽक्षयनस्याधः कर्षूं स्थानविभागवित् । दीप्तैरधूमैरङ्गारैः तां कर्षूं पूरयेत्ततः। तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ॥" च.सू.१४अ. ।

**कलः** । पुं । शालवृक्षे । शालगाछ । रा.नि.व.९। क्ली । शुक्रे, रेतसि । मे.लत्रिकं । बदरीगुच्छे । वै.निघ.२भ.संग्रहणी.चि.श्योणादिचूर्णे । त्रि । अजीर्णे । मे. ।

**कलकः** । पुं । मत्स्यभक्ष्ये । वै.च. । वैतसाक्षे ।

**कलकण्ठः** । पुं । हंसे । पारावते । कोकिले । मे.ठचतुष्कं । शुक्रपक्षिणि । টেয়া পাখী । प.मु.।

**कलकफलः** । पुं । दाड़िमवृक्षे । [चतुष्कं ।

**कलकलः** । पुं । सर्ज्जनिर्यासे । धुनो । मे.ल-

**कलघण्टिका** । स्त्री । क्षवपर्यादिवायाम् । শ্যামা লতা । भा.पू.१भ. । See चनला ।

**कलघोषः** । पुं । कोकिले । श.र. ।

**कलङ्कः** । पुं । लोहमले । क्रोड़े । अपवादे । मे.कत्रिकं । मत्स्यभेदे । वै.निघ. ।

**कलङ्कषः** । पुं । सिंहे । श.मा. ।

**कलङ्की** । त्रि । लोहमलयुक्ते ।

**कलजः** । पुं । कुक्कुटे । वै.निघ. ।

**कलजातः** । पुं । कलमशाली । কলমা ধান।

**कलञ्जः** । पुं । तामकूटे । দোক্তা তামাক, থর্ষান তামাক । हिं तामाकू, सुरती । धूमपर्णी-धूमपानगुणाः—"कलञ्जसंवेष्टनधूमपानात् स्यादु च्चगुल्मिर्मुखरोगहानिः । कफप्रमामज्वरहानिलश्च गान्धर्व्वविद्याप्रवणैकसंव्यम् ॥ इति विष्णुसिद्धान्त-सारावली । संख्याविशेषे यथा —"सप्ताली प्रोच्यते गुञ्जा सा तिस्रोकपकं भवेत् । कपकैर्दशभिः प्रोक्तः कलञ्जो नाम नामतः ।" युक्तिकल्पद्रुम. । वेतल-तायाम् । विषास्त्रहतमृगपक्षिणोः । त्रिका॰ ।

**कलत्रम्** । क्ली । श्रोणी । रा.नि.व.१८ । भा-र्य्यायाम् । मे.रत्रिकं । भगे । त्रिका. । [१२ ।

**कलधूतम्** । क्ली । रौप्ये । রূপা । रा.नि.व

**कलधौतम्** । क्ली । रजते । রূপা । स्वर्णे । সোণা । रा.नि.व.१२ । [मे.नचतुष्कं ।

**कलध्वनिः** । पुं । मयूरे । पारावते । कोकिले।

**कलनः** । पुं। वेतसे । বেতগাছ । रा.नि.व.९। क्ली । एकमासिकगर्भे । गर्भवेष्टने । हला. ।

**कलनादः** । पुं । कलहंसे । वै.निघ. ।

**कलन्धुः** । पुं । चौलीशाके । रा.नि.व.७ ।

**कलभः** । पुं । पञ्चवर्षपर्य्यन्तकरिशावके । उ-ष्ट्रे । हला. । धुस्तूरवृक्षे । रा.नि.व.१० ।

**कलभवल्लभः** । पुं । पीलुवृक्षे । रा.नि.व.११।

**कलभवल्लभा** । स्त्री । पिक्कां । रा.नि.व.११।

**कलभी** । स्त्री । चञ्चुक्षुपे । रा.नि.व.४ ।

**कलमः (शालिः)** । पुं । शालिधान्यविशेषे । বোরো ধান । रा.नि.व.१६ । मगधादिषु प्रसि-द्धे धान्यविशेषे । কলমা ধান । स एव महातण्डु-ल इति काश्मीरदेशे ख्यातः । "कलमः कालवि-ख्यातः जायते स हइहने । काश्मीरदेश एवोक्तो महातण्डुल एव च ॥" भा. । गुणाः—अयं महतो हीनगुणः स्वादुपाकरसत्वादियुक्तश्च । वा.सू.६अ. हेमाद्रि.धान्यवर्गे । पित्तश्लेष्मकरः ह्यः मधुरश्च । रा.नि.व.१६ । कलमोऽश्लक्ष्णचिदोषघ्नश्चक्षुष्यश्च का-षायवान् । राज.३प. ।

**कलमा** । स्त्री । शालिधान्ये । सा च श्लेष्मपित्त-हा । अन्या च लघुः पथ्या वातश्लेष्मवर्द्धिनी च । चचि.१६अ. । [रा.नि.व.१६ ।

**कलमोत्तमः (मा)** । पुं,स्त्री । सुगन्धशालौ।

**कलम्बः (कः)** । पुं। कदम्बवृक्षे । विशः । शा-कनाड़िकायाम् । अम.। शरे । मे.वत्रिकं । सर्षपे । धाराकदम्बे । কেলিকদম্ । रा.नि.व.९ ।

**कलम्बशालिः** । पुं । शालिधान्यविशेषे । क-लमा धान । [वै.निघ. ।

**कलम्बिकः** । पुं। पक्षिविशेषे । চটক পক্ষী ।

**कलम्बिका** । स्त्री । कलम्बीशाके । কলমী-শাক । श.र. । ग्रीवापश्चान्नाड्याम् । हे.च. ।

**कलम्बिकी** । स्त्री। पक्षिणीभेदे ।

**कलम्बी** । स्त्री । Convolvulus repens. स्वनामख्यातजलजशाकविशेषे । কলমীশাক। हिं करेंमु । तें तीमेवचलिचेट्टु । प.मु. । गुणाः— स्तन्यदुग्धशुक्रश्लेष्मकरत्वं मधुरत्वं कषायत्वं गुरुतर-लघ । राज.३प. । "कलम्बी स्तन्यदा प्रोक्ता म-धुरा शुक्रकारिणी ॥" भा. । उपोदकायाम् । पुँई-শাক रा.नि.व.७ । [र. । See कलम्बी ।

**कलम्बुः (म्बूः)** । पुं, स्त्री । कलम्बीशाके । श.

**कलम्बुका** । स्त्री । जलजशाकविशेषे । কলমী শাক । भैष.शूलचि.शम्बुकादिगुड़ी । [ছাগ. ।

**कलम्बुटम्** । क्ली । हैयङ्गवीने । नवनीते ।

**कलयष्टः** । पुं । सर्ज्जरसे । धुनो । वै.निघ. ।

**कलरव:** । पुं । गृहपारावते । अम.। कोकिले । रा.नि.व.१८ । वनकपोते । वै.निघ. ।

**कलल:** । पुं । जरायौ । अम. ।

**कललज:** । पुं । राले । धूना । रा.नि.व.१२ ।

**कललजोद्भव:** । पुं । शालवृक्षे । रा.नि.व.९ ।

**[illegible]:** । पुं । चटकपक्षिणि । अम.रत्ना.९। कलिङ्गकवृक्षे । पारावते । ग्रामचटके । मे.कचतुष्कं । कृष्णचटके । सु.सू.४६अ. ।

**कलश:** (**स:**) । पुं। द्रोणपरिमाणे । ৩২সের। घटे । प.प्र.१ख.। [निया । रत्ना. ।

**कलशि:** (**शी**) । स्त्री । पृश्निपर्णाम् । চাকু-

**कलसि:** (**सी**) । स्त्री । Hemionitis cordifolia. पृश्निपर्णाम् । চাকুলিয়া । प.मु.। रा.नि.व.४सु.सू.३८अ.सि.यो.च.द.ज्व.चि.किरातादौ. यक्ष.चि.बलाद्यघृते । वा.चि.१अ. । "कौलसूत्रा त्वकलसी ।" [सुरसादिव. ।

**कलह:** । पुं । मुखशाम् । हिं मुखौरी । वा.सू.

**कलहंस:** । पुं । राजहंसे । कादम्बे । বালিহাঁস । रत्ना. । "पक्षैराधूसरैर्हंसा: कलहंसा इति स्मृता: ।" हला. । पीतवर्णहंसे । जलकुक्कुटे । वै.निघ. ।

**कलहंसकम्** । क्ली । अरोचकाधिकारे कवलमात्रम् । अस्य कवले धृते मुखवैशद्यं रुचिश्च भवति । च.द.अरो.चि.। "अष्टादशमितपलानि दशमरिचानि विंशतिश्च पिप्पल्य: । आर्द्रकपलं गुड़पलं प्रस्थत्रयमारनालस्य । विड़लवणसहितमेतत् खजाहतं सुरभिगन्धाढ्यं । व्यञ्जनसहस्रघाति ज्ञेयं श्लेष्मघ्नं मुखशुद्धिकृत् ।" रस.र. ।

**कलहनाशन:** । पुं । कुटजवृक्षे । पूतीकरञ्जे। नाटा । श.मा. । [পাথী । रा.नि.व.१८।

**कलहप्रिया** । स्त्री । सारिकायां । শালিক

**कलहाकुला** । स्त्री। शारिकायाम्। वै.निघ.।

**कला** । स्त्री । त्रिंशत्काष्ठात्मके कालपरिमाणे । सु.सू.६अ.। स्त्रीरजसि। Cellular tissue and fascia of the body. शरीरस्थत्वग्विशेषे । ता: सप्त—मांसधरा (शिरास्नाय्वादिस्थानी), रक्तधरा (मांसान्त:शिरा: यकृत्प्लीहानौ च), मेदोधरा (सूक्ष्मास्थ्युपरिसरत्नपिच्छिलपदार्थे), श्लेष्मधरा (सन्धिस्थानेषु श्लेष्मवत्पिच्छिलपदार्थेषु), पुरीषधरा (या पक्वाशयस्थाहारजन्यमलरक्षिणी), पित्तधरा (यत्र भुक्तद्रव्याणि आमाशयात्पक्वाशयं प्राप्य तिष्ठति), शुक्रधरा (सर्व्वकायव्यापिनी) । सु.शा.५अ.। कलास्वरूपं —"स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुना । श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदु: । धात्वाशयान्तरे धातोर्य: क्लेदस्त्वधितिष्ठति । देहोष्मणाभिपक्वश्च सा कलेत्यभिधीयते ॥" भा.म १भ. । वाजिनी जङ्घापार्श्वभागे । ज.द.२अ. मन:शिलायाम् । चन्द्रपीड़ाशि । वृद्धौ । त्रिका. । अंशे । मे.लद्विकं ।

**कलाकुलम्** । क्ली । विषे । रा.नि.व.६ ।

**कलाङ्कुर:** । पुं। The bird Ardea Sibirica. सारसपक्षिणि । त्रिका. । [२७अ. ।

**कलाङ्कुलि:** । पुं । शालिधान्यविशेषे । च.सू.

**कलाचिका** (**ची**) । स्त्री । प्रकोष्ठे । कफोणिरधो मणिबन्धपर्य्यन्ते । है.च. । अश्वस्य जानुनोऽधिमे भागे । ज.द.२अ. ।

**कलाजाजी** । स्त्री। कारव्याम् । कृष्णजीरके । কালজীরে । हिं कलौंजी मंगरैला ।

**कलाटक:** । पुं । गरुड़शालौ । रा.नि.व.१६।

**कलाटीन:** । पुं । The white waterwagtail. खञ्जनपक्षिणि । हारा. ।

**कलाद:** । पुं । स्वर्णकारे । त्रिका. ।

**कलाधिक:** । पुं । कुक्कुटे ।

**कलानुनादी** । पुं । कलविङ्के । चटके । चातके । भ्रमरे । मे.नषट्कं ।

**कलाप:** । पुं । मयूरपुच्छे । हला. । संहतौ । काश्याम् । मे.पत्रिकं । क्ली । पद्मवीजे । वंशवीजे। वै.निघ. ।

**कलापक:** । पुं । करिकण्ठबन्धे । है.च. ।

**कलापिन्** (**पी**) । पुं । मयूरे । हला. । कोकिले । प्लक्षवृक्षे । পাকুড় গাছ । मे.नचतुष्कं ।

**कलापिनी** । स्त्री । नागरमुस्तायाम् । নাগর-মুতা । रा.नि.व.६ । रात्रौ ।

**कलामक:** । पुं । कलमधान्ये । है.च. ।

**कलायः** । पुं। (Pisum sativum.) Name of various leguminous seeds. मटर इति ख्याते शिम्बीधान्ये । र.मा. । मावकापरनामधेये शिम्बीधान्यविशेषे । बाँटुला मटर,तेओड़ा मटर । हिं केराव । तें पेड्डर्व्व । स द्विविधः—त्रिपुटी वर्त्तुलश्च । गुणाः—अतिवातलः । वा.मू. शिम्बीधान्यव. । पित्तदाहकफघ्नः शीतः कषायः रुचिपुष्टिप्रदः आमदोषकरश्च । रा.नि.व.१६ ।

**कलायकः** । पुं । कलमशाली । कलमा धान । रा.नि.व.१६ । गुणाः—"किञ्चित्कषाया मधुराः प्रदिष्टा रक्तप्रशान्तिं जनयन्ति बल्याः । किञ्चित् सवातं विनिघ्नन्ति पित्तं कलायका मुद्गसमानरूपाः ।" अत्रि.१५अ. । [दूर्व्वायां । वै.निघ. ।

**कलायका** । स्त्री । मत्स्याख्यां । हिंचे । गण्ड-

**कलायखञ्जः(खण्डः)** । पुं । वायुरोगभेदे । लक्षणम्—"कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते : कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥" सु.नि.१अ. । "क्रमः कलायखञ्जस्य खञ्जपङ्गोरिव स्मृतः । विशेषात्स्नेहनं कर्म्म कार्य्यमत्र विचक्षणैः॥"

**कलायशाकम्** । क्ली । शाकविशेषे । हिं केराउशाक । गुणाः—"कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित्" । भा.पू.१भ.शाकव. । "कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु । कषायानुरसञ्चैव विपाके मधुरञ्च तत् ॥" सु.सू.४६अ. ।

**कलायसूपः** । पुं । कलायकृतयूषे । गुणाः—"कलायसूपः कथितो लघु ग्राही सुशीतलः । रूक्षो मेध्यः पाककाले स्वादुवगदपित्तनुत् । अरोचकहरश्चासौ कफनाशकरो मतः ॥ वै.निघ. ।

**कलाया** । स्त्री । गण्डदूर्व्वायाम्। श्वेतदूर्व्वायाम्। শ্বেতদূর্ব্বা। रा.नि.व.८ । कृष्णचणके । কাল ছোলা । प.मु. । [व.१० ।

**कलावती** । स्त्री । स्वर्णकेतकीवृक्षे । रा.नि.

**कलालापः** । पुं । भ्रमरे । रा.नि.व.१९ ।

**कलाविकः** । पुं । कुक्कुटे । त्रिका. ।

**कलाविकलः** । पुं । चटके । श.र. ।

**कलिः** । पुं । विभीतकवृक्षे । भा.म.४भ.मेद.चि. । क्ली । कलिकायाम् । मे.त्रिक । श्वेतधुस्तूरके । भल्लातकवृक्षे । वै.निघ. ।

**कलिकः** । पुं । क्रौञ्चपक्षिणि । কোঁচবক । वंशधान्यभेदे । বাঁশের ধান ।

**कलिका** । स्त्री । वृश्चिकाख्या । বিছাতিগাছ। रा.नि.व.९ । अप्रफुल्लायाम् । पुष्पकोरके । कृष्णनीलिकायाम्। वै.निघ.।पुष्पविशेषे । কলকে ফুল।

**कलिकारः** । पुं । धूम्याटपक्षिणि । ফিঙে । पीतमस्तकपक्षिणि । करञ्जवृक्षे । मे. । जलपिप्पल्याम् । वै.निघ. । [स्त्री । নাটাকরঞ্জ । अम. ।

**कलिकारकः** । पुं । पूतिकरञ्जे । लटाकर-

**कलिकारिका** । स्त्री । लाङ्गलीवृक्षे । বিষলাঙ্গলিয়া । वै.निघ. ।

**कलिकोत्तमः** । क्ली, पुं । लवङ्गे । गन्धशाली ।

**कलिङ्ग(क)म्** । क्ली । इन्द्रयवे । च.द.पि.ज्व. कलिङ्गादि. । "कलिङ्गं कटफलं मुस्तं पाठातिक्तकरोहिणी ।" च.द.ज्वराति.चि.श.र. । "दारुपाठाकलिङ्गकम् ।"

**कलिङ्गः (कः)**। पुं। प्लक्षवृक्षे । পাকুড় গাছ। कुटजवृक्षे । কুড়চি গাছ । शिरीषवृक्षे । रा.नि.व.९ । इन्द्रयवे । रत्ना.९ । र.सा.सं. सि.यो.रात्रिज्वरे । कलिङ्गकत्वामलकौ । सि.यो.पिप्पल्यादिघृते । पूतिकरञ्जे । पक्षिविशेषे । ফিঙা । मे.गत्रिकं । वा.चि.१भ. । तरम्बुजे । তরমুজ । गुणाः—मधुरः शीतलो हृद्यो बल्यः पित्तदाहघ्नः सन्तर्पणः वीर्य्यकरश्च । रा.नि.व.७ । धातकपक्षिणि । त्रिका. । विभीतके वृक्षे । त्रिका. ।

**कलिङ्गजः** । पुं । इन्द्रयवे । वै.निघ. ।

**कलिङ्गद्रुः** । पुं । कुटजवृक्षे । भा.म.१भ.वात.चि. । "कलिङ्गद्रुफलं रजः ।"

**कलिङ्गयवः** । पुं । इन्द्रयवे । च.द. । सि.यो. लवणोत्तमाद्यचूर्णे ।

**कलिङ्गवीजम्** । क्ली । इन्द्रयवे । रा.नि.व.९।

**कलिङ्गशुण्ठी** । स्त्री । तद्देशज-शुण्ठीविशेषे । गुणाः—तिक्ता बलकरी अग्निदीपनी अजीर्णहरी वातकातिसारघ्नी । सा यवक्षारयुक्ता गर्भिण्या वान्तिं हरेत् । अत्रि. । [त्रिवृतायां । श.च. ।

**कलिङ्गा** । स्त्री । कर्कटशृङ्ग्याम् । र.मा.। श्वेत-

**कलिङ्गादिकषायः** । पुं । "कलिङ्गकाः प-

टीकस पत्रं कटुकरीहिणीं" इत्येतद्व्यञ्जनकषाये। स च सन्ततादीनां शमनः। वा. चि.१च.। कषायोऽयं पित्तज्वरघ्नः। च.द.पित्तज्व.चि.।

**कलिङ्गाद्यगुड़िका** । स्त्री। ज्वरातिसारे। पाठः—"कलिङ्गबिल्व(बिल्व)जम्ब्वाम्रकपित्थं सरसाञ्जनं। लजा हरिद्रे ह्रीवेरं कट्फलं शुकनासिका। लोध्रं मोचरसं शङ्खं धातकी वटशुङ्गकं। पिष्टा तण्डुलतोयेन वटकानक्षसम्मितान्। छायाशुष्कान् पिबेत्...॥" इन्द्रयवादीनां प्रत्येकं समभागं गृहीत्वा तण्डुलोदकेन विमर्द्य वटी कार्य्या छायायां शोषणीया च। शुकनासिका श्योणाकलक्। च. द.भैष.। चर्मकषेति केचित्। "जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं न तण्डुलोदककर्मणि॥" प.प्र.३ख.। [ग्रहज्व.चि.।

**कलिङ्गः** । पुं। कुलिञ्जने। वै.निघ.२भ.जि-

**कलितरुः** । पुं। विभीतकवृक्षे। वै.निघ.स्वरभेदचि.।

**कलिद्रुः (मः)** । पुं। सरलदेवदारौ। भल्लातकवृक्षे विभीतकवृक्षे। रा.नि.व.११,भा.म.१भ. कफकुल.ज्व.चि.। "किरातकटुकाकणाः कुटजकट्फलारीष्टटीकलिद्रुकिलिमाभयाः।"

**कलिन्दः** । पुं। सूर्य्ये। विभीतकवृक्षे। रा.नि. व.२३। भेलकवृक्षे। सरलदेवदारौ। वै.निघ.।

**कलिन्दकः** । पुं। कर्कारौ। तरमुज। वै.निघ.।

**कलिप्रदः** । पुं। मद्यशालायाम्। वै.निघ.।

**कलिप्रियः** । पुं। वानरे। श.र.।

**कलिफलम्** । क्ली। विभीतकफले। च.द.।

**कलिमः** । पुं। शिरीषवृक्षे। वै.निघ.।

**कलिमारः(कः)** । पुं। पूतिकरञ्जे। कण्टकवति करञ्जे। च.टी.र.।

**कलिमालः,(ल्यः)कः** । पुं। पूतीकरञ्जे। नाटाकरञ्ज। रा.नि.व.९। [पु.१भ.।

**कलियुगालयः** । पुं। विभीतकवृक्षे। भा.

**कलियुगावासः** । पुं। विभीतकतरौ। भा.।

**कलिवृक्षः** । पुं विभीतकवृक्षे। हे.च.।

**कलिहारी** । स्त्री। लाङ्गल्याम्। विषलाङ्गलिया। हिं कलिहारी। भा.पू.१भ.। वै.निघ.वा. व्या.महाविषगर्भतैले।

**कली** । स्त्री। कलिकायाम्। च.टी भ.।

**कलुः** । पुं। गवड़शाली। पक्षिराज धान्य। रा.नि.व.१६।

**कलुषः(षा)** । पुं,स्त्री। महिषे। रा.नि.व.१९। मण्डलिसर्पे। सु.कल्प.४च.। See सर्पः।

**कलुषमञ्जरी** । स्त्री। जिङ्गिन्याम्। वै.निघ.।

**कलेवरम्** । क्ली। शरीरे। रा.नि.व.१८।

**कलोद्भवः** । पुं। कलमशाली। कलमा धान। रा.नि.व.१६।

**कल्कः (ल्कम्)** । पुं, क्ली। रसपिष्टद्रव्यपिण्डे। জলে বাটা দ্রব্য। यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम्। च। मध्वादिपेषितद्रव्ये। "कल्को मध्वादिपेषितैः।" रा.नि.व.२०। तस्य मात्रा कर्षमिता। तत्र मधुघृततैलमात्रा द्विगुणा, सितागुड़ं समं, द्रवाश्च चतुर्गुणाः ग्राह्याः। प.प्र.१ख.। घृततैलादिप्रिये। मी.कल्किं। घृततैलादिपाके दृषदि पेषिते देयद्रव्ये। "द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितं। तदेव सुरभिः पूर्व्वैः कल्क इत्यभिधीयते॥" प.प्र.१ख.। द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलम्भवेत्। प्रक्षिप्य गालयेद्वस्त्रे तन्माषकर्षसम्मितम्॥ भा.। "यः पिण्डश्चार्द्रपिष्टानां स कल्क इति कीर्त्तितः। वृद्धवैद्यवचः साक्षात्कल्को दृषदि पेषितः॥ मात्रा पिचुमिता तत्र द्विगुणं माक्षिकादिकम्। सितां गुड़ं समं दद्याद्द्रवा देयाश्चतुर्गुणाः॥" इति कल्कविधिः। कर्षमले। श.र.। तुरुष्कनामगन्धद्रव्ये। शिलारस। रा.नि.व.१२। See सि-ल्हकः। विष्ठायां। किट्टे। मी.कल्किं। करिदन्ते। वै.निघ.।

**कल्कफलः** । पुं। दाड़िमवृक्षे। रा.नि.व.११।

**कल्करोध्रः** । पुं। पट्टिकारोध्रे। रा.नि.व.६।

**कल्किवृक्षः (धर्म्मघ्नः)** । पुं। विभीतकवृक्षे। रा.नि.व.११। [नि.व.२०।

**कल्पः** । पुं। विधौ। रोगमुक्तौ। कल्पवृक्षे। रा.

**कल्पकः** । पुं। नापिते। श.मा.। कर्चूरे। भा. पू.१भ.।

**कल्पतरुः** । पुं । कल्पवृक्षे । क्रमुकवृक्षे । रा.नि.व.११। तन्नामकज्वरघ्नरसे । पाठः—"रसं गन्धं विषं ताम्रं समभागं विचूर्णयेत् । भावयेत्पञ्चभिपित्तैः क्रमशः पञ्चवासरम् ॥ निर्गुण्डी स्वरसेनैव मर्द्दयेत्सप्तवासरम् । आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुनः ॥ सर्षपाभा वटी कार्य्या छायया परिशोषिता ।" जीर्णज्वरे विषमज्वरे च २१ वल्यः प्रयोज्याः । कणलीपिप्पलीयुतमुष्णजलं पाययेत् । शर्करया दधि देयं स्नापयेच्च । भैष.ज्व.चि. ।

**कल्पद्रुः (मः)** । पुं । कल्पतरौ । कृतमालव्धवृक्षे । সোণালু গাছ । वै.निघ. ।

**कल्पनम्** । क्ली । कृन्तौ । कर्त्तने । त्रिका. ।

**कल्पना** । स्त्री । हस्तिसज्जायाम् । अम. । रचनायाम् ।

**कल्पनी** । स्त्री । कर्त्तर्याम् । কাঁচী । हे.च. ।

**कल्पपादपः** । पुं । कल्पवृक्षे । विभीतकवृक्षे ।

**कल्पवृक्षः** । पुं । विभीतकवृक्षे । कल्पपादपे । अम. । रत्ना. । [मद्ये । वै.निघ. ।

**कल्पा** । स्त्री । श्वेतजातीवृक्षे । শ্বেতচামিলী ।

**कल्पान्तः** । पुं । प्रलयकाले । अम. ।

**कल्मषम्** । क्ली । पापे । करपुच्छे । त्रिका. ।

**कल्माषः** । पुं । सुगन्धशालौ । रा.नि.व.१६ ।

**कल्यम्** । क्ली । सुरायाम् । हला. । प्रभाते । मे.यत्रिकं । मधुनि । हे.च. । त्रि । वाक्श्रुतिरहिते । नीरोगे । सु.चि.२६अ. । "कल्यस्योदयवयसः ।" दक्षे । मे.यत्रिकं ।

**कल्यजग्धिः** । स्त्री । प्रातर्भोजने । जटा. ।

**कल्यद्रुमः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**कल्यवर्त्तः** । पुं । प्रातराशे । त्रिका. । [श.र. ।

**कल्या** । स्त्री । मद्ये । मे.यत्रिकं । हरीतक्याम् ।

**कल्याङ्गः** । पुं । पर्पटक्षुपे । ক্ষেৎপাপড়া । रा.नि.व.५ ।

**कल्याणम्** । क्ली । सुवर्णे । सुखे । रा.नि.व.१३ । पुं । जम्बुसर्ज्जवृक्षे । শাল গাছ । [वै.निघ. ।

**कल्याणकः** । पुं । पर्पटके । ক্ষেৎপাবড়া ।

**कल्याणगुड़ः** । पुं । ग्रहण्यधिकारे । पाठः—"प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुडस्य । चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णाहपुषाजमोदैः । विड़ङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पलप्रमाणैः । दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् । तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ।" पाकनियमः—आमलकीस्वरसाः १२श. शुद्धगुड़ाः ६।०श. यथाविधि एकत्र पचेत् । शिष्टप्राये पाके पिप्पलीमूलादीनां प्रत्येकं पलं (৮ তো.), त्रिवृच्चूर्णस्य शरावं (৮ তো.) तैलस्य च शरावं (৮ তো.) प्रक्षिपेत् । तथा त्रिसुगन्धस्य पृथक् पलं मिश्रयेत् । तथा त्रिवृता तैलभर्ज्जिता देया इति वृद्धाः । प्रक्षेपद्रव्याणि—पिप्पलीमूलं जीरकं चव्यं त्रिकटु गजपिप्पली हपुषा वनयमानी विड़ङ्गं सैन्धवं त्रिफला यमानी पाठा चित्रकमूलं धान्यकञ्च । च.द.ग्रह.चि. । रस.र. । भैष. ।

**कल्याणघृत(पानीय)म्** । क्ली । विषघ्नघृते उन्मादे च । पाठः—"विड़ङ्गत्रिफलादन्तीभद्रदारुहरेणवः । तालीशपत्रमञ्जिष्ठाकेसरोत्पलपद्मकं। दाड़िमं मालतीपुष्पं रजन्यौ शारिवे स्थिरे । प्रियङ्गुस्तगरं कुष्ठं बृहत्यौ चैलवालुकं । सचन्दनगवाक्षीभिरेतैः सिद्धं विषापहं । सर्पिः कल्याणकं··· । রাখালশশা, ত্রিফলা, রেণুক, দেবদারু, এলবালুক, শালপাণি, তগরপাদুকা, হরিদ্রা, দারুহরিদ্রা, অনন্তমূল, শ্যামালতা, প্রিয়ঙ্গু, নীলোৎপল, এলাচ, মঞ্জিষ্ঠা, দন্তী, দাড়িম, নাগেশ্বর, তালীশপত্র, বৃহতী, মালতীপুষ্প, বিড়ঙ্গ, চাকুলিয়া, কুড়, রক্তচন্দন, পদ্মকাষ্ঠ প্রত্যেকে ২ তো. ঘৃত ৩২ প. জল ১৬ শ. । एतच्च घृतं द्विगुणं जलं चतुर्गुणञ्च दुग्धं दत्त्वा यदा पचेत् तदा क्षीरकल्याणमुच्यते । सा.कौ.उन्मा. चि. । सु.कल्प.৩অ. । भैष. । अन्यत् दाहाधिकारे महत् कल्याणकं घृतम् । पाठः—"चतुर्गुणे शतावर्य्या रसे क्षीरं चतुर्गुणं । सर्पिः प्रस्थं बलाजाजी मञ्जिष्ठा पीवरी निशा । काकोल्यौ मधुमेदे द्वे ऋद्धी द्वे देवदारु च । एषामष्टपलैः कल्कैः पचेत्कल्याणकं महत् ॥ ঘৃত ৪ শ. শতমূলীরস ১৬ শ. দুগ্ধ ১৬ শ. । কল্ক—জীরা, শ্বেত বেলেড়া, মঞ্জিষ্ঠা, অশ্বগন্ধা, হরিদ্রা, কাকোলী, ক্ষীর-কাকোলী, যষ্টিমধু, মেদা, মহামেদা, ঋদ্ধি

বৃদ্ধি, দেবদারু। প্রত্যেকে ৮ তো.। रस.र.।

**कल्याणलेहः** । पुं । वातव्याध्यधिकारे हिक्काश्वासे च। पाठः—"सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजं । अजाजी चाजमोदा च यष्टीमधुकसैन्धवं। एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्। तच्चूर्णं सर्पिषालोड्य प्रत्यह भक्षयेन्नरः। एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः॥" अजाजी जीरके, अजमोदा यमान्याम्, यष्टी यष्टीमधु, मधुकं मधुकपुष्पे। মউল ফুল। च.द.वा.व्या.चि.। रस.र.। भैष.।

**कल्याणबीजः** । पुं । मसूरवृक्षे। रा.नि.व.१६।

**कल्याणसुन्दराभ्रम्** । क्ली । राजयक्ष्मणि रसः। पाठः—"वज्राभ्रमेकपलिकं पुटनैः सुजीर्णं धात्रीपयोदबृहतीशतमूलकेक्षु। विल्वाग्निमन्थजलवासककण्टकारीश्योणाकपाटलिबलाम्ब रसैरमीषां। सम्मर्दितं पलमितैः पृथगेकमस्य। गुञ्जासमा सुवलिता वटिका कृता च।"......জারিত অভ্র ৮ তোলা, আম্লা, মুতা, বৃহতী, শতমূলী, ইক্ষু, বিল্বপত্র, গণিরি, বালা, বাসকপত্র, কণ্টিকারী, শোণা, পারুল, বেলেড়া প্রত্যেকের ১ পলমিত রসে মর্দ্দন। भैष.। [व.१२।

**कल्याणिका** । स्त्री । मनःशिलायाम्। रा.नि.

**कल्याणिनी** । स्त्री । बलानामक्षुपे। বেলেড়া। रा.नि.व.४।

**कल्याणी** । स्त्री। रालवृक्षे। सर्जवृक्षे। वै.निघ.। गवि। रा.नि.व.१९। माषपर्ण्यां। रा.नि.व.३।

**कल्लः** । त्रि । बधिरे। त्रिका.। [हे.च.।

**कल्लता (त्वम्)** । क्ली । बाधिर्य्ये। स्वरभेदे।

**कवकः** । पुं । ग्रासे। कवले। हे.च.। क्ली। छत्राके।

**कवचः** । पुं, क्ली । पर्पटके। "कवचः स्यात् पर्पटके।" रा.नि.व.५।२२। वचा कवचकच्छुरा...।" गर्द्दभाण्डवृक्षे। गाञ्जीभाँट इति लोके। त्वचि। দারচিনি। भूर्जवृक्षे। नन्दीवृक्षे। मे.चत्रिके।

**कवचपत्रम्** । क्ली । भूर्जपत्रे। श.च.।

**कवचीयन्त्रम्** । क्ली । औषधपाकार्थं यन्त्रविशेषे। तद्यथा—"नातिह्रस्वां काचकूपीं न चातिमहतीं दृढां। वाससा कर्द्दमाक्तेन परिवृत्य समन्ततः। संलिप्य कटुमृत्स्नाभिः शोषयेद्भानुरश्मिना। निधाय भेषजं तत्र मुखमाच्छादयेत्ततः। कठिन्या दृढया वापि वचेयन्ते विधानतः। कवचीयन्त्रमेतद्धि रसादिपचने मतम्॥" आत्रेयः।

**कवडः** । पुं । कवले। গণ্ডূষ। रत्ना.।

**कवडग्रहः** । पुं । कर्षे। ২ তোলা। प.प्र.१ख.। च.द.खदिरवटी।

**कवयिः (यी)** । स्त्री। (Coius coboius.) मत्स्यविशेषे। কই মাছ। गुणाः—मधुरा स्निग्धा कषाया रूक्षा ईषत्पित्तकरी बल्या वातघ्नी च। भा.। हारा.।

**कवरः** । पुं, क्ली । कवर्य्याम्। বনতুলসী। त्रिका.। लवणे। अम्ले। मे.। हे.च.। सामुद्रलवणे। र.मा.।

**कवरा (री)** । स्त्री। वर्वरायाम्। বাবুই इति भाषा। श.र.। वनतुलस्याम्। अम.। वर्वूरवृक्षे। বাবলা গাছ। रक्तकरवीरे। मनःशिलायाम्। हिङ्गुपत्र्याम्। रा.नि.व.६।

**कवरीकः** । पुं। सुगन्धपत्रवृक्षविशेषे। দুলাল তুলসী। यथा—"कस्तूरिकाक्ष्वेड़गन्धः कवरीकः स्वनामकः।" इति द्रव्याभिधानम्।

**कवरीकला** । स्त्री । मनःशिलायाम्।

**कवरीकूटकः** । पुं । कवर्य्याम्। त्रिका.।

**कवलः** । पुं । चिलिचिममत्स्ये। বেলে মাছ। श.च.। ग्रासे। रत्ना.। गण्डूषद्रव्ये। কুলকুচা, কুল্লি করা। सा मात्रा या मुखे धृता सुखं सञ्चार्य्यते। "सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता॥" भैष.। See गण्डूषः।

**कवलग्रहः** । पुं । कर्षपरिमाणे। सु.। मुखे कवलस्य ग्रहो धारणम्। तस्य विधिर्यथा—"तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलसुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुपस्विन्नमर्दितं गलकपोलललाटप्रदेशं धारयेत्। तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासाक्षिनीनयनपरिस्रावश्च भवति, तदा विमोक्तव्यः पुनश्चान्यो ग्रहीतव्य"

इति। सु.चि ४०अ.। गुणाः—"कवलः कुरुते काङ्क्षां भवेत् हरते कफम्। तृषां तोषञ्च वैरस्यं दन्तचालञ्च नाशयेत्॥" वै.निघ.। स चतुर्विधः—स्नेही प्रसादी शोधी रोपणश्चेति। तत्र वाते स्नेही स्निग्धोष्णैर्द्रव्यैः, प्रसादनी पित्ते स्वादुशीतैः। शोधनः कफे कट्वम्ललवणैः रुक्षोष्णैश्च। रोपणो व्रणे कषायतिक्तमधुरैः कटूष्णैश्च। तस्य मात्रा सा या सुखसञ्चारिणी भवेत्। "चतुर्धा कवलः स्नेही प्रसादी शोधिरोपणौ। स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः॥ पित्ते कट्वम्ललवणैः रुक्षोष्णैः शोधनः कफे। कषायतिक्तमधुरैः कटूष्णैः रोपणो व्रणे। तथा सुखं सञ्चार्यते या तु मात्रा सा कवले स्मृता॥" सु.चि.४०अ.।

**कवलिका**। स्त्री। Bandage. व्रणबन्धनार्थम् उदुम्बरादिवल्कले। सु.सू.१८अ.। चि.३अ.।

**कवली**। स्त्री। बदरीवृक्षे। हला.।

**कवसः**। पुं। कण्टकगुल्मे।

**कवाटच(व)क्रम्**। क्ली। स्वनामख्यातवृक्षे। तें कराड़िया, कवाटवेटु। वेगटुआ इति च भाषा। र.मा.।

**कवारम्**। क्ली। पद्मे। त्रिका.। पुं। (Tantalus falcinellus.) पक्षिविशेषे। करार पाथी। वै.निघ.। [हला.।

**कविः (कम्)**। स्त्री,क्ली। खलीने। लागाम।

**कविका**। स्त्री। केविकापुष्पवृक्षे। केरव इति कोङ्कणदेशे प्रसिद्धे। रा.नि.व.१०। तें पुष्पविशेषमु, खलिने। हिं कड़िआली। लागाम। कवयीमत्स्ये। तें मत्स्यविशेषमु। त्रिका.।

**कविञ्जुकः**। पुं। पक्षिविशेषे।

**कवि(पि)त्थः**। पुं। कपित्थवृक्षे। भ.टी.।

**कवेलम्**। क्ली। उत्पले। नीलपद्मे। श.च.।

**कवोड़वक्रः**। पुं। कवाटवक्रवृक्षे। र.मा.।

**कवोष्णम्**। त्रि। ईषदुष्णे। अम.। क्ली। उष्णतायाम्। [सरोष्णिम्। भा.पू.१भ.गु.व.।

**कशा**। स्त्री। अश्वादिताड़न्याम्। है.च.। मां-

**कशिका**। स्त्री। चर्मकषायां। চামরকশা। च.द.शू.चि.लौहामृते।

**कशिपुः**। पुं। भक्ते। वस्त्रे। रा.नि.व.२०।

**कशेरु:(रू:)कः**। पुं,क्ली। पृष्ठकीकसे। पृष्ठास्थिनि। পিঠের দাঁড়া। हला.। स्त्री। स्वनामख्यातघासे। কেশুর। र.मा.। See कसेरुः।

**कशेरु(रू)कम्**। क्ली। कशेरुणि। কেশুর। प.मु.।

**कशेरु(रू)का**। स्त्री। पृष्ठास्थिनि। पृष्ठवंशे। रत्ना.। वै.निघ.। कशेरी। কেশুর। अम.।

**कश्मलम्**। क्ली। मूर्च्छायाम्। मोहे। अम.।

**कश्मीरजम् (न्म)**। क्ली, पुं। कुङ्कुमे। भ.टी. रा.।

**कश्यम्**। क्ली। मद्ये। पुं। अश्वे। मे.यत्रिकं। कषार्हेऽश्वे। है.च.। अश्वमध्यभागे। वै.निघ.।

**कश्यपः**। पुं। मत्स्यभेदे। विश्वः। मृगविशेषे। मे.। [भपक्षे। श.च.।

**कषणः**। पुं। शलाटौ। क्ली। कण्डूयने। त्रि।

**कषपाषाणः**। पुं। स्वर्णमणी।

**कषायः**। पुं। कपित्थवृक्षे। महासर्जवृक्षे। वै. निघ। मण्डलिसर्पे। सु.कल्प.४अ.। Decoction of infusion. क्वथितैर्वस्तुभिः कृते क्वाथमात्रे। षोड़शगुणाम्भसा पक्वः चतुर्भागावशिष्टक्वाथः कषाय उच्यते। र.मा.। "पादशिष्टः कषायः स्यात् यः षोड़शगुणाम्भसा।" भा.। अष्टभागावशिष्ट इति। शार्ङ्ग.१अ.। कषायाः पञ्चविधाः स्वरसकल्कक्वाथहिमफाण्टभेदेन यथोत्तरं लघवश्च भवन्ति। श्योणाकवृक्षे। শোণা গাছ। धवश्चः। धववृक्षे। धाওয়া গাছ। लकुचवृक्षे। ডেলো গাছ। रा. नि.व.९। निर्यासे। विलेपने। अङ्गरागे। मे.। पुं, क्ली। An astringent flavour. षड्रसान्यतमरसविशेषे। कसा। स पूगीफलादौ स्वाद्यः। रा.नि.व.२०। स च भूम्यग्निगुणबहुलः हिमगुरुरूक्षः, स्तम्भी शमनः ग्राही मुखशुद्धिजिह्वास्तम्भादिकृत् तद्विपाकोऽपि कटुः, तद्विपाकगुणश्च वातकृत् कफपित्तघ्नश्च। दीपनः पाचनः शोफरोधकः ग्रन्थिलकरः अतिसेवितः पाण्डुं करोति च। यो वक्त्रं शोषयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षति पीड़यति स कषायकः। सु.सू.४२अ.। अन्यच्च। कषायः शोषणः स्तम्भी व्रणपाकादिनाशनः।

कफशोणितपित्तघ्नो रूक्षः शीतो गुरुस्तथा ॥ राज.। वैशद्यं स्तम्भजाड्यैर्यो रसनं योजयेद्रसः। बध्नातीव च सः कण्ठं कषायः स विकास्यपि ॥ च.। अतियुक्तस्य गुणः—सोऽतियुक्तः शूलाध्मानहृत्पीड़ाक्षेपणादिकृत्। भा.। कषायस्य कल्पनं पञ्चविधम्—स्वरसकल्कशृतशीतफाण्टभेदेन। एषाञ्च यथा पूर्व्वं बलाधिक्यम्। च.सू.४अ.। "क्षीररः स्वरसः प्रोक्तः कल्को दृषदादिपेषितः। क्वथितस्तु शृतः शीतः शर्व्वरीमुषितो मतः। क्षिप्तोष्णतोये मृदितः फाण्ट इत्यभिधीयते। पञ्चैतास्तु समुद्दिष्टाः कषायाणां प्रकल्पनाः॥" प.प्र.१ख.। कषायपाकविधिः। "तत्र केचिदाहुः त्वक्पत्रमूलादीनां भागस्तच्चतुर्गुणजलमावाप्य चतुर्भागावशेषं निःक्वाथ्यापहरेत्। अथवा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्वाथ्यापहरेत्।" सु.चि.३१अ.। त्रि। सुगन्धे। त्रिका.।

**कषायकृत्** । पुं। रक्तलोध्रे। जटा.।

**कषायजलम्** । क्ली। अश्वाश्वत्थोदुम्बरशिरीषवटसिद्धे जले।

**कषायदन्तः (दशनः)** । पुं.। मूषिकभेदे। अस्य शुक्रं यत्र पतति तत्र शोथकोथादयो जायन्ते। वा.उ.३८अ.। सु.कल्प.६अ.।

**कषायनित्यः** । त्रि। नित्यमतिमात्रकषायरससेविनि। च.।

**कषायफलम्** । क्ली। पूगफले। वै.निघ.।

**कषाययावनालः** । पुं। तुवरयावनालधान्ये। जनारविशेष। रा.नि.व.१६।

**कषाययोनिः** । स्त्री। कषायाधिकरणे। सा च पञ्चधा—मधुरकषायः अम्लकषायः कटुकषायः तिक्तकषायः कषायकषायश्चेति। च.सू.४अ.।

**कषायवर्गः** । पुं। कषायरसद्रव्यगणे। कषा जिनिषेर वर्ग। त्रिफला शल्लकी जम्ब्वाम्रबकुलतिन्दुकफलानि न्यग्रोधाद्यम्बष्ठादिप्रियङ्ग्वादिलोध्रादिशालसारादीनि कतकशाकपाषाणभेदकवनस्पतिफलानि कुरवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णादिनीवारकादयः मुद्गादयश्च समासेन कषायवर्गः। सु.सू.४२अ.। [फलवृक्षे। च.चि.४अ.।

**कषायवृक्षः** । पुं। वटामलकादिकषायत्वक्-

**कषायस्कन्धः** । पुं। प्रियङ्ग्वादिकषायद्रव्यसंस्थापनविशेषे। च.चि.८अ.।

**कषाया** । स्त्री। रक्तदुरालभायाम्। क्षुद्रदुरालभायाम्। रा.नि.व.४। आम्रातके। खर्जूरीवृक्षे। वै.निघ.।

**कषायी** (इन्) । पुं। सर्जवृक्षे। धूनार गाछ। शालवृक्षे। रा.नि.व.९। जटा.। खर्जूरीवृक्षे। (थेजुर गाछ। लकुचवृक्षे। रा.नि.व.११। शाकवृक्षे। क्षुद्रपनसे। वै.निघ.।

**कषिका** । स्त्री। पक्षिजातौ। उणा.। [टी.रा.।

**कषेरुका** । स्त्री। कशेरुकायां। पृष्ठास्थि। अ.

**कष्टम्** । क्ली। पीड़ायाम्। हे.च.।

**कष्टकारकः** । त्रि। पीड़ाकरे। त्रिका.।

**कष्टस्थानम्** । क्ली। पीड़ाजनकस्थाने। हारा.।

**कष्टिः** । स्त्री। पीड़ायाम्। वै.निघ.।

**कष्ठीरम्** । क्ली। रङ्गे। वङ्ग। रत्ना.।

**कसका** । स्त्री। कासमर्दे। वै.निघ.२भ.कुलत्थाद्यघृते। [र.पि.चि.।

**कसनम्** । क्ली। कासे। वेदनाविशेषे। च.द.

**कसनमर्द्दनः** । पुं। कासमर्द्दवृक्षे। कालकासन्दा। वै.निघ.। [लूता।

**कसना** । स्त्री। कृच्छ्रसाध्यलूताविशेषे। See

**कसनोत्पाटनः** । पुं। वासकवृक्षे। वाकस् गाछ। श.च.।

**कसिपुः** । पुं। अन्ने। जटा.।

**कसेरुः** । पुं,स्त्री। Back bone. पृष्ठास्थिनि। (मेरुदण्ड। रा.नि.व.१८। मुस्तायाम्। 'कसेरुर्भद्रमुस्तके' रा.नि.व.६।२३ (Scirpus kysoor.) स्वनामख्याततृणविशेषे। (केशुर। मं कं कसेरुवा। सेकिनगड़े। तुंगगडु। तें इष्टि, कोति। तत्र द्विविधं राजकसेरुकं चिञ्चोदञ्च। तयोः चिञ्चोदं मुस्ताकृति लघु च। शा. गुणाः—"कसेरुकद्वयं शीतं मधुरं तुवरं गुरु। पित्तशोणितदाहघ्नं नयनामयनाशनम्॥" भा.। कषायः अल्पमधुरः कटुतिक्तकः रक्तपित्तघ्नः शीतः दाहश्रमघ्नः। रा.नि.व.८। पुष्पञ्चास्य कामलाहरं पित्तनाशकरञ्च। वै.

निघ. । गुरु विष्टम्भि शीतलञ्च । राज १५. । च.
क्र. । [१७७. ।

**कसेरुकः** । पुं । कसेरौ । नागरमुस्तके । सु.चि.

**कसेरुका** । स्त्री । कसेरौ । কেশুর । रा.नि.
व.८ । पृष्ठास्थिनि । पृष्ठदण्ड । रा.नि.व.१८ ।

**कस्तीरम्** । क्ली । पिचटे । পিচুটী । वङ्गे ।
है.च. ।

**कस्तीर्णम्** । क्ली । रङ्गे । রাঙ । प.मु. ।

**कस्तु(स्तू)रिका (री)** । स्त्री । मृगनाभौ ।
মৃগনাভি । हिं कस्तूरी । तैं कस्तूरिपिल्लि । सा
त्रिधा—कामरूपोद्भवा, नैपाली, काश्मीरी च ।
तत्र प्रथमा कृष्णा श्रेष्ठा च, द्वितीया नीलवर्णा म-
ध्यमा च, शेषा अधमा । भा. । गुणाः—“कस्तूरी
छर्द्दिशीतास्यरक्तापित्तकफापहा । राज. । कटुः ति-
क्ता उष्णा शुक्रला गुरुः शीतघ्नी वातशोषहा सचा-
रा चेति ।” भा. । “चक्षुष्या मुखदोषघ्नी किला-
सकुष्ठघ्नी च ।” मद. । तथा “कपिला पिङ्गला कृ-
ष्णा कस्तूरी त्रिविधा क्रमात् । नेपालेऽपि च का-
श्मीरे कामरूपे च जायते ॥ साप्येका खरिका त
तश्च तिलका ज्ञेया कुलित्थापरा पिण्डाप्यापि च
नायिकेति च परा या पञ्चभेदाभिधा । सा शुद्धा
मृगनाभितः क्रमवशादेषा चितीशोचिता पञ्च
त्यादिदिनत्रयेषु जनिता कस्तूरिका सूयते ॥ चू-
र्णाकृतिस्तु खरिका तिलकानिलाभा कौलित्थवी-
जसदृशी च कुलित्थिका च । स्थूला ततः किय-
दियं किल पिण्डिकाख्या तस्याश्च किञ्चिदधिका
यदि नायिका सा ॥” इति कस्तूरीनिकरलक्षणं।
“स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते लाघवं
तोलने च । यास्तु न्यस्ता नैव वैवर्ण्यमीयात् कस्तूरी
सा राजभोग्या प्रशस्ता । अपिच या गन्धं केतकी-
नामपहरति मदं सिन्दुराणाञ्च वर्णे स्वादे तिक्ता
कटुर्वा लघुरथ तुलिता मर्द्दिता चिक्कणा स्यात् ।
दाहं वा नैति वह्नौ शिमिशिमिति चिरं चर्म्मगन्धा
हुताशे सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते
राजभोग्या ।” इति कस्तूरीपरीक्षालक्षणम् । अ-
न्यञ्च “बाले जरति च हरिणे चीणे रोगिणि च
मन्दगन्धयुता । कामातुरे च तरुणे कस्तूरी बहुल-
परिमला भवति ।” कस्तूरीमृगलक्षणम् । या त्रि-
ध्या धूमगन्धा वहति विनिहिता पीतता पावके-
ऽस्मिन्शीघ्रं या निविष्टा भवति हुतवहे भस्मसादेव
सद्यः । या च न्यस्ता तुलायां कलयति गुरुतां
मर्द्दिता रूक्षताञ्च ज्ञेया कस्तूरिकेयं खलु कृतम-
तिभिः कृत्रिमा नैव सेव्या ॥” कृत्रिमकस्तूरील-
क्षणम् । रा.नि.व.१२ । (री) धुस्तूरवृक्षे । वै.निघ. ।

**कस्तूरि(री)कः** । पुं । करवीरवृक्षे ।

**कस्तूरिमृगाण्डजः** । पुं । मृगनाभौ । रत्ना. ।

**कस्तूरीभैरवरसः** । पुं । शीताङ्गसन्निपाते
रसः । “हिङ्गुलञ्च विषं टङ्गं जातीकोषफलं तथा ।
मरिचं पिप्पली चैव कस्तूरी च समांशिका… ॥
रक्तिद्वयं खादेत् ।” হিঙ্গুল, বিষ, সোহাগার
খৈ, জায়ফল, জয়িত্রী, মরিচ, পিপুল, মৃগ-
নাভি সমভাগ । জলে মর্দ্দন । र.सा.सं. । भैष.
ज्व.चि. । वृहत् यथा—‘मृगमदशशिसूर्य्यौ धा-
तकी शुकशिम्बी रजतकनकमुक्ता विद्रुमौ लौह-
पाठाः । कृमिरिपुघनविश्वा वारितालाभयाद्यः
रविदलरसपिष्टं कस्तूरीभैरवोऽयम् । आर्द्रकस्य
रसैः पेयो विषमज्वरनाशनः । মৃগনাভি, ক-
র্পূর, তামা, ধাইফুল, আলাকুশীবীজ, রূ-
পা, সোণা, মুক্তা, প্রবাল, লৌহ, আকনাদি
মূল, বিড়ঙ্গ, মুতা, শুঁট, বালা, হরিতাল,
অভ্র এবং আমলা সমভাগ । আকন্দপত্ররসে
মর্দ্দন । মাত্রা ১ রতি । रस.र.ज्व.चि. । भैष. ।

**कस्तूरीमल्लिका** । स्त्री । मृगनाभौ । वै.नि-
घ. । मल्लिकापुष्पवृक्षभेदे (या मृगमदवासा भवति)।
गुणैः वार्षिकादितुल्या । रा.नि.व.१० ।

**कस्तूरीमृगः** । पुं । Musk deer. मृगवि-
शेषे । यस्याण्डे कस्तूरी जायते । वै.निघ. ।

**कस्तूरीमोदकः** । पुं । प्रमेहाधिकारे । पाठः
—‘कस्तूरी वनिता क्षुद्रा त्रिफला जीरकद्वयम् ।
कदलीनां फलं पक्वं खर्जूरं कृष्णतीलकं । कोकि-
लाक्षस्य बीजञ्च माषमात्रं समं समं । यावन्त्येतानि
चूर्णानि द्विगुणा सितशर्करा । धात्रीरसेन पयसा
कुष्माण्डस्वरसेन च । विपचेत्पाकविद्वैद्यो मन्दमन्दे-
न वह्निना ।……… । मात्रा अक्षमिता । अत्र
वनिता प्रियङ्गुः, क्षुद्रा कण्टकारी, जीरकद्वयं जी-
रकं कृष्णजीरकं । सर्व्वचूर्णात् चतुर्गुणेन धात्र्या-
दिरसेन पचेत् । र.सा.सं. । [निघ. ।

**कस्तूरीहरिणः** । पुं । मृगनाभिहरिणे । वै.

**कश्यम्** । क्ली । सुरायाम् । हला. ।

**कह्लकम्** । क्ली । कह्लारे । শুন্দি ফুল । भा.पू. १भ.गु व. ।

**कह्लारम्** । क्ली । (Nymphaea lotus.) कुमुदपुष्पे । শ্বেতশুন্দি, শাদা নাল, নীলশুন্দি, লালশুন্দি। तें कोह्हिगाएरगावुंड़ि वासनगलकलुव । रा.नि.व.१० । चि.क्र.क.केशरपाकै । "कह्लारपद्मोत्पलचन्दनाम्बु ।" गुणाः—शीतलं ग्राहि विष्टम्भि गुरु रूक्षञ्च । भा.पू.१भ.पु.व. । कषायमधुरं शीतलं कफपित्तरक्तघ्नञ्च । राज. । "कह्लारं ग्राहि विष्टम्भि चातिशीतं तथा मतं । गुरु रूक्षं समुद्दिष्टम् ।" वै.निघ. । रक्तोत्पले इत्यपरके इति लोके । अन्ये तु सौगन्धिकोत्पलमाहुः। सु.सू.३८अ.। ईषत् श्वेतरक्तकमले । कमलसाधारणे । वै.निघ. ।

**कह्लाराद्यघृतम्** । क्ली । हृद्रोगाधिकारे । पाठः – 'कह्लारमुत्पलं पद्मं कुमुदं मधुयष्टिका । पक्वाम्बुनाथ तत्क्वाथे जीवनीयोपकल्पिते । घृतं पक्वं नवं पीतं रक्तपित्तास्रगुल्मनुत् ।" रस.र. ।

**कह्वः** । पुं । वकपक्षिणि । अम. ।

**कक्षः** । पुं । अङ्गाधःकोटरे । কাঁকনগল্ । रत्ना. । महिषे । लतायां । अम. । मे.षद्विकं । गुग्गुलौ । वै.निघ. ।

**कक्षधरमर्म्म** । क्ली । मर्म्मस्थानविशेषे । यत्र वैकल्यकारमर्म्मणां द्वयमधिवसति । यस्य च स्थानं वक्षःकक्षयोर्मध्यभागः । सु.शा.६अ. ।

**कक्षरुहा (चोत्था)** । स्त्री । नागरमुस्तायां । रा.नि.व.६ ।

**कक्षशयः** । पुं । कुक्कुरे । वै.निघ. ।

**कक्षा** । स्त्री । वाह्लीमूले । रा.नि.व.१८ । पित्तकोपजन्यक्षुद्ररोगविशेषे । কাঁক্‌বিড়ালি । लक्षणम्—"बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनां । पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्द्दिशेत् ।" मा. नि.क्षुद्ररोग.चि. । तथा यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाल्लाजनिभास्तु कक्षाः ।" च. । कक्षेति कक्षासन्नेषु प्रायोदेशेषु सानिलात् । वा.उ. ३१अ. । [द्र । वै.निघ. ।

**कक्षाफलः** । पुं । कृष्णोदुम्बरफले । काकडुमु-

**काक्ष्या** । स्त्री । हस्तिकायां । हे.च. । काञ्च्यां । कर्म्मग्रप्रकोष्ठे । अम. । मध्ये । करिबन्धने । अ.टी. भ. । मे.यद्विकं । गुञ्जालतायाम् ।

**कांश्य(स्य)नीलः** । पुं । मूषातुत्थे । हे.च. । तुत्थे । তুঁতে । प.मु. । तुत्थाञ्जने ।

**कांसपात्रम्** । क्ली । आढ़कपरिमाणे । भा.।

**कांसिका** । स्त्री । मुद्गपर्ण्याम् । रा.नि.व.३ ।

**कांसी** । स्त्री । सौराष्ट्रमृत्तिकायां । प.मु. । कांस्यधातौ ।

**कांसीयम्** । क्ली । कांस्यधातौ । रा.नि.व.१३।

**कांस्य(क)म्** । क्ली । पानपात्रे । मे.यद्विकं । White copper or brass, Queen's metal. ताम्ररङ्गयोरुपधातौ । কাঁসা । हिं कांसा । मं कं कंसे कंचु । भा. । "ताम्रं त्रपुजमाख्यातं कांस्यं घोषञ्च कंसकम् । उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः । कांस्यस्य तु गुणाः ज्ञेयाः स्वयोनिसदृशा जनैः । संयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः । कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरं । गुरु नेत्रहितं रूक्षं कफपित्तहरं परं ॥" तच्छोधनम् –"पत्तलीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते ॥" मारणविधिः –"अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत् । समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैः मुहुः । ततो मूषापुटे धृत्वा पचेद्गजपुटेन च । एवं पुटद्वयात्कांस्यं रीतिश्च म्रियते ध्रुवम् ॥" भा.पू. १भ. । शुद्धस्य गुणाः—"कांस्यन्तु तिक्तमुष्णमुष्णं वातकफविकारघ्नं । रूक्षं कषायरूक्षं लघुदीपनपाचनं पथ्यम् ॥ श्वेतं दीप्तं मृदुज्योतिः शब्दाढ्यं स्निग्धनिर्म्मलं । घनाग्निसहमृताङ्गं कांस्यमुत्तममीरितम् ॥" रा.नि.व.१२ ।

**कांस्यपिष्टीरसः** । पुं । पाण्डुधिकारे । पाठः —"मृतात्पञ्चार्कतश्चैकं कृत्वा पिष्टिं सगन्धकां । मृतांशैः नागवल्ल्याश्च द्रवैः पिष्टा प्रलेपयेत् । ताम्रपर्णौ प्रलिप्यैतां बद्धा गजपुटे पचेत् ।" त्रिगुञ्जं चूर्णयोगेन सेव्यम् । र.चि.९अ.। পারা ৫ ভ. তামা ১ ভ. গন্ধক ৫ ভ. । [वालु ।

**कांस्यालुकम्** । क्ली । कासालुके । See का-

**काकः** । पुं। वायसे । वायसभेदे । ডোমকাক। एतौ प्रसहजातीयौ । तन्मांसगुणाः—चयह्नरं चचुष्यं बृंहणं लघु दीपनञ्च । रा.नि.व.७। शोषरोगे हितः रसवीर्य्यविपाकेषु सिंहादिभिः समः । सु.सू. ४६अ. । काकजङ्घायां । কাঁটা গুড়কাঁউলী। ज्योतिष्मत्याम् । লতাফট্কী। काकोल्यां । गुञ्जायाम् । कोकिले । वै.निघ. । पीठसर्पिणि । খোঁড়া। परिमाणभेदे । शिरःचालने । काकोदुम्बरवृत्ते । क्ली । काकसमूहे । मे.कदिकं । काकमांसन्तु चक्षुष्यं लघु चाग्निप्रदीपनम् । धातुवृद्धिकरं बल्यं चतरोगं चयं हरेत् । कृष्णकाकस्य मांसन्तु ज्ञेयं काकसमं गुणैः ॥ वै.निघ. ।

**काककङ्गुः** । पुं । चीनक इति प्रसिद्धधान्ये । हे.च. । सर्ज्जरसे । वै.निघ. ।

**काककर्कटी** । स्त्री । खर्जूरीवृचे । भा. ।

**काककण्टकः** । पुं । जलचरपक्षिविशेषे । পানকৌড়ি। वै.निघ. । [ঠেঙা। जटा. ।

**काककला** । स्त्री । काकजङ्घावृचे । কেউয়া

**काककुड्मलम्** । क्ली । नीलपद्मे । वै.निघ. ।

**काककुष्ठम्** । क्ली । कङ्कुष्ठे ।

**काकघ्नी** । स्त्री । महाकरञ्जवृचे । रा.नि.व.८।

**काकचिञ्चा (ञ्चिः, ञ्ची)** । स्त्री । गुञ्जायां। কুঁচ । त्रिका. । रक्तगुञ्जायां । भा.पू.१भ.गु.व. ।

**काकच्छदः (दिः, र्दिः)** । पुं । खञ्जनपक्षिणि । श.र. । चाषपक्षिणि । নীলকণ্ঠপাখী । त्रिका. ।

**काकजङ्घा** । स्त्री । गुञ्जायां । र.मा.। (Leea hirta.) स्वनामख्यातक्षुपे । কেউয়াঠেঙা,কাঁটা গুড়কাঁউলী । मसीति पाश्चात्ये । र.मा. । सा चतीपयोगिनी च । गुणाः—तिक्तोष्णा कृमिव्रणकफापहा बाधिर्य्यघ्नी पुराजीर्णघ्नी जीर्णविषमज्वरनाशिनी । रा.नि.व.४ । "काकजङ्घा जटा निद्रां जनयेच्छिरसि स्थिता । हिमा कषाया तिक्ता कफपित्तघ्नी ज्वरपित्तास्रव्रणकण्डुविषकृमिघ्नी च ।" भा.पू.१भ. । "एतदञ्जनं एकाहिकज्वरे हितम् ।" च.द.ज्व.चि. ।

**काकजम्बुः (म्बूः)** । स्त्री। (Ardisia solanacea.) स्वनामख्यातजम्बूवृक्षविशेषे । भूमिजम्बूवृचे । ভুঁইজাম, বনজাম, ছোট জাম গাছ। मं नदीतीरजाम्बू । कं तोरेमेरिलु । गुणाः—कषाया अम्ला गुरुः पाके मधुरा दाहश्रमातिसारघ्नी वीर्य्यपुष्टिबलदा च । रा.नि.व.११ । र.मा. । नागरङ्गवृचे । वै.निघ. ।

**काकजानुका** । स्त्री । काकजङ्घायाम् । भैष. स्त्रीरोग.चि. । रस.र.प्रदरे ।

**काकडुम्बुरः** । पुं । कृष्णडुम्बुरे । ক্ষুদ্রডুমুর।

**काकणम्** । क्ली। A leprosy with black and red spot. महाकुष्ठरोगविशेषे । तल्लक्षणं यथा—काकणन्तिकाफलसदृशानि अतीव रक्तकृष्णानि काकणकानि । त्रोषचोषादीनि सामान्यलिङ्गानि । त्वक्चोचभेदस्वपनाङ्गसादाश्च भवन्ति । सु.नि.५अ. ।

**काकणघ्नवटी** । स्त्री । कुष्ठघ्नौषधे । पाठः—लौहभस्म विषं वह्निं कटुका त्रिकटुत्रयं । तुल्यांशं चूर्णितं भाव्यं क्वाथेनानेन तद्दिनं । पथ्यानिम्बविडङ्गानि खदिरं वासकोऽमृता । जलैरष्टावशेषं तत्क्वाथं भावने हितं । माससमात्रं लिहेल्लौद्रैः काकणं हन्ति तद्वटी ॥ रस.र. । লৌহ, বিষ, চিতার মূল বা ভেলা, কট্কী, ত্রিফলা, ত্রিকটু এবং ত্রিমদ প্রত্যেকে সমান ভাগ । ভাবনা দ্রব্য—হরীতকী, নিমছাল, বিড়ঙ্গ, খদির, বাসাছাল, গুলুঞ্চ ।

**काकणन्तिका (न्ती)** । स्त्री। रक्तगुञ्जायां। गुञ्जायां । सु.चि.१८अ. । प.मु. । रक्तकम्बलवृचे । वै.निघ. ।

**काकणान्तकः** । पुं । सिन्दूरे । वै.निघ. ।

**काकण्डा** । स्त्री । काकनासायां । ক্ষুদ্র শ্বেত কুঁচ । रा.नि.व.३ ।

**काकतिक्तका (क्ता)** । स्त्री । लताकरञ्जे । वै.निघ. । वा.मृ.१५अ. । काकजङ्घायाम् । भा.पू. १भ. । श्वेतगुञ्जायां । শ্বেত কুঁচ গাছ । र.मा. ।

**काकतिन्दुः (कः)** । पुं । (Diospyros tomentosa.) तिन्दुकविशेषे । মাকড়া গাব, কুচিলা গাছ, তেঁদ, মাকড়া তেঁদ । भा. । फलगुणाः—गुरु कषायाम्लं वातविकारघ्नं मधुरम् । पक्वः वमिपित्तघ्नमीषत्कफकरञ्च । रा.नि.व.११ ।

**काकतुण्ड:** । पुं । कृष्णागुरुणि । श.च. । जलपक्षिविशेषे । वै.निघ. । च.सू.२७अ. । ग्रीवोर्द्ध-गतकफनुण्डाकारसन्धौ। स च हनुद्वयसन्धि: भा.।

**काकतुण्डफला** । स्त्री । काकनासायाम् । ক্ষুদ্র শ্বেত কুঁচ, শ্বেত কেউয়া ঠুঁটী বা রক্ত-কম্বল, বড় শ্বেত গুড়কাউলী । भा.पू.१भ. ।

**काकतुण्डा (ण्डिका)** । स्त्री । श्वेतगुञ्जायाम् । শ্বেত কুঁচ । महाश्वेतकाकमाच्याम् । বড় শ্বেত গুড়কাউলী । वै.निघ. । काकचिञ्चायाम् । কুঁচ গাছ । हला. ।

**काकतुण्डी** । स्त्री । गुञ्जायां । वै.निघ. । राजरीती । পিত্তলবিশেষ । रा.नि.व.१३ । लघुरक्तकाकमाच्याम् । वै.निघ.२भ.भूतज्व.चि. । स्वनामख्यातलतायाम् । কেউয়াঠুঁটী, শ্বেত কুঁচ । र.सा.सं. ।गुणा:—कटुतिक्तोष्णा रसायनी वातदोषघ्नी वृष्या पलितघ्नी च । रा.नि.व.३ ।

**काकदन्तिका** । स्त्री । काकादनीलतायाम् । শ্বেত বা রক্তকুঁচ । दन्तीवृक्षे । रक्तकाकमाच्यां । রক্ত গুড়কাউলী। वै.निघ. । [र.मा. ।

**काकनामा** । पुं। वकवृक्षे । বকফুলের গাছ।

**काकनास:** । पुं। विकङ्कतवृक्षे। रा.नि.व.११।

**काकनासा** । स्त्री । (Solanum indicum.) महाश्वेतकाकमाच्याम् । বড় শ্বেত গুড়কাঁউলী । हिं केउयाठुँटी, केउयाढोंड़ी । मं वड़िलिकहुड़लि, हिड़ियाकागेदोडे । तें वेलुमसन्दिचेट्टु, पुसगुलिविन्दचेट्टु, काकिदोंड़चेट्टु । गुणा:—मधुरा शीतला पित्तघ्नी रसायनी दार्ढ्यकारी विशेषत: पलितघ्नी । रा.नि.व.३ । कषाया उष्णा रसपाकयो: कटु: कफघ्नी वान्तिकरी तिक्ता शोथार्श:श्वित्रकुष्ठहरा । भा.पू १भ. । (स्रा) वकवृक्षे । रत्ना. । काकजङ्घायाम् । जटा. ।

**काकनासिका** । स्त्री । रक्तत्रिवृतायाम् । रा.नि.व.६ । काकजङ्घायाम् । কাঁটা গুড়কাঁউলী । अम. । रा.नि.व.४ । गलनाफले । जैज्जटैस्तु वासाफलवदुच्यते । सि.यो.यक्ष्म.चि.च्यवनप्राश. । स्वा. कौ. । ''काकोलीकाकनासिका ।''

**काकनीला** । स्त्री। काकजम्बूवृक्षे । বনজাম। रा.नि.व.११ ।

**काकमर्दी** । स्त्री । कृष्णशिम्ब्याम् । কালশিম্। र.मा. ।

**काकमर्दी** । स्त्री । चिञ्चायाम् । তেঁতুল ।

**काकपदम्** । क्ली । कपालीपरिश्रिर:पर्य्यन्तं मुण्डनं काकपदमुच्यते । "मूर्ध्नि काकपदक्रला ।" सु.कल्प.२भ. ।

**काकपर्णी** । स्त्री । मुद्गपर्ण्यां । মুগানী । भा.।

**काकपक्ष:** । पुं । शिखण्डके ।জুল্পি । बालानान्तु शिखा प्रोक्ता काकपक्ष: शिखण्डक: । अम.।

**काकपीलु: (क:)** । पुं । काकादनीलतायां । রক্ত গুড়কাঁউলী । श्वेतगुञ्जायाम् । শ্বেত কুঁচ । रा.नि.व.३ । रक्तगुञ्जायां । भा.पू.१भ. । काकतिन्दुके । মাকৃড়া গাব, কুচিলা, মাকৃড়া কেন্দ । भा. । अम. । [श.च. ।

**काकपुच्छ: (ष्ट:)** । पुं । कोकिले । श्र.र. ।

**काकपुष्पम्** । क्ली । ग्रन्थिपर्णे । सुगन्धद्रव्ये । वै.निघ. ।

**काकप्राणा** । स्त्री । काकनासायाम् । महाश्वेतकाकमाच्याम् । বড় শ্বেতগুড়কাঁউলী । रा. नि व.३ ।

**काकफल:** । पुं । निम्बवृक्षे काकजम्ब्वाम् । বনজাম । रा.नि.व.६।११ । [११ ।

**काकफला** । स्त्री । काकजम्बूवृक्षे । रा.नि.व.

**काकवन्ध्या** । स्त्री। एकमात्रप्रसवायां नार्य्यां ।

**काकभण्डी** । स्त्री । श्वेतगुञ्जायाम् । वै.निघ. ।

**काकभाण्डी** । स्त्री । महाकरञ्जवृक्षे । रा.नि. व.६ । लघुरक्तमाचिकायां । লাল গুড়কাঁউলী । वै.निघ. ।

**काकभीरु:** । पुं । पेचके । रत्ना. । त्रिका. ।

**काकमद्गु:** । पुं । दात्यूहपक्षिणि । ডাহুক । हारा. । त्रिका. । "काकमद्गुर्जलरङ्के ।"

**काकमर्द: (क:)** । पुं । महाकाललतायाम् । মাকালফলের লতা । प.मु. । [क: ।

**काकमांसम्** । क्ली । वायसमांसे । See का-

**काकमाचिका (ची)** । स्त्री । स्वनामख्यातपत्रशाकविशेषे । কেউয়াঠুঁটী, কাঁটা গুড়কাঁউ-

ली । । हारा.। हिं कवैया कावर । काके । मं कं कवय्या । रा.नि.व.४ । तिक्ता रसोष्णा कफघ्नी शूलार्शःशोफघ्नी कुष्ठघ्नी कण्डूघ्नी त्रिदोषघ्नी स्निग्धोष्णा स्वरदा शुक्रदा रसायनी शोथगुल्मार्शो-ज्वरमेहघ्नी कटुः चक्षुष्या हिक्काच्छर्द्दिहृद्रोगघ्नी च । भा.पू.१भ. । तिक्ता सा पित्तं वर्द्धयति उष्णवीर्य्यत्वात् । सु.सू.४०अ. । काकमाची श्वेतरक्तभेदेन द्विधा । तयोः श्वेता महाश्वेता काकमाची (मं काइंडोली थोरश्वेतकावली),द्वितीया लघुरक्ता-काकमाची, रक्तकाइण्डली लघुरक्तकावलीति महाराष्ट्रादौ ख्याता । तयोः श्वेता—"मधुरा च रसायनी । शीता कषाया कट्वी च तिक्ता चोष्णा वमिप्रदा । तनोर्दार्ढ्यकरी प्रोक्ता कफशोथार्शनाशिनी । वलीपलितपित्तघ्नी श्वेतकुष्ठापहा मता" इति । "तुवरोष्णा रसायनी । कट्वी तिक्ता रुचिकरी वातकुष्ठविनाशिनी । पाण्डुप्रमेहकफहा छर्द्दिक्रिमिज्वरापहा । पलितस्य च हन्त्री स्यात्···।" रक्तकाकमाचीगुणाः । वै.निघ. । जीवन्ती वातककफकृत् पित्तसंशमनी तथा । त्रिदोषशमनी वृष्या काकमाची रसायनी ॥ चचि.१६अ. । च.द.यक्ष्म.चि. । नष्टफला । सु.सू.३७सुरसादि.ड. । गुडफला । वा.सू.१५अ. । चवकसुरसि भार्गी कासुका काकमाची। कार्णछिड़ा इति ख्याते शाके । काणछिड़े । प.मु. ।

**काकमाचीतैलम्** । क्ली। कर्णविकारे हितम् । पाठः—"काकमाचीरसे सिद्धं कटुतैलं चतुष्पलम्। मनःशिलासोमराजीवीजसिन्दूरगन्धकैः। शाणमानैश्चदध्यङ्गाज्जन्यवश्यमकर्णिकान् ।" रस.र.।

**काकमाता** । स्त्री। काकमाचीक्षुपे । गुड़कौंउली । रा.नि.व.४ । [रा.नि.व.३ ।

**काकमुद्गा** । स्त्री । मुद्गपर्ण्याम् । मुगानी ।

**काकयवः** । पुं । शस्यहीनधान्ये । आगड़ा । महाभा. । [नामद्रव्यविशेषे । वै.निघ. ।

**काकयानम्** । क्ली । कौड़ण्यदेशख्याते हासा-

**काकरिपुः** । पुं । उलूके । पेँचा । [चिका. ।

**काकरुहा** । स्त्री । वन्दाद्रव्ये । परगाछा ।

**काकरूकः** । पुं । उलूके । निम्बद्रव्ये । चि। भीते। स्त्रीजिते । मे.कचतुष्कं ।

**काकलम्** । क्ली । कण्ठमण्यौ । त्रिका. । पुं । द्रोणकाके ।

**काकलकः** । पुं । कण्ठमण्यौ । ग्रीवाया उन्नतप्रदेशे । षष्टिकधान्यजातिभेदे । गुणाः शालिवत् कङ्गुकवच्च । सु.सू.४६अ. ।

**काकलीद्राक्षा** । स्त्री । द्राक्षाविशेषे । বেদানা, কিস্‌মিস্ প্রভৃতি । गुणाः—मधुरा अम्ला रसाला रुचिकरी श्वासहृल्लासघ्नी ।रा.नि.व.११ ।

**काकलीरवः** । पुं । कोकिले । रा.नि.व.१९।

**काकवल्लभा** । स्त्री। काकजम्बूद्रव्ये । बनजाम। रा.नि.व.११ । [पीतकाञ्चने । वै.निघ. ।

**काकवल्लरी** । स्त्री । स्वर्णवल्ल्यां । भा.पू.१भ.।

**काकविष्ठा** । स्त्री । काकमले ।

**काकवृन्ता** । स्त्री । रक्तकुलत्थके । वै.निघ. ।

**काकशालिः** । पुं। कृष्णशालिधान्ये । वै.निघ.।

**काकशिम्बी** । स्त्री। रक्तगुञ्जायाम् । रक्तकाकमाच्याम् । লালগুড়কাঁউলী । रा.नि.व.३ ।

**काकशीर्षः** । पुं । वकद्रव्ये । বাসনা গাছ । प.मु.। See अगस्तिः । [তুণ্ড পাখী । वै.निघ.।

**काकसखः** । पुं। तन्नामकपक्षिविशेषे। काक-

**काकसादी** । पुं । अशुभलक्षणाश्वे । आग्नेये।

**काकस्फूर्जः** । पुं। काकतिन्दुकद्रव्ये । মাকড়া গাব । मं काकटेम्भुर्णी । वै.निघ. ।

**काका** । स्त्री । श्वेतचिरति । काकोदुम्बरिकायाम् । কাকডুমুর। काकोलीद्रव्ये । কাঁকলা গাছ । काकजङ्घायां । गुञ्जालतायां । मलपूद्रव्ये । নির্ম্মাল্য । काकमाच्यां । শ্বেত গুড়কাঁউলী । मे.कद्विकं ।

**काकाङ्गा (ङ्गी)** । स्त्री। काकनासायां । কেউয়াঠুঁটী, শ্বেত গুড়কাঁউলী । भा.पू.१भ. । काकजङ्घायाम् । वै.निघ. ।

**काकाञ्ची** । स्त्री । काकजङ्घायाम् । श.र. ।

**काकाण्डः** । पुं। काकतिन्दुके । মাকড়া গাব। महानिम्बे । ঘোড়ানিম্ । रा.नि.व.९ ।

**काकाण्डफलम्** । क्ली । शूकरशिम्बीफले ।

आलाकुशी फल। काकतिन्दुकफले। माकड़ा गाव। सु.सू.४६अ.। कपित्थकुगुणः।

**काकाण्डा (ण्डी)** । स्त्री । कोलशिम्ब्याम् । रा.नि.व.७। महाज्योतिष्मतीलतायाम्। बड़ लताफटकी। रा.नि.व.३। असाध्यलूताविशेषे। सु.कल्प.८अ.। See लूता।

**काकाण्डोला** । स्त्री। कोलशिम्ब्याः। आलाकुशी। रा.नि.व.७। कटभ्याम्। लताफटकी। इयञ्च माषवद्गुणविशिष्टा। भरुषः।

**काकादनकः (नी)** । पुं, स्त्री। (Ardisia solanacca.) श्वेतगुञ्जायां। শ্বেতকুঁচ। भा.म. पूतना.चि.। रक्तगुञ्जायाम्। রক্তকুঁচ। सु.चि. १९अ.। र.मा.। उत्. काञ्चथोरिटया। मं कं सात्रीकाहुड़नि। किरियकाबेदोंड़े। गुणाः—कटूष्णा तिक्ता रसायनी वातदोषहरी वश्या पलितनाशिनी च। रा नि.व.३। विषरोगघ्नी शोथघ्नी च। राज.। कण्टकपालीलतायाम्। कालियाकड़ा। कृमिरके इति च भाषा। प.मु.। सु.सू. ३९अ.कफशमने। रक्तकाकमाच्याम्। লাল গুড়কাঁউলী। रत्ना.। काकतिन्दुकायां। सु.चि. १४।१८अ.। [१भ.।

**काकानन्ती** । स्त्री। रक्तगुञ्जायाम्। भा.पू.

**काकाम्रः** । पुं। समष्ठीलवृक्षे। रा.नि.व.४।

**काकायुः** । पुं। स्वर्णवल्ल्याम्। স্বর্ণলতা। भा. पू.१भ.। See स्वर्णवल्ली।

**काकारिः** । पुं। पेचके। है.च.।

**काकालः** । पुं। द्रोणकाके। अ.र.। वत्सनाभविषे। है.च.। [শ্বেত গুড়কাঁউলী। वै.निघ.।

**काकाख्या** । स्त्री। महाश्वेतकाकमाच्याम्।

**काकाह्वा (ह्वाना)** । स्त्री। काकमाच्याम्। रा.नि.व.४। सु.चि.९अ.। वनमुद्गे। वै.निघ.।

**काकाचा** । काकनासायां। रा.नि.व.३।

**काकिणी** । स्त्री। रक्तिकायाम्। কুঁচ। एकवराटिकायाम्। একক‌ড়া। पणचतुर्थांशे। ৫ গণ্ডা। मानदण्डे। "काकिणी पणतुर्यांशे मानदण्डेऽपि दृश्यते। क्षणालैकवराव्योः स्यात्।" मे.णत्रिकं।

**काकी** । स्त्री। वायसाम्। काकोल्याम्। रा. नि.व.३। श्वेतकाकमाच्याम्। শ্বেত গুড়কাঁউলী। वै.निघ.।

**काकुः** । स्त्री। जिह्वायां। त्रिका.।

**काकुद (दम्)** । क्ली। तालुनि। रा.नि.व.१८।

**काकुदी** । पुं। ककुदावर्ते महादोषान्वितारश्वे। "आवर्त्ता यस्य ककुदि काकुदी स उदाहृतः।" अ.द.२अ.।

**काकुत्तम्** । क्ली। विक्लतशब्दे। [वै.निघ.।

**काकुलीमृगः** । पुं। चतुर्विधविलेशयमृगे।

**काकेचि(ञ्चु)कः** । पुं। कटुगन्धतृणे। খাগড়া। থাগড়া। र.मा.। त्रिका.। काशतृणे। কেশে। रा.नि.व.८। कोकिलाक्षवृक्षे। भा.पू.१भ.।

**काकेन्दुः (काः,की)** । पुं। (Diospyros melanoxylon.) काकतिन्दुके। মাকড়া কেন্দ। अम.। कटुतिन्दुके। কুচিলা। प.मु.।

**काकेष्टः** । पुं। निम्बवृक्षे। रा.नि.व.९।

**काकेष्टा** । स्त्री। रेणुकायाम्। काकमाच्याम्। वै.निघ.।

**काकोचिकः (ची)** । पुं, स्त्री। काञ्चचीति प्रसिद्धे मत्स्यविशेषे। কাউচ মাছ। हारा.।

**काकोडु(दु)म्बरः** । पुं। काकोदुम्बरिकायां। কাকডুমুর। प.मु.।

**काकोडु(दु)म्बरिका** । स्त्री।(Ficus hispida, opposite-leaved figtree, Syn. Ficus oppositifolia.) स्वनामख्यातवृक्षे। কাকডুমুর। हिं कटमिला,(गोलडुम्बर। र.मा.।) (कटुम्भरी। भा.।) मं कालाउंब। तें अडवमेड़िचेट्टु। गुणाः—क्षिप्रघ्नी उदुम्बरगुणा च। मद.व.५। पक्वफलं शीतलं गौल्यं अम्लं कटु लम्दीवघ्नं रक्तपित्तघ्नञ्च। तद्वल्कलं अतिसारघ्नम्। तथा—उदुम्बरत्वक् शीतला कषाया व्रणघ्नी गर्भरक्षणे हिता स्तन्यदा च। रा.नि.व.११। तिक्ता शीतला तुवरा स्तम्भनकरी कफपित्तव्रणश्वित्रकुष्टपाण्डुर्शःकामलाहरी च। गुरुः ग्राहिणी शीतला स्वादुः दृप्तिकरी च। राज.। फलगुणाः—विष्टम्भि मधुरं स्निग्धं तर्पणं गुरु च। सु.सू.४६अ.।

**काकोदरः** । पुं। सर्पे। अम.।

**काकोदुम्बरिकाफलम्** । क्ली । पञ्जीरे । वै.निघ. । [गुणाः मबवत् ।

**काकोनालकः** । पुं । प्रवजातीयपच्चिणि ।

**काकोलः** । पुं,क्ली । द्रोणकाके । दाँड़काक । हला. । काकोल्याम् । धरणि. । क्षणवर्णस्थावरविषभेदे । रबा. । काकोलसुच्यतेजः स्यात् क्षणच्छवि महाविषम् । वै.निघ. । सर्पे । वनशूकरे । श्र.र. ।

**काकोली** । स्त्री । Berry of the calculus indicus. It is brought from Napal and Morung. Tizyphus napeca. चीरकाकोलीसदृशकन्दविशेषे कक्कोलतो भिन्ने । भेदस्तु केवलं चीरकाकोल्याः किञ्चित्क्षणता । काँकला । म. कडवतिगी, काउली । तै तेलुमचिचेट्टु । उत्. काकोलि । एषा चीरकाकोल्युत्पत्तिस्थान एव जायते । "जायते चीरकाकोली महामेदोद्भवस्थले । यत्र स्यात् चीरकाकोली काकोली तत्र जायते । पीवरीसदृशः कन्दः स चीरप्रियगन्धवान् । सा प्रोक्ता चीरकाकोली काकोली लिङ्गमुच्यते । यथा स्यात् चीरकाकोली काकोल्यपि तथा भवेत् । एषा किञ्चिद्भवेत् क्षणा भेदोऽयमुभयोरपि ॥ भा. । गुणाः—शीता मधुरा स्निग्धा चयपित्तानिलार्त्तिनुत् । रक्तदाहज्वरघ्नी कफशुक्रवर्द्धिनी च । रा.नि.व.३ । चीरकाकोल्याम् । फलघृते ।

**काकोलीद्वयम्** । क्ली । काकोली चीरकाकोली च । "एका काकोली कवड़ीसंज्ञा, अन्या चीरकाकोली पयस्विनीसंज्ञा ।" वा.सू.१५अ.जीवन्त्यादि । जीवन्तीकाकोल्यौ भेदे द्वे मुद्गमाषपर्ण्यौ । एतद्द्वयाभावे अश्वगन्धामूलं द्विगुणं ग्राह्यम् । भा.म. ४भ.कर्णरोग.चि. ।

**काकोल्यादिः** । पुं । तन्नामकौषधद्रव्यगणे । अयं नाडवर्गसंज्ञितः । सि.यो.शालपर्ण्यादे । "काकोलीचीरकाकोलीजीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्च । काकोल्यादिरयं पित्तशोणितानिलनाशनः । जीवनो बृंहणो वृष्यः स्तन्यः श्लेष्मकरस्तथा॥" सु.सू.३८अ.। अपि च । "काकोली चीरकाकोली जीवकर्षभकौ तथा । ऋद्धिर्वृद्धिस्तथा मेदा महामेदा गुडूचिका । मुद्गपर्णी माषपर्णी पद्मकं वंशलोचना । शृङ्गी प्रपौण्डरीकञ्च जीवन्ती मधुयष्टिका । द्राक्षा चेति गणो नाम्ना काकोल्यादिरुदीरितः ॥" गुणाः— "स्तन्यकृद्बृंहणो वृष्यः पित्तरक्तानिलापहः ।" भा. ।

**काकोल्यादिघृतम्** । क्ली । वातरक्ते घृतम् । काकोलीयुग्ममधुकं सशिवा च धात्री जीवन्ती मेदयुगलावपि पृश्निपर्ण्यौ । द्राक्षा सपद्मकतुगा च कुलीरशृङ्गौ द्वौ जीरकावपि समस्तचतुष्पलाद्यां षष्टीं विचूर्ण्य विपचेत शनैर्घटेऽपां प्रस्थं घृतस्य च तथा सरसं गुडूच्याः । एतस्य पादं प्रतमेव दत्वा पुनः पचेत् वैद्यवरो विधिज्ञः । रस.र. ।

**काको(कौ)ष्ठः (कः)** । पुं । कर्णबन्धनाकृतिविशेषे । स च निर्म्मांसस्क्षिप्तायाल्पशोणितपालिः । सु.सू.१६अ. ।

**कागः** । पुं । काके । जटा. । [शब्दपदे । कागच ।

**कागदः** । पुं । कागज इत्यारवीयभाषाप्रसिद्धे

**काङ्कायनगुड़िका** । स्त्री । गुल्मरोगे हृष्टफलौषधं । प्रक्रिया स्पष्टा । अम्लवेतसः अम्ललोण्यामिति केचित् । शटी, कुड़, दन्ती, छिताभूल, टुगुरि, शुँट्, वच, तेउड़ी प्रत्येके ১ प. हिङ्गु ৩ প. यवक्षार ২ প. अम्लवेतस वा आमरूल ২ প. धने, यमान, जीरा, मरिच प्रत्येके ২ তো. कृष्णजीरा ৪ তো. वनयमान ৪ তো. टावारसेन कोलास्थिमाना बटी कार्य्या । च.द. । शा.कौ. । रस.र. ।

**काङ्कायनमोदकः** । पुं । अर्शोरोगे । पथ्यादीनां द्रव्याणां चूर्णानि यथाभागमेकत्र सम्मिश्रयेत् । हरीतकी ५ प. जीरक १ प. मरिच १ प. पिप्पली १ प. पिप्पलीमूल २ प. चविका ३ प. चित्रकमूल ४ प. शुण्ठी ५ प. यवक्षार २ प. भल्लातक ८ प. गड़कन्द (ओँड़) १६ प. (अभावे शर्करा वा मत्स्यण्डी) । सर्व्वचूर्णद्विगुणो गुड़ः । च. द.अर्श.चि. ।

**काङ्गा** । स्त्री । वचायाम् । श्र.च. ।

**काङ्गुकः** । पुं, क्ली । षष्टिकधान्यभेदे । काংনী ষেটে धानविशेष । गुणाः—रसे पाके च मधुरः वातपित्तशमनः शालिवद्गुणश्च । सु.सू.४६अ. ।

**काङ्कत्** । पुं । ओषधिविशेष । वै.निघ. ।

**काङ्क्षा** । स्त्री । आकांक्षायाम् । सु.नि.६अ. ।

**काङ्कोल:** । पुं । कङ्कोलविशेष ।

**काच:** । पुं । Affection of optic nerve or gutta serena. नराक्षयो: तृतीयपटलगत-नेत्ररोगविशेषे। নেত্রে মুক্তার ন্যায় বিন্দু। छिं मोतियाविन्दु । दोषे तृतीयपटलं गते काचसंज्ञको नेत्ररोग: जायते । लक्षणं यथा —"प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते । तेनोर्द्ध्वमीक्षते नाध: तनु चैलावृतोपमं । यथावर्णञ्च रज्येत दृष्टि-र्हीयेत च क्रमात् ॥" वा.उ.१२अ.। अथिनरपि तमोभूते नातिरूढ़े महागदे । चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युत: । निर्म्मलानि च तेजांसि भाजिष्णूव्यथ पश्यति । स एव चतुर्थपटलगत: लिङ्गनाश: नीलिकासंज्ञां धत्ते । "स एव लिङ्गनाशस्तु नीलिका काचसंज्ञित: ॥" वातेन चापि रूपाणि भ्रमन्तीव च पश्यति । आविलान्यरुणाभानि व्याविद्धानीव मानव: । पित्तेनादित्यखद्योतचक्रचापतड़िद्गुणान् । नृत्यतश्चैव शिखिन: सर्व्वं नीलञ्च पश्यति । कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च । पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रमेवाभ्रसंप्लवम् ॥ इत्यादि । सलिलप्लावितानीव परिजाड्यानि मानव: । पश्येद्रक्तेन रक्तानि तमांसि विविधानि च । सलिलान्यथ कृष्णानि पीतान्यपि च मानव: । सन्निपातेन चित्राणि विप्लुतानि च पश्यति । बहुधा च द्विधा वापि सर्व्वाण्येव समन्तत: । हीनाङ्गान्यधिकाङ्गानि ज्योतींष्यपि च पश्यति ॥ भा.नि. । शिक्ये । मणौ । मे.चद्विकं । मृत्तिकाविशेषे । কাচ। गुणा:—क्षाररस: उष्णवीर्य्य: अञ्जनादृष्टिकरश्च । राज.। अश्मस्य पैत्तिकाचिरोगे । "श्लेष्माभिष्यन्दिनोऽश्मस्य शूलं साश्रुविलोचनं । काच: सञ्जायतेऽश्मस्य पाण्डुता चापि चक्षुष: ॥" ज.द.३०अ. । कश्वटभेदे । श.च.। क्षारे । हे.च.। क्ली । सिक्थके। काचलवणे। বিট্‌লবণ। रा.नि.व.२३।

**काचकम्** । क्ली, पुं । काचलवणे । स्फटिके । काचमणौ । वै.निघ. ।

**काचकूपी (घटी)** । स्त्री । काचनिर्म्मितस्थाल्याम्। কাচের শিশি। भैष. ।

**काचज:** । पुं । काचलवणे । वै.निघ. ।

**काचतिन्तिड़ी** । स्त्री । आमतिन्तिड्याम् । কাঁচা তেঁতুল। भा.पू.१भ.फलव. । [व.६ ।

**काचतिलकम्** । क्ली । काचलवणे । रा.नि.

**काचभव:** । पुं । काचलवणे । वै.निघ. ।

**काचभाजनम्** । क्ली । काचनिर्म्मितपात्रे । কাচের বাসন। त्रिका. ।

**काचमणि:** । पुं । काचे । च.शा.८अ. ।

**काचमलम्** । क्ली काचलवणे । কাল লবণ। रा.नि.व.६ । काकचलवणे । করকচ লবণ ।

**काचमालिका** । स्त्री । मद्ये । त्रिका. ।

**काचलवणम्** । क्ली । Black salt, a medicinal salt prepared by calcining fossile salt and the fruit of the emblic myrobalan together. It consists of muriate of soda with a proportion of sulphur, iron and lime. स्वनामख्यातलवणे । काचलवण इति महाराष्ट्रकर्णाटदेशे ख्यातम् । কৃষ্ণ লবণ, কালা লবণ। সোরা इति मद. । मं वांगड़खार । गुणा:—रुच्यं ईषत् क्षारं पित्तलं दाहकं कफवातघ्नं दीपनं गुल्मशूलनुच्च । रा.नि.व.६ ।

**काचवकयन्त्रम्** । क्ली । अर्कादिनिष्काशनार्थं काचनिर्म्मितवकयन्त्रे । [च: ।

**काचविन्दु:** । पुं । नेत्ररोगविशेषे । See का-

**काचसम्भव(सौवर्चल)म्** । क्ली । काचलवणे । रा.नि.व.६ ।

**काचस्थाली** । स्त्री । काचपात्रे । पाटलावृक्षे । পারুল গাছ। अम.।प.मु.। श्वेतपाटले । वै.निघ.।

**काचा** । स्त्री । काचमणौ । "काचा तु सारका लघ्वी व्रणनेत्रहितावहा। लेखनी शूलहन्त्रीक्ता···।" वै.निघ. । वयोनिरूपिका अश्वस्य दन्तेषु पञ्चदशाब्दादारभ्य समदशपर्य्यन्तं जाता: सर्षपाकारा: शुभ्रा रेखा: । ज.द.४अ. । [अप.चि. ।

**काचाह्वा** । स्त्री । हरिद्रायां । वै.निघ.२भ.

**काचाक्ष:** । पुं । बकवके । गुणा:—बकवत्। पद्मकन्दे । वै.निघ. ।

**काचि(जि)घः** । पुं । काञ्चने । मूषिके । मी. चचिकं । शिम्बीधान्यादौ । वै.निघ. ।

**काचिञ्चिकः (लिन्दिः)** । पुं । काकचिञ्चायाम् । কুঁচ গাছ ।

**काचितः** । त्रि । शिक्यारोपिते (पदार्थे) । শিকায় তোলা (দ্রব্য) । अम. ।

**काचिमः** । पुं । देवकुलीद्भववृक्षे । त्रिका. ।

**काचोत्थम्** । क्ली । काचलवणे । रा.नि.व.६ ।

**काजूतः** । पुं । जांबोचुपे महाराष्ट्रादौ ख्याते । गुणाः—"तुवरः मधुरोष्णो लघुः स्मृतः । धातुवृद्धिकरो वातकफगुल्मोदरज्वरान् । क्रमिव्रणाग्निमान्द्यानि कुष्ठञ्च श्वेतकुष्ठकं । संग्रहण्यर्शमानाहान् नाशयेत्··· ।" वै.निघ. ।

**काञ्चजम्** । क्ली । काचलवणे । वै.निघ. ।

**काञ्चन(क)म्** । क्ली । पुन्नागपुष्पे । वै.निघ. । पद्मकेशरे । मी.नत्रिकं । स्वर्णे । नागकेसरपुष्पे । रा.नि.व.६ । वै.निघ.२भ.हिक्का.चि. । हरिताले । रा.नि.व.१३ ।

**काञ्चनः (कः)** । पुं । (Bauhinia variegata &c.) स्वनामख्याततरुचे । কাঞ্চন বৃক্ষ । प.मु.। हिं कचनार । मं कं कांचन्,कौचाने । तें देवकांचन । स त्रिविधः पीतरक्तश्वेतभेदेन । गुणाः—ग्राही रक्तपित्ते पथ्यश्च । राज. । See कोविदारः काञ्चनारः कर्बुदारश्च । चम्पकवृक्षे । नागकेशरवृक्षे । उदुम्बरवृक्षे । धुस्तूरवृक्षे । मी. । वै. निघ.शीतज्व.चि.शीतारिरसे । सु.सू.३८अ. । शालिजातिविशेषे । সুবর্ণশালি । भा.पू.१भ धान्यव. । See शालिः । श्वेतकाञ्चनवृक्षे । रत्ना. । कोविदारवृक्षे । मद.व.१ । शय्यां । सु.सू.३८अ. । पुन्नागवृक्षे । वै.निघ. ।

**काञ्चनकदली** । स्वर्णकदल्याम् । চাঁপা কলা । मं सोनकेल । कदलीविशेषे । কাঁচ্ কলা । रा.नि.व.११ ।

**काञ्चनकारिणी** । स्त्री। शतमूल्यां । श.च.।

**काञ्चनगुडिका** । स्त्री । गलगण्डाधिकारे । पाठः—"त्रिफलायास्त्रयो भागाः व्योषाच्च त्रिगणो मतः । तस्माच्च त्रिगुणं ज्ञेयं काञ्चनारस्य वल्कलम् । एकीकृते तु चूर्णेऽस्मिन् समो देयोऽत्र गुग्गुलुः । चौद्रं दद्याद्यथायोग्यं त्रिफलाचूर्णतो भिषक् । अ-क्व्यांसु गण्डमालासु गलगण्डे तथैव च ।" ত্রিফলা প্রত্যেকে ১ তো. করিয়া চূর্ণ ৩ তো., ত্রিকটু প্রত্যেকে ২ তো. করিয়া চূর্ণ ৬ তো., রক্তকাঞ্চনছাল চূর্ণ ১২ তো. গুগ্গুল সর্ব্ব সমান । रस.र. ।

**काञ्चनगैरिकम्** । क्ली । सुवर्णगैरिकधातौ । সোণা গেরি । सि.यो.हिक्का.श्वास.चि. । "तिक्ता-काञ्चनगैरिकम् ।" [निघ. ।

**काञ्चनपत्रिका** । स्त्री । क्षणमुषल्याम् । वै.

**काञ्चनपुष्पकम्** । क्ली । आढल्यक्षुपे । रा. नि.व.४ ।

**काञ्चनपुष्पिका** । स्त्री । पीताजात्याम् ।

**काञ्चनपुष्पी** । स्त्री । गणिकारिकायां । गणिकारीपुष्पवृक्षे स्वनाम्ना कोङ्कणे प्रसिद्धे । मं गणेरी। रा.नि.व.१० ।

**काञ्चनभूषा** । स्त्री । स्वर्णगैरिके । वै.निघ. ।

**काञ्चनमाक्षिकः** । पुं । स्वर्णमाक्षिके । महाद्रावके ।

**काञ्चनमोहनरसः** । पुं । गुल्माधिकारे रसः । पाठः—"मृतं सूतं मृतं ताम्रं काञ्चनं मर्द्दयेत्समं । अर्कवज्रीरसेनैव दिनान्ते वटकीकृतं । गुञ्जैकं गुड़संयुक्तं तथा गन्धसुवर्च्चलं । निष्कैकं गुल्मशान्त्यर्थं रसः काञ्चनमोहनः । विशाला कटुका मुस्तं कुष्ठमिन्द्रयवं समं । चूर्णयेद्देवदारुञ्च कर्षैकं मधुना लिहेत् ॥" রসসিন্দূর, তাম্রভস্ম ও স্বর্ণভস্ম সমভাগ । আকন্দরস ও সিজুর রসে মর্দ্দন । মাত্রা ১ রতি । रस.र. । [गोदन्तम् ।

**काञ्चनरसम्** । क्ली । हरितालविशेषे । See

**काञ्चनसूपः** । पुं । काञ्चननामक-द्विदलधान्यसाधितसूपे । तद्धान्यं सार्षपतैलेन उदर्च्य उष्णागुष्कात्तस्यास्त्वचौनां दालिकामादाय शीतोदकेन मन्दाग्नौ पचेत । वै.निघ. ।

**काञ्चनक्षीरी** । स्त्री । स्वर्णक्षीरिणीक्षुपे । क्षीरिण्यां । থিরুই, সোণাথিরুই । हिं चोक । मं पिसोरा । रा.नि.व.५ । पीतदुग्धद्रव्यक्षुपवत्तिक्तायां । सु.चि.९अ. । कङ्कुष्ठे । গিরিমাটীবিশেষ । च.द.गुल्म.चि. । "त्रिफला काञ्चनक्षीरी ।"

**काञ्चनाभ्ररसः** । पुं । यक्ष्माधिकारे रसः । र.सा.सं. । पाठः—काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकं । विद्रुममभया तारं कस्तूरी च मनःशिला । प्रत्येकं विन्दुमात्रञ्च सर्व्वं मर्द्यं प्रयत्नतः ॥ वारिणा वटिका कार्य्या द्विगुञ्जाफलमानतः । अनुपानं प्रयोक्तव्यं यथादोषानुसारतः ॥ नानारोगप्रशमनं सर्व्वोपद्रवसंयुतं । क्षयं हन्ति तथा कासं श्लेष्मपित्तज्वरं तथा ॥ विन्दुमात्रं कर्षमितं । স্বর্ণভস্ম, রসসিন্দুর, মুক্তাভস্ম, লৌহ, অভ্র, প্রবাল, হরীতকী, রৌপ্য, মৃগনাভি, মনছাল প্রত্যেকে ২ তোলা । জলে মর্দ্দন । रसा.सं. । वृहत्काञ्चनाभ्रः यथा – काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकं । विद्रुमं वैक्रान्तं तारं ताम्रञ्च वङ्गकम् ॥ कस्तूरिका लवङ्गञ्च जातिकोषैलवालुकाः । प्रत्येकं विन्दुमात्रञ्च सर्व्वं मर्द्यं प्रयत्नतः ॥ कन्यानीरे तु सम्मर्द्य केशराजरसेन च । अजाक्षीरेण सम्भाव्य प्रत्येकं दिवसत्रयम् ॥ चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् । अनुपानं प्रदातव्यं यथादोषानुसारतः ॥ স্বর্ণভস্ম, রসসিন্দূর, মুক্তাভস্ম, লৌহভস্ম, অভ্রভস্ম, প্রবালভস্ম, বৈক্রান্তভস্ম, রৌপ্য, তামা, বঙ্গ, মৃগনাভি লবঙ্গ, জয়িত্রী, এলবালুক প্রত্যেকে ২তো. । ঘৃতকুমারী, কেশুরের রস, ছাগদুগ্ধ প্রত্যেকে ৩ দিন মর্দ্দন । মাত্রা ৪ রতি । रस.र. ।

**काञ्चनारः (कः)** । पुं । (Bauhinia variegata &c.) Mountain ebony. रक्तकाञ्चनवृक्षे । हिं कचनार । मं कांचन । कं कोचाळि । गुणाः – कषायः संग्राही व्रणरोपणः दीपनः कफवातघ्नः मूत्रकृच्छ्रघ्नश्च । रा.नि.व १० । काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः । पुष्पं लघु स्मृतं, रूक्षं संग्राहि पित्तास्रप्रदरक्षयकासनुत् । भा.पू.१भ. । च.द.र.पि.चि. । See कोविदारः । श्वेतकाञ्चनवृक्षे । रत्ना. ।

**काञ्चनारगुग्गुलुः** । पुं । गण्डमालागलगण्डापच्यर्व्वुदादौ हितः । पाठः—"काञ्चनारस्य गृह्णीयात् त्वचं पञ्चपलोन्मितां । नागरस्य कणायाश्च मरिचस्य पलं पलं । पथ्याविभीतधात्रीणां पलमर्द्धं पृथक् पृथक् । वरुणस्याक्षमेकञ्च पत्रकैलात्वचां पुनः । टङ्कं टङ्कं समादाय सर्व्वाण्येकत्र चूर्णयेत् । यावच्चूर्णमिदं सर्व्वं तावानेवात्र गुग्गुलुः । सङ्कुट्य सर्व्वमेकत्र पिण्डं कृत्वा विधारयेत् ॥ मात्रा शाणमिता ।" রক্তকাঞ্চনছালচূর্ণ ৫ প. শুঁট, পিপুল, মরিচচূর্ণ প্রত্যেকে ১ প. হরীতকী, আমলা, বহেড়াচূর্ণ প্রত্যেকে ৪ তো. বরুণছালচূর্ণ ২ তো. গুড়ত্বক্, তেজপত্র, এলাচূর্ণ প্রত্যেকে ১ তো. । সর্ব্বচূর্ণ সমান গুগ্‌গুল একত্র মর্দ্দন করিবে । মাত্রা ॥০ তো. পর্য্যন্ত । भा. । [आरग्वधवृक्षे । वै.निघ. ।

**काञ्चनालः** । पुं । श्वेतकाञ्चनवृक्षे । र.मा. ।

**काञ्चनाह्वयः** । पुं । नागचम्पकवृक्षे । নাগেশ্বর চাঁপা । नागकेशरवृक्षे । अम. । पद्मकेसरे । वै.निघ. । [स्मा कोङ्कणे प्रसिद्धे । रा.नि.व.१० ।

**काञ्चनिका** । स्त्री । गणिकारीपुष्पवृक्षे स्वना-

**काञ्चनी** । स्त्री । हरिद्रायां । मे. । वै.निघ. अर्श चि. । गोरोचनायाम् । रा.नि.व.१२ । स्वर्णक्षीरिण्याम् । শিরুই । रा.नि.व.५।२३ ।

**काञ्चनीया** । स्त्री । हरितालि । म.चि. । गोरोचनायां । रा.नि.व.१२। [गुञ्जायां । वै.निघ. ।

**काञ्चिः** । स्त्री । रसनायां । চন্দ্রহার । उणा. ।

**काञ्चिकम्** । क्ली । काञ्जिके । কাঁজি । हे.च. ।

**काञ्ची** । स्त्री। गुञ्जायां। हे.च.। रसनायां। अम.।

**काञ्चीपदम्** । क्ली । जघनदेशे । हला. ।

**काञ्जिकम्** । क्ली । Sour gruel, the water of boiled rice in a state of spontaneous fermentation. स्वनामख्यातधान्याम्ले । কাঁজি । हिं मं कांजी । कुल्माषधान्यमण्डादिसंहितं काञ्जिकम् । शार्ङ्ग. । "आमधान्यं चोदितञ्च बालमूलञ्च खण्डशः । क्लृप्तं प्रस्थमितं पात्रं जलं तत्राढकं क्षिपेत् । तावत्सन्धाय संरक्षेद्यावदम्लत्वमागतम् । काञ्जिकं तत्तु विज्ञेयमेतत्सर्व्वत्र पूजितम् ॥" चर. । "तुलामितं षष्टिकतण्डुलस्य प्रगृह्य चान्नं विधिवद्विधाय । द्रोणेऽम्भसि क्षिप्तमथ त्रियामन्तत्सम रक्षेत् पिहितं प्रयत्नात् । तत्रैव कल्कं सकलं निरस्येत् तत्काञ्जिकं कथ्यत आरनालम् ।" अभि.११भ. । तत्र चुक्रसन्धानतुषोदकसौवीरकसुवीराम्लवर्ग्गिकगोधूमसौवीरयवसौवीरतुषसौवीरारनालधान्याम्लभेदेन बहुधा । गु-

णा:—भेदकं तीक्ष्णोष्णं पित्तशोधकं वस्तिशोधकं रुचिकरमाग्नेयं स्पर्शशीतलं श्रमक्लमहरञ्च। पुरातनं तत् स्वल्पाम्लकुलमिरोगघ्नं दीपनञ्चेति। राज.। तच्च भेदि लघु पाचनञ्च। अत्रि.११अ.। तीक्ष्णोष्णं भेदि पित्तहृत् स्पर्शशीतलं श्रमघ्नं रुच्यं दीपनं वाग्निशूलघ्नं वस्तिशूलघ्नं आस्थापनं हृद्यं लघु वातकफघ्नञ्च। वा.सू.। "काञ्जिकं वातशोफघ्नं पित्तघ्नं ज्वरनाशनं। दाहमूर्च्छाश्रमघ्नञ्च शूलाध्मानविबन्धनुत्॥" रा.नि.व.१५। "काञ्जिकं भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु। दाहज्वरहरं स्पर्शात्पानाद्वातकफापहं। माषादिवटकैर्यत्तु क्रियते तद्गुणाधिकम्। लघु वातहरं तत्तु रोचनं पाचनं परं। शूलाजीर्णविबन्धामनाशनं वस्तिशोधनं। शोषमूर्च्छाभ्रमार्त्तानां मदकण्डूविशोषिणां। कुष्ठिनां रक्तपित्तीनां काञ्जिकं न प्रशस्यते। पाण्डुरोगे यक्ष्मणि च तथा शोफातुरेषु च। क्षतक्षीणे तथा श्रान्ते मन्दज्वरनिपीड़िते। एतेषान्तु हितं प्रोक्तं काञ्जिकं दोषकारकम्॥" भा.। अत्रि.।

**काञ्जिकवटकः**। पुं। खाद्यद्रव्यविशेषे। काँजीबड़ा। तत्पाकप्रणाली यथा—"मन्थनी नूतना धार्य्या कटुतैलेन लेपिता। निर्म्मलेनाम्बुना पूर्य्या तस्यां चूर्णं विनिक्षिपेत्। राजिकाजीरलवणहिङ्गुशुण्ठीनिशाकृतं। निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत्। ततो दिनत्रयादूर्द्धमम्लाः सुवटका ध्रुवम्।" अयं रुच्यो वातघ्नः श्लेष्मकरश्च। भा.।

**काञ्जिकषट्पलघृतम्**। क्ली। आमवाते घृतम्। पाठः—"हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च। कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत्। आरणालाढ़कं दत्त्वा तत्सर्पिर्जठरापहं।......। घृत ४ श. काँजि १६श.। कल्क—हिং, শুঁট, পিপুল, মরিচ, চই এবং সৈন্ধব-লবণ প্রত্যেকে ১ প.। একত্র পাক। च.द.।

**काञ्जिका**। स्त्री। काञ्जिके। रा.नि.व.१५। लघुजीवन्त्याम्। पलाशीलतायाम्। रा.नि.व.३।

**काञ्जितैलम्**। क्ली। काञ्जिकविशेषे। गुणाः—"काञ्जिकं काञ्जितैलञ्च पलितं वातकारकं। दाहकं गात्रशैथिल्यं भक्षणाच्च च मर्द्दनात्॥" रा.नि.व.१५। [न दन्ती। र.मा.।

**काञ्जिपत्रिका**। स्त्री। क्षवदनीक्षुपे। का-

**काञ्जी**। स्त्री। महाद्रोणपुष्प्याम्। বড় ঘলঘাসা। रा.नि.व.५। काञ्जिके। अ.टी.। भार्य्यां। বামুনহাটী। र.मा.।

**काटुकम्**। क्ली। कटुतायाम्।

**काठः**। पुं। पाषाणे। त्रिका.।

**काठिनः**। पुं। खर्ज्जूरवृक्षे। [११।

**काठिन्यफलः**। पुं। कपित्थवृक्षे। रा.नि.व.

**काठोडुम्बरः**। पुं। काष्ठोदुम्बरिकायाम्। কাকডুমুর। र.सा.सं.कुष्ठ.चि.।

**काणः**। पुं। काके। त्रि। एकचक्षुषि। "काणः काकैकचक्षुषि।" मे.णद्विकं।

**काणकपोतः**। पुं। कपोतभेदे प्रतुदजातीये। गुणाः—"कषायः स्वादुलवणः गुरुः काणकपोतकः।" सु.सू.४६अ.। [रक्तरसौ।

**काणभागः**। पुं। त्रिभागे। भैष.कालाग्निभै-

**काणा**। स्त्री। काकोल्याम्। काकिन्याम्। पिप्पल्यां। च.द.दार्वादौ। "काणाह्वकिरात।"

**काण(णू)कः**। पुं। करटे। বাবুই। हंसभेदे। कुक्कुटे। वायसे। उणा.। [स्त्रियः पुत्रे।

**काणेयः (रः)**। त्रि। काणे। पुं। एकनेत्र-

**काण्डः**। पुं,क्ली। तरुप्रकाण्डे। গাছের গুঁড়ি। रा.नि.व.२। दीर्घास्थिनि। নলা হাড়। शरे। प.मु.। जले। मे.डद्विकं। धान्यनाले। हे.च.।

**काण्डकः**। पुं। वालुककर्कट्याम्। वै.निघ.।

**काण्डकटुकः**। पुं। कारवेल्लके। উচ্ছেগাছ। रा.नि.व.३। [नि.व.४। श्वेतापामार्गे। वै.निघ.।

**काण्डकण्टः (कः)** पुं। अपामार्गक्षुपे। रा.

**काण्डका(का)ण्डकः**। पुं। बदरीवृक्षे। वै.निघ.। काशतृणे। কেশে। रा नि.व.८।

**काण्डका**। स्त्री।(Cucumis utilissimus.) कराललिपुटायाम्। তেওড়া। वालुकीनामकर्कट्याम्। अलाब्वाम्। रा.नि.व.१६।

**काण्डका(की)रम्**। क्ली। गुवाके। श.मा.।

**काण्डकीलकः**। पुं। The tree called symplocos Recemosa. लोध्रद्रुमे। रा.नि.व.६।

ष्टगुणजलेन पक्वा चतुर्थांवशेष: कार्य्य: । सा.कौ.। अथ: रसायनाधिकारे । पाठ:—"द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत्। पारदं पलमानेन मृतशुल्लायसी पुन:। तेन मानेन सम्मिश्र पश्चा-त्कुलदले क्षिपेत्। ततो विचूर्ण्य यत्नेन ज्वालये-न्मृदुनानलम् । पात्रमात्रं रसं सम्यक् जम्बीरस्य प्र-योजयेत्। सचूर्णं पञ्चकोलोत्थै: कषायै: चाम्ल-वेतसै: । भावना खलु दातव्या: पञ्चाशत्प्रमिताश्च या । भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् । तद-र्द्धकृष्णलवणं सर्व्वतुल्यं मरीचकं । सप्तधा भावये-त्पश्चाद्दणकक्षारवारिणा । तत: संशोष्य कूप्यान्तु जठरे न विनिक्षिपेत् ॥" रस र.। पूर्व्वस्य पाठान्त-रमेव ज्ञेयम् । रसायनाधिकारे उक्त: ।

**क्रव्यादा (दी)** । स्त्री । जटामांस्याम् । रा. नि.व.१२ ।

**क्रश्रिमा** । पुं । क्रशतायाम् ।

**क्रशीयान्** । त्रि । अतिकृशे । क्षीणे ।

**क्रान्त:** । पुं । वैकान्तमणौ । घोटके । त्रिका ।

**क्रान्ता** । स्त्री । बृहत्याम् । विकृतौ । स्थूलैला-याम् । रा.नि.व.४।६ ।

**क्रान्ति:** । स्त्री । सूर्य्यगत्यर्थं खगोलमध्यस्थति-र्य्यग्गोलरेखायाम् । सूर्य्यसि. ।

**क्रान्तु:** । पुं । पक्षिणि । उणा. ।

**क्रामक:** । पुं । क्रमुकमूले । গুপারিমূল । र. सा.सं.लौहपुटपाके । [सं. ।

**क्रामण:** । पुं । टङ्कणक्षारे । সোহাগা । र.सा.

**क्रिमि:** । पुं । कृमौ । रत्ना. । लाक्षायाम् । रो-गविशेषे । क्रमौ । कीटे । अ.टी.भ.। [८अ. ।

**क्रिमिकर:** । पुं । प्राणहरकीटभेदे । सु.कल्प.

**क्रिमिकर्णक:** । पुं । कर्णस्रोतोगतरोगवि-शेषे । कर्णाभ्यन्तरे मांसशोणितपचनात् क्रिमिरु-त्पद्यते । मक्षिकाभिर्डिम्बप्रसवेन वा । কাণকো-টারি । मा.नि. । [क्रिमिग्रन्थि: ।

**क्रिमिग्रन्थि:** । पुं । सन्धिजनेत्ररोगे । See

**क्रिमिघ्न:** । पुं । कोलकन्दो नाम महाकन्द-शाके । रा.नि.व.७ । See क्रमिघ्न: । क्ली । विड-ङ्गे । अ.टी.र. ।

**क्रिमिघ्ना (घ्नी)** । स्त्री । विडङ्गे । हरिद्रा-याम् । लाक्षायाम् । वै.निघ. । धूम्रपत्रायाम् । তামাক । रा.नि.व.५ । सोमराज्याम् । श.च. ।

**क्रिमिदन्तक:** । पुं । क्रमिजदन्तरोगविशेषे । यत्र दन्ते कृष्णच्छिद्रं चलत्वं दन्तमूले शोथो वेदना लालास्रावोऽकस्माद्वेदनाधिक्यञ्च भवति । मा.नि. । सु.नि.१६अ. । See क्रमिदन्त: ।

**क्रिमिरिपु: (शत्रु:)** । पुं । विडङ्गे । सा. कौ.बाहशालगुडे । प्रवाले । पालिधाद्वृक्षे । श.च.।

**क्रिमिशात्रव:** । पुं । A fetid mimosa. (M. farnesiana.) विट्खदिरे । श.च. ।

**क्रिमिशिरोरोग:** । पुं । क्रमिजशिरोरोगे । लक्षणम्—"निस्तुद्यते यस्य शिरोऽतिमात्रं सम्भक्ष्य-माणं स्फुरतीव चान्त: । घ्राणाच्च गच्छेत्सलिलं स-पूयं शिरोऽभिताप: क्रमिभि: स घोर:॥" मा.नि.।

**क्रिमिशैल:** । पुं । वल्मीके । त्रिका. ।

**क्रिमिहरम्** । क्ली । मरिचे । विडङ्गे । कृष्ण-लवणे । वै.निघ. । त्रि । क्रमिघ्ने ।

**क्रिया** । स्त्री । चिकित्सायाम् । रा.नि.व.२० । "या ह्युदीर्णं शमयति नान्यं व्याधिङ्करोति च । सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥" भा. । उपाये । चेष्टायाम् । आरम्भे । सम्प्रधारण-कर्म्मणि । मे. ।

**क्रियाक्रम:** । पुं । चिकित्सोपक्रमे ।

**क्रियातियोग:** । पुं । वमनाद्यतियोगे । भा. म.३ख.काश.चि. । [योज्यवस्तिषु । च. ।

**क्रियावस्ति:** । स्त्री । वमनादिपञ्चकर्म्मसु प्र-

**क्रियासाधनम्** । क्ली । चिकित्सासाधने ।

**क्रियेन्द्रियम्** । क्ली । कर्म्मेन्द्रिये । वाक्पा-ण्यादिषु । हे.च. ।

**क्रीडारत्नम्** । क्ली । मैथुने । त्रिका. ।

**क्रुङ् (ञ्च:)** । पुं । बकपक्षिणि । बक । रत्ना.।

**क्रुत् (धा)** । स्त्री । क्रोधे । রাগ । अम. ।

**क्रुश्वा** । पुं । शृगाले । उणा. ।

**क्रूर:** । पुं । श्वेतकहत्त्वे । হেঁচেতা গাছ । रक्त-करवीरवृक्षे । कङ्कपक्षिणि । रा.नि.व.८।१०।१९ ।

कृष्णधुस्तूरे । श्वेतपुनर्नवायाम् । भक्ते । ভাত । त्रिका. ।

**क्रूरकः** । पुं । रक्तपुनर्नवायाम् । रा.नि.व.६ ।

**क्रूरकर्म्मा** । स्त्री । कुटुम्बिनीनाममहाक्षुपे । रा.नि.व.५ । अर्कपुष्पीक्षुपे । भा.पु.१भ. । त्रि । नृशंसाचारिणि ।

**क्रूरगन्धः** । पुं । गन्धके । रा.नि.व.१३ ।

**क्रूरगन्धा** । स्त्री । कन्थारिवृक्षे । रा.नि.व.८ ।

**क्रूरदर्शना** । स्त्री । श्वेतकाकमाच्यां । वै.निघ. ।

**क्रूरधूर्त्तः** । पुं । कृष्णधुस्तूरे । रा.नि.व.१० ।

**क्रूररवः** / **क्रूररावी** । पुं । काके । कर्करेट पक्षिणि । वै.निघ. । द्रोणकाके । रा.नि.व.१९ ।

**क्रूरलोचनः** । पुं । शनैश्चरे । हारा. ।

**क्रूरवः** । पुं । शृगाले । वै.निघ. ।

**क्रूरा** । स्त्री । रक्तपुनर्नवायाम् । रा.नि.व.५ ।

**क्रूरालापी** । स्त्री । द्रोणकाके । वै.निघ. ।

**क्रोञ्चः** । पुं । क्रौञ्चपक्षिणि । वै.निघ. ।

**क्रोड़म्** । क्ली । उत्सङ्गे । কোল । रा.नि.व.१८ ।

**क्रोड़ः (कन्या)** । पुं, स्त्री । वाराहीनाम महाकन्दशाके । रा.नि.व.७ । वनवराहे । रत्ना. ।

**क्रोड़कन्दः** । पुं । वाराहीकन्दे । वै.निघ. ।

**क्रोड़कशे(से)रुः (कः)** । पुं । भद्रमुस्तायाम् । वै.निघ. । [कुड़ि । रा.नि.व.५ ।

**क्रोड़चूड़ा** । स्त्री । मण्डूकपर्ण्याम् । বড় থুল-

**क्रोड़पर्णी** । स्त्री । कण्टकारिकायाम् । श.च. ।

**क्रोड़पादः** । पुं । कच्छपे । हे.च. ।

**क्रोड़पुच्छी** । स्त्री । पृश्निपर्ण्याम् । वै.निघ. ।

**क्रोड़ा (ड़ी)** । स्त्री । वाराहीकन्दे । रा.नि.व.७ ।

**क्रोड़ाङ्घ्रिः** । पुं । कच्छपे । त्रिका. ।

**क्रोड़ीकन्या** । स्त्री । वाराहीकन्दे । वै.निघ. ।

**क्रोड़ीमुखः** । पुं । गण्डके । গণ্ডার । रा.नि.व.१९ ।

**क्रोड़ेष्टा** । स्त्री । मुस्तायाम् । रा.नि.व.६ ।

**क्रोथः** । पुं । हनने । हे.च. ।

**क्रोधः** । पुं । कोपे । स च वातपित्तशोणितकोपनः । "क्रोधशोकौ स्मृतौ वातपित्तरक्तप्रकोपनौ ।" विदेहः ।

**क्रोधजः** । पुं । मोहे । गीता. ।

**क्रोधज्वरः** । पुं । क्रोधजन्यज्वरे ।

**क्रोधनः** । त्रि । क्रोधयुक्ते । हे.च. ।

**क्रोधना** । स्त्री । ग्रन्थिपर्णीलतायाम् । वै.निघ. ।

**क्रोधमूर्च्छितः** । पुं । चोरानामकगन्धद्रव्ये । श.र. । त्रि । अतिक्रुद्धे । [द्धे ।

**क्रोधी** । पुं । महिषे । रा.नि.व.१९ । त्रि । क्रु-

**क्रोशः** । पुं । ४००० हस्तपरिमाणे । ১ ক্রোশ ।

**क्रोष्टपुच्छिका** । स्त्री । पृश्निपर्ण्यां । वै.निघ. ।

**क्रोष्टा (ष्टुकः)** । पुं । शृगाले । शृगालकोल्यां । শেয়াকুল । प.मु. ।

**क्रोष्टुकपुच्छका (च्छिका, च्छी) (मूलिका) (मेखला)** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া, রামবাসক । रा.नि.व ४ । गोलोमिकायां । हिं पाथरी गोधूमी । रा नि.व.५ ।

**क्रोष्टु(क)शीर्षः** । पुं । तन्नामकवातव्याधिविशेषे । लक्षणम्—"वातशोणितजः शोथो जानुमध्ये महारुजः । ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥" मा.नि.वा.व्या.चि. । "गुग्गुलुं क्रोष्टुशीर्षे तु गुड़ूचीं त्रिफलाम्भसा । क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारुकम् ॥" वै.निघ. । [व.१ ।

**क्रोष्टुघण्टिका** । स्त्री । अस्थिसंहारके । मद.

**क्रोष्टुफलः** । पुं । इङ्गुदीवृक्षे । रा.नि.व.८ ।

**क्रोष्टुविन्ना** । स्त्री । पृश्निपर्ण्याम् । र.मा. । वृक्षविशेषे । রামবাসক । विड़ालकाञि, विड़ालछाँचीति यस्याः प्रसिद्धिः । च.टी.भ. । [ना ।

**क्रोष्टुहितः** । पुं । चोरानामगन्धद्रव्ये । গেঁঠে-

**क्रोष्टूः** । स्त्री । हस्तिकाख्यां । বিছাতী । प.मु. ।

**क्रोष्टेक्षुः** । पुं । पुण्ड्रकेक्षौ, श्वेतेक्षौ । रा.नि.व.१४ ।

**क्रोष्टी** । स्त्री । शुक्लभूमिकुष्माण्डे । अम. । लाङ्गलिकायाम् । शृगाल्याम् । पिप्पल्याम् । मे. । वाराहीकन्दे । रा.नि.व.७ । हस्तिकाल्याम् । रत्ना. ।

**क्रौञ्चः (कः)** । पुं । A kind of heron. (Ardea jaculator.) बकजातीयबकपक्षिणि । (কোঁচবক । अम. । गुणाः—ज्वरे हितः । च.द.। "क्रौञ्ची वृष्योऽतिवचिकृदश्मरीं हन्ति नित्यशः । शोषमूर्च्छाहरी बल्यो हन्ति कासमरोचकम् ॥" अत्रि.२१अ. । पद्मबीजे । वै.निघ. । कुररपक्षिणि । रा.नि.व.१ ।

**क्रौञ्चनायकः** । पुं । पद्मबीजे । वै.निघ. ।

**क्रौञ्चलोहितम्** । क्ली । हिङ्गुले । वै.निघ. ।

**क्रौञ्चा** । स्त्री । पद्मबीजे । रा.नि.व.१० । क्रौञ्चस्त्रियाम् । जटा. । गुणः—अश्मरीशुक्रदोषघ्नी । अत्रि.२१अ. ।

**क्रौञ्चादनः** । पुं,क्ली । मृणाले । हारा. । पिप्पल्याम् । श.र. । घेञ्चुलके । (ঘেঁচু । च.चि.३अ.। चिञ्चोटके । (চেঁচ্‌কো। मे. । [रा.नि.व.१० ।

**क्रौञ्चादनी** । स्त्री । पद्मबीजे । পদ্মের বীজ ।

**क्लमः** । पुं । क्लान्तौ । लक्षणं—"यो ऽनायासश्रमो देहे प्रवृद्धः श्वासवर्ज्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥" वैद्यकम् ।

**क्लमथः** । पुं । आयासे । अम. ।

**क्लान्तः** । त्रि । श्रान्ते ।

**क्लान्तिः** । स्त्री । क्लमे ।

**क्लिन्नः** । त्रि । आर्द्रे । ভিজে । अम. ।

**क्लिन्नवर्त्मा** । पुं । क्लिष्टवर्त्मरोगे ।

**क्लिन्ना** । स्त्री । श्वेतकण्टकार्य्याम् । रा.नि.व.४ ।

**क्लिन्नाक्षः** । त्रि । Blear-eyed. श्लेष्मादिना क्लिन्नचक्षुषि । পিচুটিওয়ালা। क्ली (चि) । क्लिन्ननेत्रे । अम. ।

**क्लिशितः (क्लिष्टः)** । त्रि । क्लेशयुक्ते । अम.।

**क्लिष्टवर्त्म** । पुं,क्ली। Excess of the lachrymal discharge. तन्नामकश्लेष्मरक्तजनेत्रवर्त्मजरोगे । लक्षणं—वर्त्मद्वयम् अकस्मात् मृदु अल्पवेदनं ताम्रं रक्तवर्णञ्च भवेत् । "मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च । अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥" मा.नि. । "श्लेष्मरक्तेन दुष्टेन क्लिष्टं मांसमिवोन्नतं । बन्धुजीवनिभं वर्त्म क्लिष्टवर्त्म तदुच्यते ॥" विदेहः ।

**क्लिष्टिः** । स्त्री । क्लेशे । सेवायाम् । धरणि. ।

**क्लीतः** । पुं । अग्निप्रकृतिकीटे । तेन दष्टे पित्तजरोगा जायन्ते । सु.कल्प.८अ. ।

**क्लीतकम्** । क्ली । यष्टिमधुनि । प.मु. । भा.म.४भ.कर्णरोग.चि.। "शिवाक्लीतकं राजवर्त्तम् ।" भा.म १भ.रक्तष्ठीवीज्व.चि. । "क्लीतकनिम्बयुतं परिपक्वम् ।" A kind of plant with poisonous root. (Glycyrrhiza Glabra.) नीलमूलयष्टिमधुनि । इदं स्थावरविषान्तर्गतमूलविषम् । सु.कल्प.२अ. ।

**क्लीत(ति)का (तनी)** । स्त्री । नीलीवृक्षे । रा.नि.व.४ । पृश्निपर्ण्याम् । वै.निघ. ।

**क्लीतन(नीय)(क)म्** । क्ली । जलजयष्टिमधुभेदे । वल्ली यष्टिमधु । जलजस्थलजभेदेन सा द्विधा । गुणाः—मधुरं वृष्यं बल्यं वृष्यं व्रणघ्नं शीतलं गुरु चक्षुष्यं रक्तपित्तघ्नम् । रा.नि.व.६ । भा. ।

**क्लीवः** । त्रि । Impotent. बलहीने । रत्ना. । पुं, क्ली । स्त्रीपुरुषेतरे । নপুংসক, হিজড়ে । लक्षणं -"क्लीवः स्यात्सुरताशक्तः तद्भावः क्लैव्यमुच्यते ।" भा. । [त्रि । आर्द्रे ।

**क्लेदः (कः)** । पुं । शरीरार्द्रतायाम् । कफे ।

**क्लेदनः** । पुं । चतुरंशावशिष्टकषाये । "क्लेदनस्तुरंशकः ।" रा.नि.व.२०। कफभेदे । तस्य स्थानमामाशयः तत्कर्म चान्नपाकः श्लेष्मस्थानानामुदककर्मणाऽनुग्राहकश्च । भा. । त्रि । क्लेदजनने ।

**क्लेदा (दुः)** । पुं । चन्द्रे । सन्निपाते । उणा. ।

**क्लेशः** । पुं । दुःखे । क्रोधे । व्यवसाये । मे ।

**क्लैततिकम्** । क्ली । मद्यविशेषे । श.च. ।

**क्लैव्यम्** । क्ली । Absence of virility. पुरुषकारहीनत्वे, स्त्रीपुंभिन्नत्वे, ओजःप्रभृतिधातुक्षयरूपाधैर्य्ये । तच्च षड्विधं मानसजं, धातुक्षयजं, शुक्रक्षयजं, उपघातजं, सहजं, स्थिरशुक्रजञ्चेति । तत्र रिरंसोरप्रियभावात् द्वेष्यस्त्रीसंयोगाच्च दुःखं मानसम् । कटुक्षारलवणातिसेवनात् सौम्यधातुक्षयरूपं धातुक्षयजम् । वाजीकरणं विनातिस्त्रीसेवाजन्यं शुक्रक्षयजम् । वीर्यवाहिशिराच्छेदात् शुक्रवहकार्य्याघातजन्यम् उपघातजम् । आजन्मक्लै-

ष्यात् सहजम् । अतिबलिष्ठस्य मदविकाराश्चित्तविकारि ब्रह्मचर्य्येण वा शुक्रे बद्धे स्थिरशुक्रजं क्लैव्यं भवति । तदुक्तम्—"तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते । ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते । द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ॥ कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः । सौम्यधातुक्षयो दृष्टः क्लैव्यं तदपरं स्मृतम् ॥ अतिव्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥ महता मेढ्ररोगेण मर्म्मच्छेदेन वा पुनः । क्लैव्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजम् ॥ जन्मप्रभृति यः क्लीवः क्लैव्यं तत्सहजं स्मृतम् । बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्य्यतः । षष्ठं क्लैव्यं मतं तत्तु स्थिरशुक्रनिमित्तजम् ॥" सु. चि.२६अ. । तत्र उपघातजं सहजञ्चासाध्यं ज्ञेयम् । इतरेषां हेतुविपर्य्ययः वाजीकरणञ्च पथ्यम् ।

**क्लोमन्** । क्ली । Bladder. पिपासास्थाने फुस्फुसे । तच्च हृदयाधो दक्षिणभागस्थम् । (ফাফরা, ফুলফরা, ফুস্ফুসি । सु.शा.५अ. । भरत. । "अधस्तु दक्षिणे भागे हृदयात्क्लोम तिष्ठति । जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम् ॥" भा. । बाह्वोर्द्वयोर्मध्ये वक्षः तन्मध्ये हृदयं तत्पार्श्वे क्लोम पिपासास्थानमिति वैद्याः । मस्तिष्के । रा.नि.व.१८।

**क्वङ्गुः** । पुं । कङ्गौ । हे.च. । [त्रिका. ।

**क्वणनः** । पुं । जलाधारविशेषे । ছোট হাঁড়ি।

**क्वणितेक्षणः** । पुं । गृध्रे । वै.निघ. ।

**क्वथनम्** । क्ली । क्वाथकरणे ।

**क्वथिका** । स्त्री । क्वाथे वै.निघ. ।

**क्वथितः** । त्रि । पक्वे, सृते (पाचनादौ) । प. प्र. । क्ली । माधवीमद्ये । क्वाथे, कषाये ।

**क्वथितजलम्** । क्ली । उष्णोदकमिति पारिभाषिकं नाम । तच्चिविधं—पादावशेषं अर्द्धावशेषं त्रिपादावशेषञ्चेति । गुणाः—पादावशेषं कफघ्नं लघ्वग्नेयं, अर्द्धावशेषं पित्तघ्नं, त्रिभागावशेषञ्च वातघ्नमिति । एवमेव पादावशेषं वसन्ते, अर्द्धावशेषं शरदि ग्रीष्मे च, त्रिपादावशेषं हेमन्ते शिशिरे च प्रशस्तं । अष्टभागशिष्टं वर्षायां प्रशस्तं । "क्वाथ्यमानन्तु निर्वेगं निष्फेनं निर्मलञ्च यत् । तत्तोयं क्वथितं ज्ञेयं दोषघ्नम्पाचनं लघु ॥" वैद्यकम् ।

**क्वथितद्रव्यम्** । क्ली । अरिष्टे । वै.निघ. ।

**क्वाथः** । पुं । दुःखे । व्यसने । हे.च.। Decoction. कषाये । स सप्तधा —पाचन-शोधन क्लेदन-संशमन-दीपन-तर्पण-शोषणभेदेन । तेषु अर्द्धावशेषः पाचनः, द्वादशांशकः शोधनः, चतुरंशकः क्लेदनः, अष्टांशकः संशमनः, षड़ंशको दीपनः, पञ्चमांशकस्तर्पणः, शोषणश्च षोड़शांशकः इति । रा.नि.व.२० । 'क्षुस्सद्रव्यस्य पलं, वारि (द्रव्यापेक्षया) षोड़शगुणं मृत्पात्रे मृद्वग्निना अष्टभागावशेषितः क्वाथः । "पानीयं षोड़शगुणं क्षुस्से द्रव्यपले क्षिपेत् । मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् । तज्जलम्पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् । शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ॥ क्वाथे क्षिपेत्सितामंशैः चतुरष्टकषोड़शैः । वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥" क्वाथे जीरकगुग्गुलुक्षारलवणशिलाजतुहिङ्गुत्रिकटुकानां प्रक्षेपे उक्तं शाणमितं (४মাষা) ग्राह्यम् । शार्ङ्ग.म.२ अ. । तथाचोक्तं -"पाचनो दीपनीयश्च शोधनः शमनस्तथा । तर्पणः क्लेदनः शोषः क्वाथः सप्तविधोत्तमः ॥ पाचनः पचते दोषान्दीपनैर्दीप्यतेऽनलः ॥ शोधनो मलशोधी स्यात् शमनः शमते गदान् ॥ तर्पणस्तर्प्यते धातून् क्लेदी ह्रत्क्लेदकारकः । विशोषी शोषमादत्ते तस्मात् क्वाथान्परीक्षयेत् ॥ विशोषिक्लेदिनौ ज्ञात्वा वमनं कारयेद्बुधः । पाचनोऽर्द्धावशेषः स्याच्छोधनोऽर्द्धरसांशकः । क्लेदनश्चतुरंशश्च शमनोऽष्टावशेषितः ॥ दीपनीयो दशांशस्तु तर्पणस्तु षड़ंशकः । विशोषी षोड़शांशश्च क्वाथभेदाः प्रकीर्त्तिताः ॥ पाचयेदातुरं सायं पाचनं समर्मेऽहनि । शमनेनाथ वा दृष्ट्वा निरामं समुपाचरेत् ॥ निशासु पाचनो देयो ज्ञात्वा दोषबलाबलम् । तत्सन्नवज्वरे पीतः दोषकृन्न च दोषहृत् ॥ क्वाथपाने क्लमो मूर्च्छा वैक्लव्यं वा शिरोव्यथा । यदा सञ्जायते चाशु वामयेद्रोगिणं तथा ॥ षोड़शाष्टचतुर्भागं वातपित्तकफार्त्तिषु । क्षौद्रं कषाये दातव्यं विपरीताच्च शर्करा॥" आत्रेय.। "जरकोषणगुग्गुल्वादि शाणिकं हिङ्गु माषिकं । गुड़क्षीरसितादीनां कर्षं क्वाथे विनिक्षिपेत् । नस्येषु च प्रक्षेप्तव्यं माषिकं हिङ्गुसैन्धवम् ॥" कश्यप. । व्योषं शिलाजतु क्षारं लवणं हिङ्गु जीरकं । क्षिपेद्दर्क्षितं क्वाथे तैलक्षीरं घृतं गुड़म् ॥ पूर्व्वाह्णे शमनो देयो-

ऽपराह्णे दीपनस्तथा। तर्पणश्चीतक्लेदनश्च कल्ये पानाय दापयेत्। निशीथे शोषणो देयः श्लैष्मिके प्रथमेऽहनि। दद्यात् सूर्य्योदयात्पूर्व्वं शोधनीयं भिषक्तमः॥ वरमाशीविषं नैव क्वथितं ताम्रभाजने। पीतमल्यग्निसन्तप्ता भक्षिता वा पयोगुड़ाः॥" सुश्रु.। वमनार्थं ताम्रपात्र प्रसिद्धं। प्रक्वाथ्य शीतो निर्य्यूहः पुनस्तप्तो भवेद्यदि। पानीयं वा पुनस्तप्तं विषवद्घ्नन्ति मानवम्॥ घृतं तैलञ्च पानीयं कषायं व्यञ्जनादिकं। जलस्नेहौषधानाञ्च प्रमाणं यत्र नोदितं। यत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम्॥ स्नेहाच्चतुर्गुणं द्रव्यमादाय स्नेहसन्निधौ। चतुर्गुणं जलं दत्त्वा क्वाथः क्वाथ्यसमो मतः॥ स्नेहाच्चतुर्गुणं क्वाथ्यं क्वाथ्यात्तोयं चतुर्गुणम्। क्वाथः क्वाथ्यसमः कार्य्यः कल्कश्च स्नेहपादिकः। इत्येषा स्नेहपाकार्थमुक्ता क्वाथस्य कल्पना॥" चरक.।

**क्वाथोद्भवम्** । क्ली। कर्परीतुत्थके, कृत्रिमरसाञ्जने, कुलत्थाञ्जने। अम.।

**खम्** । क्ली। अभ्रधातौ। अभ्र। रा.नि.व.१३। इन्द्रिये। मे.। [टी.रा.।

**खक्खटः** । पुं। खड़िकायाम्। খড়ীমাটী। अ.

**खखासः** । पुं। वृक्षभेदे। পুস্ত গাছ। प्रयोगा.उ.मा.चि.मदनरसे।

**खखोल्कः** । पुं। सूर्य्ये। वै.निघ.।

**खगः** । पुं। पक्षिणि। मे.। चक्रवाकपक्षिणि। पारदे। वै.निघ। शलभे। अ.टी.भ.।

**खगमः** । पुं। पक्षिणि।

**खगवक्त्रः** । पुं। लकुचवृक्षे। श.च.।

**खगशत्रुः** । पुं। पृश्निपर्ण्याम्। श.च।

**खगस्थानम्** । क्ली। वृक्षकोटरे। श.च.।

**खगान्तकः** । पुं। धूम्राटपक्षिणि। ফিঙে। वै.निघ.। श्येनपक्षिणि। বাজ পাখী, শিক্‌রে। रा.नि.व.१९।

**खगेन्द्रः** । पुं। गृध्रे। वै.निघ.।

**खगो(ग्ग)ड़ः** । पुं। A kind of reed (Saccharum spontaneum.) स्वनामख्याततृणविशेषे। খাগড়া, কষাড়, কেশে। र.मा.।

**खग्गटः** । पुं। कोकिलाक्षवृक्षे। কুলেখাড়া গাছ। वै.निघ.।

**खङ्गाहः** । पुं। खुङ्गाहापरनाम्नि श्वेतपीताश्वे। "खुङ्गाहः श्वेतपीतकः।" ज.द.२अ.।

**खचमसः** । पुं। चन्द्रे। त्रिका.।

[illegible]ट: । पुं। पक्षिणि। वायौ। सूर्य्ये। वै.निघ.।

**खजः (कः)** । पुं। दर्व्व्याम्। হাতা। अ.टी.भ.। मन्थनदण्डे। মউনি। हे.च.। सि.यो.यक्ष्म.चि.।

**खजपम्** । क्ली। घृते। उणा.।

**खजलम्** । क्ली। तुषारे। শিশির। त्रिका.। आकाशजले। तत्तु अगस्त्योदयात्प्राक् न सेव्यम्। यथा—"वर्षासु चरन्ति घनैः सह्योरगाः वियति कीटलूताश्च। तद्विषजुष्टमपेयं जलमगस्त्योदयात् पूर्व्वम्॥" राज.।

**खजा (का)** । स्त्री। दर्व्व्याम्। হাতা। अम.। मन्थे। মওনা। हे.च.। मारणे। श.र.।

**खजाकः** । पुं। पक्षिणि। उणा.।

**खज्योतिः** । पुं। खद्योते। रा.नि.व.१९।

**खञ्जः (कः)** । पुं। वायुरोगभेदे। तल्लक्षणं यथा—"वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा। खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात्॥" मा.नि.। त्रि। विकलगतौ। খোঁড়া। अम.। [रा.नि.व.१९।

**खञ्जकारिः** । पुं। सुद्भायाम्। খেঁশারি।

**खञ्जखेटः (लः)** । पुं। खञ्जनपक्षिणि। श.मा.। त्रिका.।

**खञ्जनः (कः)** । पुं। A species of wagtail. (Montacilla alba.) स्वनामख्यातपक्षिणि। চাতক পাখী। श.मा.। गुणाः—श्लेष्मपित्तघ्नो लघुः रूक्षः विबन्धघ्नश्च। राज.।

**खञ्जना (निका)** । स्त्री। क्षुद्रखञ्जनजातौ छापुच्छिकायाम्। क॰।খোঁচা। मे.।

**खञ्जनाकृतिः** । पुं । खञ्जनायाम् । श.च. ।

**खञ्जरीटः** । पुं । खञ्जनपक्षिणि । अम. ।

**खटः** । पुं । कफे । कत्तृणे । टङ्के । हे.च. ।

**खट(टि)कः** । पुं । कुब्जितपाणौ । मुठो । श.मा. । [गाले । वै.निघ. । त्रि । भञ्जके ।

**खटखादकः** । पुं । काके । काचपात्रे । श-

**खटालः** । पुं । तण्डुलीयशाके । काँटानटे । वै.निघ. ।

**खटिका (टिनी)** । स्त्री । कठिन्यां । थड़ि। कर्णरन्ध्रे । गन्धवीरणे । विश्व. । रा.नि.व.१३ । खड़ीत्यपि । वै.निघ. ।

**खटी** । स्त्री । Chalk. कठिन्याम् । थड़ि, चाथड़ि । हिं खरी, गौरखरी । गुणाः—मधुरा तिक्ता शीतला पित्तदाहव्रणदोषघ्नी कफरक्तनेत्ररोगहरी च । रा.नि.व.१३ । "खटिका दाहजिच्छीता मधुरा विषशोथजित् । लेपादेतद्गुणा प्रोक्ता भक्षिता मृत्तिकासमा । खटी गौरखटी हे च गुणैस्तुल्ये प्रकीर्त्तिते ॥" भा.पू.१भ. ।

**खट्टनः** । त्रि । खर्व्वे । हे.च. ।

**खट्टा** । स्त्री । खट्वायाम् । थाट । श.च. ।

**खट्टाशः (शी) (सः)** । पुं, स्त्री । The civet or zebet cat. (Viverra zibetha.) सुगन्धमार्ज्जारे । यस्याङ्गेन तैलं सुवासितं क्रियते । गन्धगोकुल, खटाश । त्रिका. । जटा. । तस्याङ्गं खाटाशी इति उच्यते । तद्वक्षशुद्धिर्यथा —"यथालाभमपामार्गस्नुह्यादिक्षारलेपितं । वाष्पस्वेदेन संस्वेद्य पूतिं निर्लोमतां नयेत् । दोलापाकं पचेत्पश्चात्पञ्चपल्लववारिणि । खलः साधुभिर्वात्योत्य ततो निःस्नेहतां नयेत् । आजशोभाञ्जनजलैः भावयेच्च पुनः पुनः । शिग्रुमूलेन केतक्याः पुष्पपत्रैः पुटेच्च तम् । पचेदेवं विशुद्धस्य मृगनाभिसमो भवेत् ॥ स च हनी मांसलश्च प्रशस्तः ।" खट्टाशम् अपामार्गस्य स्नुह्या वा क्षारेण संलिप्य वाष्पस्वेदेन लोमरहितं कृत्वा आम्रजम्बूकपित्थमातुलुङ्गबिल्वपल्लवजले दोलापाकेन पक्त्वा निःस्नेहं विधाय च छागमूत्रेण शोभाञ्जनक्वाथेन वा पुनः पुनः भावयेत् । अथ शिग्रुमूलेन केतकीपुष्पपत्रैः संपुटीकृतः शुद्धो मृगनाभिसमो भवति । च.द. । भैष वा.व्या. चि. । [मा. । महिषीक्षीरफेने ।

**खट्टिकः** । पुं । शाकुनिके । पाथीमारा । श.

**खट्टिका** । स्त्री । क्षुद्रखट्टायाम् । त्रिका. ।

**खट्टेरकः** । त्रि । खर्व्वे । श.मा. ।

**खट्वा** । स्त्री । पर्य्यङ्के । तत्र शयनं वातकरमिति। राज. । हनुशङ्खगण्डेषु व्रणबन्धनाकृतिविशेषे । सु. सू.१८श. । तृणविशेषे । वै.निघ. । कोलशिम्ब्याम् । आलकुशी । रा.नि.व.३ ।

**खट्वाङ्गनाम(मि)का** । स्त्री । वटपत्रपाषाणभेदे । बड़ पाथरकुचा । रा.नि.व.५ ।

**खट्वाङ्गपादी** । स्त्री । कोलशिम्ब्याम्। आलाकुशी । वै.निघ. ।

**खट्वाबन्धः** । पुं, क्ली । व्रणबन्धनाकृतिविशेषे । तल्लक्षणं—"खट्वा तु बहुपादा स्याच्चीराभिर्बहुभिर्हता ।" सु.ङ. ।

**खड़ः (कः)** । पुं । लघुतृणे । श.र. । खड़यूषे ।

**खड़यूषः** । पुं, क्ली । यूषविशेषे । यथा—तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वं खड़यूषोऽयं···। च.द.ग्र.सा.चि. । तक्रं ८ तो. जलं २४ तो. कपित्थादीनां तोलकद्वयं पादावशिष्टक्वाथ्यम् । अन्यत्—"मुद्गयूषरसं तक्रं धान्यजीरकसंयुतं । सैन्धवं सहितं दद्यात्खड़यूषमिति स्मृतम् ॥" भा. ।

**खड़िका (ड़ी)** । स्त्री । खटिकायाम् । फूलथड़ि । जटा. । शुक्लमृत्तिकायाम् । थड़िमाटी । श.च. ।

**खड्डुः** । पुं । मृतशय्यायाम् । उणा. ।

**खड्गः (कः)** । पुं । गण्डके । गाण्डार । त्रिका. । गण्डकशृङ्गे । थाग् । मे. । चोरकनामगन्धद्रव्ये । गेंठेला । रा.नि.व.१२ । असौ । खड्गतृणे । थागड़ा । र.मा. । क्ली । लौहे । तीक्ष्णलौहे । रा.नि.व.१३ ।

**खड्गकोषः (पत्रः)** । पुं । (Scirpus maximus.) खड्गलतायाम् । श.च. ।

**खड्गटः** । पुं । (Saccharum spontaneum.) इक्ष्वालिकातृणे । हारा. ।

**খড্গধেনুঃ** । স্ত্রী । গণ্ডকস্ত্রিয়াম্ । মাদি গণ্ডার । ছুরিকায়াম্ । মে. ।

**খড্গমাংস(ড্গামিষ)ম্** । ক্লী । গণ্ডকমাংসে । গণ্ডারমাংস । See খড্গী ।

**খড্গশিম্বী** । স্ত্রী । অসিশিম্ব্যাং । রা নি.ব.৭।

**খড্গিকঃ** । পুং । মহিষীক্ষীরফেনে । মহিষদুগ্ধের ননী । মে. ।

**খড্গিমারঃ** । পুং । খড্গকোষলতায়াং । শ.চ. ।

**খড্গী** (ইন্) । পুং । গণ্ডকে । গণ্ডার । গুণাঃ —"কফঘ্নঃ খড্গিপিশিতং কষায়মনিলাপহং । পৈত্রং পবিত্রমায়ুষ্যং বদ্ধমূত্রনিবারণম্ ॥" সু.সূ.৪৬অ. । কফবাতঘ্নং কষায়ং পিতৃতর্পকং পবিত্রমায়ুষ্যং মূত্রবন্ধকরং রুক্ষঞ্চ । রাজ. । বলকৃৎ বৃংহণং গুরু চ । রা.নি.ব.১৭ । [প.মু. ।

**খড্ডকঃ** । পুং । দেবতাড়বৃক্ষে । দেয়াতাড়া ।

**খণ্ডঃ (কঃ)** । পুং, ক্লী । ইক্ষুবিকারবিশেষে । খাঁড়, ভুরো, দোলো, খড়ীসাকর, মালখণ্ড । গুণাঃ —"খণ্ডস্তু মধুরো বৃষ্যশ্চক্ষুষ্যো বৃংহণো হিমঃ । বাতপিত্তহরঃ স্নিগ্ধো বল্যো বান্তিহরঃ পরঃ ।" ভা. । বৃষ্যং চক্ষুষ্যং বাতপিত্তহরঞ্চ । রাজ. । বাতপিত্তহরং শীতং স্নিগ্ধং বল্যং মুখপ্রিয়ং । চক্ষুষ্যং শ্লেষ্মকৃচ্চোক্তং খণ্ডং বৃষ্যতমং মতম্ ॥ অত্রি.১০অ. । মণিদোষে । মে. । শর্করায়াম্ । বৈ.নিঘ । বিড়লবণে । বিট্ লবণ । রা.নি.ব.৬ । ইক্ষুজাতিভেদে । শব্দ । অম. ।

**খণ্ডকর্ণঃ** । পুং Sweet potatos. আলুবিশেষে । সকরকন্দ আলু । গুণাঃ —"কটুপাকী খণ্ডকর্ণঃ কফপিত্তবিনাশনঃ ।" রাজ.২প. । শাকবিশেষে । বেঁটকোলশাক । চ.দ. ।

**খণ্ডকা** । স্ত্রী । যবাসশর্করায়াম্ । বৈ.নিঘ. ।

**খণ্ডকাদ্যলৌহম্** । ক্লী । রক্তপিত্তে হিতং । ক্বাথার্থং—শতাবরী গুড়ূচী বাসা মুণ্ডীরী বলা শালমূলী খদিরকাষ্ঠং ত্রিফলা ভার্গী পুষ্করমূলং এষাং প্র. ৫ প. বারি ৬৪ শ. শে. ৮ শ. মনঃশিলয়া বা স্বর্ণমাক্ষিকেণ বা জারিতলৌহচূর্ণং ১২ প. শর্করা ১৬ প. ঘৃতং ১৬ প. গুড়পাকে আয়সেন বা তাম্রময়েন বা পাত্রেণ সিদ্ধে শিলাজতুলকককর্কটশৃঙ্গীবিড়ঙ্গপিপ্পলীশুণ্ঠীজাতীফলানাং চূর্ণং প্র. ৮ তো. প্রক্ষেপ্যঃ । মধু ২ শ. ত্রিফলাধান্যপত্রাণাং প্র. ২ তো. । শতমূলী, গুলঞ্চ, বাসকছাল, মুণ্ডিরী, বেলেড়া, তালমূলী, খদিরকাষ্ঠ, ত্রিফলা, বামনহাটী, কুড় প্রত্যেকে ৫প. পাকার্থ জল ৬৪ শ. শে. ৮ শ. মনঃশিলা বা স্বর্ণমাক্ষিকযোগে জারিত লৌহ ১২ প. চিনি ১৬ প. ঘৃত ১৬ প. একত্র পাক করিয়া ঘন হইলে শিলাজতু, গুড়ত্বক্, কাঁকড়াশৃঙ্গী, বিড়ঙ্গ, পিপুল, শুঁট্, জায়ফল প্রত্যেকে ১ প. ত্রিফলা, ধনে, তেজপাত প্রত্যেকে ২তো. প্রক্ষেপ দিবে । মধু ২ সে. । রস.র. ।

**খণ্ডকালু(ক)ম্** । ক্লী । খণ্ডকর্ণালুকে । রাঙা আলু । শ.চ. ।

**খণ্ডকুষ্মাণ্ডম্**
**খণ্ডকুষ্মাণ্ডাবলেহঃ** } ক্লী, পুং । রক্তপিত্তে হিতম্ । খণ্ডশঃ কৃতং নিষ্কুলীকৃতপুরাণকুষ্মাণ্ডশস্যং ১০০ প. পাকার্থং বারি ২০০ প. শে. ১০০ প. তস্মাদুদ্ধৃতকুষ্মাণ্ডখণ্ডানি পেষয়িত্বা রৌদ্রে শোষয়িত্বা চ ঘৃতেন ২ শ. ভর্জ্জয়িতব্যম্ । মধুবর্ণে তত্র তজ্জলং তুলামিতশর্করয়া সহ (১০০ প.) দত্ত্বা লেহবৎপচেৎ । শীতে প্রক্ষেপঃ—পিপ্পলীশুণ্ঠীজীরকাণাং প্র. ১৬ তো. ত্বগেলাপত্রমরিচধান্যকানাং প্র. ৪ তো. মধু ১ শ. । অন্যৎ রক্তপিত্তাম্লপিত্তয়োঃ হিতম্ ।—কুষ্মাণ্ডোদকং ১০০ প. গব্যদুগ্ধং ১০০ প. শর্করা ৮ প. একত্র পক্ত্বা লেহভূতে তত্র ধাত্রীচূর্ণং ৮ প. প্রক্ষিপ্য অবতারয়েৎ । অম্লপিত্তোক্তে অস্মিন্ অবলেহে কেবলং ঘৃতস্য পলত্রয়মধিকং দীয়তে । ভা. ।

**খণ্ডখর্জ্জূরম্** । ক্লী । স্বনামখ্যাতে পক্বান্নবিশেষে । বৈদ্যকম্ ।

**খণ্ডজঃ (জা)** । পুং, স্ত্রী । খণ্ডে । খাঁড় । গুড়ে । (জা) যবাসশর্করায়াম্ । রা.নি.ব.১৪ ।

**খণ্ডজোদ্ভবজঃ** । পুং । তবরাজোদ্ভবখণ্ডে । রা.নি.ব.১৪ । [মা. ।

**খণ্ডধারা** । স্ত্রী । কর্ত্তর্য্যাম্ । কাঁচী । শ. ।

**খণ্ডনম্** । ক্লী । ছেদনে । ভেদনে ।

**খণ্ডনীলঃ** । পুং । খণ্ডকর্ণালুকে । শকরকন্দ আলু । র.মা. । [অস্থৈ ।

**খণ্ডপরশুঃ (পর্শুঃ)** । পুং । খণ্ডামলকশী-

**খণ্ডপালः** । পুং । মোদকে । ময়রা । হারা. ।

**খণ্ডপাদः** । পুং । ধাতকীপুষ্পশর্করাজাতে ম-দ্যে । বৈ.নিঘ. ।

**খণ্ডপিপ্পলী** । স্ত্রী । অম্লপিত্তে পিপ্পলীখণ্ডে । কণাচূর্ণং ৩২ তো. ঘৃতং ৪৮ তো. শতাবরী-রসঃ ৬৪ তো. ৮ শ. (৫১২ তো.) খণ্ডং ১২৮ তো. । পাকসিদ্ধে—ধান্যশুণ্ঠীজীরকদ্বয়হরীতকীমুস্তকবংশরোচনা জটামাংসী বা আমলকীত্বগেলা-পত্রাণাং চূর্ণং প্র. ১২ মা. নাগকেসরখদিরমরিচা-নাঞ্চ প্র. চূর্ণং ৬ মা. প্রক্ষেপঃ । মধু ২৪ তো.। পিপুলচূর্ণ /॥০ সের বা ৩২ তো. ঘৃত ৪৮ তো. শতমূলীরস ৬৪ তো. দুগ্ধ ৮ শ. খাঁড় ২ শ. একত্র পাক করিয়া পাকসিদ্ধ হইলে ধনিয়া, শুঁট, জীরে, কৃষ্ণজীরে, হরীতকী, মুতা, বংশলোচন বা জটামাংসী, আমলা, গুড়ত্বক্, এলাইচচূর্ণ, তেজপত্র প্রত্যেকে ১২ মা. নাগেশ্বরচূর্ণ, খদিরচূর্ণ এবং মরিচচূর্ণ প্রত্যেকে ৬ মা. প্রক্ষেপ দিবে। মধু ২৪ তো.। রস.র. । মাংসীস্থানে বংশীতি পাঠঃ । নাগকেশরস্থানে ধৃতম্ । ভৈষ. । [অ. । See সর্পঃ ।

**খণ্ডফণঃ** । পুং । দর্ব্বীকরসর্পে । সু.কল্প.৪

**খণ্ডমোদকঃ** । পুং । যবাসশর্করায়াম্, নবরাত্রি । রা.নি.ব.১৪ ।

**খণ্ডরः** । পুং । যবাসশর্করায়াম্ ।

**খণ্ডরাজী** । স্ত্রী । বাকুচ্যাম্ । বৈ.নিঘ. ।

**খণ্ডলবণম্** । ক্লী । বিড়লবণে । রা.নি.ব.৬।

**খণ্ডবল্লী** । স্ত্রী । কাণ্ডবল্ল্যাম্ । করলা । বৈ.নিঘ. ।

**খণ্ডবিকারः** । পুং । শর্করায়াম্ । বৈ নিঘ. ।

**খণ্ডবিন্দুः** । পুং । সর্পজাতিভেদে । অভি.৫৬ • অ.২স্থান. । [শর্করায়াম্ । চিনি । বৈ.নিঘ. ।

**খণ্ডশর্করা (সিকতা, সিতা)** । স্ত্রী ।

**খণ্ডশাখা** । স্ত্রী । মহিষবল্ল্যাম্ । লতাবিশেষ । রা.নি.ব.৩ ।

**খণ্ডশুণ্ঠী (শুণ্ঠীখণ্ডং)** । স্ত্রী । অম্লপিত্তে হিতা। শুণ্ঠীচূর্ণং ৩২ তো. শর্করা ১২৮ তো. ঘৃতং ৬৪ তো. দুগ্ধং ৮ শ. । প্রক্ষেপঃ—কণাধান্যজীরকত্রয়ত্বগেলাপত্রবংশরোচনজীরকত্রুরজীরকহরীতকীমুস্তধান্যকানাং প্র. ১২ মা. মরিচচূর্ণং ৬ মা. নাগকেসরচূর্ণং ৬ মা. মধু ২৪ তো. । শুঁটচূর্ণ ৩২ তো. চিনি ১২৮ তো. ঘৃত ৬৪ তো. দুগ্ধ ৮ শ. । প্রক্ষেপ—পিপুলচূর্ণ, আমলাচূর্ণ, গুড়ত্বক্, এলাইচ, তেজপত্র, বংশলোচন, জীরে, কৃষ্ণজীরে, হরীতকী, মুতা, ধনিয়াচূর্ণ প্রত্যেকে ১২মা. মরিচচূর্ণ ৬মা. নাগেশ্বরচূর্ণ ৬মা. মধু ৩ প. বা ২৪ তো. । রস.র । [নি.ব.১৪।

**খণ্ডস(সা)রः** । পুং । যবাসশর্করায়াম্ । রা.

**খণ্ডা** । স্ত্রী । খণ্ডে । খাঁড় ইতি লোকে । বৈ.নিঘ.রত্নপি.চি.কুষ্মাণ্ডাবলেহে ।

**খণ্ডামলকম্ (কী)** । ক্লী, স্ত্রী । আমলকীখণ্ডে । আমলার মোরব্বা । বৈ.নিঘ. । পরিণামশূলে ঔষধবিশেষে ।—পিষ্টনিষ্পীড়িতপুরাণকুষ্মাণ্ডশস্যং ৫০ প. ঘৃতং ১৬ প. একত্র ভর্জ্জয়েত্ । শর্করা ৫০ প. আমলকরসঃ ৩২ প. (স্বরসাভাবে আমলকী ২ শ. বারি ১৬ শ. শে. ৪ শ.) কুষ্মাণ্ডরসঃ ৩২ প. অবলেহবত্পচেত্ । প্রক্ষেপঃ—পিপ্পলীজীরকশুণ্ঠীনাং চূর্ণং প্র. ২ প. মরিচচূর্ণং ১ প. তালীশধান্যকত্বগেলাপত্রনাগকেসরমুস্তকচূর্ণং প্র. ২ তো. । পিষ্টনিষ্পীড়িত পুরাতন কুষ্মাণ্ডশস্য ৫০ প. ঘৃত ১৬ প. চিনি ৫০ প. আমলকীরস ৪ শ. (৩২ প.) (স্বরসাভাবে আমলকী ২ শ. (১৬ প.) জল ১৬ শ. শে. ৪ শ.) । কুষ্মাণ্ডরস ৪ শ. । আসন্নপাকে—পিপুল, কৃষ্ণজীরা, শুঁট প্রত্যেকে ২ প. মরিচ ১ প. তালীশপত্র, ধনে, গুড়ত্বক্, এলাইচ, তেজপত্র, নাগেশ্বর, মুতা প্রত্যেকে ২ তো. শীতল হইলে মধু প্রক্ষেপ ২ শ. । সা.কৌ. ।

**খণ্ডাম্র(ক)ম্** । ক্লী । বাজীকরণৌষধভেদে । সুপক্কমধুরাম্ররসঃ ৬৪ শ. শর্করা ৮ শ. ঘৃত ৪ শ. শুণ্ঠীচূর্ণং ৩২ তো. পিপ্পলীচূর্ণং ১৬ তো. বারি ৮ শ. (৫১২ তো.) একত্র পচেত্ । খণ্ডপাকসিদ্ধে প্রক্ষেপঃ—তেজপত্রচূর্ণং ১২ তো. অগ্নিপর্ণচিত্রকমুস্তকধান্যকজীরকত্রয়ত্রিকটুজাতীফলত্বগেলানাগকেসরচূর্ণানাং প্র. ৮ তো. শীতে মধু ৪ শ. ৫ মা. ৪ তো. । বৈ.নিঘ. ।

ः। पुं। कच्चे। काँथ। हे.च.। कषायविशेषे। খয়েরসারি। भा.पू.१भ.। गुणाः—"खदिरः शीतमधुरा सकषाया विकषणाः। पित्तश्लेष्मणि शस्यन्ते सूपेचालेपनादिषु॥" च.सू.२७अ।

**खण्डाली**। स्त्री। तैलमानपात्रे। वै.निघ.।

**खण्डिका**। स्त्री। खण्डशर्करायां। वै.निघ.।

**खण्डितकर्णः**। पुं। खण्डकर्णाली। शकरकन्द। खार्कोष् इति ख्याते शाके। रसेन्द्रगुड़ी.।

**खण्डी** (इन्)। पुं। वनमुद्गे। मुगानी। हे.च.।

**खण्डीरः**। पुं। पीतमुद्गे। সোণামুগ। हे.च.।

**खण्डोपला**। स्त्री। खण्डीशर्करायाम्।

**खण्डोष्ठः**। पुं। ओष्ठरोगभेदे। लक्षणं—"तत्र खण्डोष्ठ इत्युक्तो वातेनौष्ठो द्विधा कृतः।" वा.उ.२१अ.।

**खतमालः**। पुं। धूमे। मे.।

**खदनम्**। क्ली। भोजने। रा.नि.व.२०।

**खदिका**। स्त्री। खधी। খৈ। त्रिका.।

**खदिरः**। पुं। (Acacia catechu. Syn. Mimosa catechu.) स्वनामख्यातवृक्षे। খয়েরগাছ। उत्. खैर। तें चंड्चेट्टु। स त्रिधा श्वेतरक्तविड्भेदात्। विशेषः तत्तत्पर्याये द्रष्टव्यः। सा. गुणाः—तिक्तः शीतः पित्तकफघ्नः पाचनः कुष्ठकामास्रशोफकण्डूव्रणघ्नश्च। रा.नि.व.८। "खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत्। तिक्तः कषायो मेदोघ्नः क्रिमिमेहज्वरव्रणान्। श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान्हरेत्॥" भा.। विसर्पवेदनामेहमेदोघ्नः। राज.१प.। चन्द्रे। मे.। शाकभेदे। লজ্জালুকা, বরাক্রান্তা। श.टी.भ.।

**खदिरपत्रिका** (त्री)। स्त्री। अरिखदिरे। रा.नि.व.८। लज्जालुकायाम्। रा.नि.व.५।

**खदिरवटी**। स्त्री। मुखरोगहवटिकायाम्। खदिरः १०० प. पाकार्थजलं ६४ श. शे. ८ श.। पुनः पक्वा घनीभूते प्रक्षेपः जयित्रीकर्पूरगुवाककाकोलीजायफलचूर्णानि प्र. ८ तो.। सा.कौ.।

**खदिरवल्लरी**। स्त्री। अरिखदिरे। हिं महिकफल। (क्ली) द्रुमोत्पले। वै.निघ.।

**खदिरसारः** (रोद्भूतः)। पुं। खदिरनिर्यासे। খয়ের। मं कात। रस.र.। गुणाः—कटुतिक्तोष्णः कफवातघ्नः व्रणकण्ठरोगघ्नः रुच्यः दीपनश्च। रा.नि.व.८। [५।

**खदिरा**। स्त्री। लज्जालुकालतायां। रा.नि.व.

**खदिराङ्गारः**। पुं। खदिरकाष्ठाङ्गारे।

**खदिरादिपञ्चतिक्तकघृतम्**। क्ली। कुष्ठे घृतम्। घृतं ४ श.। क्वाथार्थं—पञ्चतिक्तकं प्र. १० प. वारि ६४ श. शे. ८ श.। कल्कार्थं—खदिरारग्वधन्योषचित्रचित्रकदन्तीपटोलत्रिफलानिम्बहरिद्रासोमराजीकटुकातिविषापाठात्रायन्तीदुरालभाकुष्ठकरञ्जबीजशारिवाहयेन्द्रयवभल्लातकास्थिविड़ङ्गगुग्गुलूनां प्र. २ तो.। ঘৃত ৪ শ. কাথার্থ—নিমছাল, পটোলপত্র, কণ্টিকারী, গুলুঞ্চ, বাসকছাল প্রত্যেকে ১০প. জল ৬৪ শ. শে. ৮শ.। কল্কার্থ—খদিরকাষ্ঠ, সোন্দালের আটা, শুঁট, পিপুল, মরিচ, তেউড়ী, চিতেমূল, দন্তীমূল, পটোলপত্র, আমলা, হরীতকী, বহেড়া, নিমবীজ, হরিদ্রা, বাগুজীবীজ, কটুকী, আতইচ, আকনাদি, গোওয়ালে লতা, দুরালভা, কুড়, করঞ্জবীজ, শ্যামালতা, অনন্তমূল, ইন্দ্রযব, ভেলার মুটী (অভাবে রক্তচন্দন), বিড়ঙ্গ এবং গুগ্গুল প্রত্যেকে ২ তো.। रस.र.।

**खदिराष्टकः**। पुं। मसूरिकाधिकारे कषायः। "खदिरत्रिफलारिष्टपटोलामृतवासकैः क्वाथोऽष्टकाङ्गो जयति रोमान्तिकमसूरिकाः॥" च.द.।

**खदिरिका**। स्त्री। लाक्षायाम्। रा.नि.व.६। लज्जालुकायाम्। वै.निघ.।

**खदिरी**। स्त्री। वराहक्रान्तायाम्। प.मु। लज्जालुकायाम्। रा.नि.व.५।

**खदिरीबीजम्**। क्ली। अशोकबीजे। च.द. "जलेन खदिरीबीजम्।"

**खदिरोपमः**। पुं। (Acacia Arabica. वर्व्वूरकवृक्षे। বাব্‌লা গাছ। वै.निघ.। कदरे। শ্বেত খদির। र.मा.।

**खदूरकः**। पुं। वामने।

**खद्योतः** (तनः)। पुं। ज्योतिरिङ्गणे। ख-

नाकि পোকা। हिं पटवीजना। अम.। (तनः) सूर्य्ये। जटा.।

**खद्योतकम्** । क्ली। तन्नामकसविषफलभेदे। सु.कल्प.२अ.। See फलविषम्। [वै.निघ.।

**खनकः** । पुं। मूषिके। त्रिका.। वनमूषिके।

**खननम्** । क्ली। विदारणे।

**खनिः (नी)** । स्त्री। खर्णाद्याकरे। अम।

**खनिजौषधम्** । क्ली। Inorganic medicine. रसोपरसधातुलवणरत्नाख्येषु पञ्चविधेषु खनिजद्रव्येषु। वैद्यकम्। [स्त्री। अम.।

**खनित्रम्** । क्ली। अस्त्रविशेषे। কোদাল, খ-

**खनिसम्भवः** । पुं। स्वर्णे। वै.निघ.। त्रि। खनिजे।

**खपु(पू)टः** । पुं। व्याघ्रनखे। नखी। वै.निघ.।

**खपुरः** । पुं। (Areca catechu.) गुवाकवृक्षे। সুপারি গাছ। र.मा.। ग्रलक्षणनिर्यासे। वा.टी.हेमा.। भद्रमुस्तके। अलसकरोमे। मे.। बालके। বালা। रसोने। वै.निघ.।

**खपुष्पः** । पुं। पनसवृक्षे। वै.निघ.।

**खभ्रान्तिः** । पुं। चिल्लपक्षिणि। त्रिका.।

**खमणिः** । पुं। सूर्य्ये। वै.निघ.।

**खमीलनम्** । क्ली। तन्द्रायाम्। श.र.।

**खमूलिः (का)** । स्त्री। An aquatic plant. (Pistia stratiotes.) कुम्भिकायां। পানা। श.र.।

**खरः** । पुं। यासे। দুরালভা। रा नि.व.४। नखीनामगन्धद्रव्ये। वै.निघ.। कङ्कपक्षिणि। कुररपक्षिणि। काके। रा नि.व.१९। अश्वतरे। त्रिका.। गर्द्दभे। त्रि। तीक्ष्णे। अम.।

**खरकः** । पुं। चीवपर्ण्याम्। रा.नि.व.४।

**खरकाष्ठिका** । स्त्री। बलायां। रा.नि.व.४।

**खरकुटिः (टी)** । स्त्री। नापितशालायाम्। নাপিত বাড়ী। त्रिका.।

**खरको(क्वा)णः** । पुं। तित्तिरपक्षिणि। है.च.।

**खरगन्धनिका (निभा) (गन्धा)** । स्त्री। नागबलायाम्। जटा.। रा.नि.व.४। वनतुलस्यां। वै.निघ.। [त्रिका.। गेहे। श.र.।

**खरगृहं(ग्रहः)** । क्ली, पुं। गर्द्दभशालायाम्।

**खरघातनः** । पुं। नागकेशरवृक्षे। श.च.।

**खरच्छदः** । पुं। उलुकनामतृणे। উলুখড়। इत्कटनामक्षुद्रक्षुपे। ওকড়া, ইকড়। र.मा.। कुन्दुरुतृणे। रा.नि व.८। भूमीसहवृक्षे। भा.। शाकवृक्षे। শেগুন গাছ। शाखोटवृक्षे। শ্যাও-ড়া গাছ। रक्तापामार्गे। वै.निघ.।

**खरच्छदा** । स्त्री। त्रिपुरमल्लिकायाम्। प.मु.। चिविल्लिकायाम्। চিল্লী শাক। रा.नि.व.५।

**खरटी** । स्त्री। रङ्गधात्री। वै.निघ.।

**खरतुरवकः** । पुं। लज्जालुकायाम्। भा.।

**खरत्वक्** । स्त्री। अलम्बुषायाम्, लज्जालुकाभेदे। भा.।

**खरदंष्ट्रा** । स्त्री। गोक्षुरक्षुपे। ज.द.।

**खरदण्डम्** । क्ली। पद्मे। धरणि.।

**खरदला** । स्त्री। श्यामालतायाम्। काष्ठोदुम्बरे। श.च.। [च.।

**खरदूषणः** । पुं, क्ली। धुस्तूरवृक्षे फले च। श.

**खरधन्विका** । स्त्री। गोरक्षतण्डुलायां। গো-রক্ষচাকুলে। प.मु.।

**खरनादिनी** । स्त्री। रेणुके। श.च.।

**खरपत्रः** । पुं। क्षुद्रपत्रतुलसीवृक्षे। शाकतरौ। শেগুন গাছ। र.मा.। ताम्रतुलसीवृक्षे। गन्धतुलसी। भूर्ज्जवृक्षे। वै.निघ.। यावनाले। रा. नि.व.८। मरुवकवृक्षे। गन्धतुलसी। रा.नि.व.१०।

**खरपत्रकः** । पुं। तिलवृक्षे। श.च.।

**खरपत्री (र्णिनी, र्णी)** । स्त्री। गोजिह्वानामक्षुपे। গোজিয়া। रा.नि.व.४। काकोदुम्बरिकायाम्। কাকডুমুর। रा.नि.व.११।

**खरपल्लवः** । पुं। शाखोटकवृक्षे। শ্যাওড়া গাছ। प.मु.।

**खरपाद्यः** । पुं। कपित्थवृक्षे।

**खरपात्रम्** । क्ली। लौहपात्रे। त्रिका.।

**खरपादाढ्यः** । पुं । कपित्थवृक्षे । श.च. ।

**खरपुष्पः** । पुं । मरुवकवृक्षे । मरुया गाछ । र.मा. ।

**खरपुष्पा (ष्पी)** । स्त्री । वर्व्वर्य्याम् । वाबुइ । भा.म.४भ. । "कट्फलं खरपुष्पा च ।" वनतुलस्याम् । वनवाबुइ तुलसी । सु.म.३७भ. ।

**खरप्रियः** । पुं । पारावते । श.मा. ।

**खरमञ्जरी** । स्त्री । अपामार्गक्षुपे । रा.नि.व. ४रसेन्द्र चि.सुधावतीगुड़ी। श्वेतापामार्गे । वै.निघ.।

**खरमूत्रम्** । क्ली । गर्द्दभमूत्रे । गाधार मूत्र । गुणाः—कटूष्णं क्षारं तिक्तं कफघ्नं महावातघ्नं कम्पोन्मादहरञ्च । रा.नि.व.१५ । "गार्द्दभं नावनं मूत्रं तैलं योज्यं क्वचिद्भवेत् । सक्षारं तिक्तकटुकम् न्मादकुष्ठरोगनुत् । कारभं खरमूत्रञ्च तैले नस्यं विधायकम् ॥" अत्रि. ।

**खरयष्टिका** । स्त्री । लघुवाय्यालके । वै.निघ ।

**खरराहः** । पु । सुखपुण्ड्रकेण युक्ते खञ्जाश्वे । "खरराहश्च खञ्जाहः ।" ज.द.३भ. ।

**खररोमा** । पुं । नागविशेषे ।

**खरवल्लिका**
**खरवल्लरिका** } स्त्री । गोरचतण्डुलायाम् । গোরক্ষচাকুলিয়া । र.मा. ।

**खरवृक्षः (सः)** । पुं । मरुवकवृक्षे । "खरवृक्ष ब्रवकर्णौ कट्फलं ।" वा.म.१५भ , हेमा.टी. ।

**खरशब्दः** । पुं । कुररपक्षिणि । কর্কটিয়া । रा.नि.व.१९ ।

**खरशाकः** । पुं । भार्ग्याम् । भा. ।

**खरशूकः** । पुं । पीतशाले । वै.निघ. ।

**खरसोन्दः** । पुं । लौहपात्रभेदे । चिका. ।

**खरस्कन्धः (न्धा)** । पुं, स्त्री । प्रियालवृक्षे । खर्ज्जूरीवृक्षे । रा.नि.व.११ ।

**खरस्पर्शा** । स्त्री । पीतदेवदाल्याम् । भा. । See अगरी । त्रि (र्शः) । गोजिह्वादिवत्खरे । भा.नि. ।

**खरस्वरा** । स्त्री । वनमल्लिकायाम् । र.मा. ।

**खरा** । स्त्री । पीतदेवताड़े । भा. ।

**खरागरी** । स्त्री पीतदेवताड़वृक्षे । च.टी.रा.।

**खराग्निः** । पुं । अर्कनिष्काशनार्थं तीक्ष्णाग्निविशेषे । रावण. ।

**खराश्वा** । स्त्री । रुद्रजटायाम् । च टी.भ. । अजमोदायां । ক্ষেত্রযমানী । भा पू.१भ.। गुणाः —"खराश्वा कफवातघ्नी वस्तिरोगरुजापहा ।" च.सू.२७भ. । च.द.अश्मरीचि. । [रा.नि.व.६ ।

**खराह्वा** । स्त्री । अजमोदायाम् । वनयमानी ।

**खरिका** । स्त्री। नेपालजचूर्णाकृतिकस्तूरीभेदे। रा.नि व.१२ । See कस्तूरी

**खरुः** । पुं । घोटके । दन्ते । त्रि । श्वेते । त्रिका.।

**खरुवकः** । पुं । श्वेतमरुवकवृक्षे । वै.निघ. ।

**खर्जिका** । स्त्री । अवदंशे । চাট । श.च. ।

**खर्ज्जुः (र्ज्जूः)** । पुं। पिण्डीखर्ज्जूरवृक्षे । उणा.। खर्ज्ज्वाम् । रा.नि व.२० ।

**खर्ज्जूघ्नः** । पुं । चक्रमर्द्दक्षुपे । रा नि व.४ । अर्कवृक्षे । আকন্দ গাছ । धुस्तूरवृक्षे । শ্বেত ধুতুরা । रा.नि.व.१० ।

**खर्ज्जु(र्ज्जू)रम्** । क्ली, पुं । हरिताले । हे.च. । वृश्चिके । ध्वनामकवृक्षे मे. । रौप्ये । रूपा । प.मु.। खर्ज्जूरफले । पिण्डीखर्ज्जूरे । च.द.र.पि.चि.।

**खर्ज्जूरपत्रकम्** । क्ली । तदाकारव्रणच्छेदविशेषे । सु.चि.८भ. ।

**खर्ज्जूरफलम्** । क्ली । खर्ज्जूरीफले । तच्च रक्तपित्ते हितम् । सि.यो.रक्तपि.चि.। [खर्ज्जूरीफले ।

**खर्ज्जूरफलकः** । पुं। गोधूमविशेषे । वै.निघ.।

**खर्ज्जूरिका (री)** । स्त्री। खर्ज्जूरवृक्षे । प मु.। খেজুর গাছ। म सिंधी । कं इचिलु । गुणाः— अपक्वा कषाया, पक्वा गौल्या कषाया पित्तघ्नी कफकरी कृमिजननी वृष्या बृंहणी च । रा.नि. व.११। सा मधु-भू-पिण्ड-राजखर्ज्जूरीभेदेन चतुर्धा भवति । एषां गुणाः स्वस्वपर्य्याये द्रष्टव्याः । यथा —"भूमिखर्ज्जूरिका स्वाद्वी दुरारोहा मृदुच्छदा । तथा स्कन्धफला काककर्कटी स्वादुमस्तका ॥ पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत् । खर्ज्जूरी गोस्तनाकारा पराद्वीपादिहागता । जायते

पश्चिमे देशे सा छोहारेति कीर्त्त्यते ॥” सा. गुणाः —“खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः। स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ॥ तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदं। कोष्ठमारुतजिद्बल्यं वान्तिवातकफापहम्। ज्वरातिसारक्षुत्तृष्णाश्वासकासनिवारकम्। मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत्। खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत्। वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥” भा.। मस्तिष्कगुणाः—स्वादुः तिक्तः कषायः मूत्ररोगघ्नः बलप्राणशुक्रवृद्धिकरश्च। राज। “अपक्वं खर्ज्जूरफलं त्रिदोषशमनं मतम्। पक्वमेव हितं श्रेष्ठं त्रिदोषशमनं परम् ॥” अत्रि.१७अ। मधुरं शीतलं गुरु क्षयाभिघातदाहवातपित्तेषु हितं बृंहणं शुक्रकरञ्च। च.सू.२७अ.। कृष्णमुशल्याम्। वै.निघ.।

**खर्पतुत्थम्।** क्ली। खर्परीतुत्थे। वै.निघ.।

**खर्परम्।** क्ली। स्वनामख्यातोपधातुविशेषे। খাপর। हिं खापरिया। मं कलखापरी। प.मु.। तस्य शोधनं यथा—“पुष्पाणां रक्तपीतानां रसैः पिष्टैश्च भावयेत्। नरमूत्रैश्च गोमूत्रैः यवाम्लेन ससैन्धवैः। सप्ताहं त्रिदिनं वापि पश्चाच्छुध्यति खर्परम्। तन्मारणं वङ्गवत् ज्ञेयम्। खर्परं पारदेनैव वालुकायन्त्रगं पचेत्। चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते।” अथवा पत्तलीकृतं खर्परं लवणान्तर्निधाय पचेत् ॥ मतान्तरे गुणाः—खर्परं कटु क्षारं कषायं वामकं लघु लेखनं भेदनं शीतलं चक्षुष्यं रक्तपित्तहरं विषाश्मरीकुष्ठकण्डूघ्नञ्च। भा.। पुं। मृत्पात्रभेदे। খাপরা। प.मु.। स्वभाकारापूपपचनादिपात्रे। তাওয়া, চাটু। वा.टी.हेमा.। कपालास्थनि। মাথার খুলি। रा.नि.व.१८। नेत्राञ्जनभेदे। छत्रे। त्रिका.।

**खर्परवटिका।** स्त्री। ग्रहण्यधिकारे। “पक्वेष्टका हरिद्राभ्यामागारधूमकेन च। शोधितं पारदश्चैव कर्षार्द्धं तुलया धृतम्। भृङ्गराजरसैः शुद्धगन्धकं रससम्मितं। द्वाभ्यां कज्जलिकां कृत्वा भावयेत्तु भेषजैः। सिन्धुवारदलरसे मण्डूकपर्णिकारसे (मधूकपुष्पजे रसे इति वा पाठः)। केशराजरसे चापि शीषसुन्दरजे रसे। रसेऽपराजितायाश्च सोमराजरसे तथा। रक्तचित्रकपत्रोत्थे रसे च परिभावितम्। रसमानसमांशेन छायायां शोषयेद्भिषक् ॥” वटी सर्षपाभा, अनु. दधिमस्तु। ইষ্টকচূর্ণ, হরিদ্রাচূর্ণ ও ঝুলের সহিত শুদ্ধ পারা ১ তো. ভীমরাজরসে শুদ্ধ গন্ধক ১ তো. কজ্জলি করিবে। পরে নিশিন্দাপাতার রস, থুলকুড়ির রস, বা মৌলফুলের রস বা ক্বাথ, কেশুরের রস, গিমে শাকের রস, অপরাজিতাপাতার রস, সোমরাজক্বাথ এবং রক্তচিত্রকপত্ররস প্রত্যেকে ১ তোলা দ্বারা মাড়িয়া সর্ষপতুল্য বটী করিবে। रस.की.। भैष.।

**खर्परालः।** पुं। अश्वत्थविशेषे। मं लाखीपिंपरी। वै.निघ.।

**खर्परिका(री)तुत्थकम्।** क्ली। A sort of collyrium. नेत्रप्रसाधनविशेषे। तुत्थाञ्जने, कृत्रिमरसाञ्जने। गुणाः – कटु तिक्तं चक्षुष्यं रसायनं त्वग्दोषघ्नं दीपनं बलपुष्टिकरञ्च। रा नि व. १३। खर्परे। খাপর। मं कलखापरी।

**खर्परीयकम्।** क्ली। खर्परीतुत्थे। खर्परे। वै.निघ.।

**खर्परीरसकम्।** क्ली। खर्परीतुत्थे। কৃত্রিম রসাঞ্জন। रा.नि.व.१३। खर्परे। वै निघ.।

**खर्व्वः (र्व्वः)।** पुं। कुब्जकपुष्पवृक्षे। रा.नि.व. १०। त्रि। ह्रस्वे। अम.।

**खर्व्वशाखः।** त्रि। वामने। हे.च.।

**खर्व्वा।** स्त्री। नागबलायाम्। रा.नि.व.४।

**खर्व्वु(र्व्वू)रः।** पुं, क्ली। नदीनिष्पावे। रा.नि. व.१६।

**खर्बु(र्बू)रा।** स्त्री। तरदीवृक्षे। रा.नि.व.८।

**खर्बूजम्।** क्ली। तन्नामकफलविशेषे। খরমুজ। गुणाः—“मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु। स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम्। तेषु यत्स्यादम्लमधुरं सक्षारञ्च रसाद्भवेत्। रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरम्परम् ॥” भा.।

**खर्म्मम्।** क्ली। पट्टवस्त्रे। पौरुषे। मे.।

**खलम्।** क्ली। कल्के। मे.। शस्यस्थाने। त्रिका.।

**खलः (कः)।** पुं। सूर्य्ये। धुस्तूरवृक्षे। रा.नि. व.१०। मालवे व्यञ्जनविशेषे। “मालुधानीयपुष्पैर्योऽतिगुणः स खल उच्यते। फलमूलैर्वमाद्भवं

व्यञ्जनं पाकतो घनं । लेहवत्खल इत्यन्ये दोषघ्नाः खलयोनिवत् । कल्को विल्वशलाटूनां तिलकल्कश्च तत्समः । दध्नः सरोऽम्लः सस्नेहः खलो हन्ति प्रवाहिकाम् ॥" श्रीकुक्कुटः अपराजितश्च नामापरौ खलावपि । वा.चि.८।१२अ.मृग्यः । तमालवृक्षे । श.च. । त्रि । नीचे । अधमे । मे. ।

**खलकाम्बलिकः** । पुं। तिलकल्के। वै निघ.।

**खल(लि)तिः** । पुं । इन्द्रलुप्तरोगिणि । টেকো । हे.च. । त्रिका. ।

**खलमूर्त्तिः** । पुं । पारदे । श.च. ।

**खलयूषः** । पुं । खड़यूषे ।

**खलाधारा** । स्त्री । तैलपायिकायाम् । তেলা পোকা । जटा. । [इत्यपि पाठोऽस्ति ।

**खलिः** । पुं । तिलकिट्टे । रा.नि.व.१६ । खल

**खलिद्रुमः** । पुं । सरलदेवदारौ । वै.निघ. ।

**खलि(ली)नः** । पुं, क्ली । खलीने । লাগাম। अ.टी.रा. । [खलसमूहे । अम. ।

**खलिनी** । स्त्री । कृष्णतालमूल्याम् । वै.निघ. ।

**खलिशः** } **खलेशयः** } पुं । (Tricopodus colisa.) मत्स्यविशेषे । খলশে মাছ । हारा.। ग्राहित्वं कषायत्वं वायुकोपनत्वं रूक्षत्वं लघुत्वं मलहरत्वं किञ्चिदामघ्नत्वञ्च। राज.३प.। रा.नि.व.१८।

**खलुरेषः** । पुं । मृगविशेषे । श.च. । [जटा. ।

**खलेधानी** । स्त्री । खले पशुबन्धनदारुणि ।

**खलेवाली** । स्त्री । खले गोबन्धनकाष्ठे । মেই কাঠ । हे.च. ।

**खल्लः** । पुं । चातकपक्षिणि । मे. । चर्म्मणि । খাল । त्रिका. । औषधमर्द्दनपात्रे । খল । क्ली । वाजिदन्तायस्य निम्नकपाले । "निम्नकृष्णश्च दन्तायं खल्लमित्यभिधीयते ।" ज.द.४अ. ।

**खल्लकी** । स्त्री । शर्करायां । খাঁড় । वै.निघ.।

**खल्लिका** । स्त्री। पिष्टकादिभर्ज्जनपात्रे । श.च.।

**खल्लि(ल्ली)टः** । त्रि। खलतौ । श.र.। त्रिका.।

**खल्ली** । स्त्री । हस्तादौ शिरामोटने । খালধরা। सि.यो.विसूची.चि. । "खल्ली तु पादजङ्घोरुकरमूलावमोटनी।" सरलदेवदारौ। वै.निघ,वा.व्या,चि,।

**खल्लीवर्द्धनः** । पुं । दन्तवेष्टजरोगविशेषे । मारुतेनाधिको दन्तो जायते तीव्रवेदनः । खल्लीवर्द्धनसंज्ञोऽसौ सञ्जाते रुक् प्रशाम्यति ॥ भा.म.४भ. मुखरो.चि. । [निघ. ।

**खल्वटः** । पुं । कासरोगे । मं खोक्ला । वै.

**खल्वाटः** । पुं । खलतौ । हे.च. ।

**खल्लुका** । स्त्री । नाभिशङ्खे । र.सा.सं. ।

**खवल्ली** । स्त्री । आकाशवल्ल्याम् । रा.नि.व.३ ।

**खवारि** । क्ली । आन्तरिक्षोदके । रा.नि.व.१४।

**खवासः** । पुं । हिमे । हारा. । [व.१३ ।

**खशब्दाङ्कुरः** । पुं, क्ली । वैदूर्य्यमणौ । रा.नि.

**खशा** । स्त्री । मुरामांस्याम् । मं मर्वा । श.च.।

**खशेटः** । पुं । खलिसमत्स्ये । त्रिका. ।

**खश्वासः** । पुं । वायौ । त्रिका. ।

**खसः** । पुं । दामायाम् । খোস্ রোগ । वीरणमूले । वै.निघ.वा.व्या.चि. ।

**खसकन्दः** । पुं । वाराहीकन्दे । वै.निघ. । क्षीरीशवृक्षे । ক্ষীরীশ গাছ । प.मु. । क्षीरकञ्चुकीवृक्षे । र.मा. । [ड़ार । र.मा. ।

**खसगन्धः** । पुं । क्षीरकञ्चुक्याम् । क्षीरक-

**खसतिलः** । पुं । खस्खसे । পোস্তা গাছ । गुणाः—"तिलभेदः खसतिलः कासश्वासहरः स्मृतः । स्याद्वा खसफलोद्भूतं वल्कलं शीतलं लघु । ग्राहि तिक्तकषायञ्च वातकृत्कफकासहृत् । धातूनां शोषकं रूक्षं मदकृद्वाग्विवर्द्धनम् । मुहुर्मोहकरं रुच्यं सेवनात्पुंस्त्वनाशनम् ॥" भा. ।

**खसफलम्** । क्ली । खस्खसे । পোস্ত, ঢেঁড়ি। वै.निघ. । [টামাংসী । रा.नि.व.१२ ।

**खसम्भवा** । स्त्री । आकाशमांस्याम् । সূক্ষ্ম জ-

**खसर्पणवटी** । स्त्री । ग्रहण्यधिकारे । See खर्परवटिका ।

**खसवीजम्** । क्ली । खस्खसे । পোস্তদানা । हिं खाखसदाना । गुणाः—बल्यं वृष्यं सुगुरु कफकरं वातशमनञ्च । भा. ।

**खस्खसः** । पुं । स्वनाम्ना मालवदेशे प्रसिद्धः ।

थाक्नी, পোস্তদানার গাছ। गुणा:—पाके मधुर: कान्तिवीर्य्यबलप्रदश्च। रा.नि.व.४।

**खखसरस: (सार:) (क्षीरं)** । पुं,क्ली। अहिफेने। वै.निघ.।

[मणौ। वै.निघ.।

**खस्फटिक:** । पुं। चन्द्रकान्तमणौ। सूर्य्यकान्त-

**खाखस: (तिल:)** । पुं। खसतिले। थाक्नी, পোস্ত গাছ। See खसतिल:।

**खाखसतिलोद्भूतम्** । क्ली। खखसे। পোস্ত। वै.निघ.।

**खाजिक:** । पुं। लाजायाम्। খৈ। हारा.।

**खाटि:** । स्त्री। किणे। मे.।

**खाड़(ण्ड)व:** । पुं। मधुराम्ललवणनानासुगन्धिद्रव्यकृतखाद्यविशेषे। "खाड़वा: फलमधुराम्ललवणा: सुगन्धिद्रव्यजा: नानाविधा" इति। शिवदास:। दीपान्तरखर्ज्जूरे। वै.निघ.।

**खात(त्र)म्** । क्ली। पुष्करिण्याम्। अम.।

**खादन:** । पुं। दन्ते। हे.च.। क्ली। आहारे। वै.निघ.।

[तभोजनपात्रे। नकु.१८अ.।

**खादनकोष्ठकम्** । क्ली। अन्नस्य विहस्तोन्न-

**खादिर:** । पुं। विट्खदिरे। खदिरसारे। रा.नि.व.१८।

**खादिरसार:** । पुं। खदिरे। খয়ের। गुणा:—कटुत्वं तिक्तत्वं उष्णत्वं कफवातव्रणकण्ठामयनाशित्वं रुचिकरत्वं दीपनत्वञ्च। रा.नि.व.८।

**खाद्यम्** । क्ली। अष्टविधाहारान्यतमाहारे। খাবার জিনিষ। रा.नि.व.२०।

**खाद्यपत्री** । स्त्री। खदिरवृक्षे। रा.नि.व.८।

**खानि:** । स्त्री। खनौ। हे.च.।

**खानिकम्** । क्ली। कुड्यच्छिद्रे। দেওয়ালের গর্ত্ত। त्रिका.। रवे। वै.निघ.।

**खानिष्कम्** । क्ली। अतिशुष्कमांसे। वै.निघ.।

**खानोदक:** । पुं। नारिकेले। त्रिका.।

**खापगा** । स्त्री। गङ्गायाम्। हे.च.।

**खार:** । पुं। खारीपरिमाणे।

**खारि: (री)** । स्त्री। परिमाणविशेषे। स च द्रोणचतुष्टयपरिमाणे, शताधिकाष्टाविंशतिशरावपरिमाणे वा (१२८ श.)। "चतुराढ़को भवेद्द्रोण: खारी द्रोणचतुष्टयम्।" वै.निघ.।

**खारिक:** । पुं, क्ली। पुष्करतीर्थसमीपे प्रसिद्धे महापारेवतफले वृक्षे च। বড় খেজুর। रा.नि.व.११।

**खार्ज्जूरसुरा** । स्त्री। खर्ज्जूरधातकीपुष्पकृतसुराविशेषे। वै.निघ। खर्ज्जूरमद्ये। খেজুররসের মদ। गुणा:—"मार्द्वीकाल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनं। तदेव विशदं रुच्यङ्कफघ्नङ्कर्षणं लघु। कषायं मधुरं हृद्यं सुगन्धीन्द्रियबोधनम्॥" सु.सू. ४६अ.। पिण्डखर्ज्जूरविकृतिभवं खार्ज्जूरमुच्यते। मतान्तरम्। "तालसिन्दीलखर्ज्जूरमूर्द्धान्युच्छिद्य गृह्यते। यद्रसं तत्तदाख्यं हि विज्ञेयं तत्परायणै:॥" तोड़.हृद्दशौनक:।

**खालित्यम्** । क्ली। कपालरोगे। টাকরোগ। लक्षणं यथा—"तेजोऽनिलाद्यै: सह केशभूमिं दग्ध्वाशु कुर्य्यात् खलतिन्नरस्य। किञ्चित्तु दग्ध्वा पलितानि कुर्य्याद्धरिप्रलुमञ्च शिरोरुहाणां॥" च.।

**खाश्मरी** । स्त्री। गाम्भारीवृक्षे। वै.निघ.।

**खिखि:** । पुं। शृगालविशेषे। খ্যাক্শিয়ালী। मं कोल्हा। मे.।

**खिङ्कि(ङ्खि)र:** । पुं। खिखौ। খ্যাক্শিয়ালী। मे.। वारिवालके। गन्धद्रव्यविশেষ, अलबाला। विश्व.हे.च.।

**खिचा** । स्त्री। खेचरिकाम्ले। वै.निघ.।

**खिदिर:** । पुं। चन्द्रे। वै.निघ.।

**खिद्र:** । पुं। रोगे। उणा.।

[नि.व.४।

**खिरहिट्टी** । पुं। महासमङ्गानामक्षुपे। रा.

**खिल:** । त्रि। अप्रहते (भूम्यादौ)। रा.नि.व.२।

**खिलाह:** । पुं। पाण्डुकेसरपुच्छे कपिलवर्णाश्वे। "खिलाह: कपिलो वाजी पाण्डुकेसरवालधि:।" अ.द.१अ.। [श्वेतपीतक:।" अ.द.२अ.।

**खुङ्गाह:** । पुं। श्वेतपीतवर्णाश्वे। "खुङ्गाह:

**खुञ्ज(ञ्जा)क:** । पुं। देवताड़वृक्षे। र.मा.।

**खुड़:** । पुं। वातरक्तरोगे। वै.निघ.।

**खुड़कः** । पुं । गुल्फे । सु.नि १५. ।

**खुड़वातः** । पुं । वायुरोगभेदे । वै.निघ. ।

**खुड्डाकः** । त्रि । क्षुद्रे । ह्रस्वे । कनिष्ठे । च. ।

**खुड्डाकपद्मकतैलम्** । क्ली। वातरक्ते तैलम्। यथा:—"पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् । स्यात्पिष्टैः सर्ज्जमञ्जिष्ठावीराकाकोलिचन्दनैः । खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत्॥" रस.र.। च.चि.२९ष. ।

**खु(क्षु)रः** । पुं । शफे । पश्वादिनःखुर । श्मश्रुच्छेदनास्त्रे । क्षुर । श.र.। कोलदले । कुलपाता। नखीनामगन्धद्रव्ये । मे.। खट्वादिपादुके । खुरो । धरणि. ।

**खु(क्षु)रकः** । पुं । तिलवृक्षे । श.च. । कोकिलाक्षक्षुपे । कुलेखाड़ा । क्ली । उत्तमवङ्गे । वै.निघ.२भ.जीर्णज्व.चि. । [कगुक्त । अम. ।

**खुरणसः** । त्रि । चिपिटनासिके । চেপ্টা-না-

**खुरसाना** । स्त्री । खोरासनीयमान्याम् । वै.निघ.। पुं । खोरसानदेशीयोत्तमाश्वे । "ताजिकाः खुरसानाश्च तुषाराश्चोत्तमा हयाः ।" नकुलः ।

**खुराकः** । पुं । यवनाले । জনার । पशौ । वै.निघ. । [তের ভাঁড় । उपधाने । मे. ।

**खुरालिकः** । पुं । नापितभाण्डयाम् । নাপি-

**खुरासनी-वचा** । स्त्री । तद्देशीयवचायाम् । শ্বেত বচ । मं श्वेतवेखण्ड । वै.निघ. ।

**खुरासानी-यमानी** । स्त्री । यमानीभेदे खुरमाणि इति महाराष्ट्रादौ । गुणाः—"खुरासानीयमानी तु कटुः रुक्षा च पाचिका । ग्राहिकोष्णा मादिका च गुर्व्वी वातकरी मता । कफनाशकरी प्रोक्ता गुणास्त्वन्यं यमानिवत् ॥" वै.निघ. ।

**खुरिकापत्रः** । पुं । कैनीनामपत्रशाके । मं कैनी । वै.निघ. । [भ. ।

**खुलकः** । पुं । जङ्घापादयोः सन्धौ । सु.चि.१८ स्त्री । नाभिशङ्खे । र.सा.सं. ।

**खुल्लम्** । क्ली । नखीनामगन्धद्रव्ये । श.च. ।

**खुल्लकः** । त्रि । स्वल्पे । भ.टी. ।

**खेगमनः** । पुं । कालकण्ठपक्षिणि । श.मा. ।

**खेचरः** । पुं । पारदे । पक्षिणि । क्ली । खेचराञ्जने । वै.निघ. । कासीसे । হিরেকস । र.सा.सं.।

**खेचरा** । स्त्री । आकाशवल्ल्याम् । वै.निघ. ।

**खेचराञ्जनम्** । क्ली । कासीसे । হিরেকস । वै.निघ. । [पाकराज. ।

**खेचरान्नम्** । क्ली । खेचरिकायाम् । खिचुड़ी।

**खेटः** । पुं। कफे । मे.। अश्वे । क्ली । तृणे । श.र.।

**खेदिनी** । स्त्री । अश्मनपर्णीवृक्षे । श.च. ।

**खेला** । स्त्री । स्वनामख्यातक्षुपे । কেনা । गुणाः—मधुरा शीता स्तन्यदा रुचिकृच्च। रा.नि.व.५।

**खेसरः** । पुं। अश्वतरे । খচ্চোর । रा.नि.व.१९।

**खोङ्गा(ङ्गा)हः** । पुं। श्वेतपिङ्गलवर्णाश्वे। हे.च.।

**खोटः (कं)** । पुं, क्ली। यमक, फुट इति ख्याते रसजारणद्रव्ये । तल्लक्षणं यथा—"खोटकं स्वर्णसंतुल्यं समावर्त्तञ्च कारयेत् । कुक्कुटाण्डनिभं सूतं पट्ट भेदि भवेद्यदा । आवर्ज्जितं पुनस्तद्वत् खोटबद्धरसाकृति । अक्षयं कठिनं श्वेतं शिखिना मृदुना पचेत् । श्वेतपीतगुरुलघु मृदुसिक्थकसन्निभम् । अग्निमध्ये यदा तिष्ठेत्पोटबद्धस्य लक्षणम् । नानावर्णस्तथा स्वच्छो धृतो योऽग्नौ जलौकवत् । वर्द्धते सूतको यत्र जलौकाबद्धलक्षणम् ॥"

**खोटिः (टी)** । पुं, स्त्री। कान्दुरुखोटौ । च.द. वा.व्या.चि. । पालङ्कीवृक्षे । श.च. ।

**खोड़ः (रः) (लः)** । त्रि । खञ्जे । अम. ।

**खोरकः** । पुं । गर्द्दभज्वरे । गजवै. ।

**खोलकः** । पुं । वल्मीके । উইটিপি । शिरस्त्राणे । পাগড়ী । त्रिका.। पूगकोषे । সুপারির খোলা । मे. ।

**खोलिः** । स्त्री । तूणे । श मा. ।

# ग

**गगनम्** । क्ली । अभ्रधातौ । अभ्र । मेघे । रा. नि.व.२१ कनकसुन्दररसे । [See अभ्रम् ।

**गगनमारकगण:** । पुं । अभ्रमारकद्रव्येषु ।

**गगनसुन्दर:** । पुं । ग्रहण्यां रस: । रस: १ तो. गन्धकं १ तो. अभ्रं ८ तो. जलेन वटी कार्य्या । मा.२ – ४ र. । र.चि. । अन्य: ज्वरातिसारे—टङ्गणहिङ्गुलगन्धकाभ्रं प्र. समम् । क्षीरिक्षीरसेन (थिकुई) ३ भावना: । भैष. ।

**गगनस्पर्श:** । पुं । वायौ । वै.निघ. ।

**गगनादिलौहम्** । क्ली । सोमरोगे । "गगनं त्रिफला लौहं कुटजङ्कटुकत्रयम् । पारदो गन्धकश्चैव विषटङ्गणसर्जिका: । त्वगेला तेजपत्रञ्च वङ्गं जीरकयुग्मकं । एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् । तदर्द्धं चित्रकं चूर्णं .. ॥" অভ্র, ত্রিফলা, লৌহ, কুড়চি, ত্রিকটু, পারা, গন্ধক, বিষ, সোহাগার খৈ, সাজিমাটী, গুড়ত্বক্, এলা, তেজপত্র, বঙ্গ, জীরা, কৃষ্ণজীরা প্রত্যেকে সমভাগ চূর্ণ। সর্ব্বচূর্ণার্দ্ধ চিত্রকমূলচূর্ণ । र.सा.सं. ।

**गगनादिवटी** । स्त्री । वातरोगे । अभ्रक पारदगन्धकताम्रकमुण्डलौहतीक्ष्णलौहस्वर्णमाक्षिकं एषां प्र. समभागं यष्टीवासकद्राक्षाभूकुष्माण्डक्वाथेन मर्द्दयेत्। मा. २ र.। অভ্র,পারা, গন্ধক, তামা, মুণ্ড ও তীক্ষ্ণলৌহ, স্বর্ণমাক্ষিক প্রত্যেকে সমভাগ ; যষ্টিমধুর কাথ, বাসাকাথ, কিস্‌মিসের কাথ ও ভূমিকুষ্মাণ্ডকাথে মর্দ্দন। মাত্রা ২রতি। অনুপান ঘৃত ও মধু। र.सा.सं.।

**गगनाम्बु (नोदकम्)** । क्ली। नीहारजले । आकाशवारिणि । गुणा:—त्रिदोषघ्नं बल्यं रसायनं मेध्यं रक्षोघ्नं शीतलम् आह्लादकं ज्वरदाहविषघ्नञ्च । सु.सू.४६अ. ।

**गङ्का (ङ्गा, का)** । स्त्री । स्वनामख्यातनद्याम् । तज्जलगुणा:—शीतं स्वच्छं स्वादु अतिरोचकं पथ्यं पाचकं पावनं तृष्णामोहघ्नं दीपनं प्रज्ञाकरञ्च । रा.नि.व.१४। लज्जालुकायां। वै.निघ.।

**गङ्गाचिल्ली** । स्त्री । चिल्लविशेषे । গাংচীল। ছারা. । [चिल्ला. । See चिङ्गट: ।

**गङ्गाटेय:** । पुं। चिङ्गटमत्स्ये । চিংড়ি মাছ।

**गङ्गाधरक्वाथ:** । पुं। अतीसारे कच्चटाद्यपरनामकषाये। "कच्चटदाड़िमजम्बूशृङ्गाटकपत्रवर्हिष्टं । जलधरनागरसहितं गङ्गामपि वेगवाहिनीं रुन्ध्यात्॥" কাঁচড়া, দাড়িম, জাম, শিঙ্গাড়া (ইহাদের) পাতা, বালা, মুতা, শুঁট প্রত্যেকে ২২॥০ র. । भा. ।

**गङ्गाधरचूर्णम् (वृहत्)** । क्ली । अतीसारे औषधम् । मुस्ताश्योणाकशुण्ठीधातकीपुष्पलोध्रबालकविल्वशलाटुमोचरसपाठेन्द्रयवकुटजत्वगाम्रास्थिवराहक्रान्तातिविषाणां प्र. चूर्णं समभागम् । মুতা, শ্যোণা, শুঁট, ধাইফুল, লোধ, বালা, বেলশুঁটা, মোচরস, আকনাদি, ইন্দ্রযব, কুড়চিছাল, আম্রাস্থি, বরাহক্রান্তা, আতইচ প্রত্যেকে চূর্ণ সমভাগ । अन्यद्यथा—मुस्तेन्द्रयवमोचरसविल्वशलाटुधातकीलोध्राणि प्र. समभागानि । गुड़ेन सेव्यम् । মুতা, ইন্দ্রযব, মোচরস, বেলশুঁটা, ধাইফুল, লোধচূর্ণ প্রত্যেকে সমভাগ। अपरं यथा—मोचरसमुस्तकशुण्ठीपाठाश्योणाकधातकीपुष्पाणि प्र. समभागानि । दधिमस्तुना सेव्यम् । মোচরস, মুতা, শুঁট, আকনাদি, শ্যোণা, ধাইফুলচূর্ণ প্রত্যেকে সমভাগ। भा.म.१भ. ।

**गङ्गापत्री** । स्त्री। स्वनामख्यातपत्रशाकविशेषे । सं गङ्गावती । कं वद्दगाधारी । गुणा: —कटु: उष्णा वातघ्नी व्रणरोपणी च । रा.नि.व.१० । र.सा.सं.अभ्रमारणे । लज्जालुकायां । वै.निघ. ।

**गच्छ:** । पुं । वृक्षे । श.च. ।

**गज:** । पुं । हस्तिनि । अयं कूलचरत्वात्गुरु: । नागकेशरवृक्षे । নাগেশ্বর গাছ । वै.निघ. । गजपिप्पल्याम् । पञ्चतिक्तघृतम् । गजपुटे । प्रयोगा. ।

**गजकणा** । स्त्री । गजपिप्पल्याम् । र.सा. सा.कौ.वाहुशालगुड़े । [रा.नि.व.७ ।

**गजकन्द:** । पुं । हस्तिकन्दनाममहाकन्दशाके ।

**गजकर्णा (र्णी)** । स्त्री । करिकर्णवत्पत्रे कन्दशाकविशेषे । हिं हस्तिकर्णा । मं वहस्तीकन्द । गुणाः—तिक्ता उष्णा वातकफहरा पाके स्वादुः शीतज्वरघ्नी पाण्डुशोथक्रमिप्लीहगुल्मानाहोदरघ्नी वनशूरणवत् ग्रहणीअर्शोघ्नी च । भा.पू.१भ.शाकव.। आखुकर्णीलतायाम् । रा.नि.व.३।

**गजकर्णिका** । स्त्री । कर्कटिकायाम् । काँकुड़ । वै.निघ.। इन्द्रवारुणीलतायाम् । राखालशशा । रा.नि.व.३ ।

**गजकुसुमः** । पुं, क्ली । नागकेशरवृक्षे तत्पुष्पे च। नागेश्वर गाछ वा ताहार फुल । भैष. सुन्दरी.चि.अरिमेदा.गुड़ी. ।

**गजकृष्णा** । स्त्री । गजपिप्पल्याम् । भा.रुद्रतैलं । "गजकृष्णा कटुर्वातश्लेष्महृदग्निवर्द्धनी । उष्णा निहन्त्यतीसारं श्वासकण्ठामयक्रिमीन् ॥" भा. ।

**गजकेश(स)रः** । पुं । नागकेशरे । नागेश्वर । सि.यो.कार्द्दि.चि.एलादिगुड़ी. । "लवङ्गगजकेशरकोलमज्जाः ।"

**गजकेश(स)रीरसः** । पुं । आमज्वरादौ रसः । "शुद्धसूतं विषङ्गन्धं व्योषं त्रिफलमेव च । जयपालसमङ्कृत्वा भृङ्गतोयेन मर्द्दयेत् ॥" भा. १र. । रस.कौ. ।

**गजचिर्भ(र्भि)टः (टा)** । स्त्री । इन्द्रवारुण्याम् । राखालशशा, गोरक्षलाड़ु । प.मु. । रा.नि.व ३। च.द.गुल्म.चि. । (टा.) गोडुम्बायां । गोमुक । त्रिका. ।

**गजजातिः** । स्त्री । हस्तिजातौ । सा त्रिधा भद्रः मन्द्रः मृगश्चेति । रा.नि व.१९ ।

**गजदन्तः** । पुं । करिदन्ते । हातिर दाँत । वै.निघ. । एतन्मशी श्वित्रघ्नी ।

**गजदन्तफला** । स्त्री । डङ्गरीनामफलशाकलतायाम् । रा.नि.व.७ ।

**गजदन्तवत्** । क्ली । मूलके । वै.निघ. ।

**गजदन्तिका** । स्त्री । हस्तिदन्तायाम् । वा. उ.१६अ.। [अश्वत्थ । हिं बालियापिपल । भा. ।

**गजद्रुमः (पादपः)** । पुं । नन्दीवृक्षे । गश्वा

**गजपिप्पली** । स्त्री । (Scindapsus officinalis.) Syn. Pothos officinalis. स्वनामख्यातवृक्षे । गजपिपुल । तें गजपिप्पलु । सा चविकायाः फलमिति केचित् । "चविकायाः फलम्प्राज्ञैः कथिता गजपिप्पली ।" इति । गुणाः—दीपनी पाचनी उष्णालाद्रसशोधनी ग्राहिणी कटूष्णा रुचा स्तन्यविवर्द्धिनी च । रा.नि.व.६ । तत्फलं विष्टम्भि दुर्जरं रुच्यं शीतलं वातकोपनं विपाके मधुरं रक्तपित्तघ्नञ्च । सु.सू.४६अ. ।

**गजपुटम्** । क्ली । औषधपुटनार्थं सपादहस्तपरिमितनिम्नायतवृत्तखाते । ऊर्द्ध्व १।० हात, आयत १।० हात । "सपादहस्तमानेन कुण्डे निम्ने तथायते । वनोपलसहस्रेण पूर्णे मध्ये विधारयेत् । पुटनद्रव्यसंयुक्ताङ्कोष्ठिकां मुद्रितां मुखे । अथार्द्धानि करण्डानि अर्द्धोत्तुपरि निःक्षिपेत् । एतद्गजपुटम्प्रोक्तं ख्यातं सर्व्वपुटोत्तमम् ॥" भा. । "गजप्रमाणगम्भीरं गपिरं क्रमशलतं । वितस्तिवितयमुर्द्धं त्रिवितस्तितलं तथा । एवं विधाय यत्नेन विशिरस्काकारवत् । तस्य पादत्रयं सम्यक् पूरयित्वा वनोपलैः । भेषज्यकोष्ठिकां तत्र स्थापयित्वा ततः पुनः । वनोपलैः संवृणुयादेतद्गजपुटं स्मृतम् ॥" गभीर २ हात वा १।० हात, ७ विगत तला, २ विगत मुखेर काँड़ गर्त्त । अचि. । हस्तप्रमाणगर्त्तो यः पुटः स तु गजाह्वयः । इति प्रयोगा. । [द्वि.च. ।

**गजप्रिया** । स्त्री । शल्लकीवृक्षे । शालविशेष।

**गजबला** । स्त्री । गौरक्ष्याम् । গোরক্ষচাকুলিয়া । "नयति गजबलामूलं ।" च.द कास.चि.।

**गजभक्षः (क्ष्यः) (कः)** । पुं । तालवृक्षे । अश्वत्थवृक्षे । रा.नि.व.६।११ ।

**गजभक्षा (क्ष्या)** । स्त्री । The gum olibanum tree. शल्लकीवृक्षे । प.मु. ।

**गजमदः** । पुं । हस्तिमदे । वै निघ ।

**गजमदहरणी** । स्त्री । शिवलिङ्गिनीलतायाम् । वै.निघ. । [रा. । श.मा. ।

**गजमाचलः (मोटनः)** । पुं । सिंहे । हा-

**गजमुक्ता** । स्त्री । करिगण्डस्थमुक्तायाम । वै. निघ. । [नाद । भैष.कुष्ठ.चि. । सु.चि.९अ. ।

**गजल(ले)ण्डः** । पुं । हस्तिविष्ठायां । हातीर

**गजवल्लभा** । स्त्री । गिरिकदलीवृक्षे । बुनो कला । शल्लकीवृक्षे । रा.नि.व.११ ।

**गजवाजिप्रिया** । स्त्री । भूमिकुष्माण्डे । भूँइकुमड़ा । वै.निघ. । [चिकित्साशास्त्रे । चर. ।

**गजवैद्यकम्** । क्ली । पालकाप्य(व्य)कृतगज-

**गजाख्यः** । पुं । चक्रमर्द्दक्षुपे । चाकन्दा गाछ । रा.नि.व.४ ।

**गजाण्डम्** । क्ली । पिण्डमूलके । रा.नि.व.७ ।

**गजादनः** । पुं । अश्वत्थवृक्षे । र.मा. ।

**गजादिनामा** । स्त्री । गजपिप्पल्याम् । "गजादिनामाकरघाटकुष्ठैः ।" सु.चि.१८अ. ।

**गजारिः** । पुं । गजमादनशल्लकीवृक्षे । "गजारिस्तरुसिंहयोः ।" हड्डचन्द्रः ।

**गजाशनः** । पुं । कमलकन्दे । वै.निघ. । अश्वत्थवृक्षे । मद.व.५ । शालवृक्षे । र.मा. ।

**गजाशना** । स्त्री । भङ्गायाम् । भाङ, सिद्धि । श.च. । शल्लकीवृक्षे । पद्ममूले । र.मा. । शणवृक्षे । वै.निघ. । [च.द.अर्श.चि.बहुशालगुडे ।

**गजाह्वः** । पुं, क्ली । नागकेशरवृक्षे तत्पुष्पे च ।

**गजाह्वया** । स्त्री । यूथिकाक्षुपे । श्वेत यूँइ । रा.नि.व.१० । गजपिप्पल्याम् । भा.पू.१भ. ।

**गजाह्वा** । स्त्री । गजपिप्पल्याम् । "गजाह्वा व्याधिघातका ।" भा.पू.१भ. ।

**गजेष्टा** । स्त्री । भूमिकुष्माण्डे । रा.नि.व.७ ।

**गजोपकुल्या** । स्त्री । गजपिप्पल्याम् । वै.निघ. २भ.ग्रहणी.चि. । भैष.कुष्ठचि. । [निघ. ।

**गजोपमः** । पुं । कुमार्य्यां । घृतकुमारी । वै.

**गजोषणा** । स्त्री । गजपिप्पल्यां । रा.नि.व.५ ।

**गञ्जा (ञ्ज्वा) (ञ्जिका)** । स्त्री । मद्यभाण्डे । श.र. । मदिरागृहे । अम. । रत्नखनौ । मे. । गाँजा इति प्रसिद्धे वणिग्द्रव्ये । गुञ्जायाम् । वै.निघ. ।

**गञ्जायिका** । स्त्री । शक्राशने । सिद्धि, भाङ ।

**गठो(ड़ो)त्थम्** । क्ली । साम्भरापरपर्य्याये लवणे । सामर लवण । रा.नि.व.६ ।

**गड़ः (कः)** । पुं । मत्स्यभेदे । गड़ुई माछ । मे. । गुणाः—मधुरः रुचः कषायः शीतः लघुश्च । राज.३प. । क्ली । साम्भरलवणे । रा.नि.व.६ ।

**गड़देशजम्** । क्ली । साम्भरलवणे । रा.नि.व.६ ।

**गड़लवणम्** । क्ली । साम्भरदेशजलवणे । सामर लवण । गुणाः—लवणं ईषदम्लं मलघ्नम् उष्णं दीपनं कफवातार्शोघ्नं कोष्ठशोधनञ्च । रा.नि.व.६ ।

**गड़ाख्य(ड्लवण)म्** । क्ली । साम्भरलवणे । रा.नि.व.६ । [१८ ।

**गड़िः** । पुं । तरुणवृषे । युवा षाँड़ । रा.नि.व.

**गड़िशः** । पुं । तन्नामकमत्स्यविशेषे । गुणाः—गड़िशो मधुरो ग्राही बल्यो वह्निप्रदो गुरुः । राज.३प. ।

**गड़ुः (ड़ूः)** । पुं । पृष्ठग्रन्थौ । कुँज । रा.नि.व.२० । गलगण्डे । पृष्ठगुड़े, स च घाटामस्तकयोर्मध्ये मांसवृद्धिः । अ.म. । शल्यास्त्रे । श.र. । किञ्चुलुके । त्रिका. । मन्यास्तम्भरोगे । वै.निघ. । त्रि । कुब्जे । मे. ।

**गड़ुरः (लः)** । त्रि । कुब्जे । कुँजो । श.र. ।

**गड़ु(ड़ू)पदः** । पुं । किञ्चुलुके । केँचो । मंदाणा । अम. । [शर्करायाम् । वै.निघ. ।

**गड़ोलः** । पुं । गुड़े । उणा. । ग्रासे । हे.च. ।

**गड्डु(ड्डू)कः** । पुं । सौवर्णभृङ्गारे । सोणार गाड़ू । श.र. ।

**गद्या(द्या)ण(ल)कम्** । क्ली । ४८ अथवा ६४ रक्तिकमाने । लीलावती । वैद्यकम् । माषपट्के, शताधिकद्विनवतिरक्तिकासु वा । २ तोला । "गद्याणोमाषकैः षड्भिः··· । त्रिभिः शाणैर्भवेत्तोला षड्भिर्गद्याणकं विदुः ॥" तोड़नानन्द. ।

**गणः** । पुं । अजमोदायाम् । रान्धुनी । मं किरमाणीओँवा । वै.निघ. । चौरनामगन्धद्रव्ये । मे. ।

**गणकर्णिका** । स्त्री । इन्द्रवारुण्यां । रा.नि.व.३ ।

**गणपीठकम्** । क्ली । वक्षसि । श.च. ।

**गणरूपः (कः)** । पुं । अर्कवृक्षे । आकन्द गाछ । अम. । श्वेतार्कवृक्षे । र.मा. । मन्दारार्कें । रुक्मार्के । रा.नि.व.१० । See राजार्कः ।

**गणरूपी (इन्)** । पुं । श्वेतार्के । श्वेत आक-

मे । र.मा. । चर्कंवृचे । वै.निघ. । रक्तार्कें । रा. नि.व.१० ।

**गणवतीसुतः** । पुं । दिवोदासे । "धन्वन्तरि-दिंवोदासः काशिराजः सुधोद्भवः । पालिकाख्या गणवती करेणुश्चिरासुतः ।" पालकाप्ये । त्रिका.।

**गणहासः (कः)** । पुं । चोरनामकगन्धद्रव्ये । चोरा इति पश्चिमदेशे । গেঁঠেল। । मं गटोला । रा.नि व.१२ । चण्डालकन्दे । अजमोदायाम् । रा-कुनी । वै.निघ. ।

**गणिका** । स्त्री । यूथिकापुष्पवृचे । यूँइफुलेर गाछ । र मा. । श्वेतयूथिकायाम् । श्वेत यूँइ गाछ । रा.नि.व.१० । पीतयूथिकायां । वै.निघ. गणिकारिकायाम् । गणिरि । श.र. । हस्तिन्यां । जटा. ।

**गणिकारिका** । स्त्री । (Premna scratifolia. Syn. P. Spinosa.) चुद्राग्निमन्थे । छोट गणिरि । तें चिरिनेल्लिचेट्टु । गुणाः --कटूष्णतिक्तवातकफशोफश्लेष्माग्निमान्द्यार्शोमलविष्टम्भ-श्रमहरी । रा.नि व.८ । See अग्निमन्थः । गणि-कारीपुष्पवृचे । वै.निघ. ।

**गणिकारी** । स्त्री । पुष्पवृचविशेषे, कोङ्कण-देशे स्वनाम्ना प्रसिद्धे । वासन्तोफुलेर गाछ । मं गणेरी । गुणाः --अतिसुरभिः त्रिदोषघ्नी दाह-शोषहरा कामोद्दीपनी च । रा.नि.व.१० । गणि-कारिकायाम् ।

**गणेरुः** । पुं । कर्णिकारवृचे । कनिकाफुलेर गाछ । पारिभद्रवृचे । वै.निघ. । स्त्री । हस्तिन्यां । मे. । [चे । वै.निघ. ।

**गणेरुकः (का)** । पुं. स्त्री । गणिकारिपुष्पवृ-

**गणेशः (कुसुमः)** । पुं । रक्तकरवीरवृचे । रा. नि.व.१० । [मूलानि ।" अर्कप्रकाशः ।

**गणेशप्रियः** । पुं । रक्तकरवीरे । "गणेशप्रिय-

**गणेशभूषणम्** । क्ली । सिन्दूरे । रा.नि.व.१३।

**गणोत्साहः** । पुं । गण्डके । গণ্ডার । त्रिका.।

**गण्डः (कः)** । पुं । खड्गिने । গণ্ডার । मे. । कपोलदेशे । গাল । रा.नि.व.१८ । रोगविशेषे । "निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वं गण्डमिति निर्दिशेत् ॥" सु.नि. ११अ. । वारिकपोले । अम. । ग्रन्थौ । चिह्ने । पिटके । मे. । [१८अ. ।

**गण्डकर्णः** । पुं । वाद्यदीर्घैकपालिकर्णे । सु सू.

**गण्डकारी** । स्त्री । वराहक्रान्तायाम् । वरा-क्रान्ता । श्वेतलज्जालुकायाम् । लज्जावती । र. मा. । खदिरीवृचे । अम. । श.च. ।

**गण्डकाली** । स्त्री । खदिरीवृचे । अम. । का-कजङ्घायां । কেয়োঠেঙা । शल्लकीवृचे । वै.निघ ।

**गण्डकी** । स्त्री । इक्षुदण्डे । আখ । नकुल. १२अ. ।

**गण्डकुसुमम्** । क्ली । गजमदे । हारा. ।

**गण्डगात्रम्** । क्ली । (Annona squamosa.) आतापिफले । আতা, নোনা । हिं शरीफा । मं शीताफल । गुणाः --"गण्डगात्रं हिमं वृष्यं वातपित्तनिसूदनं । श्लेष्मलं तर्पणमनं वान्त्युत्क्ले-शनिपीड़नम् ॥" अत्रि. । श.च. ।

**गण्डगोपालिका** । स्त्री । आम्रवाटिकास्थ-कीटविशेषे । আম্‌পোকা। हिं गण्डगुयारि। भा. ।

**गण्डदूर्व्वा** । स्त्री । जलोपरिजायमानदूर्व्वावि-शेषे । দূর্ব্বাবিশেষ, গেঁটে দূর্ব্বা । हिं गाण्डरि दुविपाच । मं गण्डरदूर्वा गाढ़ीहरियाली । कं मौनगत्ते । गुणाः--मधुरा शीतला वातपित्तज्वर-घ्नी द्वन्द्वदोषघ्नी भमतृष्णाश्रमघ्नी च । रा नि.व.८ । "गण्डदूर्व्वा हिमा लोहद्राविणी ग्राहिणी लघुः । तिक्ता कषाया मधुरा वातकृत्कटुपाकिनी । दाह-तृष्णा बलासास्रकुष्ठपित्तज्वरापहा ॥" भा. ।

**गण्डफलकः** । पुं । प्रशस्तगण्डस्थले । প্রশস্ত গাল । वै.निघ. ।

**गण्डमाला** । स्त्री । Inflamation of the glands of the necks &c. स्वनामख्यात-गलरोगविशेषे । গণ্ডমালা । तस्य सम्प्राप्तिरूपे-- "कर्कन्धुकोलामलकप्रमाणैः कचांसमन्यागलवङ्क्षणे-षु । मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः ॥" मा.नि.। "मेदस्थाः कण्ठमन्या-चकचावङ्क्षणगा मलाः । सवर्णान् कठिनान् स्नि-ग्धान्वार्त्ताकामलकाकृतीन् । अवगाढ़ान् बहून् ग-ण्डान् चिरपाकांश्च कुर्व्वते । पच्यन्तेऽल्परुजस्त्वन्ये स्रवन्त्यन्येऽतिकण्डुराः । नश्यन्त्यन्ये भवन्त्यन्ये दीर्घ-

क्षालानुबन्धिनः। गण्डमालापची चेयं दूर्व्वेव क्ष-यहृद्विभाक्। तां त्यजेत्सज्वरच्छर्द्दिपार्श्वरुक्कासपीनसां ॥" वा.उ.२९अ.। "छर्द्दिर्विरेचनं स्वेदो नस्यं धूमः शिराव्यधः। अग्निकर्म्म चारयोगः प्रलेपो लङ्घनानि च। पुराणघृतपानञ्च जीर्णलोहितशालयः॥" इति पथ्यापथ्यम्।

**गण्डमालिका।** स्त्री। गण्डमालायाम्। लज्जालुकायाम्। रा.नि.व.५।

**गण्डरोगः।** पुं। अश्वस्य मुखरोगभेदे। "गण्डाभ्यन्तरगो गण्डः गण्डरोग इति स्मृतः।" ज.द.२९अ.।

**गण्डशैलः।** पुं। ललाटे। हे.च.।

**गण्डस्थलम्।** क्ली। कपोलदेशे। वै.निघ.।

**गण्डाङ्गः।** पुं। खड्गिनि। गण्डार। श च.।

**गण्डारिः।** पुं। कोविदारवृक्षे। रक्तकाञ्चन गाछ। भा.। मत्स्यविशेषे। वै.निघ.।

**गण्डालजी।** स्त्री। गण्डजरोगे। लक्षणं—"गण्डालजी स्थिरः शोफः गण्डे दाहज्वरान्वितः॥" वा.उ.२१अ.।

**गण्डालिनी (ली)।** स्त्री। गण्डदूर्व्वायाम्। रा.नि.व.८। श्वेतदूर्व्वायाम्। अम.। सर्पाच्याम्। सुगन्ध नाम्नी। भा.। [सु.शा.५अ.।

**गण्डास्थि।** क्ली। कपोलास्थिद्वये। च शा.७अ.।

**गण्डिः।** पुं। वपुषि। कण्ठमणौ। तरुशाखायाम्। वै.निघ.। तरुकाण्डे। हे.च.।

**गण्डीरः।** पुं। शाकविशेषे। गण्डिनी, शालिञ्च, शमठ शाक, शुनछिया। अ टी.भ.। च.सू.४अ.। मञ्जिष्ठायाम्। स्नुहीवृक्षे। रा.नि.व.८। कटुशुरणे। वै निघ.।

**गण्डीराद्यतैलम्।** क्ली। मण्डलकिटिमादि-कुष्ठरोगेषु हितम्। "गण्डीरिकाचित्रकमार्कवार्क-कुष्ठद्रुमलम्लवणैः समूत्रैः। तैलम्पचेत्"......। तैल ৪ श. गोमूत्र १७ श.। कल्क—स्नुही-क्षीर वा मञ्जिष्ठा, चित्रकमूल, भृङ्गराज, आकन्द-आटा, कुड़, कुटजत्वक् वा सोणालुछाल एवं सैन्धव लवण मिलित १ श.। च.द.।

**गण्डीरिका (री)।** स्त्री। स्नुहीवृक्षे। मनसा सिजुर, तेकाँटा सिजु। रा.नि.व.८। च.द.गण्डीराद्यतैले। मञ्जिष्ठायाम्। प.मु.। शाकविशेषे। भा.म.प्रमेह.चि.। इचौ। रक्तकाञ्चनवृक्षे। वै.निघ.संग्रहणी.चि.चाङ्गेरीघृते। [जटा०।

**गण्डुः।** पुं, स्त्री। ग्रन्थौ। वै.निघ.। उपधाने।

**गण्डूपदः।** पुं। किञ्चुलुके। केँचो। अम.।

**गण्डूपदभवम्।** क्ली। शीषके। हे.च.।

**गण्डूपदाद्यतैलम्।** क्ली। व्रणरोगे हितम्। कटुतैलं ४ श. पाकार्थजलं १६ श. कल्कार्थगण्डूपदः (केँचो) १ श.। अथवा कटुतैलं १ श. कल्कार्थगण्डूपददशकं (केँचो १०टा)। च.द.।

**गण्डूपदी।** स्त्री। जलपिप्पल्याम्। वै.निघ.। क्षुद्रकिञ्चुलुकायाम्। अम.।

**गण्डूली।** स्त्री। गण्डदूर्व्वायाम्। वै.निघ.।

**गण्डूषः (धारणं)।** पुं, क्ली। चुलुके। गण्डूष। स्नेहक्षीरकषायादिद्रवैर्मुखापूरणं गण्डूषः। आपूर्य्य च मुखेन धारणं गण्डूषधारणमुच्यते। तस्य द्रव्यमात्रा द्रवद्रव्यं पलमात्रं सूक्ष्मचूर्णस्य च कोलपरिमाणम्। तद्धारणमात्रा—"असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता।" च.द.। तत्र गण्डूषधारणं तावत्कार्य्यं यावत्कफपूर्णास्यता दोषच्छेदः नेत्रघ्राणस्रुतिश्च भवेत्। गण्डूषश्चतुर्विधः स्नेहनशमनशोधनरोपणभेदेन। "स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः। पित्ते कटुम्ललवणोरुष्णैः संशोधनः कफे। कषायतिक्तमधुरैः कटूष्णो रोपणो व्रणे। इति। दद्याद्द्रवेषु चूर्णञ्च गण्डूषे कोलमात्रकम्। कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः। धार्य्यन्ते पञ्चमाद्वर्षाद्गण्डूषाः कवलादयः। व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवं। इन्द्रियाणां प्रसादश्च गण्डूषे विहिते भवेत्॥" भा.। असञ्चारी मुखे पूर्णे गण्डूषः कवलोऽन्यथा। द्रवेषु दद्याच्चूर्णं हि गण्डूषे कर्षमात्रकम्॥ पलमात्रं द्रवं सर्व्वं गण्डूषे दापयेद्बुधः। द्रवेण कार्य्यो गण्डूषः कल्केन कवलः स्मृतः। कल्कः शकलरूपः स्यान्न तु सूक्ष्मं प्रदापयेत्॥ एकद्वित्रिचतुःपञ्चवारान् कुर्य्यादनालसः।" करिगण्डाग्रभागे। प्रसृतिपरिमितौ। मे.।

**गण्डोलः।** पुं, क्ली। गुड़े। त्रिका.। शर्करायाम्। ग्रासे। वै.निघ.। [रोमादि.।

**गतशोकः।** पुं। अशोकवृक्षे। वा.सू.१५अ.

**गतार्त्तवा** । स्त्री । निवृत्तरजस्कायां वृद्धायां स्त्रियाम् । रा.नि.व.१८ ।

**गतिः (कः)** । स्त्री, पुं । नाड़ीभेदे । नाली । नाड़ीव्रणे । मे. । अश्वस्य गतिविशेषे । ঘোড়ার চাল, কদম । म. । तद्यथा—"सङ्कीर्णा विकटभ्रष्टा वक्रा सौष्ठववर्ज्जिता । अत्यूर्द्ध्वा वलिता चैव वाजिनां निन्दिता गतिः ॥ घोड़शच्छोटिकाभिस्तु करवेष्टितजानुभिः । शतं द्विगुणितङ्गत्वा हस्तानां पुनरेति यः ॥ स शीघ्रगतिरित्युक्तो वाजी धन्यस्तपोधनैः । दशहीना भवन्त्येते मध्यमाधमगा हयाः ॥ दूरमुत्क्षिप्य यः पादांस्तमाङ्गारान् स्पृशन्निव । पुनर्यांति सुसंहृष्टो वाजी भद्रगतिस्तु सः ॥ पूजिता वृषमातङ्गसिंहशार्द्दूलगामिनः । अतोऽन्य गतयो नेष्टाः सर्व्वदैव तुरङ्गमाः ॥" ज.द.७अ. । "गतयः षड्विधा धाराः स्कन्दितं रेचितं प्लुतम् । धौरितकं वल्गितञ्च तासां लक्ष्म पृथक् पृथक् ॥" इति शुक्रः । "धौरितं वलितं प्लुत्युत्तेजितोत्तेजितानि च । गतयः पञ्च धाराख्यास्तुरङ्गानां क्रमादिमाः ॥" है.च. । "गतिः प्लुता चतुष्का च तद्वन्मध्यजवापरा । पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः ॥" "गतिरेका प्लुता चास्य चातुरीया द्वितीयका । वेगसम्मिश्रतृतीया च धारा वेगवती तुरी ॥ धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति । सर्व्वकर्म्मकृतो वाजी तस्मात्तां परिवर्ज्जयेत् ॥" नकुल. ।

**गदम्** । क्ली, पुं । विषे । कुष्ठौषधौ । कुड़ । रा.नि.व.६।१२ । वै.निघ.अन्तकसन्निपात.चि. । रोगे । रा.नि.व.२० ।

**गदघ्नः** । पुं । नन्दीवृक्षे । वै.निघ. ।

**गदनिश्चयः** । पुं । माधवीयरोगनिश्चायकग्रन्थे ।

**गदमुरारिः** । पुं । प्रौढ़ामज्वरे रसः । "रसबलिशिललौहव्योषताम्राणि तुल्यान्यथ सदरदनागं भागमेतत्प्रदिष्टं,भवति गदमुरारिश्चासृगुञ्जाद्वयं ।" রস, গন্ধক, মনছাল, লৌহ, ত্রিকটু, তাম্র, হিঙ্গুল, শীষ প্রত্যেকে সমভাগ । र.सा.सं. ।

**गदविनोदनिघण्टुः** । पुं । वैद्यकनिघण्टुभेदे ।

**गदहरः (री (इन्))** । पुं । वैद्ये । वै.निघ. ।

**गदा** । स्त्री । पाटलवृक्षे । श.च. ।

**गदाख्यम्** । क्ली । कुष्ठे । कुड़ । र.मा. ।

**गदागदौ** । पुं द्वि. । अश्विनीकुमारौ । त्रिका. ।

**गदाग्रणीः** । पुं । क्षयरोगे । रा.नि.व.२० ।

**गदारातिः** । पुं । औषधे । रा.नि.व.२० ।

**गदार्त्तिका** । स्त्री । गोजिह्वायाम् । পাথরকুচি । वै.निघ. ।

**गदाह्व(य)म्** । क्ली । कुष्ठे । कुड़ । श.र. ।

**गदी (इन्)** । त्रि । रोगिणि । वै.निघ. ।

**गद्गदः** । पुं । वातव्याधिविशेषे । তোৎলা । सु.सू.१अ. । See मिन्मिनः ।

**गन्ता** । त्रि । संवरणशीले । सु.शा.३अ. ।

**गन्धम्** । क्ली । अगुरुणि । कृष्णागुरुणि । रा. नि.व.१२ ।

**गन्धः (कः)** । पुं । Sulphur. स्वनामख्यातखनिजौषधातौ । গন্ধক । हिं गन्धक । फार्सि गोगिर्द । "श्वेतद्वीपे पुरा देव्या क्रीड़न्त्या रजसाप्लुतं । दुकूलं तेन वस्त्रेण स्नातायां क्षीरनीरधौ । प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत ॥" भा. । स च रक्तपीतश्वेतकृष्णत्वात् चतुर्विधः । पीतः औषधेषु, श्वेतः चर्म्मरोगेषु वाह्यप्रयोगेषु च व्यवहार्य्यः । र.सा.सं. । "चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः । रक्तो हेमक्रियासूक्तः पीतश्वेतौ रसायने । व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्लभः ॥ गुणाः—कटुकः वीर्य्योष्णस्तुवरः सरः । पित्तलः कटुकः पाके कण्डूवीसर्पजन्तुजित् । हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः ॥ अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे । सौख्यञ्च रूपञ्च बलं तथौजः शुक्रं निहन्त्येव करोति चास्रम् ॥" भा.पू.१भ. । तच्छुद्धिः—"लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते तस्य समानञ्च निःक्षिपेद्गन्धकं रजः । विद्रुतङ्गन्धकं ज्ञात्वा दुग्धमध्ये निधापयेत् । एवं गन्धकशुद्धिः स्यात्सर्व्वकार्य्येषु योजयेत् ॥" एवं त्रिफलाजलभृङ्गराजस्वरसादौ निःक्षिपेदिति मतान्तरम् । सा.कौ. । शुद्धगन्धकगुणाः—"शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युज्वरादिकान् । अग्निकारी महानुष्णो वीर्य्यवृद्धिं करोति

च ॥" र.सा.सं.५ष. । आमोदे । विश्व. । सुद्दरी-गे । वै.निघ. । शोभाञ्जनवृक्षे । श.र. । गन्धरसे । वै.निघ. ।

**गन्धककज्जलिः** । पुं । सन्निपातज्वरे देयः । पाठः—"कण्टकारी सिन्धुवारस्तथा नाटकरञ्जकं । अमीषां रसमादाय कृत्वा खर्परखण्डके । प्रक्षिप्य गन्धकं तत्र ज्वालां मृदग्निना दहेत् । गन्धके स्नेहतापन्ने पारदं तत्समङ्क्षिपेत् । मिश्रीकृत्य ततो हाभ्यां द्रवं समवतारयेत् । आमर्दयेत्तथा तत्तु यथा स्यात्कज्जलप्रभम् । ततस्तु रक्तिकामस्य जीरकस्य च माषकं । माषैकं लवणस्यापि पर्णे कृत्वा प्रदापयेत् । ज्वरे त्रिदोषजे घोरे जलमुष्णं पिबेदनु ॥" रस.र. ।

**गन्धकतैलम्** । क्ली । कर्णनाड्यां हितम् । "निशागन्धपलै द्वे तु कटुतैलं पलाष्टकं । धूर्त्तपत्ररसे सिद्धं कर्णनाड़ीजिदुत्तमम् ॥" कटुतैलं ८ प. धुस्तूरपत्ररसः ८ प. । कल्कः—हरिद्रा १ प. गन्धकः १ प. एकत्र पचेत् । रस.र. ।

**गन्धकन्दकः** । पुं । कशेरौ । रा.नि.व.८ ।

**गन्धकली** । स्त्री । प्रियङ्गौ । च.द.विष.चि. । चम्पककलिकायाम् । [वै.निघ. ।

**गन्धकारी** । स्त्री । श्वेतलज्जालुके । शल्लकीवृक्षे ।

**गन्धकाष्ठम्** । क्ली । अगुरुकाष्ठे । त्रिका. । प्रवरचन्दने, ईषत्पीतचन्दने । रा.नि.व.१२ । कृष्णागुरुणि वै.निघ. । [व्या.एकादशशती.प्र.तैलं ।

**गन्धकी** । स्त्री । सल्लक्याम् । शालूई । च.द.वा.

**गन्धकुटी** । स्त्री । मुरामांस्याम् । रा.नि.व.१२।

**गन्धकुसुमा** । स्त्री । कोङ्कणदेशे ख्याते गणिकारीपुष्पवृक्षे । रा.नि.व.१० ।

**गन्धकेलिका** । स्त्री । कस्तुर्य्याम् । रा.नि.व. १२ । गन्धमालत्याम् । वै.निघ. ।

**गन्धकोलिका** । स्त्री । गन्धमालतीतुल्ये गन्धद्रव्यविशेषे । गुणाः—"स्निग्धोष्णा कफहृत्तिक्ता सुगन्धा गन्धकोलिका । गन्धकोलिकया तुल्या विज्ञेया गन्धमालती ॥" भा.क.व. ।

**गन्धखेड़(क)म्** । क्ली । गन्धवीरणे । गन्ध बेणा । एतच्च सुगन्धि ईषत्तिक्तं रसायनं स्निग्धं मधुरं शीतलं कफपित्तश्रमहरञ्च । रा.नि.व.८ ।

**गन्धगर्भः** । पुं । विल्ववृक्षे । वै.निघ. ।

**गन्धगृहा** । स्त्री । मुरामांस्याम् । वै.निघ. ।

**गन्धग्राही** । स्त्री । नासिकायाम् । वै.निघ. ।

**गन्धचेलिका (ली)** । स्त्री । लताकस्तुर्य्याम् । प.मु. । कस्तूर्य्याम् । मृगनाभि । त्रिका. । जवादिकस्तूर्य्याम् । थाटाशी । वै.निघ. ।

**गन्धजातम्** । क्ली । तेजपत्रे । श.र. ।

**गन्धज्ञा** । स्त्री । नासायाम् । हे.च. ।

**गन्धतण्डुलः** । पुं । सुगन्धशालौ । रा.नि.व.१६ ।

**गन्धतुलसी** । स्त्री । सुगन्धतुलसीक्षुपे । फुलतुलसी, গোলাপতুলসী । प.मु. ।

**गन्धतृणम्** । क्ली । Andropogon schoenanthus.) स्वनामख्याततृणे सुगन्धभूतृणे वा । গন্ধতৃণ, সুগন্ধি তৃণ । गुणाः—सुगन्धि ईषत्तिक्तं रसायनं मधुरशीतं कफपित्तश्रमघ्नञ्च । रा.नि.व. ८ । बालके । वै.निघ. ।

**गन्धतैलम्** । क्ली । पक्वतैलविशेषे । आवर्त्तमानदुग्धे गन्धकरजो दत्त्वा तज्जातदधिजं घृतं गन्धतैलमुच्यते । इदं गलत्कुष्ठे लेपनभक्षणाद्धितम् । "आवर्त्तमाने पयसि दत्त्वा गन्धकजं रजः । तज्ज।तदधिजं सर्पिर्गन्धतैलं वदन्ति हि । गन्धतैलं गलत्कुष्ठं हन्ति लेपाच्च भक्षणात् ॥" चचि. । मतान्तरं यथा—"अर्कक्षीरैः स्नुहीक्षीरैर्वस्त्रं लेप्यन्तु सप्तधा । गन्धकं नवनीतेन पिष्ट्वा वस्त्रं प्रलेपयेत् । तद्वर्त्तिर्ज्वालिता दण्डे धृता धार्य्या त्वधोमुखी । तैलं पतत्यधः पात्रे ग्राह्यं योगेषु योजयेत् ॥" भैष. । अन्यत् भग्नरोगे हितम् । सु.चि.३अ.मृग्यं । अपरं सवणभग्नाधिकारे । चतुःशरावोचितकृष्णतिलान् गृहीत्वा वस्त्रेण पोट्टलीबद्धान् कृत्वा स्रोतोजले निमज्ज्य रात्रौ स्थापयेत् । ततो दिवसे आतपे शोषयेद्दिनसप्तकं यावत् । तत्तिलतुल्यपरिमाणे गव्यदुग्धे रात्रौ तिलान् प्रक्षिप्य दिवा प्रसार्य्य आतपे शोषयेत् । तदनुभाव्यद्रव्यसमयष्टिमधुक्काथेन ततः पुनः क्षीरेण विभाव्य शोषयित्वा चूर्णयेत् । अथ काकोल्यादिचूर्णं तिलचूर्णचतुर्थांशं वा समं वा गृहीत्वा तिलचूर्णेन मेलयेत् । ततः एलादिगन्धद्रव्यशृतं क्षीरं तावन्मानं ग्राह्यं यावता पीड़नार्थं समस्तं तिलादिचूर्णम् आर्द्रं भवेत् । (इति वृद्धोपदेशः ।)

एवंविधं निष्पीड़ितं तैलं काकोल्यादिशतपुष्पान्तै-स्तथा एलादिशृङ्गाटकान्तैः कल्कद्रव्यैः तैलचतुर्गुणजलेन यथाविधि पाच्यं। चीरशुक्ला चीरविदारी, अनन्ता दूर्व्वा, मधूलिकं नर्कटहसिद्धयम्। च.द.।

**गन्धत्वक्** । स्त्री। एलवालुके। रा.नि.व.४।

**गन्धदला** । स्त्री। अजमोदायाम्। वनयमानी। रा.नि.व ६।

**गन्धद्रव्यम्** । क्ली। पक्वतैलसुवासनद्रव्ये। गन्धमशला। तानि यथा—"एलाचन्दनकुङ्कुमागुरुमुराकङ्कोलमांसीशटीश्रीवासच्छदग्रन्थिपर्णशशभृत्चौ-श्रीध्यजोशीरकम्। कस्तूरीनखपूतिगन्धजलमुर्व्वश्री-खदङ्गादिकं गन्धद्रव्यमिदं प्रदेयमखिलं शोधितुतैलादिषु॥" च.द.। अन्यच्च यथा—"कुष्ठञ्च नलिका पूतिकशीरं श्वेतचन्दनं। जटामांसी तेजपत्रं नखी मृगमदः फलं। कङ्कोलकुङ्कुमश्चैवं लताकस्तूरिका वचा। सूक्ष्मैलागुरुमुस्तञ्च कर्पूरं ग्रन्थिपर्णकं। श्रीवासः कुन्दुरुर्देवकुसुमञ्चमातृकः। सिह्वकी मिषिका मैथी भद्रमुस्तं तथा शटी। जातीकोषः शैलजञ्च देवदारु सजीवकम्। एतानि गन्धद्रव्याणि॥" तत्कुङ्कुमादिकं पञ्चपल्लवतोयेन भवति। "आम्रजम्बूकपित्थानां वीजपूरकविल्वयोः। गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम्॥" भैष.। गुणाः—हृद्यं दीपनं पाचनं सुखदौर्गन्ध्यहरं मेदः-श्रमघ्नञ्च। रा.नि.व.।

**गन्धद्रावकम्** । क्ली। अर्कौकृतौषधविशेषे। द्रावकविशेष। साधनविधिः यथा—'कासीशं गन्धकं वापि सन्दह्येयन्त्रयोगतः। सोरकञ्चापि (সোরা) सन्दह्य द्वयोर्धूमं विमिश्रयेत्। शीषपात्रेऽम्बुनाप्येष द्रावकं तेन जायते॥ निर्ज्जलं तत्र सेवेत परं दाहकरं हि तत्। चतुर्द्दशगुणैस्तोयैर्युतं विन्दुमितं पिबेत्॥" अचि.।

**गन्धधूमजः** । पुं। स्वादुनि अगुरुसारे। स्वादु अগুরু। रा.नि.व.१२।

**गन्धधूलिः (ली)** । स्त्री। कस्तूर्य्यां। हे.च.।

**गन्धनकुलः** । पुं। छुच्छुन्दर्य्याम्। ছুঁচো। हारा.।

**गन्धनाकुली** । स्त्री। रास्नायाम्। अम.। (Ophioxylon serpentinum.) नाकुली-नामकन्दशाकभेदे, गन्धरास्नायाम्। सुगन्ध नाकुली, गन्धरास्ना। हिं नाइ। गुणाः—"नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूता-वृश्चिकाखुविषज्वरकृमिव्रणान्॥" भा.। कटुतिक्तोष्णा त्रिदोषघ्नी विषघ्नी नाकुल्या ईषच्छ्रेष्ठा च। रा.नि.व ६।

**गन्धनामा (म्नी)** । पुं। रक्तपुष्पतुलस्याम्। मं सुवासिक औषधिविशेष। र.मा.। स्त्री (म्नी)। तन्नामकक्षुद्ररोगभेदे। কুগত ফোড়া। "तादृशी महती लेका गन्धनामेति कीर्त्तिता।" वा.उ.३१ अ.। लक्षणं यथा—"एकामेतादृशीं दृष्टा पिड़कां स्फोटसन्निभां। त्वग्जातां पित्तकोपेन गन्धनाम्नीं प्रचक्षते॥" मा नि.। भा.म.४भ.। [त्रिका.।

**गन्धनालिका (ली)** । स्त्री। नासिकायाम्।

**गन्धनिलया** । स्त्री। नवमल्लिकायाम्। मं वटमोगरी। श.च.।

**गन्धनिशा** । स्त्री। गन्धहरिद्रायाम्। আমআদা। मं आंबेहलद। रा.नि.व.६।

**गन्धपत्र(क)म्** । क्ली। तेजपत्रे। वै.निघ.अर्श:-चि.कनकार्णवरसे। सुगन्धपत्रविशेषे। পচাপাত। "गन्धाढ्या सौरभेयी च गन्धपत्रं नपुंसकं।" गुणाः—गन्धपत्रं वातहरं शीतलं वह्निवर्द्धनम्। रा.नि.व.१०। प्रसारणीपत्रे। গন্ধভাদুলের পাতা। सुदर्शनचूर्ण.ज्व.चि.। पुं। श्वेततुलस्याम्। मरुवकवृक्षे। গন্ধতুলসী, নাগদনা इति केचित्। वर्व्वरे। কাল বাবুই। रा.नि.व.१०। नागरङ्गवृक्षे। विल्ववृक्षे। रा.नि.व.११।

**गन्धपत्रा (त्रिका) (त्री)** । स्त्री। मालवे प्रसिद्धगन्धपलाश्याम्। पलाशनाम इति दाक्षिणात्याः। শটীবিশেষ, গন্ধশটী, আম আদা। अजमोदायाम्। বনযমানী। रा.नि.व.६। गङ्गापत्रां। পত্রশাকবিশেষ। रा.नि.व.१०। अश्वगन्धायां। अम्बष्ठायाम्। আকনাদি। रा.नि.व.४।

**गन्धपर्णम्** । क्ली। काकपुष्पे।

**गन्धपलाशजा (शिनी)** । स्त्री। वंशलोचनभेदे। वै.निघ.।

**गन्धपलाशिका (शी)** । स्त्री। (Curcuma amhaldi zerumbet) गन्धशट्याम्,

तन्नामकसुगन्धद्रव्ये । गन्धपलाशीति काश्मीरे प्रसिद्धा । গন্ধশটী, আম আদা । मं कापूरकाचरी, आंबेहळद । गुणाः —"भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः । तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी । शोथकासव्रणश्वासशूलहिक्काग्रहापहा ॥" भा. । कटुः स्वादुः तीक्ष्णोष्णा वातकफघ्नी कासच्छर्द्दिघ्नी पित्तकोपनी च । रा.नि.व.६ । (का) हरिद्रायां ; हारा. । [ভেদ । वै.निघ. ।

**गन्धपल्लवा ।** स्त्री । गन्धपलाश्याम् । শটী-

**गन्धपाषाणः ।** पुं । गन्धके । र.मा.। भैष.कुष्ठ. चि. ।

**गन्धपिण्डिका ।** स्त्री । गन्धकजारणमारणार्थं सगन्धकपिष्टौ । "शुद्धसूतपलैकन्तु कर्षैकं गन्धकस्य च । खिन्नखल्ले विनिक्षिप्य देवदालीरसप्लुतम् । मर्द्दयेच्च कराङ्गुल्या जायते गन्धपिण्डिका ॥" र.चि. ५स्त. ।

**गन्धपिण्डीरः ।** पुं । कृष्णमदनवृक्षे । কাল ময়না গাছ । मं कालेगेँळ । वै.निघ. ।

**गन्धपिशाचिका ।** स्त्री । धूपे । हे.च. । कुन्दुरुर्ध्याम् । वै.निघ. ।

**गन्धपीता ।** स्त्री । गन्धपत्रायाम् । रा.नि.व. ६ । गन्धशट्याम् । वै.निघ. ।

**गन्धपुष्पः (कः) ।** पुं । (Calarpus Rotang.) वेतसवृक्षे । বেত গাছ । बहुवारवृक्षे । रा.नि.व.९।११ । अङ्कोटवृक्षे । আঁকোড় গাছ । जटा. । अशोकवृक्षे । नीलीवृक्षे । वै.निघ. ।

**गन्धपुष्पा ।** स्त्री । गणिकारिकापुष्पवृक्षे । केतक्याम् । কেয়া গাছ । रा.नि.व.१० । नील्यां । रा.नि.व.४ ।

**गन्धपूतना ।** स्त्री । पूतनाभेदे ।

**गन्धप्रियङ्गुः ।** पुं, स्त्री । प्रियङ्गुभेदे । প্রিয়ঙ্গু
* লতা । हिं फुलप्रियङ्गु । मं गहूला । गुणाः— तीक्ष्णः तिक्तः हृद्यः शीतलः केश्यः वान्तिभ्रान्तिदाहपित्तरक्तज्वरमोहस्वेदकुष्ठमुखजाड्यदृष्णाहरः वातं गुल्मं विषं मेदं मेहञ्च नाशयेत् । बीजं — कषायं मधुरं शीतलं रुच्यं ग्राहि गुरु रक्तपित्तघ्नं मलविष्टम्भि बल्यं पित्तघ्नं कफघ्नम् आध्मानकरञ्च । वै.निघ.

**गन्धफणिज्झकः ।** पुं । रक्ततुलसीवृक्षे । र.मा.।

**गन्धफलः ।** पुं । कपित्थवृक्षे । विल्ववृक्षे । तेजःफलवृक्षे । रा.नि.व.११ ।

**गन्धफला ।** स्त्री । प्रियङ्गुवृक्षे । श.र. । मेथिकायाम् । शल्लकीवृक्षे । रा.नि.व.६।११ । मुरामांस्याम् । वै.निघ. । [व.६ ।

**गन्धफलिका ।** स्त्री । स्थूलैलायाम् । रा.नि.

**गन्धफली ।** स्त्री । प्रियङ्गौ । वै.निघ. । चम्पककलिकायाम् । চাঁপার কলি । रा.नि.व.१० ।

**गन्धबधूः ।** स्त्री । शट्याम् । मं कापूरकाचरी, कचोरा । चिरानामगन्धद्रव्ये, चौड़ानामदेवदारुभेदे । रा.नि.व.१२ ।

**गन्धबन्धुः ।** पुं । आम्रवृक्षे । रा.नि.व.२३ ।

**गन्धबह(हु)लः ।** पुं । सुगन्धशालिधान्ये । वै. निघ. । सितार्ज्जकवृक्षे । শ্বেতপত্র ক্ষুদ্র তুলসী । रा.नि.व.१० । स्त्री । श्वेतार्ज्जके । বাবুই । मं श्वेतआजवला । गोरचचित्रायाम् । रा.नि.व.५ ।

**गन्धभद्रा ।** स्त्री । प्रसारण्यां । গন্ধভাদুলিয়া । मं मंधलीलता । श.च. ।

**गन्धभाण्डः ।** पुं । गर्द्दभाण्डवृक्षे । श.र. । आम्रातके । আমড়া । च.सू.४अ. ।

**गन्धमेदकः ।** पुं । कटके । काचके । लौहे । तिलके । रा.नि.व.२३ ।

**गन्धमांसी ।** स्त्री । A kind of Indian spikenard. सुगन्धजटामांस्याम् । मं कं बहुलगन्धजटामांसी । गुणाः—तिक्ता शीता कफघ्नी कण्ठरोगघ्नी रक्तपित्तहरी विषघ्नी भूतज्वरघ्नी । रा.नि.व.१२ ।

**गन्धमातृका ।** स्त्री । गन्धमात्रेति प्रसिद्धे बणिग्द्रव्ये । भैष.स्त्रीरोग.उत्पलादिः ।

**गन्धमादनः ।** पुं। गन्धके । भ्रमरे । वानरविशेषे । मे. । लूतादिकीटविषघ्नागदविशेषे । "नतरीप्रवचाकट्वीपाठेलापत्रकुङ्कुमैः ।" वा.उ.३७अ. ।

**गन्धमाद(दि)नी ।** स्त्री । चौड़ानामदेवदारुभेदे । आम्रवृक्षे । रा.नि.व.१२।२३। लाक्षायां । रा.नि.व.६ । वन्दाके । मुरामांस्याम् । रा.नि.व. ११ । सुराविशेषे । त्रिका. ।

**गन्धमार्ज्जारः ।** पुं । The civet cat

स्त्रीमत्रमार्ज्जारे। गन्धगोकुल। जटा.। मार्ज्जारीनामौषधौ।

**गन्धमार्ज्जारवीर्य्यम्।** क्ली। गन्धमार्ज्जाराण्डोद्भवसुगन्धद्रव्याम्। थाटाशी। गौरासाखभेदे। हिं खांड़ी। गुणाः—"वीर्य्यं कफवातघ्नम्। कण्डूकुष्ठहरं नेत्रं सुगन्धं स्वेदगन्धनुत्॥" भा.।

**गन्धमालती।** स्त्री। गन्धकोकिलानामगन्धद्रव्यविशेषे। भा.। [नाम्नी।

**गन्धमाला।** स्त्री। क्षुद्ररोगभेदे। See गन्ध-

**गन्धमालिनी (न्या)।** स्त्री। मुरामांस्यां। जटा.। सुगन्धशाली। रा नि.व.१६।

**गन्धमुण्डः।** पुं। पारीषाख्ये। पलाशी। पिুল, গন্ধভাতুলিবিশেষ, গন্ধমুণ্ডেঁটু। हिं गन्धियाभाँट, गजहुण्ड। भा.। See पारीषा:।

**गन्धमूलः (कः)।** पुं। कुलञ्जनवृक्षे। रा.नि.व.६। बालके। বালা। वै.निघ.। शट्याम्। श.र.।

**गन्धमूला।** स्त्री। शट्याम्। शल्लकीवृक्षे। रा.नि.व.११। स्थलकमलिन्यां। रास्नायां। वे.निघ.।

**गन्धमूलिका (ली)।** स्त्री। गन्धशट्याम्। माकन्द्याम्। रा.नि.व.६।७। अम।

**गन्धमूषिकः (षिका) (षी)।** पुं, स्त्री। छुच्छुन्दरी। ছুঁচো। विका.। हे.च।

**गन्धमृगः।** पुं। खट्टाशे। গন্ধগোকুল, থাটাশ। मं जवादीमांजार। श.मा.। [वै.निघ.।

**गन्धमृत्पुष्पः।** पुं। कदम्बवृक्षे। কদম গাছ।

**गन्धमेदिनी।** स्त्री। चम्पककलिकायाम्। চাঁপার কলি। वन्दाके। मान्दरा। रा.नि.व.१०।

**गन्धमैथुनः।** पुं। वृषभे। ষাঁড়। विका.।

**गन्धमोदनः।** पुं। गन्धके। रा.नि.व.१३।

**गन्धमोहिनी।** स्त्री। चम्पककलिकायाम्। वै.निघ.। वन्दायाम्। रा.नि.व.१२।

**गन्धरसः।** पुं, क्ली। सुगन्धबोले। খুনখারাপি, ফুলসত্ব গন্ধবোল। विका.। खाद्दालिकायाम्। थाटाशी। च.द.वा.व्या.एलादितैले। (सा) स्त्री। मुरामांस्याम्। वै.निघ.।

**गन्धराजः (कः)।** पुं, क्ली। मुद्गरपुष्पवृक्षे। গন্ধরাজ ফুলের গাছ। रा.नि.व.१०। स्वनामख्यातद्रव्ये। থাটাশী, গন্ধরাজ। See जवादिः। कणगुग्गुलौ। श्रीखण्डचन्दने। শ্বেত চন্দন। कृष्णागुरुणि। रा.नि.व.१२। नखीनामगन्धद्रव्ये। वै.निघ.।

**गन्धराजतैलम्।** क्ली। वातव्याधौ तैलं। पाठः—"तिलतैलाढ़के दिव्या तक्रं तत्परिमाणकं। वचाचतुष्पलं दत्त्वा शुक्तं तत्र चतुर्गुणम्॥ त्रिफलायाः पलान्यष्टौ मञ्जिष्ठायास्तथैव च। पुनरष्टपलान्यस्या अर्द्धदग्धानि दापयेत्॥ पूगत्वेलशठीपत्रसरलाम्बुददारुणः। पलान्यष्टौ विनिक्षिप्य घृतस्य तु पलद्वयम्॥ आद्ये पाके पचेद्दिव्यं तैलं यावच्चतुर्गुणं। गालयित्वापरं कुर्य्यात्तत्र पाकत्रयम्बुधः॥ चण्डादलमकच्चनालकपटीकोलशैलजं। विषाख्यनीरणग्रन्थिदेवताकुसुमानि च॥ प्रत्येकमेषाञ्चत्वारि पलान्यादाय गान्धिकः। पाकं द्वितीयं तैलस्य कारयेत्क्रमयोगतः॥ पृक्कामांसी मुरा बालं मदनं कलिकामलौ। न गुरु कालखोटी च चम्पकुन्दप्रियङ्गवः॥ एषां खट्टासिकायाश्च प्रत्येकञ्च पलद्वयम्। आदाय कारयेत्पाकं तृतीयं गन्धकोविदः॥ फणिलावलताकोलफलैलागुरुसिह्लकैः। त्वक्कोषार्कैर्द्विपलिकैरिति पाकश्चतुर्थकः॥ वेधः पलयुगेनेन्दोर्मदस्य लष्टभिः पलैः। गन्धराजाह्वयं तैलमिदं नृपमनोहरम्॥" তিলতৈল ১৬ শ. তক্র ১৬ শ. কাঁজি ৬০ শ. কল্কার্থ—যথাবিধি বচ ৪ প. ত্রিফলা, মঞ্জিষ্ঠা, অর্দ্ধভৃষ্ট মঞ্জিষ্ঠা প্রত্যেকে ৮ প. গুবাকপুষ্পত্বক্, তেজপত্র, শটী, সরলকাষ্ঠ, মুতা, দেবদারু মিলিত ৮ প. কুন্দুরুখোটী ২ প. ইহা দ্বারা প্রথম গন্ধপাক করিবে। শোধিত চোরহুলী, তেজপত্র, মরুবা মৌরী, গুড়ত্বক্, দনা, শিলারস, এলা, কুড়, দেবহুলী, গেঁঠেলা, উশীর প্রত্যেকে ৪ প. পূর্ব্বকল্ক ছাঁকিয়া ইহা দ্বারা ২য় গন্ধপাক করিবে। শুদ্ধ পিড়িং, জটামাংসী, মুরামাংসী, বালা, লবঙ্গ, ছল্লীপুষ্প (ছলনা), ভূঁই আমলা, অগুরু, লবণখোটী, চম্পকপুষ্প, কুন্দপুষ্প, প্রিয়ঙ্গু, থাটাশী প্রত্যেকে ২ প. ৩য় গন্ধপাক। শ্বেত চন্দন, লবঙ্গলতা, কস্তূরী, কক্কোল, জায়ফল, এলা, অগুরু, শিলারস, গুড়ত্বক্, জয়িত্রী, কুঙ্কুম প্রত্যে-

কে ২ প. ৪র্থ গন্ধপাক। ছাঁকিয়া কর্পূর ১৬ তো. মৃগনাভি ৬৪ তো. মিশাইবে। रस.र.।

**गन्धराजी** । स्त्री । नख्याम् । नथी । श.च.।

**गन्धर्व्वः** । पुं । श्वेतकरवीरे । श्वेतैरण्डे । च.द. वा.रक्त.चि.अमृताद्यघृते । कस्तूरीमृगे । अश्वे । अम. । कोकिले । रा.नि.व.१३ ।

**गन्धर्व्वगन्धः (न्धा)** । पुं,स्त्री । अश्वगन्धायां । भा.म.४भ.वायुरोगे । उ.ख.वाजी. ।

**गन्धर्व्वग्रहः** । पुं । उन्मादविशेषे । "हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियगीतगन्धमाल्यः । नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्व्वग्रहपरिपीड़ितो मनुष्यः ।" मा.नि. ।

**गन्धर्व्वतैलम्** । क्ली । एरण्डतैले । भा. ।

**गन्धर्व्वभूषणम्** । क्ली । सिन्दूरे । वै.निघ. ।

**गन्धर्व्वशाका** । स्त्री । भार्ग्यां । বামনহাটী । र.मा. ।

**गन्धर्व्वहस्तः (कः)** । पुं । एरण्डवृक्षे । हारा. ।

**गन्धर्व्वहस्तकतैलम्** । क्ली । व्रध्नवृद्ध्यधिकारे तैलम् । पाठः—"शतमेरण्डमूलस्य पले युगलाय वाड़कम् । जलद्रोणे विपक्तव्यं यावत्पादावशेषितं । तेन पादावशेषेण पयसा तत्समेन च । प्रस्थमेरण्डतैलस्य तन्मूलाच्च चतुष्पलम् । त्रिपलं शृङ्गवेरस्य सर्व्वं दत्त्वा विपाचयेत् ॥" रस.र. ।

**गन्धर्व्वा** । स्त्री । कोकिलायाम् । वै.निघ. ।

**गन्धलता** । स्त्री । प्रियङ्गौ । भा.म.१भ.रक्तष्ठी.चि. ।

**गन्धलोलुपा** । स्त्री । मक्षिकायाम् । श.र. ।

**गन्धवती** । स्त्री । त्रिपुरमल्लिकायाम् । प.मु. । वनमल्लिकायाम् । সেউতী । र.मा. । सुरामांस्यां । रा.नि.व.१२ । सुरायाम् । मे. । तालीशपत्रे । वनयमान्याम् । वै.निघ. ।

**गन्धवर्णा** । स्त्री । महाबलायाम् । वै.निघ. ।

**गन्धवल्कलम्** । क्ली । गुड़त्वङ्नामगन्धद्रव्ये । দারচিনি । रा.नि.व.६ ।

**गन्धवल्लरी (वल्ली)** । स्त्री । महाबलायाम् । प्र.मु. । पीतपुष्पदण्डोत्पलायाम् । ডানিপোলা । र.मा. । [चन्दने । है.च. । वायौ । रा.नि.व.२१ ।

**गन्धवहः (वाहः, कः)** । पुं । कस्तूरीमृगे ।

**गन्धव(वा)हा** । स्त्री । नासिकायां । रा.नि. व.१८ । है.च. ।

**गन्धवासिनी** । स्त्री । सुरामांस्याम् । वै.निघ. ।

**गन्धवाही (इन्)** । पुं । वायौ । रा.नि.व.२१ ।

**गन्धविह्वलः** । पुं । गोधूमे । वै.निघ. ।

**गन्धवीजः** । पुं । कुलिञ्जनवृक्षे । वै.निघ. । (जा) स्त्री । मेथिकायाम् । रा.नि.व.६ ।

**गन्धवीरा** । स्त्री । सल्लकीवृक्षे । वै.निघ. ।

**गन्धवृक्षः (कः)** । पुं । शालवृक्षे । सर्ज्जवृक्षे । रा.नि.व.९ । शाकतरौ । वरुणवृक्षे । वै.निघ. ।

**गन्धवेधिका** । स्त्री । कस्तूर्य्याम् । वै.निघ. ।

**गन्धव्याकुलम्** । क्ली । कक्कोले । श.च. ।

**गन्धशटी** । स्त्री । स्वनामख्यातौषधौ । गन्धपलाश्याम् । গন্ধশটী, গন্ধপলাশী । श.र. । See गन्धपलाशी । [व.७ ।

**गन्धशाकम्** । क्ली । गौरसुवर्णशाके । रा.नि.

**गन्धशालिः** । पुं । सुगन्धशालिधान्यविशेषे । সুগন্ধ ধান, কলমাশালি । प.मु. । गुणाः—मधुरः अतिहृद्यः पित्तदाहारुचिश्रमरक्तशान्तिकरः स्तन्यकरः गर्भस्थिरतादायकः ईषद्वातकरः पुष्टिकरः ईषत्कफकरः बलदश्च । रा.नि.व.१६ ।

**गन्धशुण्डिनी** । स्त्री । छुच्छुन्दर्य्याम् । रा.नि. व.१९ । [हारा. ।

**गन्धशेखरः** । पुं । कस्तूर्य्याम् । মৃগনাভি ।

**गन्धसम्भवा** । स्त्री । सुगन्धशालौ । रा.नि.व.१६ ।

**गन्धसारः** । पुं । चन्दनसामान्ये । प.मु. । श्रीखण्डचन्दने । শ্বেত চন্দন । रा.नि.व.१२ । "घनसारो गन्धसारः ।" सा.कौ. । गन्धशट्याम् । रा.नि.व.६ । मुद्गरपुष्पवृक्षे । रा.नि.व.१० । गन्धके । वै.निघ. ।

**गन्धसारणः** । पुं । वृक्षभल्ल्याम् । र.मा. ।

**गन्धसूची** । स्त्री । आम्रातके । मं आंवाड़ी । वै.निघ. ।

**गन्धसूयी** । स्त्री । क्षुद्रछुच्छुन्दर्य्याम् । वै.निघ. ।

**गन्धसेवि** । क्ली । रोहिषतृणे । রামকর্পূর । वै.निघ. । [कमले । त्रिका. ।

**गन्धसोमम्** । क्ली । कुमुदे । নালফুল । श्वेत-

**गन्धा** । स्त्री । मल्लिकागुरुणि । शट्याम् । रा.नि.व.१२ । अजमोदायाम् । रा.नि.व.६ । शाल-पर्ण्याम् । भ.टी.भ. । वनतुलस्याम् । वंशलोचना-भेदे । कुन्दुरुण्याम् । प्रियङ्गौ । वै.निघ. । सुवर्ण-चम्पककलिकायाम् । श.र. ।

**गन्धाखुः** । पुं । छुच्छुन्दर्य्याम् । ছুঁচা । हारा. ।

**गन्धागुरु** । क्ली । मल्लिकागुरुणि । वै.निघ. ।

**गन्धाजीवः** । पुं । गन्धवणिजि । जटा. ।

**गन्धाम्रता** । स्त्री । गन्धानुभवे । वै.निघ. ।

**गन्धाढ्यम्** । क्ली । चन्दने । श्रीखण्डचन्दने । শ্বেত চন্দন । गन्धराजे । থাটাশী । रा नि.व.१२ । वकुलपुष्पे । वै.निघ. । पुं । नागरङ्गके । रा.नि.व.११ ।

**गन्धाढ्या** । स्त्री । स्वर्णयूथिकायाम् । तरणीपु-ष्पवृक्षे । आरामशीतलायाम् । পত্রশাকবিশেষ । रा.नि.व.१० । वनवीजपूरवृक्षे । বুনো লেবু । मुरामांस्याम् । रा.नि.व.११।१२ । सुगन्धशाली । रा.नि.व.१६ । गन्धाल्याम् । গাঁধাল । श.च. । कस्तूर्य्यां । मृगनाभि । जवादिकस्तूर्य्यां । अरण्य-शेवल्यां । फूलविशेष । जातीपत्र्याम् । वै.निघ. ।

**गन्धाढि** । क्ली । तृणकेशरे । वै.निघ. ।

**गन्धाधिकम्** । क्ली । तृणकुङ्कुमे । रा.नि.व.१२ ।

**गन्धाधि(रि)का** । स्त्री । महाश्वेताह्वायाम् । শুলফা, বড়িশোপ । रा.नि.व.४ ।

**गन्धानी** । स्त्री । सुगन्धशाली । धूम्रपत्रायाम् । रा.नि.व.१६।२३ ।

**गन्धाबः** । पुं । गन्धशाली । प.मु. ।

**गन्धामृतरसः** । पुं । वाजीकरणाधिकारे । "भस्मसूतं द्विधा गन्धं चणकन्यां विमर्द्दयेत् । रुद्ध्वा लघुपुटे पच्याल्लेहयेन्मधुसर्पिषा । निष्कमात्रं जरा-मृत्यू हन्ति गन्धामृतो रसः ॥" रस.र. ।

**गन्धारिः (री)** । स्त्री । दुरालभायाम् । रक्त-दुरालभायाम् । गन्धपलाश्याम् । आम्रहरिद्रायां । वै.निघ. ।

**गन्धालः (लुः)** । पुं । गन्धशाली । रा.नि.व.१६। दग्धालुके ।

**गन्धाला** । स्त्री । अग्निमन्थक्षुपे । वै.निघ. ।

**गन्धालिः (लिका) (ली)** । स्त्री । गन्धप्र-स्याम् । प.मु. । (ली) प्रसारण्याम् । গন্ধভাদুলে । सा.कौ. । जातीफलायाम् । कीटविशेषे । কুমীরে পোকা । वै.निघ. ।

**गन्धालीगर्भः** । पुं । सूक्ष्मैलायां । रा.नि.व.१२।

**गन्धाश्मा** पुं । गन्धके । গন্ধক । रा.नि.व.१२। गृहणीकवाटरसे । च.द.रसमञ्जूरे ।

**गन्धाश्वः** । पुं । अश्वगन्धायां । भैष.कुष्ठ.चि. ।

**गन्धाष्टकम्** । क्ली । सुगन्धाष्टद्रव्यगणे । तच्च नानाविधम् । तत्र मांसादियूषसुगन्धीकरणार्थं य-था —जातीपत्रलवङ्गत्वगेलानागकेसरमरिचहिङ्गुना-भयः । रावण. । देवतादितुष्ट्यर्थं यथा —चन्दन-कर्पूर-नागकेशर बालक नागरमुस्ता देवदारु गोरो-चना कुसुमानि । तथा चन्दनागुरुकर्पूररोचनाकु-ङ्कुममृगमदचन्दनह्रीवेराणि गणपतिप्रीत्यर्थम् । च-न्दनागुरुकर्पूरतमालह्रीवेरकुङ्कुमकुशीदकुष्ठानि शि-वस्य । "चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । ज-टामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ॥" "चन्द-नागुरुह्रीवेरकुष्ठकुङ्कुमसंयुकाः । जटामांसी मुरा चेति विष्णोर्गन्धाष्टकं विदुः ॥"

**गन्धाह्वा** । स्त्री । प्रियङ्गौ । सु.चि.१९अ. ।

**गन्धि** । क्ली । तृणकुङ्कुमे । रा.नि.व.१२ ।

**गन्धिकः** । पुं । गन्धके । भा. ।

**गन्धिनी** । स्त्री । मुरामांस्याम् । अम. । पीतमू-स्याम् । रेउचिनीति केचित् । हसीमञ्जुरीति च अन्यः ।

**गन्धिपर्णः** । पुं । सप्तपर्णवृक्षे । रा.नि.व.१२ ।

**गन्धिरसः** । पुं । गोपके । নিশাদল ।

**गन्धिला** । स्त्री । मुस्तायाम् । रा.नि.व.६ ।

**गन्धी** (इन्) । पुं । कस्तूरीमृगे । वै.निघ. ।

**गन्धोग्रा** । स्त्री । वचायाम् । च.द.वा.व्या.चि. ।

**गन्धोतुः** । पुं । सुगन्धमार्ज्जारे । গন্ধ গোকুল । त्रिका. ।

**गम्भोत्कट:** (टा)। पुं, स्त्री। दमनकवृक्षे। दना गाछ। रा.नि.व.१०। मुरामांस्यां। वै.निघ.।

**गम्भोत्तमा**। स्त्री। मदिरायाम्। अम.।

**गम्भोपला**। स्त्री। गन्धके। वै.निघ.।

**गम्भोलि:** (ली)। स्त्री। गृध्याम्। श.र.। वरटायाम्। বোলতা। अम.। मक्षिकाविशेषे। কুমীরা মাছি। कर्कटीभेदे। वै.निघ.।

**गम्भोषधम्** (धि:)। क्ली, पुं। सुगन्धिद्रव्यरूपौषधौ अगुरुकुष्ठादौ। सि.यो.वा.व्या.चि.। च.सू.३अ.।

**गभोलिक:**। पुं। मसूरे। हारा.।

**गमूर्च्छा**। स्त्री। मरुया इति ख्यातवृक्षे। र.मा.।

**गम्भारिका** (री)। स्त्री। वृक्षविशेषे। গাম্ভার গাছ। गुणा:—कटुत्वं तिक्तत्वं उष्णत्वं गुरुत्वं भ्रमशोथज्वरतृष्णाविषदाहनाशित्वञ्च। रा.नि.व.६। तुवरा तिक्ता वीर्य्योष्णा मधुरा गुरु: दीपनी पाचनी मेध्या भेदिनी भ्रमशोषघ्नी तृष्णामशूलार्शोविषदाहज्वरघ्नी च। भा.। फलगुणा:—तिक्तं गुरु मधुरं ग्राहि केश्यं रसायनं मेध्यं शीतलं पित्तदाहघ्नं। राज। बृंहणं वृष्यं गुरु केश्यं रसायणं वातपित्ततृष्णारक्तक्षयमूत्रविबन्धहरं स्वादुपाकं हिमं स्निग्धं तुवराम्लं दाहतृष्णावातरक्तपित्तक्षतक्षयघ्नञ्च। तद्बीजतैलं—मधुरं कषायं कफपित्तघ्नञ्च। सु.सू.४५अ.। मूलं—अत्युष्णं चित्तरोगे हितञ्च। राज.।

**गभीर:**। पुं। पक्वजम्बीरे। उणा.। शाकुरुण्डवृक्षे। मातुलुङ्गवृक्षे। शिरीषवृक्षे। वै.निघ.। क्ली। पङ्कजे। वत्सनाभविषे।

**गम्भीरक:**। पुं। फणिज्झकवृक्षे। वै.निघ.।

**गम्भीरज्वर:**। पुं। अन्तर्वेगान्तर्दाहयुक्तज्वरे। "गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया। आनद्धत्वेन दोषाणां श्वासकासोद्गमेन च॥" निदान.।

**गम्भीरदृष्टि:**। पुं। नेत्ररोगविशेषे। वै.निघ.। See गम्भीरिका।

**गम्भीरपाक:**। पुं। अन्त:पाके। वै.निघ.।

**गम्भीरा**। स्त्री। तन्नामकहिक्कायाम्। "नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी। शुष्कास्यकण्ठजिह्वा स्याच्छ्वासकासरुजाकरी। अनेकोपद्रववती गम्भीरा नाम सा स्मृता॥" निदान.।

**गम्भीरिका**। स्त्री। वातजन्यनेत्ररोगभेदे। लक्षणं यथा—"दृष्टिर्विरूपा श्वसनोपसृष्टा सङ्कुचतेऽभ्यन्तरत: प्रयाति। रुजावगाढ़ा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति धीरा:॥" भा.।

**गर:**। पुं। उपविषे। वत्सनाभविषे। रोगे। हे.च.। विषघ्नौषधे। निर्विषद्रव्ययोगजे कृत्रिमविषे। तेनान्त:पाण्डु: कृशोऽल्पाग्नि: कासश्वासज्वरार्दितश्च भवति। वा.। यथा—"संयोगजन्तु द्विविधं तृतीयं विषमुच्यते। गर: स्यादविषन्तच्च सविषङ्कृत्रिमं यत:॥" वृद्धकाश्यप.। "दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।" च.। "नानाप्राण्यङ्गशमलविरुद्धौषधभस्मनां। विषाणाञ्चाल्पवीर्य्याणां योगो गर इति स्मृत:॥" वा.उ.३५अ.।

**गरघ्न:**। पुं। कृष्णार्ज्जके। कृष्णपत्र कुद्र तुलसी। कृष्णपत्रवर्व्वरे। কাল বাবুই। रा.नि.व.१०। टङ्कणक्षारे। वैजयन्तीतुलस्याम्। वै निघ.।

**गरघ्नी**। स्त्री। मत्स्यविशेषे। গরই মাছ। गुणा:—मधुरा कषाया वातपित्तकफघ्नी रुचिबलवीर्य्यकरी दीपनी लघुश्च। भा.।

**गरजध्वजम्**। क्ली। अभ्रके। वाचस्पति:।

**गरणम्**। क्ली। निगरणे, वमने।

**गरदम्**। क्ली। विषे, गरले। रा.नि.व.६। त्रि। विषदायिनि। [२अ.।

**गरदिग्ध:**। त्रि। कृत्रिमविषलिप्ते। च.सि.स्था.

**गरद्रुम:**। पुं। कारस्करवृक्षे। কুঁচিলা গাছ। रा.नि.व.६।

**गरनाशिनी**। स्त्री। देवदालिकायाम्। দেয়াতাড়। म देवडङ्गरी। वै.निघ.।

**गरभ:**। पुं। गर्भे। हे.च.।

**गरलम्**। क्ली। अहिफेने। वै.निघ.। विषे। अम.। सर्पविषे। तृणपुलके। ঘাসের আঁটি। हे.च.। जङ्गमविषे। त्रिका.।

**गरला**। स्त्री। मधुमक्षिकायाम्। वै.निघ.।

**गरलारि:**। पुं। मरकतमणौ। रा.नि.व.१३।

**गरव्रत:**। पुं। मयूरे। श.र.।

**गरघ्ना** । पुं । कालशाके । चिका. ।

**गरा (री)** । स्त्री। देवताडवृक्षे । पीतघोषा। अ.टी.स्वा. । निगरणे । धरणी. । [च । अ.च. ।

**गरात्मकः** । पुं, क्ली । शोभाञ्जनवृक्षे, तद्वीजे

**गराधिका** । स्त्री। लाक्षायाम् । र.मा. ।

**गरारिवटिका** । स्त्री । कासे हिता । पाठः —भागैकः त्रिफलाचूर्णात् द्विभागस्तु कटुत्रयात् । तालीशस्य त्रिभागः स्यादभयायाश्चतुष्टयः । यावन्त्येतानि चूर्णानि तावानेव गुड़ो मतः । मधुना वटिका कार्या त्रिमाषा सुखधारिणी ॥ प्रयोगा. कास चि ।

**गरुड़ः** । पुं । स्वनामख्यातपक्षिणि । स्वर्णमाक्षिके । स्वर्णमाक्षिक । र.सा.सं. । गरुड़शाली । रा.नि.व.१६ ।

**गरुड़वलिः** । पुं । बालरोगशान्त्यर्थं बलिविशेषे । ओँ नमो भगवते गरुड़ाय त्र्यम्बकाय··· स्वाहा । च.द.बाल.चि. ।

**गरुड़शालिः** । पुं । स्वनामख्यातशालिधान्यविशेषे । पक्षिराज धान । गुणाः – गन्धकारी लघुपाककरः कफपित्तहरः स्वादुश्चलश्वासनिवारणः ग्रहणी गुल्मकुष्ठघ्नः गुल्मशोधनः ॥ रा नि.व. १६ । "गरुड़ाख्या च वातघ्नौ पित्तमूत्रमदापहा ।" अचि.१५अ. । [व.१३ ।

**गरुड़ाङ्कितम्** । क्ली । मरकतमणौ । रा.नि.

**गरुड़ाश्मा** पुं । मरकतमणौ । जटा । [अ.।

**गरुड़ाहृतः** । पुं । सोमलताभेदे । सु.चि.२९

**गरुड़ी** । स्त्री । गुडूच्याम् । रस.र.विष.चि. ।

**गरुड़ोत्ती(द्गी)र्णम्** । क्ली । मरकतमणौ । रा.नि.व.१३ ।

**गरुत्** । पुं । पक्षणि । पाखा । अम. ।

**गरुत्मान्** । पुं । स्वर्णमाक्षिके । रसकौ. । भैष. वा.रक्त.चि.वादशायसे । पक्षिणि । मे. । गरुडे । वै.निघ. ।

**गरुद्योधी (इन्)** । पुं । भारतीपक्षिणि । भाऊई । चिका. । लावपक्षिणि । वै.निघ. ।

**गर्गरः** । पुं । A kind of fish. (Pimelodus gagora.) मत्स्यविशेषे । গাগর মাছ । स पीतवर्णः पिच्छिलाङ्गः पृष्ठे बहुरेखायुक्तः शल्कयुक्तः, तथा गर्गरशब्देन वशीकरणीयत्वात् गर्गर इत्युच्यते । गुणाः—शीतलः कफवातकरश्च । रा. नि.व.१७ । मधुरः स्निग्धः वातपित्तघ्नश्च । राज. ३प. । "गर्गरः पित्तलः किञ्चिद्वातजित्कफकोपनः ।" भा. ।

**गर्गरकम्** । क्ली । स्थावरविषान्तर्गतस्वनामकमूलविषभेदे सु.कल्प.२अ. । [म. । कलसे ।

**गर्गरी** । स्त्री । मन्थन्याम्, दधिमन्थनपात्रे । अ.

**गर्गाटः** । पुं । गर्गरमत्स्ये । हारा. ।

**गर्ज्जकः** । पुं । मत्स्यविशेषे । গজাড়, শাল মাছ । श.र. ।

**गर्ज्जरम्** । क्ली । A carrot. स्वनामख्यातमूलशाके । গাজরমূল । मं कं वाटुलामूला । वहमूलंगि । गुणाः—मधुरं रुच्यं ईषत्कटु कफघ्नं आध्मानक्रिमिशूलघ्नं दाहपित्ततृषापहञ्च । रा.नि.व. ७ । रक्तरसोने ।

**गर्ज्जरी** । स्त्री । रक्तलशुने । वै.निघ. ।

**गर्ज्जाफलः** । पुं। विकङ्कतवृक्षे । रा.नि.व ११।

**गर्त्तः** । पुं । श्वभ्रे । গাড়া । जटा. । कुकुन्दरे । मे. । रोगविशेषे । श.र. ।

**गर्त्तकलम्बुका** । स्त्री । गण्डदूर्व्वायाम् । मत्स्याक्ष्याम् । वै.निघ. ।

**गर्त्ताटकः** । पुं । वनमूषिके । वै.निघ. ।

**गर्त्तिका** । स्त्री । तन्तुशालायाम् । তাঁৎঘর । हे.च. ।

**गर्द्दभः** । पुं । स्वनामख्यातपशौ । গাধা । मांसगुणाः—किञ्चिद्गुरु बलप्रदञ्च । वनगर्द्दभमांसं रुच्यं शैत्यकरं बहुवीर्य्यबलकरञ्च । मूत्रगुणाः—कटुत्वं तिक्तत्वम् उष्णत्वं चौरत्वं कफमहावातभूतकम्पोन्मादहरत्वञ्च । रा.नि.व.१७। विकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् । "दीपनं गार्द्दभं मूत्रं क्रिमिवातकफापहम् ।" सु.सू.४५अ. । गन्धद्रव्ये । हे.च.। क्ली । कुमुदे । प.मु. । श्वेतकुमुदे । हे.च. । विडङ्गे । र.मा. । [च. ।

**गर्द्दभकम्** । क्ली । श्वेतोत्पले । শ্বেত পদ্ম । हे.

**गर्द्दभगदः** । पुं । ज्वालागर्द्दभरोगे । तल्लक्षणं नालगर्द्दभशब्दे द्रष्टव्यम् । रा.नि.व.२० ।

**गर्द्दभगन्धिका** । स्त्री । भार्ग्याम् । वामनहाटी । वै.निघ. । [नि.व.१७ ।

**गर्द्दभमांसम्** । क्ली । गर्द्दभस्य पिशिते । रा.

**गर्द्दभमूत्रम्** । क्ली । खरमूत्रे । See गर्द्दभः ।

**गर्द्दभशाकः (का, खा)** । पुं, स्त्री । भार्ग्याम् । वामनहाटी । जटा. । रा.नि.व.६ ।

**गर्द्दभाण्डः** । पुं। (Thespesia populnea. Syn. Hibiscus populnes.) प्लक्षवृक्षे । পাকুড় গাছ । रा.नि.व.११ । (Thespesia populneoides.) पारीषाख्ये । गया अश्वत्थ, पलाश पिपुल । अम. । स च पत्रकाण्डफलादिभिरश्वत्थवृक्षाकारः । गन्धपिप्पल इति च केचित् भः । गर्द्दपिप्पलीति सारसुन्दरी । मं पारसपिंपल पिंपरी । गन्धमुण्ड इति गन्धीभाट इति सा. कौ. ।

**गर्द्दभाह्वयः** । पुं । कुमुदे । षण्डे । हे.च. ।

**गर्द्दभिका** । स्त्री । वातपित्तजक्षुद्ररोगविशेषे । तल्लक्षणं —"मण्डलं वृत्तमुन्नतं सरक्तं पिड़काचितं । रुजाकरीं गर्द्दभिकां तां विद्याद्वातपित्तजां ॥" भा. ।

**गर्द्दभी** । स्त्री । कटभ्याम् । रा.नि.व.२३ । श्वेतापराजितायाम् । श्वेतकण्टकार्य्याम् । रा.नि.व. ३।४ । गर्द्दभस्त्रियाम् । दुग्धगुणाः—बलकरत्वं वातश्वासहरत्वं मधुराम्लरसत्वं रूक्षत्वं दीपनत्वञ्च । दधिगुणाः—रूक्षोष्णत्वं लघुत्वं दीपनत्वं पाचनत्वं मधुराम्लरसत्वं रुचिकरत्वं वातघ्नत्वञ्च । नवनीतगुणाः—कषायत्वं वातकफनाशित्वं बलकरत्वं दीपनत्वं लघुपाकित्वं मूत्रदोषकरत्वम् उष्णत्वञ्च । घृतगुणाः—बल्यं दीपनं मूत्रदोषघ्नं लघुपाकम् उष्णवीर्य्यं कषायं कफघ्नञ्च । रा.नि.व.१५ ।

**गर्द्धः** । पुं । गर्द्दभाण्डवृक्षे । श.च. ।

**गर्भः** । पुं । भ्रूणे । तेजःसंयोगात् शुक्रं तरलीभूतं च्युतं सत् अनिलसंयोगात् योनिमुखं पतितम् आर्त्तवेन युक्तं गर्भसंज्ञां लभते । ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते । अस्य लक्षणं यथा—"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकं । प्रकृतिः सविकारा च तत्सर्व्वं गर्भसंज्ञकं । कालेन वर्द्धितो गर्भः यदाङ्गोपाङ्गसंयुतः । भवेत्तदा स मुनिभिः शरीरीति निगद्यते ॥" भा. । कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः । गर्भः सञ्जायते नार्य्याः सञ्जातो बाल उच्यते ॥ शार्ङ्ग.६अ. । आधिक्ये रजसः कन्या पुत्रः शुक्राधिके भवेत् । नपुंसकं समत्वेन यथेच्छा पारमेश्वरी ॥ भा. । "प्रथमे मासि द्रवीभूतं शुक्रार्त्तवं तिष्ठति, द्वितीये घनः, तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्ते अङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति, चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति । गर्भहृदयप्रव्यक्तभावाच्चेतनाधातुरभिव्यक्तो भवति कस्मात्तस्यानत्वात्तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति, पञ्चमे मनः प्रतिबुद्धतरं भवति, षष्ठे बुद्धिः, सप्तमे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः, अष्टमेऽस्थिरीभवति ओजस्तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागवत्त्वाच्च, ततो बलिं मांसौदनमस्मै दापयेत्. नवमदशमैकादशद्वादशानामन्यतमस्मिन् जायते । अतोऽन्यथा विकारी भवति । मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, सास्य मातुराहाररसवीर्य्यमभिवहति । तेनोपस्नेहेनास्याभिवृद्धिर्भवति ।...गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीति शौनकः, हृदयमिति कृतवीर्य्यः बुद्धेर्मनसश्च स्थानत्वात् । नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः । पाणिपादमिति मार्कण्डेयः तन्मूलत्वाच्चेष्टाया गर्भस्य । मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भवस्य, तत्तु न सम्यक्सर्व्वाङ्गप्रत्यङ्गानि युगपत्सम्भवन्तीत्याह धन्वन्तरिः गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवत् चूतफलवच्च । तद्यथा चूतफले परिपक्के केशरमांसास्थिमज्जानः पृथग्दृश्यन्ते कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति । एवं गर्भस्य तारुण्ये सर्व्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः । तान्येव कालप्रकर्षात्प्रव्यक्तानि भवन्ति ।...गर्भस्य केशश्मश्रुलोमास्थिनखदन्तशिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि । मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि । शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि । इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि । वीर्य्यमारोग्यं बलवर्णौ मेधा

च सात्माजानि । तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति दक्षिणाक्षिमहत्त्वञ्च पूर्व्वञ्च दक्षिणं सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौर्हृदमभिध्यायति । स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव प्रसन्नमुखवर्णा च भवति तां ब्रूयात् पुत्त्रमियं जनयिष्यतीति तद्विपर्य्यये कन्या । यस्याः पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणञ्च तस्या नपुंसकमिति विद्यात् । यस्या मध्ये निम्नं द्रोणीप्रभूतमुदरं सा युग्मं प्रसूयते । सु.शा.३अ । तस्य खल्वेवं प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सान्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमा अवभासिणी नाम सर्व्ववर्णानवभासयति, द्वितीया लोहिता नाम षोड़शभागप्रमाणा तिलकालकाद्यधिष्ठाना, तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्म्मदलाद्यधिष्ठाना, चतुर्थी ताम्राष्टभागप्रमाणा कुष्ठाद्यधिष्ठाना, पञ्चमी वेदिनी नाम व्रीहिप्रमाणा ग्रन्थ्याद्यधिष्ठाना, सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दराद्यधिष्ठाना । कलाः खल्वपि सप्त धात्वाशयान्तरमर्य्यादाः । ततश्च गृहीतगर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण तस्माद्गृहीतगर्भाणामार्त्तवं न दृश्यते । ततस्तदधः प्रतिहतमूर्द्धमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते । शेषञ्चोर्द्धतरमागतं पयोधरावभिप्रतिपद्यते । तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति । गर्भस्य यकृत्प्लीहानौ शोणितजौ शोणितफेनप्रभवः फुप्फुसः शोणितकिट्टप्रभव उण्डुकः । असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः । तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति । ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः । उदरे पच्यमानानामाध्मानाद्रुक्मसारवत् । कफशोणितमांसानां सारो जिह्वा प्रजायते । यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशीर्विभजते तथा । मेदसः स्नेहमादाय शिरास्नायुत्वमाप्नुयात् । शिराणाञ्च मृदुः पाकः स्नायूनाञ्च ततः खरः । आशय्याभ्यासयोगेन करोत्याशयसम्भवम् ॥ रक्तमेदःप्रसादाद्वृक्कौ, मांसासृक्कफमेदःप्रसादाद्वृषणौ, शोणितकफप्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः, तस्याधो वामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम च । तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति । सु.शा.४अ ।

सद्यो गृहीतगर्भाया लिङ्गानि श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः । स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः । अकामतश्छर्दयति गन्धादुद्विजते शुभात् । प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते ॥ तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कटकासनञ्चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणञ्च न सेवेत । दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते । स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥ सु.शा.३अ. । आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः । स योनिं शिरसा याति स्वभावात्प्रसवम्प्रति ॥" सु.शा.५अ.। शिम्बी । सम्बी । पनसकण्टके । कुक्षौ । (पेट) । मे.। अश्वाया गर्भज्ञानलक्षणे—योन्यां वीजग्रहे तृप्तिः लोचनाविलता तथा । सगर्भा ताड़येदश्वं गर्भस्य परिलक्षणम् ॥ काचिन्मूका जड़ीभूता निर्विकारा त्यजेद्बृषम् । काचित्कण्डूयमानाश्वा गर्भिण्यपि प्रहृर्षति ॥ काचिद्रागवशाद्वापि समूत्रा ताड़येद्बृषम् । कण्डि पदया काचित् अश्वा पुच्छेन योनिकाम् ॥ विन्यस्तकर्णौ क्रोधाद्या द्रव्यं दृष्ट्वापसर्पिणी । शूनाधोयोनिभागा च सदा कान्तिविधारिणी ॥ प्रशस्तस्कन्धा स्निग्धाङ्गी निविड़ोदरबन्धना । गर्भोपलिप्तपार्श्वा च बड़वा गर्भिणी मता ॥ ज.द.६अ. ।

**गर्भकाम्** । क्ली। रजनीद्वये। दुइ रात्रि। इ.च.।

**गर्भकण्टकः** । पुं । पनसवृक्षे । वै.निघ. ।

**गर्भकरः** । पुं । पुत्त्रजीववृक्षे । भा. ।

**गर्भकोशः (षः)** । पुं । गर्भाशये । वै.निघ. ।

**गर्भगृहम्** । क्ली । अन्तर्गृहे ।

**गर्भघातिनी** । स्त्री । लाङ्गलीनामक्षुपे । ईशलाङ्गुलि । रा.नि.व.४ ।

**गर्भचिन्तामणिः** । पुं । गर्भाधिकारे रसः । स चतुर्विधः । १मः—सूतिकाविनोदरसो तुल्यस्थाने स्वर्णदानेन चिन्तामणिर्भवति । र.सा.सं. । २यः—जातीफलं टङ्कणं (সোহাগা) त्रिकटु हिङ्गुल प्र. समभागः । जम्बीररसेन वटी कार्य्या । ३यः—रसः रौप्यं लौहं प्र. २ तो. अभ्रं ६ तो. (मतान्तरे ४ तो.) कर्पूरं वङ्गं ताम्रं जाती-

"बलाचतुष्टयं पर्णी पञ्चकञ्चाग्निमन्थकः। पाठाश्वासावार्त्ताकी कोकिलाक्षी गणी द्विधा। अपामार्गद्वयं मूर्व्वा चाहिमान् शरपुङ्खिका। काकनासा काकजङ्घा मेषशृङ्गी च भृङ्गकम्। बन्ध्याककर्कोटकी त्रेधा वर्व्वरीतुलसी द्विधा। वज्रदन्ती द्विधा जाली नाम्ना गुल्मगणस्त्वयम्॥" अर्कः।

**गुल्मगवेधुका।** स्त्री। गवेधुकायाम्। गड़गड़े। प.मु.। देवधान्ये। र.मा.।

**गुल्मघ्नम्।** क्ली। हिङ्गुनि। रा.नि.व.६।

**गुल्ममूलम्।** क्ली। आर्द्रके। रा.नि.व.६।

**गुल्मवज्रिणी (वटिका)।** स्त्री। रक्तगुल्मे हिता। "रसगन्धकताम्रञ्च कांस्यं टङ्कणतालकं। प्रत्येकं पलिकं ग्राह्यं मर्द्दयेद्दतियव्रतः। तद्यथाग्निबलं खादेत् रक्तगुल्मप्रशान्तये॥" রস, গন্ধক, তামা, কাঁসা, সোহাগা, হরিতাল প্রত্যেকে ৮ তো. জলে মর্দ্দন। र.सा.सं.।

**गुल्मवल्ली।** स्त्री। सोमलतायाम्। रा.नि.व.३।

**गुल्मशार्दूलरसः।** पुं। गुल्मे रसः। रसगन्धकलौहगुग्गुलुत्रिवृतापिप्पलीशुण्ठीशटीधन्याकजीरकानि प्र. ८ तो. जैपालवीजं ४ तो. सञ्चूर्ण्य घृतेन वटी कार्य्या। मात्रा २ र.। र.सा.सं.।

**गुल्मिकः।** पुं। रक्तकरवीरे। वै.निघ.।

**गुल्मिनी।** स्त्री। उलुपे। উলু। विस्तृतलतायाम्। अम.।

**गुल्मी** (इन्) **।** पुं। कण्टकपालीवृक्षे। प.मु.। स्त्री। आमलक्याम्। एलायाम्। मे.। गन्धनखीवृक्षे। গুড়কাঁউলী। श.च.।

**गुल्यः।** त्रि। मधुरे। हे.च.।

**गुवाकः।** पुं। The betel-nut tree. स्वनामख्यातवृक्षे। গুয়া গাছ। हिं सुपारि। गुणाः—कषायत्वं शीतलत्वं दीपनत्वं गुरुपाकित्वञ्च। राज.। See अकोटः।

**गु(गू)ष्टिः।** स्त्री। गाम्भारीवृक्षे। वै.निघ.।

**गुहः।** पुं। चपलघोटके। श.र.। कङ्गुधान्ये। वै.निघ.२भ.अतिसा.चि.गोकण्टकादिकषाये।

**गुहा।** स्त्री। सिंहपुच्छीनामपृश्निपर्ण्याम्। সিংহপুচ্ছী চাকুলিয়া। रा.नि.व.४। नकुलः१२अ.। वा.सू.२९अ.। शालपर्णीनामक्षुपे। भा.पू.१भ.।

**गुहाशयः।** पुं। गुहाशयमृगमात्रे। सिंहव्याघ्रवृकतरक्षुद्वीपृत्रमार्ज्जारशृगालमृगेर्वारुकप्रभृतिषु। तन्मांसगुणाः—मधुरं गुरु स्निग्धं बल्यं वातघ्नमुष्णवीर्य्यं नेत्रार्शसां हितम्। सु.सू.४६अ.। "सिंहव्याघ्रवृकऋक्षतरक्षुद्वीपिनस्तथा। बभ्रुजम्बूकमार्ज्जारा इत्याद्याः स्युर्गुहाशयाः॥" भा.। वनमूषिके। सप्तपर्णवृक्षे। चक्रवाके। वै.निघ.। व्याघ्रे। रा.नि.व.१९। त्रि। गुहाशायिनि।

**गुहिनम्।** क्ली। वने। श.र.।

**गुहिलम्।** क्ली। धने। उणा.।

**गुहेरः।** पुं। लौहकारे। उणा.।

**गुह्यम्।** क्ली, पुं। कमठे। मे.। पायौ। भगे। त्रिका.। लिङ्गे। अम.।

**गुह्यदीपकः।** पुं। खद्योते। श.च.।

**गुह्यनिष्यन्दः।** पुं। मूत्रे। रा.नि.व.१८।

**गुह्यपत्रः (पुष्पः)।** पुं। अश्वत्थवृक्षे। रा.नि.व.११।

**गुह्यरोगः।** पुं। शूकदोषापरनामसु उपदंशादित्रयोविंशतिविधरोगेषु। तत्र उपदंशाः पञ्च। सर्षपिकादय अष्टादश। See शूकदोषः। निदानम्—"स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा। दोषाध्युषितमङ्गीर्णमलिनानुरजःपथाम्। अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकां। दूषितं स्पृशतस्तोयं रतान्तेऽपि नैव वा। विवर्द्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः। मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः। वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः। दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान्। जनयन्त्युपदंशादीन्॥" वा.उ.३३अ.।

**गुह्यबीजः।** पुं। भूतृणे। गन्धतृणविशेषे। रा.नि.व.८। तृणमात्रे। वै.निघ.।

**गूः।** पुं। विष्ठायाम्।

**गूढ़म्।** क्ली। गुह्ये। मे.। त्रि। संवृते। अम.।

**गूढ़कामी** (इन्) **।** पुं। काके। वै.निघ.।

**गूढ़गर्भकः।** पुं। गर्भजरोगविशेषे। वै.निघ.।

**गूढ़नीड़ः।** पुं। खञ्जरीटपक्षिणि। श.मा.।

**गूढ़पत्र: (त्रा)** । पुं, स्त्री । अङ्कोलवृत्ते । करीरवृत्ते । रा.नि.व.८ ।

**गूढ़पथ:** । पुं । अन्तरात्मनि । हे.च. ।

**गूढ़पात् (द:)** । पुं । सर्पे । अम. । श.र. । कच्छपे । वै.निघ. । [१० ।

**गूढ़पुष्प: (क:)** । पुं । वकुलवृत्ते । रा.नि.व.

**गूढ़फला** । स्त्री । गृध्रनख्याम् । गुड़काँउली, कालियाकड़ा । वै.निघ. ।

**गूढ़मल्लिका** । स्त्री । अङ्कोलवृत्ते । "अङ्कोले गूढ़मल्लिका ।" रा.नि.व.२३ ।

**गूढ़मैथुन:** । पुं । काके । त्रिका. ।

**गूढ़वर्चा:** । पुं । भेके । त्रिका. । [नि.व.२३ ।

**गूढ़वल्लिका (ल्ली)** । स्त्री । अङ्कोलवृत्ते । रा.

**गूढ़ाङ्ग:** । पुं । कच्छपे । रा.नि.व.१९ । उपस्थे । वै.निघ. ।

**गूढ़ाङ्घ्रि:** । पुं । सर्पे । रा.नि.व.१९ ।

**गूथम्** । क्ली । विष्ठायाम् । अम. । [श.च. ।

**गूथलक:** । पुं । पक्षिविशेषे । गुयेशालिक ।

**गून:** । त्रि । कृतपुरीषोत्सर्गे । अम. ।

**गूवाक:** । पुं । गुवाके । श.र. ।

**गूषणा** । स्त्री । मयूरपिच्छचन्द्रके । श.च. ।

**गृञ्जन(क)म्** । क्ली । रक्तमूलकविशेषे । शालगम । हिं गाजर । मं सेठीमूल । कं चक्षिकेयमूलंगि । गुणा:—कटूष्णं कफवातघ्नं रुच्यं दीपनं हृद्यं दुर्गन्धगुल्मघ्नञ्च । रा.नि.व ७ । विषदिग्धपशोर्मांसे । मे. । वा.चि.४अ. । (कम्) हरीतकीभेदे । वा.चि.६अ. । "यूषं गृञ्जनकस्य वा ।" पुं । Garlic. रसोने । रक्तरसोने । लाल रशुन । हिं लसण । रा.नि.व.७ । गुणा:—द्वयोरेव उष्णकटुपिच्छिलस्निग्धगुरुस्वादतिबल्यवृष्यत्वं मेधास्वरवर्णचक्षुर्भग्नास्थिसन्धानकरत्वं तीक्ष्णत्वं हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिमूत्रकृच्छ्रघ्नत्वं अर्शःकुष्ठवातक्रिमिकफरोगघ्नत्वञ्च । रा.नि.व.७ । रक्तशिग्रौ । गञ्जायाम् । वै.निघ. ।

**गृञ्जर:** । पुं । गर्ज्जरे । गाजर । वै.निघ. ।

**गृध्रजीव:** । पुं । महाशृगाले । बड़ शेयाल । हे.च. ।

**गृधु:** । पुं । अपाने । उणा. ।

**गृध्र:** । पुं । पक्षिविशेषे । शकुनि, गृधिनी । रा.नि.व.१९ । प्रसहवर्गीय: काकसमगुणश्च । सु.सू.४६अ. । त्रि । लोभयुक्ते । त्रिका. ।

**गृध्रनखी** । स्त्री । कण्टकपालीवृत्ते । गुड़काँउली, केलेकड़ा । तें गेद्दगेरुचेट्टु । र.मा. । कोलिवृत्ते । कुलगाछ । त्रिका. । वै.निघ.२भ.वा.व्या.चि.महारास्नादौ । नखीनामगन्धद्रव्ये । वै.निघ. ।

**गृध्रनखीद्वयम्** । क्ली । श्वेतलोहितपुष्पभेदात् अहिंस्राद्वये, कालीयकद्वये । श्वेत रक्त केलेकड़ा, गुड़काँउली । "द्वे गृध्रनख्यौ रास्ना च ।" सि.यो.च.द.वा.व्या.वाजिगन्धादिकषाये । वदरीद्वये, वदरी वनवदरी चेति । त्रिका. । वै.निघ. २भ.ज्व.चि.दशमूलादिकषाये । [नि.व.५ ।

**गृध्रपत्रा** । स्त्री । धूम्रपत्रानामक्षुपे । रा.

**गृध्रपुरीष:** । पुं । गृध्रपक्षिविष्ठायाम् । गुणा: —व्रणदारुणत्वम् । सु.सू.३६अ. ।

**गृध्रसी** । स्त्री । Rheumatism, affecting the loins. वातरोगविशेषे । চোরঙ্গী বাত । तल्लक्षणम्—"स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदक्रमात् । गृध्रसी स्तम्भरुक्तोदै: गृह्णाति स्पन्दते मुहु: । वाताद्वातकफात्तन्द्रागौरवारोचकान्विता ॥" मा.नि. । "वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुन: । वातजायां भवेत्तोदो देहस्यातीव वक्रता । जानुजङ्घोरुसन्धीनां स्फुरणं स्तम्भता भृशं । वातश्लेष्मोद्भवायान्तु गौरवं वह्निवर्द्धनं । तन्द्रामुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥" भा. । "पार्ष्णिप्रत्यङ्गुलीनान्तु कण्डरा यानिलार्दिता । सक्थ्न: क्षेपं निगृह्णीयात् गृध्रसीति हि सा स्मृता ॥" सु.नि.१अ. । गृध्रस्यान्तु नरं सम्यक्रेकेण वमनेन वा । ज्ञात्वा निरामं दीप्ताग्निं वस्तिभि: समुपाचरेत् ॥

**गृध्राकार:** । पुं । भाषपक्षिणि । वै.निघ. ।

**गृध्राणी** । स्त्री । धूम्रपत्रानामक्षुद्रक्षुपे । रा.नि. व.५ ।

**गृष्टि: (ष्टिका)** । स्त्री । वाराहीनाममहाक-

न्दशाके। শুয়ার আলু। रा.नि.व.७। शूकर्य्यां। सु.चि.२६।१७अ.। सकृत्प्रसूतायां गवि। हे.च.। गाम्भारीवृक्षे। रा.नि.व.६। वराहक्रान्तायाम्। अम.। शुक्लभूकुष्माण्डे। वै.निघ.। वदरवृक्षे। मे.।

**गृष्टिक्षीरम्।** क्ली। सकृत्प्रसवादुग्धे। भा.म.३भ.।

**गृहम्।** क्ली। निकेतने। घर।

**गृहकच्छपः।** पुं। पेषणशिलायाम्। श.र.।

**गृहकन्या।** स्त्री। कुमार्य्यां। घृतकुমারী। रा.नि.व.५। [রী। त्रिका.।

**गृहकपोतः (कः)।** पुं। पारावते। পায়[রা।]

**गृहकर्त्ता।** पुं। धूसरवर्णोऽतिसूक्ष्मचटके। বা বুই। रा.नि.व.१६। [পোকা।

**गृहकारी (इन्)।** पुं। कीटविशेषे। কুমোর।

**गृहकुलिङ्गः।** पुं। गृहचटके।

**गृहकूलकः।** पुं। चिचिण्डायाम्। চিচিঙ্গা। भा.पू.१भ.।

**गृहगोधा (धिका)।** स्त्री। ज्येष्ठ्याम्। টিক্‌টিকি। हिं छिपकली, बिषखापरा। र.मा। तद्विषलक्षणम्—"विदाहं श्वयथुं तोदं स्वेदञ्च गृहगोधिका···जनयेत्।" मा.नि.। (लिका) इति हे.च.।

**गृहचटकः।** पुं। गृहपालितचटके। গ্রাম্য চড়া। गुणाः—"गृहस्य चटको वृष्यः बलशुक्रविवर्द्धनः। सर्व्वदोषहरश्चापि दीपनो मांसवर्द्धनः॥" अत्रि २१अ.। "रक्तपित्तहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः।" सु.सू.४६अ.।

**गृहचुल्लिमृत्।** स्त्री। चुल्लीमृत्तिकायाम्। উননের মাটী। चि.क्र.क. [के। त्रिका.।

**गृहणी।** स्त्री। पलाण्डौ। वै.निघ.। काञ्जि-

**गृहद्रुमः।** पुं। मेषशृङ्गीनामवृक्षे। प.मु.। शाकवृक्षे। শেগুন গাছ। रा.नि.व.६।

**गृहधूमः।** पुं। आगारधूमे। ঝুল। सा.कौ. ग्रहणी.चि.।

**गृहधूमाद्यतैलम्।** क्ली। नासारोगे तैलम्। "गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः। सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम्॥" তিলতৈল ১ শ. ঝুল, পিপুল, দারুহরিদ্রা, যবক্ষার, করঞ্জবীজ, সৈন্ধব, বামুনহাটীবীজ প্রত্যেকে ২ তো. ৪ মা. ৬ র.। सा.कौ.। अन्यत् উপদংশব্রণে—गृहधूमनिशाकिट्टैरेकविंशशकैः क्रमात्···। ঝুল ১ প. ২ তো. ৫ মা. ৩ র. হরিদ্রা ২ প. ৫ তো. ২ মা. ৩ র. সুরাবীজ ৩ প. ৭ তো. ৭ মা. ৯ র. তৈল ৪ শ. জল চতুর্গুণ। रस र.। See आगारधूमाद्यतैलं।

**गृहनाशनः।** पुं। कपोते। रा.नि.व.१६।

**गृहनीड़ः।** पुं। चटकपक्षिणि। हारा।

**गृहपुत्रिका।** स्त्री। घृतकुमार्य्याम्। भैष.कुष्ठ चि.कन्दर्पसा.तैले। त्रायमाणायां। গোয়ালে। सा.कौ.।

**गृहबलिप्रियः) गृहबलिभुक् )** पुं। चटके। काके। वै.निघ.। वके। श.र.।

**गृहमणिः।** पुं। प्रदीपे। त्रिका.।

**गृहमाचिका।** स्त्री। चर्म्मचट्याम्। চামচিকি। त्रिका.।

**गृहमृगः।** पुं। कुक्कुरे। हे.च.। [वै.निघ.।

**गृहशायी (इन्)।** पुं। पारावते। পায়রা।

**गृहाम्बु (म्लं)।** क्ली। काञ्जिके। त्रिका.। प.द.गर्भ.चि.। [हे.च.।

**गृहा(हो)लिका।** स्त्री। ज्येष्ठ्याम्। हारा.।

**गृहाश्रया।** स्त्री। ताम्बूलीलतायाम्। श.च.। पूगीवृक्षे। वै.निघ.। [र.।

**गृहाश्मा।** पुं। पेषणशिलायाम्। শিল। श.

**गृहिणी।** स्त्री। काञ्जिके। त्रिका। भार्य्यायाम्। हे.च.।

**गृह्यम्।** क्ली। गुदे। मे.।

**गृह्यकः।** पुं। गृहासक्तमृगादौ। अम.।

**गेयप्रियः।** पुं। सुन्दरपुष्पवृक्षे। গন্ধরাজ গাছ। रा.नि.व.१०।

**गेहधूमः।** पुं। गृहधूमे। ঝুল। च.द.।

**गेहपक्षी।** पुं। पारावते। वै.निघ.।

**गैरिक(रेय)म्।** क्ली। सुवर्णे। रा.नि.व.१३।

वै.निघ.हिक्का.चि । शिलाजतुनि । गिरिमृत्तिकायाम् । গেরিমাটী । हिं गेरु, सुवर्णगेरु । तच्च गैरिकस्वर्णगैरिकभेदेन द्विविधम् । तयो: गैरिकं स्वर्णगैरिकात् रक्ततरं । गुणा: —"गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमं । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥" भा.पू.१भ. । निर्म्मलं स्निग्धं नेत्रतेजस्करम् । राज. । शोधनं शङ्खशोधनवत् । भा.४भ.पादस्फोट.चि.मधुसिक्थकगैरिकघृत··· ।

**गैरिकाक्ष:** । पुं । जलमधूकवृक्षे । रा.नि.व.११ । [भा. ।

**गैरी** । स्त्री । लाङ्गलिकावृक्षे । विषलाङ्गुलि । र.

**गोकण्ट: (क:)** । पुं । क्षुद्रगोक्षुरक्षुपे । रा.नि.व.४ । च.द.ता.व्या.माषतैले । विकण्टकवृक्षे । रा.नि.व.११ ।

**गोकण्टी** । स्त्री । गोपघोण्टायाम् । वै.निघ. ।

**गोकर्ण:** । पुं । अश्वगन्धायाम् । मद.व.१ । अश्वतरे । मे. । कूलचरमृगभेदे । अम. । गुणा: — गोकर्णमांसं मधुरं स्निग्धं मृदु कफघ्नं विपाके मधुरं रक्तपित्तघ्नञ्च । सु.सू.४६अ.। सर्पविशेषे । मे.।

**गोकर्णा** । स्त्री । अश्वगन्धायाम् । वै.निघ. ।

**गोकर्णिका (र्णी)** । स्त्री । वाजिनलगाभेदे । अ.द.७अ. । मूर्व्वायाम् । रा.नि.व.३ । लताविशेषे । কাল অপরাজিতাবিশেষ । गुणा: — कट्वी शीता तिक्ता बुद्धिदा चक्षुष्या तुवरा सरा विषघ्नी त्रिदोषघ्नी शिर:शूलदाहकुष्ठशूलघ्नी आमं पित्तरोगशोथकृमिकफव्रणकफग्रहपीडासर्पविषहरी च । वै.निघ. ।

**गोकिरा(री)टिका (टी)** । स्त्री । सारिकायां ।শালিক পাখী । हे.च. । रा.नि.व.१६ ।

**गोकि(की)ल:** । पुं । मुषले । हारा. ।

**गोकुलिक:** । स्त्री । काणे । কাণা । वै.निघ.।

**गोकृतम्** । क्ली । गोमये । श.च. ।

**गोखरी (खुर:)** । पुं । गोक्षुरक्षुपे । श.र. । क्ली । गोशफे । श.च. ।

**गोग्रन्थि:** । पुं । गोजिह्विकौषधौ । मे. । करीषे, शुष्कगोमये । त्रिका. ।

**गोघृतम्** । क्ली । गव्यघृते । গাওয়া ঘি । गुणा: — विपाके मधुरं शीतलं वातपित्तविषघ्नं चक्षुष्यं बल्यं श्रेष्ठञ्च । सु.सू.४६अ. । See गव्यघृतम् । वर्षोपले । त्रिका. ।

**गोचन्दना** । स्त्री । सविषजलायुकाभेदे । জোঁক । सु.सू.१३अ. । सु.चि.२८अ. ।

**गोचरविभ्रम:** । पुं । रूपस्यायथाग्रहणे । भा.म.४भ.नेत्ररो.चि. ।

**गोचर्म्म** । क्ली । गोलचि ।

**गोचर्म्मकण्टक:** । पुं । पर्पटके । वै.निघ. ।

**गोच्छगल:** । पुं, क्ली । गोमये । वै.निघ. ।

**गोच्छाल:** । पुं । अलम्बुषक्षुपे । কুকুশিমে গাছ । र.मा. ।

**गोच्छाला** । स्त्री । गोरचसुण्डाम् । वै.निघ.।

**गोजलम्** । क्ली । गोमूत्रे । रा.नि.व.१५ ।

**गोजा** । स्त्री । गोलोमिकायाम् । रा.नि.व.५ । भा म.३भ.मू.घा.चि. ।

**गोजागरिक:** । पुं । कण्टकारीक्षुपे । मे. ।

**गोजापर्णी** । स्त्री । दुग्धफेनीवृक्षे । দুদিয়া । रा.नि.व.५ । [सु.चि १८.२२अ. । भा. ।

**गोजि: (जी)** । स्त्री । गोजिह्वालतायाम् ।

**गोजिकाण:** । पुं । मध्यमाश्वे । See अश्व: ।

**गोजिह्वा** । स्त्री । Elephantopus scaber. स्वनामख्यातपत्रशाकक्षुपे । দাড়ি শাক । हिं पाथरी, गोभी, दाड़ीशाक, गोजियालता । तैलङ्गे हुनालुकचेट्टु, भरिलिकचेट्टु । च.द. । "गोजिह्वां बालमूलकम् ।" गुणा: — लघु: कुष्ठमेहास्रकृच्छ्रज्वरघ्नी । भा.पू.१भ.शा.व. । कटुका तीव्रा शीतला पित्तघ्नी व्रणरोपणी । सर्व्वदन्तविषापहा च । रा.नि.व.४ । "गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् । हृद्या प्रमेहकासास्रव्रणज्वरहरी लघु: । कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता ॥" सु. । गुन्द्रायाम् । গড়গড়ে । देवधान्ये । দেধান । र.मा. ।

**गोजिह्विका** । स्त्री । गोजिह्वायाम् । श.र. । जिह्वारूपकायप्रत्यङ्गविशेषे । च.शा.७अ. । [मे. ।

**गोड़:** । पुं । नाभौ संवृद्धमांसगुडके । গোঁড় ।

**गोड़म्बी ।** स्त्री । भल्लातकवीजे । वै.निघ. ।

**गोड़वास्तुकः ।** पुं । वास्तुकशाकविशेषे । वै. निघ. । [गाछ । मे. ।

**गोड़ुम्बः ।** पुं । कालिङ्गलतायाम् । তরমুজ

**गोड़ुम्बा (म्बिका) ।** स्त्री । (Cucumis madraspatanus, Cucumis melo.) फलशाकलताविशेषे । গোমুক, রাজগোমুক । र.मा. ।

**गोणा ।** स्त्री । मनःशिलायाम् । रा.नि.व.१३ ।

**गोणी ।** स्त्री । द्रोणीपरिमाणे । प.प्र. ।

**गोण्डः ।** पुं । गोड़े । গোঁড় । अम. ।

**गोतीर्थकः (च्छेदः) ।** पुं । गोशीन्याकार च्छेदने । सु चि.८अ. । काव्यगतगोमूत्रिकाकार च्छेदे । वा.उ.२८अ. । "पार्श्वादागतशस्त्रेण छेदो गोतीर्थको मतः ।" भा.म.भगन्दरे ।

**गोतैलम् ।** क्ली । गोवसायां । भैष.उदरी.चि.।

**गोत्रम् ।** क्ली । कुले । गव्ये । चिका. । शरीरे। छत्रे । वै.निघ. ।

**गोत्रद्रुमः (पुष्पः, कः) (विटपी) (वृक्षः) ।** पुं । धन्वनवृक्षे । भा. । वै.निघ. ।

**गोत्रभृत् ।** पुं । पर्व्वते । रा.नि.व.२ ।

**गोत्रेष्टम् ।** क्ली । शीषके ।

**गोदः ।** पुं । मस्तकस्नेहे, मस्तिष्के । हे.च. ।

**गोदधि ।** क्ली । गव्यदधनि । See गव्यदधि।

**गोदन्तम् ।** क्ली, पुं । हरिताले । रा.नि.व.१३। तन्नामकहरितालविशेषे । গোদন্ত হরিতাল। भैष.ज्व.चि.कालाग्निभै.रसे ।

**गोदन्ता ।** स्त्री । दारुमोचभेदे । दामुंज । प. मु.। तन्नामकहरिताले । भैष.प्लीह.चि.शङ्खद्रावके ।

**गोदावरी ।** स्त्री । विन्ध्यस्य दक्षिणप्रसिद्धभारतीयनद्याम् । तज्जलगुणाः—पित्तरोगहरं रक्तदोषहरं वातहरं पथ्यम् अतिदीपनं पापघ्नं कुष्ठादिदुष्टरोगघ्नं तृष्णाहरञ्च । रा.नि.व.१४ ।

**गोदुग्धम् ।** क्ली । गोक्षीरे । গাই দুধ । तत्प्रशस्तता—"निर्वत्साबालवत्सायाः पयो दोषलमीरितं । वत्सैकवर्णयोः शस्तं धवलीकृष्णयोरपि । इक्ष्वादा माषपर्णादा ऊर्द्ध्वशृङ्गी च या भवेत् । तासां गवां हितक्षीरम् ।" राज३प. । गुणाः – पथ्यं अतिरुच्यं स्वादु स्निग्धं वातपित्तरोगघ्नं कान्तिकरं प्रज्ञाजनकं बुद्धिमेधाङ्गपुष्टिदं वीर्य्यवर्द्धकञ्च । रा. नि.व.१५ । "गव्यं पवित्रञ्च रसायनञ्च पथ्यञ्च हृद्यं बलपुष्टिदं स्यात् । आयुःप्रदं रक्तविकारपित्तत्रिदोषहृद्रोगविषापहं स्यात् ॥" अत्रि.८अ. । गोदुग्धग्रहणकालनिर्णयः—"गव्यं प्रत्यूषसि क्षीरं गुरु विष्टम्भि दुर्ज्जरं । तस्मादभ्युदिते सूर्य्ये यामं यामार्द्धमेव वा । समुत्ताप्य ततो ग्राह्यं तत्पथ्यं दीपनं लघु ॥" राज.३प. । [व.८ ।

**गोदुग्धदा ।** स्त्री । चणिकाख्यतृणे । रा.नि.

**गोदुग्धा ।** स्त्री । गोड़म्बायाम् । রাজগোমক। इन्द्रवारुणीलतायाम् । चिर्भटिकायाम् । वै.निघ।

**गोद्रवः ।** पुं । गोमूत्रे । रा.नि.व.१५ ।

**गोधजः ।** पुं । गोधायाम् । वै.निघ. ।

**गोधना ।** स्त्री । ऋद्धौषधौ । वै.निघ. ।

**गोधा ।** स्त्री । स्वनामख्यातजन्तुविशेषे । গোসাপ । हिं गोहो । सा द्विधा जलजस्थलजभेदात् । अस्या मांसगुणाः—वातकासश्वासनाशित्वं । रा.नि.व.१७ । पाकमधुरत्वं कषायत्वं कटुत्वं पित्तघ्नत्वं रक्तशुक्रबलकरत्वञ्च । राज.३प. । "रक्तपित्तहरा वृष्या स्निग्धा मधुरशीतला । श्वासकासहरा प्रोक्ता गोधा चार्शोहिता तथा ॥" अत्रि.२०अ. । च.मू.१अ. । वटपत्रीपाषाणभेदे । वै.निघ. । मनःशिलायाम् । भा. ।

**गोधापदिका (दी) ।** स्त्री । (Vitis pedata, Syn. Cissus pedatus.) हंसपद्यां । গোসাপে লতা । तें हंसपादिचेट्टु । गुणाः—कटूष्णा विषघ्नी भूतघ्नी भ्रान्तिघ्नी अपस्मारहरी रसायनी च । रा.नि.व.५। र.चि.वृह.पानीयभक्तगुड्याम् । "हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् । विसर्पदाहातीसारलूताभूताग्निरोहिणीः॥" भा. । तालमूल्याम् । रा.नि.व.७ । रक्तलज्जालुकायाम् । वै.निघ. ।

**गोधामांसम् ।** क्ली । गोधायां मांसे । গোসাপের মাংস। See गोधा ।

**गोधावती ।** स्त्री । वटपत्रीनामपाषाणभेदवि-

क्षेत्रे । वै.निघ.। गोधापद्यां । গোশ্রালে । च.द. ।

**गोधावल्ली** । स्त्री । हंसपदीलतायाम् । प.मु. ।

**गोधासुतः** । पुं । गौधेरे । अयं चतुष्पात् । वा.उ.३६अ. ।

**गोधास्कन्दः (न्धः)** । पुं । अरिमेदवृक्षे । বিট্খদির । रा.नि.व.८ । [याम् । श.र. ।

**गोधिः** । पुं । ललाटे । रा.नि.व.१८ । गोधा-

**गोधिका** । स्त्री । गोधायाम् । अम. ।

**गोधिकात्मजः (सुतः)** । पुं । गोधाशिशु-वदाकारकीटरस्वस्थलगोधायाम् । सा.सु. ।

**गोधिकासूदनः** । पुं । गौधेरके । স্থলগোধা । वै.निघ. । [नि.व.४ ।

**गोधिनी** । स्त्री । चविकानामवृहत्याम् । रा.

**गोधु(धू)मः** । पुं । (Triticum vulgare.) Common wheat. स्वनामख्यातशूकधान्ये । গম । हिं गेँहुं । तें गोधुमलु । स त्रिधा—महागोधूम मधूली-निःशूकभेदेन । "महागोधूम इत्याख्यः पश्चाद्देशात्समागतः । मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा । निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः ॥" "मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघुः । शुक्रला वृंहणी पथ्या तद्वन्नन्दीमुखः स्मृतः ॥" भा.पू.१भ.धान्यव. । गुणाः—वृष्यः शीतो गुरुः स्निग्धः जीवनः वातपित्तघ्नः सन्धानकारी मधुरः स्थैर्यकृत् सरश्च । वा.सू. । मधुरो गुरु विष्टम्भी वृष्यो बल्योऽथ वृंहणः । ईषत्कषायमधुरो गोधूमः स्याचिदोषहा ॥ अत्रि.१५अ. । सन्धानकृद्वातहरः गोधूमः स्वादु शीतलः । जीवनो वृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥ च.सू.२७अ. । पित्तदाहकृत् श्लेष्मामजनकः रुचिकरश्च । रा.नि.व.१६ । तत्काञ्जिकगुणाः—"सन्दीपनं शूलहरं रुचिप्रदं गोधूमजातं कथितं कषायं । सन्दीपनं स्याज्जरणं कफघ्नं समीरदोषं हरते ततोऽपि । पीतं जरयते चामं वाह्यदाह्यश्रमापहं । आम तत् कुष्ठकण्डूघ्नं तैलयुक्तं समीरजित ॥" अत्रि.११अ. । [दा । गोधूमगुणम् ।

**गोधूमचूर्णम्** । क्ली । चूर्णीकृतगोधूमे । मश्र-

**गोधूमकः** । पुं । राजिमत्सर्पविशेषे । सु.कल्प. ४अ. । See सर्पः ।

**गोधूमजः** । पुं । नवक्षीरे । वै.निघ. ।

**गोधूमफलं** । क्ली । गोधूमे । वै.निघ. ।

**गोधूमसण्डः** । पुं, क्ली । गोधूमक्षेत्रमण्डे । গমের মণ্ড । गुणाः—"तद्वद्गोधूमसम्भूतं मधुरं पित्तवारणम् ।" अत्रि.१२अ. । [नि.व.१५ ।

**गोधूमसम्भवम्** । क्ली । सौवीरकाञ्जिके । रा.

**गोधूमसौवीरम्** । क्ली । गोधूमजातकाञ्जिके । वै.निघ. ।

**गोधूमक्षीरिका** । स्त्री । गोधूमपायसे । গুজির পায়স । गुणाः—"गोधूमपायसी बल्यः कफमेदकरी गुरुः । शीतलः पित्तशमनी वातकृच्छुक्रवर्द्धनः ॥" वैद्यकम् ।

**गोधूमाद्यघृतम्** । क्ली । रसायनाधिकारे । घृतं ४ श. दुग्धं १६ श. क्वाथार्थं—गोधूमः १०० प. वारि ३२ श. शे. ८ श. । कल्कार्थं—गोधूमः मुञ्जाफलं (अभावे तालमस्तकं) माषकलायः द्राक्षा परूषफलं काकोली क्षीरकाकोली जीवन्ती शतमूली अश्वगन्धा पिण्डीखर्जुरं मधूकफलं (মউল) त्रिकटु शर्करा भल्लातकं (अभावे रक्तचन्दनं) आत्मगुप्ताफलं मूलं वा (আলাকুশী) एषां प्रति ३॥० तो. ४॥० र. । प्रक्षेपद्रव्यं—गुड़त्वक् एला पिप्पली धान्यकं कर्पूरं नागकेसरं एषां प्रति १०॥८१० तो. शर्करा ८ प. मधु ८ प. इक्षुकाण्डेन आलोड़येत् । मात्रा १—२ प. च.द. । [रा.नि.व.५ ।

**गोधूमिका (मी)** । स्त्री । गोलोमिकायां ।

**गोधेरकः** । पुं । गौधेरके । वै.च. ।

**गोनन्दी** । स्त्री । सारसपक्षिणि । हारा. ।

**गोनर्दम्** । क्ली । कैवर्त्तमुस्तके । मे. । परिपेल्लवणे । रा.नि.व.८ । पुं । तन्नामकपक्षिणि । मे. । च.सू. २७ अ ।

**गोन(ना)सः** । पुं, क्ली । वैक्रान्तमणौ । रा.नि.व.१३ । तन्नामकसर्पे । मण्डलीवोड़े । বোড়া সাপ, মণ্ডলী বোড়া । विक्रमादित्यः । मण्डलिसर्पे । গোখুরা সাপ । इति केचित् । [धिः ।

**गोनसी** । स्त्री । महौषधिविशेषे । See सोम-

**गोनिष्यन्दः (नीरं)** । पुं,क्ली । गोमूत्रे । रा.नि.व.१५ ।

**गोपः (कः)** । पुं । वणिग्द्रव्यभेदे रक्तबोले । अम. । शारिवायाम् । वै.निघ. । सारजवर्गीयौषधे नरसारे । निशादल । श.र. । त्रि. । उपकारके । श.च. ।

**गोपकन्या** । स्त्री । काष्ठसारिवायाम् । रा.नि. व.१२ । श्वेतसारिवायाम् । भा.पू.१भ. । वा.उ. ३७अ., चि.२अ. ।

**गोपकर्कटिका** । स्त्री । गोपालकर्कटिलतायाम् । कुन्दुरु, माठकाँकुड़ । रा.नि.व.३ ।

**गोपघण्टा** । स्त्री । गोपघोण्टायां । वै.निघ. ।

**गोपघोण्टा (ण्टिका)** । स्त्री । विकङ्कतवृक्षे । बँइँचि गाछ । रा.नि.व.९ । कर्कोट्याम् । शेयाकुल । जामकोली । श.र.सु.सू.३८अ. । पूगभेदे । सु चि.८अ. । [ब्रुषे । मे. ।

**गोपतिः** । पुं । ऋषभकौषधौ । रा.नि.व.५ ।

**गोपदलः** । पुं । गुवाकवृक्षे । त्रिका. ।

**गोपनम्** । क्ली । तेजपत्रे । ग्रन्थिपर्णे । वै.निघ. ।

**गोपवधूः** । स्त्री । शारिवायाम्, कृष्णशारिवायाम् । भा.पू.१भ. ।

**गोपभद्रम्** । क्ली । शालूके । श.च. ।

**गोपभद्रा (द्रिका)** । स्त्री । गाम्भारीवृक्षे । गामार गाछ । प.मु. ।

**गोपरसः** । पुं । बोलि । निशादल । श.र. ।

**गोपवल्लिः (ल्ली)** । स्त्री । मूर्व्वायाम् । अनन्तायाम् । अनन्तमूल । प.मु. । श्यामालतायां । रा.नि.व.११ ।

**गोपसुता** । स्त्री । सारिवायाम् । वा.सू.१५अ. ।

**गोपा (पी)** । स्त्री । श्यामालतायाम् । भैष. कुष्ठ.चि.महाभल्लातगुड़े । अनन्तायाम् । प.मु. । काष्ठशारिवायाम् । नि.व.१२ ।

**गोपाङ्गना** । स्त्री । श्वेतशारिवायाम् ।

**गोपानीयम्** । क्ली । गोमूत्रे । वै.निघ. ।

**गोपालकर्कटिका (टी)** । स्त्री । स्वनामख्यातारण्यकर्कटीलतायां । कुन्दरुकी,केछुड़ा । हिं गोवभा, गोयालकाँकड़ी । गुणाः—शीतला मधुरा पित्तघ्नी मूत्रकृच्छ्राश्मरीमेहदाहशोषघ्नी च । रा.नि.व.३ ।

**गोपालप(पु)त्रिका** । स्त्री । चिर्भिटायां । "गोपालपत्रिकामूलम्।" वै.निघ.२भ.विषमज्व.चि. ।

**गोपालिका** । स्त्री । इन्द्रगोपकीटभेदे । है.च. ।

**गोपाली** । स्त्री । गोरच्चीनामगन्धद्रव्ये । गोरक्षचाकुले । रा.नि.व.५ । गोपालकर्कटीलतायाम् । रा.नि.व.३ ।

**गोपिका** । स्त्री । कृष्णशारिवायाम् । वै.निघ. ।

**गोपित्तम्** । क्ली । गोरोचनायाम् । प.मु. ।

**गोपित्तजा** । स्त्री । गोरोचनायाम् । वै.निघ. ।

**गोपिनी** । स्त्री । श्यामालतायाम् । श.च. ।

**गोपीचन्दनम्** । क्ली । सौराष्ट्रमृत्तिकायाम् । शुभ्रमृत्तिकायाम् । वै.निघ. ।

**गोपीजलः** । पुं । गुल्माधिकारे रसः । "जैपालाष्टौ हिङ्गो गन्धः शुण्ठीमरिचचित्रकं । एकः सूतः ससौभाग्यः गोपीजल इति स्मृतः॥" र.सा.सं. ।

**गोपीवल्लभः** । पुं । प्रवाले । पला । प.मु. ।

**गोपुच्छः** । पुं । वानरविशेषे । गवां लाङ्गूले । वै.निघ. ।

**गोपुटः** । पुं । क्षुद्रमुस्तायाम् । वै.निघ. ।

**गोपुटा (टी)** । स्त्री । स्थूलैलायाम् । बड़ एलाच । रा.नि.व.६ ।

**गोपुरम्** । क्ली । कैवर्त्तमुस्तके । मे. ।

**गोपुरकः** । पुं । कुन्दुरौ । कुन्दूरुखोटो । रा. नि.व.१२ ।

**गोपुरीषम्** । क्ली । गोमये । रा.नि.व.१५ ।

**गोपुष्टम्** । क्ली । परिपेलवे । रा.नि.व.८ ।

**गोप्रियं** । क्ली । पलाले । पोयाल खड़ । वै. निघ. । [महाराष्ट्रे । वै.निघ. ।

**गोप्रेरकः** । पुं । पक्षिविशेषे । कालवट इति

**गोफणा** । स्त्री । यन्त्रभेदे फिङ्गा इति लोके, यया पाषाणगुड़िका दूरे क्षिप्यन्ते । तदाकारे चिबुकनासौष्ठादिगतव्रणबन्धनविशेषे । सु.सू.१८अ. । चि.२अ. । वा.चि.१अ. । "पाषाणगुड़िकोत्क्षेपकारिणीं गोफणां विदुः ।" इति ।

**गोवन्धना (नी)** । स्त्री । गोवन्नायाम्, पीतपुष्पदण्डोत्पलायाम् । ডানকুনী । र.मा. ।

**गोवल्य:** । पुं । श्वेतयावनाले । वै.निघ. ।

**गोवालधी** । स्त्री । चमरीमृगे । वै.निघ. ।

**गोभण्डीर:** । पुं। जलकुक्कुभपक्षिणि । त्रिका.।

**गोभिरामा** । स्त्री । रामतरण्याम् । वै.निघ. ।

**गोभी** । स्त्री । गोजिह्वायाम् । वै.निघ. ।

**गोमतम्** । क्ली । रक्तवोले । वै.निघ. ।

**गोमतल्लिका** । स्त्री । सुशीलायां गवि, गोश्रेष्ठे । हला. । [कतैले ।

**गोमती** । स्त्री । गोरोचनायाम् । वै.निघ.कन-

**गोमत्स्य:** । पुं । नादेयगोमीने । See मत्स्य: ।

**गोमय:** । पुं, क्ली । गोशकृति । গোবর । रा.नि.व.१५ ।

**गोमयचूर्णीय:** । त्रि । गोमयचूर्णमधिकृत्य कृते चरकोयाध्याये । च.इन्द्रिय.१२अ. ।

**गोमयच्छत्रम्** । क्ली । करके । কোঁড়ক-ছাতা । त्रिका. । [हारा. ।

**गोमयच्छत्रिका** । स्त्री । गोमयच्छत्रे ।

**गोमयतैलम्** । क्ली । नेत्ररोगे तिमिरे च तैलम् । "गवां शकृत्क्वाथविपक्कमुत्तमं हितञ्च तैलं तिमिरेषु नस्यत: ।" তিল তৈল ১ শ. গোময়-রস ১ শ. । भैष. ।

**गोमयप्रियम्** । क्ली । भूतृणे । গন্ধখড় । र.मा. । बालके । বালা । वै.निघ. ।

**गोमयाद्यघृतम्** । क्ली । तिमिराख्यनेत्ररोगे घृतम्। पाठ:—"गवां शकृत्क्वाथविपक्कमुत्तमं हितञ्च तैलं तिमिरेषु नस्यत: । घृतं हितं केवलमेव पैत्तिके छ्याजाविकं यन्मधुरैर्विपाचितम् ॥" ছাগ-ঘৃত ৪শ. গোময়রস ৪শ.। कल्कार्थ কাকোলী, ক্ষীরকাকোলী, জীবক, ঋষভক, মুদ্গপর্ণী, মাষাণী, মেদা, মহামেদা, গুলঞ্চ, কাঁকড়া-শৃঙ্গী, বংশলোচন, পদ্মকাষ্ঠ, পুণ্ডরিয়া, ঋদ্ধি, বৃদ্ধি, কিস্‌মিস্, জীবন্তী, যষ্টিমধু মিলিত ১ শ. জল ১৬ শ. । रस.र. । [পোকা । हे.च. ।

**गोमयोत्था** । स्त्री । गोमयजातकीटे । গুবরে

**गोमयोद्भव:** । पुं । आरग्वधे । श.च. ।

**गोमर्द्द:** । पुं । सारसपक्षिणि । त्रिका. ।

**गोमलम्** । क्ली । गोमये । रा.नि.व.१५ ।

**गोमक्षिका** । स्त्री । मक्षिकाविशेषे । ডাঁশ-মাছী । श.र. ।

**गोमांसम्** । क्ली । गोभवमांसे । গোরুর মাংস । तच्च पवित्रं गुरु वातकफजनकञ्च । रा.नि.व.१७ । "गव्यं पवित्रमायुष्यं श्रमघ्नमनिलापहम् ।" राज.३प. । "गव्यं केवलवातेषु पीनसे विषमज्वरे । शुष्ककासश्रमात्यग्निमांसक्षयहितञ्च यत् ॥" च.सू.२७अ. । "कासश्वासप्रतिश्यायविषमज्वरनाशनं । श्रमात्यग्निहितं गव्यं पवित्रमनिलापहम्॥" सु.सू.४६अ. ।

**गोमायु:** । पुं । शृगाले । শেয়াল । प.मु. । (युम्) क्ली । वंशलोचनायाम् । वै.निघ. ।

**गोमाची** । स्त्री । कर्णस्फोटायाम् । वै.निघ.

**गोमी** (इन्) । पुं । शृगाले । मे. ।

**गोमीन:** । पुं । मत्स्यविशेषे । [त्रिका. ।

**गोमुख:** । पुं । नक्रे । हे.च. । क्ली । लेपने ।

**गोमूत्रम्** । क्ली । गोजले । চোনা । गुणा:—कटु तिक्तम् उष्णं कफवातहरं लघु पित्तकरं दीपनं लघ्दोषहरं मेध्यञ्च । रा.नि.व.१५ ।

**गोमूत्रवीजक:** । पुं । रक्तबीजासनवृक्षे । रा.नि.व.६ । [कल्प ८अ. ।

**गोमूत्राभ:** । पुं । मन्दविषवृश्चिकभेदे । सु.

**गोमूत्रिका** । स्त्री । स्वनामख्याततृणे । तांबडु, गोढवि इति पश्चिमदेशे । गुणा:—मधुरा वृष्या गोदुग्धदा । रा.नि.व.८ ।

**गोमूत्री** । स्त्री । रक्तकुलत्थिकायाम् । वै.निघ.।

**गोमेद: (क:)** । पुं । स्वनामख्यातोपरत्नविशेषे. लोहितमणौ । গোমেদ । वै.निघ.२भ.क्षय.चि.नवरत्नराजमृगाङ्के । सु.नि.३अ. । गुणा:—अम्ल उष्ण: वातकोपहर: दीपन: पाचन: धारणे पापघ्नश्च । रा.नि.व.१३। See माणिक्यम् । क्ली । तेजपत्रे । भा.व्रणरोगे । "पत्रं दलाह्वयं वासो गोमेदं वसनाह्वयम् ।" धन्वन्तरि: ।

**गोमेदसन्निभा** । स्त्री । दुग्धपाषाणे । फुल-थड़ि । प.मु. ।

**गोऽम्बु (म्भः)** । क्ली । गोमूत्रे । रा.नि.व.१५ ।

**गोरक्षः** । पुं । विषधरसर्पविशेषे । श्रवि.श्स्थान ।

**गोरङ्कुः** । पुं । जलकुक्कुटे । পানকৌড়ি । मे. ।

**गोरटः** । पुं । विट्खदिरवृक्षे । रा.नि.व.८ ।

**गोरण्टकः** । पुं । कौङ्कणदेशप्रसिद्धविकण्टक-वृक्षे । रा.नि.व.११ ।

**गोरसः** । पुं । दुग्धे । चतुर्थांशजलतक्रे । পাদ-জল ঘোল । दधनि । हे.च. ।

**गोरसजम्** । क्ली । पादजलेन त्रिभागदधिकृते तक्रे । रा.नि.व.१५ । [नागरङ्गवृक्षे । मे. ।

**गोरवः** । पुं । ऋषभकौषधौ । रा.नि.व.५ ।

**गोरक्षकर्कटी** । स्त्री । इन्द्रवारुण्यां । রাখাল শসা । चिर्भटिकायाम् । কাঁকুড় । भा. ।

**गोरक्षजम्बूः** । स्त्री । घोण्टावदरीवृक्षे । শেয়াকুল । जटा. । बलायाम् । वै.निघ.। गोधूमे । गोरक्षतण्डुलायां । विश्व. ।

**गोरक्षतण्डुला** । स्त्री । (Hedysarum lagopodioides.) नागबलायां । গোরক্ষচাকুলিয়া । प.मु. ।

**गोरक्षतुम्बी** । स्त्री । स्वनामख्यातफलशाक-विशेषे । कुष्माण्डतुम्ब्याम् । गोरवतुम्बी, गोरखदुद्धिके इति च देशविशेषख्याते । গোল লাউ । गुणाः— मधुरा शीतला पित्तघ्ना गुरुः सन्तर्पणी रुच्या वीर्य्यपुष्टिबलदा । रा.नि.व.७ ।

**गोरक्षदुग्धा (ग्धी)** । स्त्री । गोरक्षीनामक्षुद्र-क्षुपे । गुणाः—मधुरा शीतला रुच्या वश्यकरी रसे सिद्धिदा । रा.नि.व.५ ।

**गोरक्षी** । स्त्री । स्वनामख्यातमहाक्षुपे । तच्चा-स्मैव मालवदेशे प्रसिद्धा । गुणाः—मधुरा तिक्ता शीता दाहपित्तघ्नी विस्फोटवान्तिज्वरातीसारघ्नी च । रा.नि.व.५ । ऋषभके । कुष्माण्डतुम्ब्याम् । रा.नि.व.७ । गोरक्षदुग्धायां । रा.नि.व.५ ।

**गोराटी (टिका) (रिका)** । स्त्री । शा-रिकापक्षिणि । শালিক পাখী । हे.च. । रा.नि.व.१९ ।

**गोरुची** । स्त्री । गोरोचनायाम् । वै.निघ. ।

**गोरोचम्** । क्ली । हरिताले । रा.नि.व.१३ ।

**गोरोचनम् (ना)** । क्ली, स्त्री । स्वनामख्या-तसारजवर्गीयद्रव्ये । सा च न गोसाधारणहृदया-धारा गोविशेषेषु कदाचिल्लभ्यते । प.मु.। गोमस्त-कस्थशुष्कपित्तमिति माधवः । गोमूत्रनिर्म्मितमि-ति केचित् । गुणाः—शीतला विषदोषघ्नी रुच्या पाचनी कृमिकुष्ठघ्नी भूतग्रहशान्तिकरी मङ्गलम-ङ्गलकरी जनमोहनी च । रा.नि.व.१२ । "गोरो-चना हिमा तिक्ता वश्या मङ्गलकान्तिदा । विषा-लक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्रहृत् ॥" भा. । वै. निघ.२भ.सर्व्वज्व.चि.गोरोचनादिचूर्ण ।

**गोर्दम्** । क्ली । शिरोमध्ये । मस्तिष्के । মাথার ঘি । अम. ।

**गोलः** । पुं । सुगन्धवोले । গন্ধবোল । जटा. । मदनवृक्षे । र.मा । मणौ । त्रिका. ।

**गोलकः** । पुं । कालमुष्ककवृक्षे । ঘণ্টাপারুল । मणौ । त्रिका.। रक्तसुगन्धवोले । र.मा.। कलाये । মটর । श.च. । गुडे । हे.च. । सुगन्धरोहिषतृणे । वै.निघ. । पिण्डे । हे.च. । [रा.नि.व.८ ।

**गोलफलः** । पुं । मदनवृक्षे । ময়না গাছ ।

**गोलवत्** । क्ली । पुष्पप्रियङ्गौ । हिं फुलप्रिय-ङ्गु । वै.निघ. ।

**गोला** । स्त्री । मनःशिलायाम् । मे. ।

**गोलाङ्गूलः** । पुं। कपौ । মুখপোড়া। त्रिका.।

**गोलासः** । पुं । गोमयच्छत्रके । কোড়কছা-তা । धारा. । [रा.नि.व.८ ।

**गोलिका** । स्त्री । घोण्टायाम् । শেয়াকুল ।

**गोलिहः (लीढ़ः)** । पुं । कालमुष्ककवृक्षे । ঘণ্টাপারুল । अम. ।

**गोली** । स्त्री । गोजिह्वायां । গজিয়া। वै.निघ.।

**गोलोमिका (मी)** । स्त्री । (Corydalis govaniana.) स्वनामख्यातमहाक्षुपे । गन्धक । हिं पाथरी । हटगिरि । गुणाः—कटुः तिक्ता हि-मा त्रिदोषघ्नी मूत्रदोषामदोषघ्नी दीपनी ग्राहिणी च । रा.नि.व.५ । वचायाम् । रा.नि.व.६ । श्वेत-दूर्व्वायाम् । रा.नि.व.८ । भा.स्नान्दापस्मा.चि. ।

भूतकेशाम्। भूँईकेश। प.मु.च.म.४अ.। महौषधिविशेषे। See औषधिः। नीलदूर्व्वायां। जटामांस्याम्। अक्कर्करायाम्। वै.निघ.।

**गोवत्सारिः**। पुं। ईहामृगे। ঘোগ। रा.नि.व.१९।

**गोवन्दनी**। स्त्री। प्रियङ्गुवृक्षे। अम.। पीतदण्डोत्पलायाम्। পীত ডানকুনী। र.मा.।

**गोवरपुटम्**। क्ली। औषधस्य पुटविशेषे। "गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम्। गोवरं तत्समाख्यातं वरिष्ठं रससाधने। वृहद्भाण्डस्थितै यँत्र गोवरैर्दीयते पुटम्। तद्गोवरपुटम्प्रोक्तं भिषग्भिः सूतभस्मनि॥" भा.।

**गोवर्णी**। अश्वगन्धायाम्। वै.निघ.।

**गोवशा**। स्त्री। वन्ध्यायां गवि। वै.निघ.।

**गोवारि**। क्ली। गोमूत्रे। वा.उ.३६अ.।

**गोविट्**। स्त्री। गोमये। अम.।

**गोविन्दः**। पुं। गोमेदमणौ। वै.निघ.।

**गोविन्दिनी**। स्त्री। प्रियङ्गौ। रा.नि.व.१२।

**गोविराटी**। स्त्री। शारिकापक्षिणि। वै.निघ.।

**गोविषाणाख्या**। स्त्री। बब्बूलवृक्षे। বাবলা গাছ। वै.निघ. हिक्का.चि.धूमे।

**गोविष्ठा**। स्त्री। गोमये। रा.नि.व.१५।

**गोवृषः**। पुं। वृषे। श.र.।

**गोवेष्टम्**। क्ली। श्रीवके। শীরা। प.मु.।

**गोशकृत्**। क्ली। गोमये। जटा.। [वै.निघ.।

**गोशाड्वलः**। पुं। ग्रन्थिपर्ण्याम्। গেঁটেলা।

**गोशीर्षः (कः)**। पुं। (र्षः) प.मु.। (कः) र.मा.। द्रोणपुष्प्याम्। घलघसिया। क्ली। श्रीखण्डचन्दने। শ্বেত চন্দন। प.मु.। गोमस्तके। चन्दने। रा.नि.व.१२।

**गोशृङ्गः**। पुं। वर्व्वूरकवृक्षे। বাবলা গাছ। रा.नि.व.८। वै.निघ.ग्रहणी.चि.। क्ली। गोशृङ्गे।

**गोष्ठकुक्कुटः (गोचरः)**। पुं। भासपक्षिणि। काकविशेषे। वै.निघ.।

**गोष्ठीश्वरः**। पुं। उष्ट्रज्वरे। गज-वै.।

**गोसः**। पुं। रक्तगन्धबोले। খুনখারাপী। वै.।

**गोसङ्गः (र्गः)**। पुं। प्रभाते। हारा.। च.इन्द्रिय.८अ.।

**गोसदृक्षः**। पुं। गवयमृगे। हे.च.।

**गोसम्भवा**। स्त्री। गोलोमिकायाम्। শ্বেত দূর্ব্বা। रा.नि.व.५। [अ.टी.रा.।

**गोसम्भवः**। पुं। रक्तबोले। খুনখারাপী।

**गोस्तना**। स्त्री। द्राक्षायाम्। अ.टी.च.द शि.यो.रक्त.पि.चि.। "पथ्याखर्ज्जूरगोस्तनाः।" [निघ.।

**गोस्तनाकारा**। स्त्री। मधुखर्ज्जूरीवृक्षे। वै.

**गोस्तनिका (नी)**। स्त्री। द्राक्षायाम्। मनका। वै.निघ.२भ.पाण्डु.चि.आमलक्यवलेहे। गुणाः—वृष्या गुर्व्वी कफपित्तघ्नी च। भा.।

**गोस्तनीभवः**। पुं। द्राक्षासवे। দ্রাক্ষার আসব। वै.निघ.।

**गोस्रवः**। पुं। अनामिकाङ्गुष्ठयुतकरविस्तारे। रा.नि.व.१८। गोमूत्रे। रा.नि.व.१५।

**गोहन(ल)म्**। क्ली। गोमये। र.मा.।

**गोहरीतकी**। स्त्री। विल्ववृक्षे। प.मु.।

**गोहितः**। पुं। घोषालतायां। विल्ववृक्षे। श.च.। [क्ली। पादमूले। हे.च.।

**गोहिरः**। पुं। अधमजातीयाश्वे। नकुल.।

**गोक्षीरः**। पुं। गोक्षुरके। গোখ্রী। रा.नि.व.४। क्ली। गोदुग्धे।

**गोक्षुरः (कः)**। पुं। (Zygophylleæ. Tribulus terestris. Syn. T. Lanuginosus.) स्वनामख्यातक्षुपे। গোখ্রী। क्षुद्रक्षुपविशेषे। हिं गोखरूल। उत्. गोखुरा। वेड़िलीसराटी। गोखरू इति च प्रसिद्धः। स च महाक्षुद्रभेदाद्द्विधा। सा.गुणाः—शीतलत्वं मधुरत्वं बल्यत्वं वृंहणत्वं कृच्छ्राश्मरीमेहविदाहघ्नत्वं रसायनत्वञ्च। "गोक्षुरः शीतलः स्वादुः बलकृद्वस्तिशोधनः। मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः। प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्॥" भा.। चारगुणाः—"चारस्तु गोक्षुराणान्तु मधुरः शीतलो मतः। स्रोतोविशोधनश्चैव वातघ्नो वृष्य एव च॥" वै.निघ.। तच्छाकगुणाः—तिक्तं वृष्यं स्रोतोविशो-

प्रमेह । राज.३प. । वीजगुणाः—वीजं गोक्षुरकं शीतं मूत्रलं शीथवारणम् । वृष्यमायुष्करं शुक्रमेहनुत्कृच्छ्रनाशनं ॥ वै. निघ. ।

**गोक्षुरादिगणः** । पुं । लौहमारकवर्गभेदे । यथा—"गोक्षुरः क्षुरको व्याघ्री सिंहपुच्छी कुम्भिका । गोक्षुरादिरिति प्रोक्तो वातश्लेष्महरो गणः ॥" रस.च. ।

**गोक्षुराद्यघृतम्** । क्ली । मूत्राघाते घृतम् । "धान्यगोक्षुरकक्वाथकल्कसिद्धं घृतं हितम् ।" घृतं ४श. क्वाथार्थं धन्याकं २श. जलं १६ श. शे.४ श. । कल्कार्थं धन्याकं ४ प. गोक्षुरः ४ प. । घृत ४ श. क्वाथार्थ धने २ श. जल १६ श. शे. ४ श. कल्कार्थ धने ४ प. गोक्षुर ४ प. । सा.कौ. । अन्यत् राजयक्ष्मणि । गव्यघृतं ४ श. क्वाथार्थं दुरालभा गोक्षुरः शालपर्णी पृश्निपर्णी (चाकुले) मुद्गपर्णी माषपर्णी श्वेतवाट्यालकं चैत्रपर्पटी एषां प्र. १ प. जल ४० श. शे. ४ श. । कल्कार्थं शटी पुष्करमूलं पिप्पली बला भूम्यामलकी चिरायता इन्द्रयवः अनन्तमूलं एषां प्र. २ तो. दुग्धं ८ श. । च.चि.८अ. । [व.४ ।

**गोक्षुरी** । स्त्री । गोक्षुरे । গোখ্‌রী । रा.नि.

**गोक्षुरः** । पुं । गोक्षुरे । कृकलासे । ·

**गोचो(च्चे)ड़ः (कः)** । पुं । गोनर्दपक्षिणि । সারস পাখী । सु.सू.४६अ. ।

**गौः** । पुं, स्त्री । स्वनामख्यातपशौ । গরু । अम. । पुं । स्वर्गे । मे. । चक्षिकाख्ये । रा.नि.व.८। ऋषभके । रा.नि.व.५ । क्ली । लोम्नि । अ.टी. भानु. । स्त्री । नेत्रे । वाक्ये । रोहिण्यां । जले । मे. । भूमौ । त्रिका. । [पाचनी दीपनय । सु. ।

**गौड़ः** । पुं । गुड़विकारे । গুড়ের মদ । स च

**गौड़(र)वास्तुकः** । पुं, क्ली । चिल्लीशाके । हृष्टपत्ररक्तवास्तुके । रा.नि.व.७ । লাল বেতো শাক । "तदेव तु वृहत्पत्रं रक्तं स्याद्गौरवास्तुकं ।" भा.पू.१भ.शाकव. । See वास्तुकम् ।

**गौड़सीधुः** । पुं । गुड़कृततीक्ष्णमद्ये । गुणाः—"कषायो मधुरः सीधुर्गौड़ः पाचनदीपनः ।" सु.सू.४५अ. ।

**गौड़ारसः** । पुं । शूले रसः । रससिन्दूरं ५ भ. मृतलौहं ५ भ. शतावरी आमलकी गुड़ूचीक्वाथे मर्दयेत् । রসসিন্দূর ৫ ভ. মৃতলৌহ ৫ ভ. শতাবরী,আমলকী এবং গুড়ূচীকাথে ৩ দিন ভাবনা দিবে। মাত্রা ৪ র.। অনুপান ঘৃত ও মধু। रस.र. ।

**गौड़ासवः** । पुं । गुड़कृतासवे । গুড়ের মদ । गुणाः—सृष्टमूत्रशकृत् तर्पणो दीपनश्च । वा.टी. हेमाद्रिः। धातकीसगुड़ैर्मद्यभेदे गौड़ः प्रकीर्तितः । तौड़ः द्रव्यगुणमाला ।

**गौड़िकम्** । क्ली । गुड़कृतमद्यविशेषे । त्रि । गुड़संस्कृते । भा.उदावर्त्त.चि. ।

**गौड़ी** । स्त्री । गुड़कृतमद्ये । त्रिका. । धातकीरसगुड़ादिकृताम्लमद्ये । गुणाः—तीक्ष्णा उष्णा मधुरा वातघ्नी पित्तजननी बलकरी दीपनी पथ्या कान्तिजननी तर्पणी च । रा.नि.व.१४ । "गौड़ी कषाया मधुराम्लशीता सन्दीपनी शूलमलापहन्त्री। हृद्या त्रिदोषं ग्रमयत्यजीर्णं पाण्ड्वामयार्शःश्वसनं निहन्ति ॥" अत्रि.१९अ. ।

**गौणविम्बी** । स्त्री । विम्बीभेदे । वै.निघ. ।

**गौणी** । स्त्री । लोणिकाशाके । নুনিয়াশাক । प.मु. । मनःशिलायाम् । र.सा.स. ।

**गौण्डः** । पुं । कशेरुके । কেশুর ।

**गौतमः** । पुं । स्थावरविषभेदे । हे.च. ।

**गौतमी** । स्त्री । गोरोचनायां । रा.नि.व.१२ ।

**गौधारः (धेयः) (धेरः, कः)** । पुं । गोधिकात्मजे । गोधा इति ख्याते । स च दर्व्वीकरैर्विषेण तुल्यस्तैरेव जातत्वात् । "गोधासुतस्तु गौधेरो विषे दर्व्वीकरैः समः । चतुष्पात् व्यन्तरान् विद्यादेतेषामेव सङ्करात् ।" वा उ.३६अ. । स पञ्चविधः—"प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः । तथा निरुपमश्चापि पञ्च गौधेरकाः स्मृताः । तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् । रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः ।" सु.कल्प.८अ. । "तदुत्पत्तिर्यथा—कृष्णसर्पेण गोधायां भवेज्जन्तुश्चतुष्पदः । सर्पो गौधेरकोनाम तेन दष्टो न जीवति । सर्पो गौधेरकोनाम गोधाख्यः स्याच्चतुष्पदः । कृष्णसर्पेण तुल्यः स्यात् नाना स्युर्मिश्रजातयः ।" च. ।

**गौरः** । पुं । श्वेतसर्षपे । रा.नि.व.१६ । See सिद्धार्थः । धवहृक्षे । धाओयागाछ । रा.नि.व.८ । कर्पूरे । रा.नि.व.१२ । कारस्करवृक्षे । खदिरे । वै.निघ. । गौरधान्ये । च.सू.२७अ. । क्ली । सौगन्धिकतृणे । रामकर्पूर । रा.नि.व.८। हरिताले । रा.नि.व.१३ । पद्मकेशरे । मे. । कुङ्कुमे । रा.नि.व.१२ । स्वर्णे । रा.नि.व.१३ । गौरसुवर्णशाके । वै.निघ. ।

**गौरकः** । पुं । गिरिमृत्तिकायां । गेरिमाटी । वै.निघ.ज्व.चि.लाक्षातैले । लावपक्षिणि । वै.निघ. ।

**गौरकदम्बः (कः)** । पुं । हारिद्रके । हर्दुआ कदम्ब इति लोके । भा.म.४भ.रैवती.ग्र.चि. ।

**गौरखटी** । स्त्री । श्वेतखटिकायाम् । श्वेत खड़ि । वै.निघ. ।

**गौरचणकः** । पुं । धवलचणकवृक्षे । शादा छोला । मं श्वेतचणा । कं बिलियकड़ले । गुणाः —मधुरः बल्यः रोचनः वातकरः पित्तघ्नः शीतलः गुरुश्च । रा.नि.व.१६ ।

**गौरजीरकः** । पुं । श्वेतजीरके । शादा जीरे । गुणाः—हिमो रुचिकरः कटुर्मधुरः दीपनः क्रिमिविषाध्मानहरः चक्षुष्यश्च । रा.नि.व.६ ।

**गौरतित्तिरः(रिः)** । पुं । तित्तिरपक्षिणि । तितिर पाखी । वै.निघ. । See तित्तिरिः ।

**गौरत्वक्** । पुं । इङ्गुदीवृक्षे । जीयापुता । रा.नि.व.८ ।

**गौरद्रुः** । पुं । हरिद्रावृक्षे । वै.निघ. ।

**गौरधान्यम्** । क्ली । शालिधान्यविशेषे । शादा धान । च.सू.२७अ. ।

**गौरपाषाणम्** । क्ली । श्वेतखटिकायां । फुल-[खड़ि । वै.निघ. ।

**गौरमाल्यः** । पुं । गिरिजमधूकवृक्षे । पाहाड़े मउल गाछ ।

**गौररम्भा** । स्त्री । सुवर्णकदलीवृक्षे । चाँपा [कला । रा.नि.व.११ ।

**गौरवम्** । क्ली । कफजरोगे, गुरुत्वे । लक्षणं यथा—"आर्द्रचर्म्मावनद्धं हि यो गात्रमभिमन्यते । तथा गुरुशिरोऽत्यर्थं गौरवं तद्विनिर्द्दिशेत् ॥" सु.शा.४अ. ।

**गौरवर्णवती** । स्त्री । हरिद्रायाम् । वै.निघ. ।

**गौरवल्ली** । स्त्री । प्रियङ्गुलतायां । रा.नि.व.१२ ।

**गौरव्रीहिः** । पुं । गौरशालौ । वै.निघ. ।

**गौरशाकः** । पुं । मधूकवृक्षभेदे । गिरिज मउलविशेष । र.मा. ।

**गौरशाखी (इन्)** । पुं । जलमधूके । वै.निघ. ।

**गौरषष्टिकः** । पुं । षष्टिकशालिधान्यभेदे । श्वेतवर्ण षेटे धान । गुणाः—रुच्यः शीतलः दोषघ्नः बल्यः पथ्यः दीपनः वीर्य्यवृद्धिकरश्च । रा.नि.व.१६ ।

**गौरसर्षपः** । पुं । (Brassica juncea. Syn. Sinapis romasa.) श्वेतसर्षपे । श्वेत सरिषा । हिं राइ । तें तेल्लावालु । प.मु. । गुणाः —कटुतिक्तोष्णः वातरक्तघ्नः ग्रहदोषलग्दोषविषभूतव्रणहरः रुच्यस्तीक्ष्णकफकण्डूकुष्ठकोठक्रिमिघ्नः रक्तपित्ताग्निवर्द्धकश्च । भा. ।

**गौरसुवर्णशाकः** । पुं,क्ली । चित्रकूटदेशे स्वनामप्रसिद्धशाकविशेषे । नटियाविशेष । गुणाः —शीतलं कफपित्तज्वरघ्नं दाहारुचिवान्तिरक्तश्रमघ्नञ्च । रा.नि.व.७ ।

**गौरा** । स्त्री । सुवर्णकदलीवृक्षे । चाँपा कला । रा.नि.व.११ । श्वेतसर्षपवृक्षे । गोरोचनायाम् । वै.निघ. । [रा.नि.व.६ ।

**गौराङ्गी** । स्त्री । सूक्ष्मैलायाम् । गुजराटी ।

**गौराजाजी** । स्त्री । श्वेतजीरके । शादा जीरे । रा.नि.व.६ ।

**गौराटः** । पुं । श्वेतखदिरे । वै.निघ. ।

**गौराटिका** । स्त्री । शारिकापक्षिणि । शालिक पाखी । वै.निघ. ।

**गौराद्यं घृतं(तैलञ्च)** । क्ली । गव्यघृतं तिलतैलं वा ४ श. क्वाथार्थं—अश्वत्थ वटोदुम्बरप्लक्षवेतसानां मिलिला त्वक् ६४ प. वारि ६४ श. शे. १६ श. । कल्कार्थं—हरिद्रा दारुहरिद्रा मञ्जिष्ठा पुण्डरीकं जटामांसी यष्टिमधु वालकं मुस्तकं रक्तचन्दनं जातीपत्रं निम्बपत्रं पटोलपत्रं करञ्जवीजं कटुकी सिक्थकं यष्टिमधु अनन्तमूलम् एषां मिलिला ८ प. । गव्यघृत वा तिलतैल ४ श. क्वाथार्थ अश्वत्थ, वट, यज्ञडुमुर, प्लक्ष-त्वक्,

বেতস মিলিয়া ৬৪ প. জল ৬৪ শ. শে. ১৬ শ.। কল্কার্থ—হরিদ্রা, দারুহরিদ্রা, মঞ্জিষ্ঠা, পুণ্ডরিয়া, জটামাংসী, যষ্টিমধু, বালা, মুতা, রক্তচন্দন, জাতীপত্র, নিম্বপত্র, পটোলপত্র, করঞ্জবীজ, কট্‌কী, মম, যষ্টিমধু, অনন্তমূল এই সকল মিলিয়া ৮ প.। চ.দ.।

**गौरार्द्रक:** । पुं । स्थावरविषभेदे । हे.च.।

**गौराभ:** । पुं । हरिद्राह्वये । वै.निघ.।

**गौरामलकम्** । क्ली । परिणतामलके । পাকা আমলা । रस.र.। प्राचीनामलके । পানি আমলা ।

**गौरास्य:** । पुं । नीलवानरे । रा.नि.व.१९ ।

**गौराहिक:** । निर्विषसर्पविशेषे । सु.कल्प.।

**गौरिका** । स्त्री। जलमधूके । জলজ মৌওয়া । "यवान्नगौरिकोन्मिश्रैः।" सु.चि.२०अ.अलस.चि.। गारिकापञ्चिणि । वै.निघ.। अष्टवर्षीयकन्यायां । श.र.।

**गौरिणी** । स्त्री । तेरणक्षुपे । वै.निघ.।

**गौरि(री)ल:** । पुं । राजिकायाम् । শ্বেত সরিষা । लौहकिट्टे, लौहचूर्णे । मे.।

**गौरी** । स्त्री । मञ्जिष्ठायाम् । रा.नि.व.२२ । हरिद्रायाम् । रा.नि.व.६ । सु.चि.१७अ.। प्रियङ्गौ । रा.नि.व.१२ । दारुहरिद्रायाम् । प.मु। नीलदूर्व्वायां । श्वेतदूर्व्वायां । रा.नि.व.८। मल्लिकापुष्पक्षुपे ।रा.नि.व.१०।२३ । तुलसीह्वये । रा.नि.व.१० । गोरोचनायाम् । रा.नि.व.१२ । सु.चि.१७अ.। आकाशमांस्यां । सूक्ष्मजटामांस्याम् । रा.नि.व.१२।२३ । अनागतार्त्तवायां कन्यायाम् । रा.नि.व.१८। स्वर्णकदल्याम् । कुङ्कुमे(?)याम् । रा.नि.व.२३ ।

**गौरीकेश:** । पुं, क्ली । अभ्रधातौ । प.मु.।

**गौरीजम्** । क्ली । गन्धके । प.मु.। अभ्रकधातौ । रा.नि.व.१३ ।

**गौरीजेयम्** । क्ली । अभ्रधातौ । रा.नि.व.१३ ।

**गौरीतेज:** । क्ली । अभ्रधातौ । प.मु.।

**गौरीपाषाणम्** । क्ली । शुक्लपाषाणे । वै.निघ.१भ.अर्शः-चि.।

**गौरीपुष्प:** । पुं । प्रियङ्गुह्वये । रा.नि.व.१२ । श्वेतकरवीरह्वये । रा.नि.व.१० ।

**गौरीरज:** । क्ली । गन्धके । चि.प्र.कल्प.।

**गौरीललितं** । क्ली। हरिताले। रा.नि.व.१३।

**गौर्जर:** । पुं । मेषशृङ्गाम् । মেড়াশিঙে । वै.निघ.। [संख्याशतके ।

**गौर्य्यम्** ।क्ली। तमालपत्रे । वै.निघ अर्कचि.गन्ध.

**गौर्य्यश्मा** । पुं । शुक्लपाषाणे । ফুলখড়ি । वै.निघ.।

**गौर्य्यामलम्** । क्ली । अभ्रके । অভ্র । च.टी.स्था.। [फुल । रा.नि.व.११ ।

**गौलिक:** । पुं । कालमुष्ककह्वये । घण्टापा-

**गौल्यम्** । क्ली । चिक्कणपूगफले । চিকিণ্ড-পারী । हिं चिक्कणीसुपारी । रा.नि.व.११। See अक्षोट: । क्ली । मद्यविशेषे । रा.नि.व.२०। स्त्री । बिम्बीलतायां । তেলাকুচা,कुँदरूकी । वै.निघ.।

**ग्रथितम्** । क्ली । लवङ्गे । वै.निघ.जीर्णज्व.चि. लवङ्गादिकषाये । शूकदोषभेदे । लक्षणं—तत्कफोत्थितं ग्रथ्यत् शूकपूरितञ्च भवेत् । सु.नि.१४अ.।

**ग्रन्थि:** । पुं । वंशादे: सन्धौ । গাঁইট । अम.। भद्रमुस्तायाम् । रा.नि.व.६ । पिण्डाल्वौ । रा.नि.व.७ । ग्रन्थिपर्णह्वये । গেঁটেলা । मे.। पिप्पलीमूले । वै.निघ.२भ.ज्व.चि.ग्रन्थ्यादिकषाये । पादग्रन्थौ । आर्त्तवदोषे । वै.निघ.। तन्नामकशोथरोगे । निदानसम्प्राप्ती यथा—"वातादयो मांसमसृक् प्रदुष्टा: सन्दूष्य मेदश्च कफानुविद्धं। वृत्तोन्नतं विग्रथितन्तु शोथं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्ट: ॥ आयम्यते व्यथ्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदं । कृष्णो मृदुर्वस्तिरिवाततश्च भिन्न: स्रवेच्चानिलजोऽस्रमच्छम् । दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चापि । रक्त: सपीतोऽप्यथवापि पित्ताद्भिन्न: स्रवेदुष्णमतीव चास्रं । शीतो विवर्णोऽल्परुजोऽतिकण्डु: पाषाणवत् संहननोपपन्न: । चिराभिवृद्धिश्च कफप्रकोपात् भिन्न: स्रवेच्छुक्लघनञ्च पूयं । शरीरवृद्धिक्षयवृद्धिहानि: स्निग्धो महानल्परुजोऽतिकण्डु: । मेद:कृतो गच्छति चातिभिन्ने पिण्याकसर्पि:प्रतिमन्तु मेद:" । सु.नि.११अ.। स नवधा भवति दोषासृमांसमेदोऽस्थि-

शिराग्रन्थिप्रभवः। वा.उ.२९अ। तेषां रक्तमांसशिराखिग्रन्थिप्रभवानां लक्षणानि स्वस्वपर्य्याये मृग्याणि। तत्र दोषासमेदोजाः साध्याः। मर्म्मकण्ठोदरस्थाः स्थूलाः खराः चलाश्च न साध्याः।

**ग्रन्थि(न्थी)कम्।** क्ली। पिप्पलीमूले रा.नि.व.६। च.द कामला.चि.मण्डूरवटके। गुग्गुलौ। भै.। पुं। कर्णपालीगतरोगे। सु.सू.१६अ.। ग्रन्थिपर्णे। গেঁটেলা। भैष.कुष्ठ.चि.कन्दर्पसारतैले। अर्ज्जुनवृक्षे। त्रिका.। करीरे। मे.।

**ग्रन्थिका।** स्त्री। ग्रन्थिपर्णे। গেঁটেলা। वचायाम्। वै.निघ.।

**ग्रन्थिकोषः।** पुं। ग्रन्थिपर्णे। গেঁটেলা। च.द.वा.व्या.चि.। "ग्रन्थिकोषो मरुवकम्।"

**ग्रन्थिखेटी।** स्त्री। गन्धमात्रायाम्।

**ग्रन्थितकः।** पुं। शूकरोगे। वै.निघ.। See ग्रथितं। [चोरके, ग्रन्थिपर्णे। वै.निघ.।

**ग्रन्थिदला।** स्त्री। मालकन्दे। रा.नि.व.७।

**ग्रन्थिदूर्व्वा।** स्त्री। वल्लीदूर्व्वायां। গাঁটদূর্ব্বা। रा.नि.व.८। [मुण्डीरो। रा.नि.व.५।

**ग्रन्थिनिका।** स्त्री। महाश्रावणिकायाम्।

**ग्रन्थिनी।** स्त्री। कदलीवृक्षे। वै.निघ.।

**ग्रन्थिपत्रः।** पुं, क्ली। चोरकनामगन्धद्रव्ये। গেঁটেলা। रा.नि.व.१२।

**ग्रन्थिपर्णः।** पुं, क्ली। चोरकनामगन्धद्रव्ये। গেঁটেলা। रा.नि.व.१२। स्वनामख्यात-वणिग्द्रव्ये। গেঁটেলা। हिं (गठिवन)। मद.। "ग्रन्थिकः पाण्डुरः किञ्चित् कनिष्ठः सर्व्वसम्मतः। उत्तमः कृष्णवर्णो यः स्थूलोऽतीव च निन्दितः॥" भैष.ग्रहणी.चि.शतावरीमोदके। गुणाः—तिक्तं तीक्ष्णं कटूष्णं लघुदीपनं कफवातविषश्वासकण्डूघ्नञ्च। भा.। शोधनं गोमूत्रेण। (र्णा, र्णी) स्त्री। जतुकालतायाम्। रा.नि.व.३। गण्डदूर्व्वायाम्। रा.नि.व ८। ग्रन्थिपर्णे। वै.निघ.।

**ग्रन्थिफलः।** पुं। मदनवृक्षे। ময়না গাছ। रा.नि.व.८। कपित्थवृक्षे। কয়েৎ বেলের গাছ। रा.नि.व.११। साकुरुण्डवृक्षे। रा.नि.व.६।

**ग्रन्थिभा।** स्त्री। अस्थिसंहारवृक्षे। হাড়জোড়া। वै.निघ.।

**ग्रन्थिमत्फलः।** पुं। क्षुद्रकण्टकारिकायाम्। वै.निघ.। लकुचवृक्षे। रा.नि.व.९।

**ग्रन्थिमान्।** पुं। अस्थिसंहारवृक्षे। হাড়জোড়া। प.मु.। भा.।

**ग्रन्थिमूलम्।** क्ली। तालमूल्याम्। लशुने। वै.निघ.। गृञ्जने। গাজর। रा.नि.व.७।

**ग्रन्थिमूला।** स्त्री। वल्लिदूर्व्वायां। গাঁটদূর্ব্বা। रा.नि.व.८।

**ग्रन्थिलः।** पुं। विकण्टकवृक्षे। रा.नि.व.११। विकङ्कतवृक्षे। বঁইচি বৃক্ষ। रा.नि.व.९। करवीरवृक्षे। अम.। तण्डुलीयक्षुपे। কাঁটানটিয়া। रा.नि.व.५। चोरकनामगन्धद्रव्ये। গেঁটেলা। रा.नि.व.१२। पिण्डालौ। रा.नि.व.७। वंशकरीरे। বাঁশের কোঁড়। प.मु.। क्ली। पिप्पलीमूले। रा.नि.व.६। आर्द्रके। श.च.। करीराख्योष्ट्रप्रियगुल्मे। रा.नि.व.८। गन्धमात्रायाम्। प.मु.। विल्ववृक्षे। शूकदोषभेदे। वै.निघ.।

**ग्रन्थिला।** स्त्री। भद्रमुस्तायाम्। रा.नि.व.६। वल्लीदूर्व्वायाम्। গণ্ডদূর্ব্বা। रा.नि.व.८।

**ग्रन्थिवर्हि (न्)।** पुं। ग्रन्थिपर्णवृक्षे। श.च.।

**ग्रन्थिवि(वी)सर्पः।** पुं। विसर्परोगभेदे। लक्षणं यथा—"कफेन रुद्धः पवनो भित्वा तं बहुधा कफं। रक्तञ्च वृद्धरक्तस्य त्वक्शिरास्नायुमांसगं। दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनां। ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वरां। श्वासकासातिसारास्य शोषहिक्कावमिभ्रमैः। मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युतः। इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपजः॥" मा.नि.।

**ग्रन्थिसंवृता।** स्त्री। नलुकायाम्। वै.निघ.।

**ग्रहजित्।** पुं। चोड़ानामदेवदारुभेदे। गन्धद्रव्यविशेष। रा.नि.व.१२।

**ग्रहणम्।** क्ली। नेत्रे। इन्द्रिये। रा.नि.व.१८।

**ग्रहणी।** स्त्री। अग्निवहधमन्याम्। प.प्र.४ख.। तस्याः स्थानं यथा—"षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता। ग्रहणीबलमग्निर्हि स चापि ग्रहणी मतः। तस्मादग्नौ प्रदुष्टे तु ग्रहण्यपि प्रदुष्यति॥ सु.शा.।तथा—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी

-मता । नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता । अपक्वं धारयत्यन्नं पक्वं त्यजति चाप्यधः” । च. । तन्नामककोदरामयरोगविशेषे । तस्य सम्प्राप्तिर्यथा —“अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः । भूयः सन्दूषितो वह्निर्ग्रहणीमपि दूषयेत् ।” सामान्यलक्षणं यथा—“एकैकशः सर्व्वशश्च दोषैरत्यर्थमूर्च्छितैः । सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति । पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवं । ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः । पूर्व्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः । विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवं ॥” निदानं यथा—कटुतिक्तकषायातिरूक्षसंदुष्टभोजनैः । प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः । मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् । वातजारूपं यथा—“तस्यान्नं पच्यते दुःखं शुक्तपाकः खराङ्गता । कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः । पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विसूचिका । हृत्पीड़ा कार्श्यदौर्ब्बल्यं वैरस्यं परिकर्त्तिका । गृद्धिः सर्व्वरसानाञ्च मनसः सदनन्तथा । जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च । सवातगुल्महृद्रोगप्लीहाशङ्की च मानवः । चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेणवत् । पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥” पित्तजालक्षणं—“कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्वणं । आप्लावयद्धन्त्यनलं जलमुष्णमिवानलम् । सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवः । पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृड़र्दितः । कफजोत्पत्तिः—गुर्व्वतिस्निग्धशीतादिभोजनादतिभोजनात् । भुक्तमात्रस्य च स्वप्नात् हन्त्यग्निं कुपितः कफः ॥” इत्यादि । मा.नि. । “ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् । लङ्घनैर्दीपनीयैश्च सदातीसारभेषजैः” । ग्रहण्याम् आहारो ग्रहणीस्थितपाचकपित्तस्थेन वह्निना पच्यते । पच्यमानः स ग्रहणीस्थितस्य कटुरसस्य पित्तस्य संयोगात् कटुर्भवति ।

**ग्रहणीकपाटरसः ।** पुं । रसोऽयं ग्रहण्यां हितः । स षड्विधः । प्रथमो यथा—पारद-गन्धक-टङ्कण-यवक्षार जातीफल-खदिर-जीरक-शुक्लधूनकमर्कटीबीज बिल्वशलाटु-बकपुष्पाणां प्र.॥० तो. बिल्वपत्र-कार्पास-शालिञ्च-चौरिणी-कच्चट कुटजपत्राणां रसेन मर्द्दयेत् । वटी १र.। পারা, গন্ধক, সোহাগা, যবক্ষার, জায়ফল, খদির, জীরা, শ্বেতধুনা, আলাকুশীর বীজ, বেলশুঁটা, বকপুষ্প প্রত্যেকে চূর্ণ ॥০ তোলা, বিল্বপত্র, কাপাসফল, শালিঞ্চশাক, খিরুই, কাঁচড়াপাতা, কুড়্চিছাল বা পত্র ইহাদের রসে মর্দ্দন । বটী. ১র.। রস.র. । ভৈষ.। द्वितीयो यथा —पारदगन्धकयोः प्र.१तो. कज्जलिः कार्य्या। कुटजत्वक्भस्म ४ तो. सर्व्वमेकत्र आर्द्रकरसेन मर्द्दयेत् । मात्रा ४ गुञ्जा । পারা ১তো. গন্ধক ১ তো. কজ্জলি করিবে । পরে কুড়্চির ছাল ভস্ম ৪ তো. মিশাইয়া আদার রসে মাড়িবে । ছাগদুগ্ধ বা কুড়্চির কাথের সহিত ৪ রতি সেবন করাইবে । तृतीयो यथा—पारदगन्धकजातीफललवङ्गानां चूर्णं प्र. ॥० तोलकं बिल्वपत्रसूर्य्यावर्त्तशृङ्गाटकपत्राणां प्र. पलमानरसेन यथाक्रमं मर्द्दयेत् । मात्रा २ गुञ्जा । পারা, গন্ধক, জায়ফল, লবঙ্গ প্র. ॥০ তো. একত্র চূর্ণ করিয়া বিল্বপত্র, হুড়হুড়িয়া, পাণিফল পাতা ইহাদের প্রত্যেকের রস ১ পল দ্বারা যথাক্রমে মর্দ্দন করিবে । মাত্রা ২ রতি । অনুপান দধি । चतुर्थो यथा—शुक्लधूनकरसगन्धकानां प्र. ४ मा. सूर्य्यावर्त्तबिल्वशृङ्गाटकपत्ररसेन प्र. पलमितेन यथाक्रमं मर्द्दयेत् । मात्रा १ गुञ्जा । শ্বেতধুনা, পারা, গন্ধক প্রত্যেকে ৪মাষা একত্র চূর্ণকরত হুড়হুড়িয়া, বিল্বপত্র এবং পাণিফল পত্র ইহাদের প্র. ১ পল রসে মর্দ্দন করিবে । মাত্রা ১ রতি । पञ्चमो यथा संग्रहण्यां—मुक्ताभस्म-स्वर्णभस्म-गन्धक-पारद-टङ्कणाभ्रक कपर्द्दकभस्म-विषाणां प्र.१ तो. शङ्खभस्म ८ तो. अतिविषाक्वाथेन मर्द्दयित्वा गोलकं विधाय पुटपाकेन प्रहरद्वयं पचेत् । उद्धृत्य धुस्तूरचित्रकतालमूलीरसेन भावयेत् । मात्रा २ गुञ्जा । মুক্তাভস্ম, স্বর্ণভস্ম, গন্ধক, পারা, সোহাগা, অভ্র, কড়িভস্ম, বিষ প্র. ১ তো. শঙ্খভস্ম ৮ তো. আতইচের কাথে মাড়িয়া গোলা করিয়া ২ প্রহর পুটপাক করিবে । শীতল হইলে তুলিয়া লৌহপাত্রে ধুতুরা, চিতা এবং তালমূলীর রসে ভাবনা দিয়া ২ রতি বটী করিবে । ভৈষ. । षष्ठो यथा—रौप्यभस्म १ भ. मुक्ताभस्म १ भ. स्वर्णभस्म १ भ. गन्धकं २ भ. पारदः २ भ. सर्व्वं कपित्थरसेन सम्मर्द्य मृगमद्भे

खिला पचेत्। अथ बलारसे ७, अपामार्गरसे ३. लोध्रातिविषामुस्ताधातकीन्द्रयवगुडूचीनां रसे प्र. ३ भावना: देया:। রৌপ্যভস্ম ১ ভ. মুক্তাভস্ম ১ ভ. স্বর্ণভস্ম ১ ভ. গন্ধক ২ ভ. পারদ ৩ ভ. কপিত্থরসে মর্দ্দন করিয়া মৃগশৃঙ্গে ভরিয়া পাক করিবে। পরে বলারসে ৭, অপামার্গরসে ৩, লোধ্র, অতিবিষা, মুস্তা, ধাতকী, ইন্দ্রযব, গুড়ূচীর রসে প্র. ৩ ভাবনা দিবে। रस.चि.।

**ग्रहणीगजेन्द्रवटिका।** स्त्री। ग्रहण्यधिकारे रस:। रस गन्धक लौह शङ्खभस्म टङ्कणक्षार-हिङ्गु-शटी-तालीश मुस्त-धान्यक जीरक सैन्धव धातकी प्रतिविषा-शुण्ठी-गृहधूम हरीतकी-भल्लातकास्थि (अभावे रक्तचन्दनं) तेजपत्र जातीफल लवङ्ग-त्वगेला बालक-बिल्वशलाटु मेथिका भङ्गानां प्र. समोभाग:। छागदुग्धेन मर्द्दनम्। রস, গন্ধক, লোহ, শঙ্খভস্ম, সোহাগার খই, হিং, শটী, তালীশপত্র, মুতা, ধনে, জীরে, সৈন্ধব লবণ, ধাইফুল, আতইচ, শুঁট, ঝুল, হরীতকী, ভেলারমুটী, (অভাবে রক্তচন্দন) তেজপত্র, জায়ফল, লবঙ্গ, গুড়ত্বক্, এলাইচ, বালা, বেলশুঁটা, মেতি, সিদ্ধি প্রত্যেকে সমভাগ। ছাগদুগ্ধের সহিত মর্দ্দন। रस.र.।

**ग्रहणीमिहिरतैलम्।** क्ली। ग्रहणीरोगे तैलम्। तिलतैलं ४ श. तक्रं १६ श.। कुटजत्वक् २ श. वारि १६ श. शे. ४श.; धान्यकं २ श. वारि १६ श. शे. ४ श.। मतान्तरे कुटजत्वक् १२॥० श. वारि ६४ श. शे. १६ श. धान्यकं १२॥० श. वारि ६४ श. शे. १६ श. तक्रं १६ श. एवं ग्रहणीहरद्रव्याणामन्येषां यथालब्धं क्राथ: १६ श.। कल्कार्थं—धान्यक-धातकी लोध्र-वराहक्रान्ता-अतिविषा-हरीतकी-वीरणमूल मुस्त-बालक-मोचरस रसाञ्जन बिल्वशलाटु नीलोत्पलपत्र-नागकेशर-पद्मकेशर-गुडूचीन्द्रयव श्यामालता-पद्मकाष्ठ-कटुकी-तगर-जटामांसी-भृङ्गराज केशराज-पुनर्नवाम्र-जम्बू-कदम्ब-कुटजत्वक् यमानी-जीरकाणां प्र. २ तो.। তিলতৈল ৪ শ. ঘোল ১৬ শ. কুড়চিছাল ২ শ. জল ১৬ শ. শে. ৪ শ. ধনে ২ শ. জল ১৬ শ. শে. ৪ শ.। মতান্তরে কুড়চিছাল ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ.; ধনিয়া ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ. ; ঘোল ১৬ শ. এইরূপ গ্রহণীহর অন্যান্য যে কোন দ্রব্যের ক্বাথ ১৬ শ. দিবে। কল্কার্থ—ধনিয়া, ধাইফুল, লোধ, বরাক্রান্তা, আতইচ, হরীতকী, বেণার মূল, মুতা, বালা, মোচরস, রসাঞ্জন, বেলশুঁটা, নীলোৎপল, তেজপত্র, নাগেশ্বর, পদ্মকেশর, গুলুঞ্চ, ইন্দ্রযব, শ্যামালতা, পদ্মকাষ্ঠ, কট্‌কী, তগর, জটামাংসী, ভীমরাজ (বা দারুচিনি), কেশুত্তে, পুনর্নবা, আমছাল, জামছাল, কদমছাল, কুড়চিছাল, যমানী, জীরা প্রত্যেকে ২ তো.। वृहती यथा—तिलतैलं ४ श. तक्रं १६ श.। क्राथार्थं—कुटजमूलत्वक् धान्यकं प्र. १०० प. जलं प्र. ६४ श. शे. १६ श.। कल्कार्थं—धनीयकं धातकीपुष्पं लोध्रं वराहक्रान्ता अतिविषा हरीतकी लवङ्गं बालकं शृङ्गाटकपत्रं रसाञ्जनं नागकेशरपुष्पं पद्मकाष्ठं गुडूची इन्द्रयवं प्रियङ्गुकं कटुकी पद्मकेशरं तगरं शरमूलं भृङ्गराज: केशराज: पुनर्नवा आम्रत्वक् जम्बूत्वक् कदम्बत्वक् एषां मिलित्वा १ श. स्वल्पपाकविधिना पाच्यम्। रस.र.। भैष.।

**ग्रहणीरुक्।** स्त्री। संग्रहग्रहण्याम्। अम.।

**ग्रहणीवज्रकवाट:।** पुं। ग्रहण्यां रस:। "मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणं। अग्निमन्थं वचां कुर्य्यात्सूततुल्यानिमान् सुधी:। ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्द्दयेत्। त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत्। लौहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत्। अधो वह्निं शनै: कुर्य्यात् यामार्द्धं तत उद्धरेत्। रसतुल्यामतिविषां दद्यान्मोचरसं तथा। कपित्थविजयाद्रावै: भावयेत् सप्तधा पृथक्। धातकीन्द्रयवामुस्तालोध्रप्रतिविषाम्रता:। एतद्द्रवैर्भावयित्वा दिनैकञ्च विशोषयेत्। रसं वज्रकवाटाख्यं माषैकं मधुना लिहेत्। वह्निं शुण्ठीं विडं बिल्वं लवणं चूर्णयेत् समम्। पिबेदुष्णाम्बुना चानु सर्व्वजां ग्रहणीं जयेत्॥" र.चि.।

**ग्रहणीशार्दूलवटिका।** स्त्री। ग्रहण्याम्। जातीफलं लवङ्गं कुष्ठं टङ्कणं विड़लवणं जीरकं त्वक् एला धुस्तूरबीजं अहिफेनञ्च प्र. समभागं आदाय प्रसारणीरसेन मर्द्दयेत्। জায়ফল, লবঙ্গ, কুড়, সোহাগার খই, বিট্‌লবণ, জীরা,

स्पर्शा च भवेत् । सु.कल्प.६अ. । वा.उ.३८अ. ।

**चपलतरश्रय:** । पुं । चञ्चरीके । त्रिका. ।

**चपला** । स्त्री । पिप्पल्याम् । रा.नि.व.६ । भा.म.४भ.योनिरोग.चि.। विजयायां । सिद्धि । मद्य-सामान्ये । रा.नि.व.१४ । जिह्वायां । भा । पिप्प-लीमूले । ग्रहणी.चि.पानीयभक्तवट्याम् ।

**चपलाजटा (मूलम्)** । स्त्री। पिप्पलीमूले। वै.निघ.२भ.कास-चि.मञ्जिष्ठाद्यचूर्णे।

**चपेट:** । पुं । तले । চাপড় । रा.नि.व.१८ ।

**चमट:** । पुं । स्थूलगोधूमे । বড়গম । वै.निघ.।

**चमत्कार:** । पुं । अपामार्गे । श.र. ।

**च(चा)मरम्** । क्ली । चामरे । वालव्यजने । চামর । मे. । तद्वायुगुणा:—ओजस्कर: मक्षिका-दिनाशकश्च । राज. ।

**चमर: (री)** । पुं, स्त्री । चमरीमृगे । চমরী, চমরী গাভি । मं चवरीगाय । कं हंहि : तन्मां-सं स्निग्धं मधुरं कासघ्नं विपाके मधुरं वातपित्त-घ्नञ्च । सु.सू.४६अ. । (री; स्त्री । मञ्जर्य्याम् । मे. । चमरस्त्रियाम् ।

**चमरपुच्छ:** । पुं । कोकड़मृगे । रा.नि.व.१९।

**चमरिक:** । पुं । कोविदारवृक्षे । কাঞ্চন গাছ । अम. ।

**चमस:** । पुं । पर्पटे । পাঁপর । पिष्टकभेदे । लड्डुके । (अजयपाल.) । (सी) स्त्री । मुद्गमसूरा-दिपिष्टके तच्चूर्णे च । "चूर्णं यच्छुष्कमाषाणां चम-सी साभिधीयते ।" भा. ।

**चमूरु:** । पुं । हरिणभेदे । अम. । [श.मा. ।

**चम्प:** । पुं । कोविदारवृक्षे । কাঞ্চন গাছ।

**चम्पक:** । पुं । (Michelia champaca.) स्वनामख्यातपुष्पवृक्षे । চাঁপাফুলের গাছ । प.मु. हिं मं चंपा । कं संपगे । गुणा:—कटु: तिक्त: शीतल: दाहघ्न: कण्डूकुष्ठव्रणघ्न: राजचम्पकाद्गुणा-ढ्यश्च । रा.नि.व.१० । "चम्पक: कटुकस्तिक्त: क-षायो मधुरो हिम: । विषक्रिमिहर: कृच्छ्रकफवा-तास्रपित्तजित् ॥" भा. । पनसवृक्षे । नागकेसर-चम्पके । वै.निघ. । क्ली । चम्पकपुष्पे । स्वर्णकद-ल्याम् । চাঁপাকলা ।

**चम्पककदली (रम्भा)** । स्त्री । सुवर्णकद-ल्यां । চাঁপাকলা । गुणा:—वातपित्तहरं गुरु वीर्य्यकरम् अतिशीतं रसे पाके च मधुरम् । रा.नि व.११ । वातपित्तघ्नं गुरु वीर्य्यकरं अतिशीतञ्च रसे पाके च मधुरम् । राज. ।

**चम्पककलिका** । स्त्री । चम्पककोरके । চাঁপার কলি । रा.नि.व.१० ।

**चम्पकागद:** । पुं । लूताकीटादिविषहरागदभेदे । यथा—"हरिद्राद्वयपत्तङ्गमञ्जिष्ठानतकेसरै: । सक्षौद्रास्सर्पि: ।" वा.उ.३७अ. ।

**चम्पकालु: (लु:)**<br>**चम्पालु:** } पुं । पनसवृक्षे । কাঁঠাল গাছ । श.र. ।

**चम्पकुन्द:** । पुं । मत्स्यविशेषे । চাপিলা মাছ, চাঁদকড়া । गुणा:—"चम्पकुन्दो गुरुर्बल्य: मधुरो वातपित्तजित् । शुक्रलो बलकृत्प्रोक्त: लेखन: श्लेष्मकोपन: ॥" राज.३प. । [गाछ । त्रिका. ।

**चम्पकोल: (ष:)** । पुं । पनसवृक्षे । কাঁঠাল-

**चम्पल:** । पुं । महानागकेशरचम्पके । নাগেশ্বর চাঁপা । त्रिका. ।

**चय:** । पुं । विष्ठायाम् । रोगवृद्धौ । वै.निघ. ।

**चर:** । पुं । खञ्जरीटपक्षिणि । খঞ্জন পাখী । श.मा. । कपर्द्दके । কড়ি । रा.नि.व.१२ ।

**चरक:** । पुं । पर्पटके । ক্ষেৎপাবড়া । प.मु. । तन्नामकवैद्यकसंहितायाम् । स्वनामख्याते अग्निवे-शकृततन्त्रप्रतिसंस्कर्त्तरि वैद्यकसंहिताकारे । চরক মুনি । आत्रेयस्य मुने: शिष्या अग्निवेशादयोऽभ-वन् । संहितोत्पत्ति: यथा—"मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् । तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता । चरकेणात्मनो नाम्ना ग्रन्थो-ऽयं चरक: कृत: ॥" तत्प्रादुर्भाव:—"यदा म-त्स्यावतारेण हरिणा वेद उद्धृत: । तदा शेषश्च तत्रैव वेदं साङ्गं समाप्तवान् । अथर्वान्तर्गतं सम्य-गायुर्व्वेदञ्च लब्धवान् । एकदा स महीवृत्तं द्रष्टुं चर इवागत: । तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीड़ितान् । स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् । तान् दृष्ट्वातिदयायुक्त: तेषां दु:खेन दु:खित: । अनन्तश्चिन्तयामास रोगोपशमकार-णम् । संचिन्त्य स स्वयं तत्र मुने: पुत्रो बभूव

क्र ।-प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः । यत-स्तर इवायातः न ज्ञातः केनचिद्यतः । तस्माच्चरक-नामासौ विख्यातः क्षितिमण्डले ॥" भा. ।

**चरटः** । पुं । खञ्जरीटपक्षिणि । খঞ্জন পাখী। শ.মা. । [रा.नि.व.२ । क्ली । भक्षणे । हे.च. ।

**चरणः** । पुं । पादे । रा.नि.व.१८ । तरुमूले ।

**चरणग्रन्थिः** । पुं । पदगुल्फे । हे.च. ।

**चरणायुधः** । पुं । कुक्कुटे । কুক্ড়া । अम. ।

**चरतिपत्रिका** । स्त्री । रास्नायां । वै.निघ. ।

**चरप्रियम्** । क्ली । मरिचे । वै.निघ. ।

**चराचरः** । पुं । कपर्द्दके । रा.नि.व१३ ।

**चरित्रा** । स्त्री । तिन्तिड़ीवृक्षे । श.र. । [मे. ।

**चरुः** । पुं । अन्ने । हव्यान्ने । हव्यान्नपाकभाण्डे ।

**चरुका** । स्त्री । तृणधान्यभेदे । गुणाः – श्या-माकवत् । च.सू.२७अ. ।

**चरुव्रणः** । पुं । चित्रपूपे, रोटिकायाम् । চি-তাই পিঠা । त्रिका. ।

**चर्चरीकः** । पुं । शाके । महाकाले । मे. ।

**चर्चा** । स्त्री । नियमापरित्यागे ।

**चर्पटी** । स्त्री । पूपालिकायाम् । পুলিবিশেষ । त्रिका. । [গাছ । হলা. ।

**चर्भटः** । पुं । कर्कटिकालतायाम् । কাঁকুড়

**चर्म्मः (कण्टकः)** । पुं । त्वचि । চাম্ড়া । रा.नि.व.१८ । पर्पटके । ক্ষেৎপাবড়া । वै.निघ. जिह्वक.ज्व.चि. ।

**चर्म्मकषा (सा)** । स्त्री । The plant Chámara ghása. स्वनामख्यातगन्धद्रव्ये । চামরকষা, চামরঘাস । र.मा.अ.टी.भ. । मां-सरोहिण्याम् । रा.नि.व.१२ ।

**चर्म्मकारतरुः** । पुं । शुक्लमदनवृक्षे । वै.निघ. ।

**चर्म्मकारालुः (कः)** । पुं । वाराहीकन्दे । শুয়ার আলু । वै.निघ. ।

**चर्म्मकारिका (री)** । स्त्री । चर्म्मकषायाम् । চামরঘাস । मे.अ.द. ।

**चर्म्मकी** (इन्) । स्त्री, पुं । चर्म्मपक्षिणि । চা-মচিকা । रा.नि.व.१९ ।

**चर्म्मकीलः** । पुं । तन्नामकक्षुद्ररोगे । আঁচিল । "समुत्थाननिदानाभ्यां चर्म्मकीलः प्रकीर्त्तितः ।" सु.नि.१३अ. । "माषेभ्यस्तून्नततरान् चर्म्मकीलान् सितासितान् ।" वा.उ.३१अ. । अर्शोभेदे । অর্শ, হারিশ্ । सम्प्राप्तिः—"व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य वहिः स्थिराणि कीलवदर्शांसि निर्वर्त्तयन्ति तानि चर्म्मकीलान्यर्शांसि भाषन्ते ॥" सु.नि.२अ. । "वातेन तोदपारुष्ये पित्तादसितरक्तता। श्लेष्मणा स्निग्धता चास्य ग्रथितत्वं सवर्णता ॥" भा.नि. । [वै.निघ. ।

**चर्म्मघटिका** । स्त्री । जलौकायां । জোঁক্ ।

**चर्म्मचट(टि)का (टी)** । स्त्री । चर्म्मचट्यां। চামচিকে । त्रिका. । हे.च.श.र. ।

**चर्म्मचित्रकम्** । क्ली । श्वित्रकुष्ठे । ধবল । रा.नि.व.२० । [व.१८ ।

**चर्म्मजम्** । क्ली । रक्तधातौ । लोम्नि । रा.नि.

**चर्म्मजा** । स्त्री । मसूरिकाभेदे । चामरगोटीति लोके । "स्फोटानां मिलनादेषा बहुस्फोटापि दृश्यते । एकस्फोटा च कृष्णा च बोद्धव्या चर्म्मजाभिधा ॥" भा. ।

**चर्म्मटी** । स्त्री । जलौकायां । জোঁক্ । वै.निघ.

**चर्म्मण्वती** । स्त्री । कदलीवृक्षे । मे. ।

**चर्म्मतरङ्गः** । पुं । त्वक्सङ्कोचे । মাংসলোলতা । रा.नि.व.१८ । चर्म्मकीलरोगे । আঁচিল। वै.निघ. ।

**चर्म्मदलम्** । क्ली । क्षुद्रकुष्ठभेदे । लक्षणं—"रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि । तच्चर्म्मदलमाख्यातं स्पर्शस्यासहनञ्च यत् ॥" भा. । अन्यच्च—"स्पृष्टेन कण्डूव्यथनौषचोषास्तलेषु तच्चर्म्मदलं वदन्ति ।" सु.नि.५अ. ।

**चर्म्मदूषिका** । स्त्री । चर्म्मरोगविशेषे । কোঠ রোগ । रा.नि.व.२० । खर्ज्जाम् । চুলকুনি । वै.निघ. ।

**चर्म्मद्रुमः** । पुं । भूर्ज्जवृक्षे । रा.नि.व.२३ ।

**चर्म्मनाशकः** । पुं । चन्द्रशूरे । হালিম । भा. ।

**चर्म्मन्** । क्ली । वृक्षवल्कले । গাছের ছাল । त्वगिन्द्रिये, यत् असृग्धरानामकलेति संहितासु ख्यातम् । চাম্ড়া । रा.नि.व.१९ ।

**चर्म्मपत्रा (त्री)** । स्त्री, पुं (त्रः, त्रः) । चर्म्मचटिकायां । চামচিকী । जटा. । रा.नि.व.१९ ।

**चर्म्मपिड़का** । स्त्री। मसूरिकारोगभेदे । চর্ম্মদল বসন্ত । लक्षणं—"कण्डूरोधाकचिसत्यप्रला-पारतिसंयुताः । दुश्चिकित्स्याः समुद्दिष्टाः पिड़का चर्म्मसंज्ञिताः ॥" मा.नि. । [পোড় । अम. ।

**चर्म्मप्रभेदिका** । स्त्री । चर्म्मप्रभेदनास्त्रे ।

**चर्म्मबन्धनम्** । क्ली मरिचे । वै.निघ. ।

**चर्म्मरङ्गा** । स्त्री । आवर्त्तकीलतायाम् । আঁৎমোড়া । रा.नि.व.३ ।

**चर्म्मरी** । स्त्री । तन्नामकफलविषभेदे । सु.कल्प. २अ. । See फलविषम् । [गेधु । वै.निघ ।

**चर्म्मविन्दुका** । स्त्री । शीतपित्तोदर्द्दकोठरी

**चर्म्म(र्म्मि)वृक्षः** । पुं । भूर्ज्जवृक्षे । सु.कल्प ५अ । चर्म्मलोष्टे । सु.चि.११अ. । [वै.निघ. ।

**चर्म्मव्रणः** । पुं । चर्म्मरोगभेदे, लूतारोगादौ ।

**चर्म्मसम्भवा** । स्त्री । एलायाम् । হারা. ।

**चर्म्मसा** । स्त्री । जलौकायाम् । वै.निघ. ।

**चर्म्मसारः** । पुं । शरीरस्थरसधातौ । অন্নরস । रा.नि.व.१८ ।

**चर्म्महन्त्री** । स्त्री । चन्द्रशूरे । হালিম । भा. ।

**चर्म्माख्यम्** । क्ली । क्षुद्रकुष्ठभेदे । "अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं । तदेककुष्ठं चर्म्माख्यं बहुलं गजचर्म्मवत् ॥" भा. । (ख्या) स्त्री । समलायाम् । চামরখাস । प.मु. ।

**चर्म्मानुरञ्जनम्** । क्ली । हिङ्गुले । वै.निघ. ।

**चर्म्माभः** । पुं । रसधातौ । रा.नि.व.१८ ।

**चर्म्मारकः** । पुं । शुक्लहिङ्गुले । वै.निघ. ।

**चर्म्माह्वयः** । पुं । पर्पटके । ক্ষেৎপাবড়া । वै.निघ. ।

**चर्म्मा(र्म्मसा)ह्वा** । स्त्री । समलायां । চামরকষা । वा.सू.१५अ. । श्यामादिगणे । হৈমা. । आम्रातं । वा.टी.अरुण. ।

**चर्म्मी** (इन्) । पुं । भूर्ज्जपत्रवृक्षे । अम. । भल्लटौ । গোচা । श.र. । चर्म्मचटके । वै.निघ. ।

**चर्व्वणम्** । क्ली । अष्टविधान्नान्यतमे अन्ने । চৰ্ব্যান্ন । रा.नि.व.२० । भक्षणे । दन्तैर्भक्षणे । চিবান । है.च. ।

**चर्व्वितः** । त्रि । दन्तैः भक्षिते । अम. ।

**चर्षणिः** । पुं । मनुष्ये । वै.निघ. ।

**चलः** । पुं । शिलारसे । र.मा. । च.द.वा.व्या: महाराज.प्र.तैले । सुवर्णचम्पके । नखे । नखी । वै.निघ. । वायुरोगे । কাঁপা । मे. ।

**चलघ्नी** । स्त्री । सृक्कायां । পিড়িং । वै.निघ. ।

**चलचञ्चुः** । पुं । चकोरपक्षिणि । है.च. ।

**चलत्पूर्णिमा** । स्त्री । चन्द्रकमत्स्ये । চাঁদা মাছ । त्रिका. ।

**चलदङ्गः (कः)** । पुं । मत्स्यभेदे । চেঙ্গমাছ । गुणाः—"चलदङ्गोऽनभिष्यन्दी हितो वाते च रोचनः ।" राज.३प. । [पु । रा.नि.व.११ ।

**चलदलः (पत्रः)** । पुं । अश्वत्थवृक्षे । मद.व.

**चलद्रुमः** । पुं । गोक्षुरक्षुपे । वै.निघ. ।

**चलनम्** । क्ली । कम्पने । भ्रमणे । मे. । पुं । हरिणे । जटा. । पादे । है.च. ।

**चलपुच्छः** । पुं । खञ्जरीटे । वै.निघ. ।

**चला** । स्त्री । सिह्लके । শিলারস । र.मा. ।

**चलाचलः** । पुं । काके । रा.नि.व.१९ । त्रि । चपले । अम. ।

**चलातङ्कः** । पुं । वातव्याधौ । रा.नि.व.२० ।

**चलापङ्कः** । पुं । वरुणवृक्षे । বরুণ গাছ । रक्तकुलत्थे । লাল কুৰ্ত্তি । वै.निघ. ।

**चलुः** । पुं । गण्डूषे । है.च. ।

**चलुकः** । पुं । प्रसृतिमाने । मे. । [र. ।

**चविः (वी)** । स्त्री । चविकायाम् । চই । श.

**चविकम्** । क्ली । चविकायाम् । भ.रुद्र. ।

**चविका** । स्त्री । चव्ये । চই । रा.नि.व.६ । गजपिप्पल्याम् । तन्मूले । वै.निघ. ।

**चविकाशिरः** । क्ली । पिप्पलीमूले । वै.निघ. ।

**चव्य(क)म्** । क्ली । (Piper chaba. Syn. Chavica officinarum.) स्वनामख्यातक-

तुलतायाम् । चई गाछ । तें सेवाम्। गुणाः—उष्णं कटुकं लघु दीपनं रुच्यं श्वासकासशूलघ्नम्। रा.नि.व.६ । पिप्पलीमूलसदृशं गुदजरोगे हितं । भा.पू.१भ. । भेदकं कफघ्नञ्च । राज. । हस्तिपिप्पलीमूले । सु.सू.३८ष.। कार्पासे । गजपिप्पल्यां। गुञ्जायां । कूँच । वै.निघ. ।

**चव्यजा** । स्त्री । गजपिप्पल्याम् । रा.नि.व.६ ।

**चव्यफलम् (ली)** । क्ली, स्त्री । गजपिप्पल्याम् । रा.नि.व.६ ।

**चव्या** । स्त्री । कार्पास्याम् । কাপাস । रा.नि.व.४ । चव्ये । চই । रा.नि.व.६ । वचायां । मे. । पिप्पल्याम् । वै.निघ. ।

**चषकम्** । क्ली, पुं । सुराभेदे । मधुविशेषे । मे.। सुरापानपात्रे । हे.च. ।

**चषतिः** । पुं । जीर्णतायाम् । भक्षणे । उणा. ।

**चषणम्** । क्ली । मवदंशे । চাট্ । हे.च. ।

**चक्षुः** । क्ली । नेत्रे । रा.नि.व.१८ । मेषशृङ्गीवृक्षे । र.मा. ।

[प.मु. ।

**चक्षुःपुष्पः** । पुं । पाठायाम् । আকনাদি ।

**चक्षुकः** । पुं । तिनिशवृक्षे । সাদন । प.मु. ।

**चक्षुर्धावनम्** । क्ली । नेत्रधावने । চক্ষু ধোওয়া ।

[শিঙে, জিওল । र.मा. ।

**चक्षुर्बहुलः** । पुं, क्ली । मेषशृङ्गीवृक्षे । মেড়া-

**चक्षुष्यम्** । खर्परधातौ । খাপর । प.मु. । प्रपौण्डरीकविशेषे । পুণ্ডরিয়াবিশেষ । र.मा. । खर्परीतुत्थे । তুঁতে । स्थलपद्मे । सौवीराञ्जने । নীল শুর্মা । रा.नि.व.१२ । निर्म्मलीवीजे । निर्म्माल्य । पद्मे । वै.निघ. । पुं । शोभाञ्जनवृक्षे । সজিনা গাছ । रा.नि.व.७ । केतकवृक्षे । मे. । रसाञ्जने । हे.च. । त्रि । चक्षुर्हितकरे ।

**चक्षुष्या** । स्त्री । कुलत्थिकायाम् । কুলথ কলায় । मे. । अरण्यकुलत्थिकायाम् । বন কুলথ । रा.नि.व.५ । अजशृङ्ग्यां, मेषशृङ्ग्याम् । মেড়াশিঙে । रा.नि.व.६ । नीलाञ्जने । पौरकमणौ । केतकवृक्षे । चिका. । कुलत्थाञ्जने । অঞ্জনবিশেষ । रा.नि.व.१२ ।

[णा । र.मा. ।

**चाकचिञ्चा** । स्त्री । श्वेतगुञ्जायां । শ্বেত কো-

**चाङ्गः** । पुं । चाङ्गेर्य्याम् । शटी.रा. ।

**चाङ्गेरी** । स्त्री । Wood sorrel, (Oxalis monadelpha.) अम्ललोणिकायाम् । আমরুল শাক । हिं चौपतिया । म आंबवती । क पुलुम्पुणिसे । शाकगुणाः—कटु रोचनं पाचनं रुक्षम् अत्युष्णं दीपनं कफवातार्शोग्रहण्यतिसारघ्नम् । रा.नि.व.७ । च.सू.२७अ. । पित्तला अम्ला कुष्ठघ्नी च । भा.पू.१भ.शाकव. । उष्णा कषाया मधुरा अग्निदीपनी च । अत्रि.१६अ. । र.सा.सं.चाङ्गेरीघृते । भा.अतिसा.चि. । निम्बुकवृक्षे । भैष.क्षुद्ररोग-चि. । पालङ्क्शाके । পালংশাক ।

**चाङ्गेरीघृतम्** । क्ली । क्षुद्ररोगाधिकारे गुदभ्रंशे च । गव्यघृतं ४ श. चाङ्गेरीकुलत्थदध्नां रसः प्र. १० प. ५ तो. ३ मा. । कल्कार्थं—शुण्ठीयवक्षारयोः प्र. ४ प. । ঘৃত ৪ শ. আমরুলের রস, কুলত্থের রস এবং অম্ল দধি প্রত্যেকে ১০ প. ৫ তো. ৩ মা. । কল্কার্থ—শুঁঠ ও যবক্ষার প্রত্যেকে ৪ প. । शा.कौ. । च.चि. द्वितीयो यथा—शुण्ठी पिप्पलीमूलं चित्रकमूलं चविका गोक्षुरः पिप्पली धान्यकं विल्वमूलं पाठामूलं यमानी एषां मिलित्वा १ श. घृतं ४ श. अम्लदधिमस्तु १६ श. चाङ्गेरीरसः १६श.। च.द.।

**चाङ्गेरीसदृशपत्रः** । पुं । सुनिषण्णकशाके । শুশুনি শাক । भा.पू.१म.शाकव. ।

**चाटकैरः** । पुं । चटकशिशौ । वै.निघ. ।

**चाटुकर्त्ता** । पुं । पारावते । वै.निघ. ।

**चाणक्य(मूलक)म्** । क्ली । चाणकमूलीति ख्याते मूलकभेदे । মূলাবিশেষ । मं थोरमूला । कं दोड्डमूलङ्गि । गुणाः—उष्णं कटुकं रुच्यं दीपनं गुरु ग्राहि कफवातक्रिमिगुल्मघ्नं । रा.नि.व.७।

**चाण्डाला (लिनी)** । स्त्री । लिङ्गिन्याम् । रा.नि.व.३ । र.सा.सं.रसमारकवर्गे ।

**चातकः** । पुं । तन्नामकपक्षिणि । फटिकजल পাখী । हिं तोका । तन्मांसं लघु शीतलं रक्तपित्तकफघ्नम् अग्निकरञ्च । राज.। बृष्यं बलपुष्टिदञ्च । रा.नि.व.१६ ।

**चातुर्जातकम्** । क्ली । समभागत्वगेलापत्रकेशरेषु । গুড়ত্বক্, এলাচ, তেজপত্র, নাগেশ্বর

समभाग। गुणाः—"चातुर्जातमिदं वर्ण्यं वह्निकृच्च विषापहम्।" रा.नि.व.२२।

**चातुर्थ(र्थि)कः।** पुं। चतुर्थदिनभवविषमज्वरभेदे। ২দিন অন্তর জ্বর। "चातुर्थिको दर्शयति प्रभावं द्विविधं ज्वरः। जङ्घाभ्यां श्लैष्मिकः पूर्व्वं शिरसोऽनिलसम्भवः॥" मा.नि.। "चातुर्थिको नाम गदो दारुणो विषमज्वरः। शोषणः सर्व्वधातूनां बलवर्णाग्निनाशनः। त्रिदोषजो विकारः स्यादस्थिमज्जगतोऽनिलः। कुपितं पित्तमेवन्तु कफश्चैवं स्वकालतः। शीतदाहकरस्तीव्रस्त्रिकालमनुवर्त्तते। स सन्निपातसम्भूतो विषमो विषमज्वरः। ऊर्द्ध्वं कायस्य गृह्णाति यः पूर्व्वं सोऽनिलात्मकः। पूर्व्वं गृह्णात्यधःकायं श्लेष्मपूर्व्वज्वरश्च सः॥" हारीतः।

**चातुर्भद्र(क)म्।** क्ली। कफाधिकपित्तश्लेष्मज्वरे योगभेदे। शुण्ठी अतिविषा मुस्ता गुडूची चेति चतुष्टये। "नागरातिविषा मुस्ता त्रयमेतत्त्रिकार्षिकं। गुडूच्या मिलितं तच्च चातुर्भद्रकमुच्यते॥" रा.नि.व.२२।

**चातुर्भद्रकपञ्चमूलम्।** क्ली। तत्पञ्चमूलीकिराताद्दिगणकृते सान्निपातिकज्वरे योगविशेषे। सि.यो.।

**चातुर्भद्रावलेहिका।** स्त्री। कासश्वासहरे कफघ्नेऽवलेहभेदे। "कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह।" "घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतं। शिशोर्ज्वरातिसारघ्नम्।" च.द.।

**चान्द्रम्।** क्ली। रौप्ये। पुं। चन्द्रकान्तमणौ। हे.च.।

**चान्द्रकम्।** क्ली। शुण्ठ्याम्। रा.नि.व.६।

**चान्द्रा।** स्त्री। अतिविषायाम्। আতইচ। रा.नि.व.६। [नि.व.६।

**चान्द्राख्यम्।** क्ली। आर्द्रके। আদা। रा.

**चान्द्री।** स्त्री। सोमराज्याम्। সোমরাজ। श्वेतकण्टकार्य्याम्। रा.नि.व.४। [जटा.।

**चाप(व)पटः।** पुं। पियालवृक्षे। পেয়াশাল।

**चामरः।** पुं। चमरीमृगे। गण्डस्थले। গাল। मे.। ग्रन्थिपर्णे। वै.निघ.। चमरीलोमव्यजने। तद्वायुगुणाः—ओजस्करः मक्षिकादिवारकश्च। राज.।

**चामरपुष्पः (कः)।** पुं। गुवाकवृक्षे। काशवृक्षे। केतकवृक्षे। কেয়া গাছ। (क.) काशे। কেশে ঘাস। मे.।

**चामरा (री)।** स्त्री। चामरे। भ.टी.भ.। (री इन्) पुं। अश्वे। त्रिका.।

**चामली।** स्त्री। अन्नमण्डे। प.मु.।

**चामीकरम्।** क्ली। सुवर्णे। रा.नि.व.१३। धुस्तूरे। अम.। नागकेशरपुष्पे। प.मु.।

**चाम्पेयः।** पुं. क्ली। नागकेशरवृक्षे। নাগেশ্বর গাছ। रा.नि.व.६। चम्पकवृक्षे। চাঁপার গাছ। प.मु.। च.द.बा.व्या.चि.। पद्मकेशरे। भा.। सुवर्णचम्पके, नागचम्पके। নাগেশ্বর চাঁপা। वै.निघ.। क्ली। स्वर्णे। त्रिका.।

**चाम्पेयकम्।** क्ली। किञ्जल्के। পদ্মকেসর। रा.नि.व.१०।

**चारम्।** क्ली। कृत्रिमविषे। हे.च.।

**चारः (कः)।** पुं। पियालवृक्षे। अस्य बीजं 'चारदाना' इत्युच्यते। পেয়াশাল। ইহার বীজকে চারদানা, পেয়ালবীজ কহে। मं चारली। कं चारबीज। गुणाः—पक्वं फलं वृष्यं शैत्यं गुरु। तद्बीजं मधुरं वृष्यं पित्तदाहघ्नञ्च। रा.नि.व.११।

**चारटिका (टी)।** स्त्री। नीलीनामक्षुपे। নীল গাছ। रा.नि.व.४, पैशाचघ्नते। नलीनामगन्धद्रव्ये। रा.नि.व.१२। गुञ्जायाम्। वा.उ.३६ अ.। भा.उपदंश चि.। (टी) स्थलपद्मिन्याम्। স্থলপদ্ম। वा.उ.६ अ., च.द.उन्मा.चि.महापैशाचघृते। भूम्यामलक्याम्। रा.नि.व.५।

**चारणी।** स्त्री। करवीरपुष्पवृक्षे। स्थलपद्मिन्याम्। স্থলপদ্ম। वै.निघ.।

**चारवायुः।** पुं। शीतलसुरभिवाते। त्रिका.।

**चारबीजम्।** क्ली। पियालबीजे। পেয়ালবিচি। हिं चारदाना। रा.नि.व.११।

**चारिणी।** स्त्री। करुणीपुष्पवृक्षे। रा.नि.व.१०।

**चारित्रा।** स्त्री। तिन्तिडीवृक्षे। श.र.।

**चारिलः।** पुं। शशघातिनि। শশারি। सु.सू.७अ.।

**चारिवाक्** । स्त्री । भजगन्धाम् । वै.निघ. ।
**चारी** । स्त्री । छिलमीचिकायाम् । शिक्षे । भा.पू.१भ.शाकव. । [शालतरी । वै.निघ. ।
**चारु** । क्ली । पद्मकाष्ठे । केशरे । कुङ्कुमे । पुं ।
**चारुकः** । पुं । शरबीजे । गुणाः—"चारुको मधुरो रुचो रक्तपित्तकफापहः । शीतलो लघुवृष्यश्च कषायो वातकोपनः ॥" भा.पू.१भ.धान्यव. । क्ली । रक्तचन्दने । वै.निघ. ।
**चारुकेश(स)रा** । स्त्री । नागरमुस्तायाम् । तरुणीपुष्पे । रा.नि.व.१० ।
**चारुकेशा** । स्त्री । वनमल्लिकायाम् । वै.निघ. ।
**चारुदर्शनः** । पुं । प्लचवृचे । পাকুড় গাছ । मद.व.५ ।
**चारुदारुः** । पुं । प्लचवृचे । वै.निघ. ।
**चारुधाम** । क्ली । आमहरिद्रायां । वै.निघ. ।
**चारुनालकम्** । क्ली । रक्तपद्मे ।
**चारुपत्रिका (त्री) (र्णी)** । स्त्री । प्रसारिण्याम् । गन्धभाদুলিয়া । रा.नि.व.५ । मद.व.१ ।
**चारुफला** । स्त्री। द्राचालतायां। रा.नि.व.११।
**चारुमोदा** । स्त्री । पीतयूथिकायां । वै.निघ. ।
**चारुयूथी** । स्त्री । शुक्लयूथिकायां । वै.निघ. ।
**चारुरत्नम्** । क्ली । स्वर्णे । वै.निघ. ।
**चारुलोचनः** । पुं । हरिणे । त्रिका. ।
**चारुवर्त्तिनी** । स्त्री । लाचायाम् । वै.निघ. ।
**चारुवृचः** । पुं । प्लचवृचे । मद.व.५ ।
**चारुशिला** । स्त्री । रत्ने । त्रिका. ।
**चालः** । पुं । स्वर्णचूड़पचिणि । वै.निघ. । दन्तचालरोगे । [स्थानान्तरनयने । सु.सू.७भ. ।
**चालनम्** । क्ली । पित्ते । वै.निघ. । स्थानात्
**चाषः (सः)** । पुं। तन्नामकपचिणि । फिঙে । (पथ्यापथ्ये) । च. । स्वर्णचातके । সোণাচড়া বা নীলকণ্ঠ পাখী । भ.टी.भ. । (सः) इचौ । मे. ।
**चासुकः** । पुं । तिनिशवृचे । प.मु. ।
**चिकः (क्कः)** । पुं । छुछुन्दर्य्याम् । ছুঁচো । त्रिका. । (क्कम्) क्ली । गुवाके । চিকি সুপারি । वै.निघ. । [चर्मभेदे । त्रिका. ।
**चिक(कु)रः** । पुं । केशे । रा.नि.व.१८ । ह-
**चिकित्सकः** । पुं । वैद्ये । रा.नि.व.२० । स द्विविधः—एकः प्राणाभिसरः रोगहन्ता, अन्यः रोगाभिसरः प्राणहन्ता च ।
**चिकित्सा** । स्त्री। रोगनिदानप्रतिकारे । "चिकित्सा तत्प्रतीकारः ।" रा.नि.व.२०। "या क्रिया व्याधिहरणी सा चिकित्सा निगद्यते । याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः । सा चिकित्सा विकाराणां कर्म्म तद्भिषजां मतम् ॥" भा. । सा त्रिधा यथा—"आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता । शस्त्रैः कषायैर्लोहाद्यैः क्रमेणान्त्या सुपूजिता ॥" भैष. । सा च पुनरष्टधा—"क्वचिद्धर्म्मः क्वचिन्मैत्रं क्वचिदर्थः क्वचिद्यशः । कर्म्माभ्यासः क्वचिच्चापि चिकित्सा नास्ति निष्फला।" वैद्यकसर्व्वस्वे १भ. । [शिवे।
**चिकित्साकलिका** । स्त्री । वैद्यकसंग्रहवि-
**चिकित्साङ्गम्** । क्ली । चिकित्साया अङ्गसमूहे, रोगी दूतो भिषक् आयुः द्रव्यं सेवकः सदौषधञ्चेति । भा. । [द्यापतिकृते ।
**चिकित्साञ्जनम्** । क्ली । वैद्यकग्रन्थभेदे वि-
**चिकित्सादीपकः** । पुं । धन्वन्तरिकृतचिकित्साग्रन्थे । [कित्सासंग्रहे ।
**चिकित्सादीपिका** । स्त्री । वङ्गसेनकृतचि-
**चिकित्साप्राभृतः** । पुं । वैद्ये । च.सू.१६भ.। चिकित्सा प्राभृतमुपायनं यस्येति विग्रहः ।
**चिकित्सामृतम्** । क्ली । चिकित्सासंग्रहभेदे ।
**चिकित्सार्णवः** । पुं । सदानन्दशुक्लकृतचिकित्साशास्त्रे ।
**चिकित्सितम्** । क्ली । चिकित्सायां । र.मा. ।
**चिकित्स्यः** । त्रि । चिकित्सार्हे । চিকিৎসার যোগ্য । तद्गुणाः—"निजप्रकृतिवर्णाभ्यां युक्तः सत्वेन चक्षुषा । चिकित्स्यो भिषजां रोगी वैद्यभक्तो जितेन्द्रियः ॥" भा. ।
**चिकूलः** । पुं । दन्तीवृचे । वै.निघ. ।
**चिक्कणः (पूगः)** । पुं । पूगवृचे । গুপারি

गाछ। क्ली। पूगफले। रा.नि व.११। स्निग्धव्य-ञ्जनादौ। চিক্কণ। अम.।

**चिक्कणा (णी)**। स्त्री। पूगफले। চিকি গুপারি। रा.नि.व.११। श.र.। [वै.निघ.।

**चिक्कसः**। पुं। यवचूर्णे। हे.च.। यवपिष्टके।

**चिक्का**। स्त्री। पूगफले। रा.नि.व.११। See अक्षोटः।

**चिक्किणा**। स्त्री। पूगवृक्षे। वै.नि.घ.।

**चिक्किरः**। पुं। मूषिकविशेषे। तद्दष्टे—"चिक्किरेण शिरोदुःखं शोफो हिक्कावमी तथा।" सु.कल्प.६अ.।

**चिङ्गटः (ड़ः)**। पुं। मत्स्यभेदे। মোচাচিংড়ী, গল্দা চিংড়ী। गुणाः—"चिङ्गटस्तु गुरुर्याही मधुरो बलवर्द्धनः। मेदःपित्तास्रजिद्‌दृष्यो रोचनः कफवातलः॥" राज.२प.। श.मा.।

**चिङ्गटी**। स्त्री। क्षुद्रचिङ्गटे। ঘুষচিংড়ী। गुणाः—मधुरा हृद्या वातघ्नी गुरुः श्लेष्मकरी च। राज.२प.।

**चिचण्डः (ण्डा) (ण्डिका)**। पुं, स्त्री। (Trichosanthes anguinae,)फलशाकविशेषे। চিচিঙ্গা, চিচিণ্ডা। गुणाः—वातपित्तघ्नः बल्यः पथ्यः रुचिप्रदः शोषे हितः गुणैः पटोलत ईषद्धीनश्च। भा.पू.१भ.शाकव.। शोषरोगे हितं पटोलाश्नूनगुणः। मद.।

**चिचिः**। पुं। चित्रकवृक्षे। गुणाः—दीपनः पाचनः आमपाचनश्च। शार्ङ्ग.।

**चिञ्चिटिङ्गः**। पुं। वायव्यकीटविशेषे। सु.कल्प.८अ.। See कीटः।

**चिञ्चा (ञ्चिका)**। स्त्री। (Tamarindus Indica.) Tamarind tree. तिन्तिड़ीवृक्षे। তেঁতুল গাছ। रा.नि.व.११। मद.व.६। नाड़ीचवल्पत्रशाके, चुञ्चुशाके। চেঁচ্‌ড়া। वै.निघ.।

**चिञ्चातैलम्**। क्ली। तिन्तिड़ीवीजभवतैले। কাঁইবীজের তেল। गुणाः—कटुपाकं लेखनं वातकफघ्नं रुच्यं नातिशीतलं कषायञ्च। रा.नि.व.१५।

**चिञ्चाम्लम्**। क्ली। (Rumex vesicatorius.) अम्लशाके। চুকা শাক। चिञ्चासारे। তেঁতুলের অম্বল। रा.नि.व.११।

**चिञ्चासारः**। पुं। (Rumex vesicatorius.) अम्लशाके। চুকা শাক। अम्लसारे। তেঁতুলের সার, শরবৎ বা অম্বল। गुणाः—अत्यम्लः वातघ्नः कफदाहघ्नः। शर्करामिश्रः स पित्तदाहकफघ्नश्च। रा.नि.व.११। [१०अ.।

**चिञ्चितिका**। स्त्री। तिन्तिड़ीवृक्षे। च.सू.

**चिञ्ची**। स्त्री। गुञ्जायाम्। কুঁচ। [निघ.।

**चिञ्चुका**। स्त्री। चिञ्चोटके। চেঁচ্‌কো। वै.

**चिञ्चोट(कः)** पुं। (Marsilea dentata.) चुञ्चुक्षुपे, सुनाक्रतिलघुकसेरौ मूलशाकविशेषे। চেঁচড়া। गुणैः कसेरुतुल्यः। भा.पू.१भ.शाकव.। गुणाः—गुरुत्वम् अजीर्णकरत्वं शीतलत्वञ्च। राज.२प.। See चुञ्चुः।

**चिटिका**। स्त्री। आरामशीतलायां। वै.निघ.।

**चिड़ा**। स्त्री। स्वनामकदेवदारौ। वै.निघ.।

**चित्तम्**। क्ली। मनसि। रा.नि.व.१८।

**चित्तभ्रमसन्निपातः**। पुं। स्वनामख्यातसन्निपातज्वरविशेषे। यथा—"गायति नृत्यति हसति प्रलपति विकृतं निरीक्षते मुह्येत्। दाहव्यथाभयार्त्तो नरस्तु चित्तविभ्रमे ज्वरे भवति॥" भा.म.१भ.। [च.। अम.।

**चित्तविप्लवः (भ्रमः)**। पुं। उन्मादे। हे.

**चित्रः**। पुं। एरण्डवृक्षे। ভেরেণ্ডা গাছ। प.मु.। सा.कौ.सिंहनादगुग्गुलौ। अशोकवृक्षे। रा.नि.व.१०। श्वेतैरण्डे। रा.नि.व.८। तरम्बुजे। তরমুজ। लावपक्षिणि। वै.निघ.। चित्रकवृक्षे। रा.नि.व.६। वृश्चिकविशेषे। सु.कल्प.८अ.। See वृश्चिकः।

**चित्र(क)म्**। क्ली। चित्रके। तिलके। मे.।

**चित्रकः**। पुं। (Plumbago Zeylanica.) स्वनामख्यातक्षुपे। চিতে গাছ। हिं चिता। मं चित्रक। तैं चित्रमूलमु। उत्. रक्तचिता, धुवचिता। स द्विधा शुक्लारुणभेदेन। तयोः रक्तएव प्रशस्तः। वाभटस्तु त्रिविधं चित्रकमाह श्वेतपीतकृष्णभेदेन। "यथास्वं चित्रकः पुष्पैः

न्धैव: पीतसितासितैः। यथोत्तरं स गुणवान् नीपनाय रसायनम्॥" वा.उ.३९अ.। गुणाः—कासयक्ष्मशोफकफशोषघ्नः रुचः उष्णः कुष्ठशोथार्शःकृमिघ्नः वातश्लेष्महरः श्लेष्मपित्तघ्नः पाके कटुकः अग्निकरः पाचनः लघुश्च। भा.पू.१भ.। एरण्डवृक्षे। हे.च.। श्वेतैरण्डे। अम.। तित्तिरपक्षिणि। তিতির পাখী। मुचुकुन्दवृक्षे। মুচকুন্দ। वै.निघ.। चित्रवर्णोपव्याघ्रे। চিতিবাঘ। मण्डलिसर्पविशेषे। सु.कल्प.४अ.। See सर्पः। शूरणे। शूरणमोदके।

**चित्रकजीवी**। पुं। जीवके। वै.निघ.।

**चित्रकण्टकः**। पुं। गोक्षुरके। वै.निघ.।

**चित्रकण्ठः**। पुं। पारावते। जटा.। सारसपक्षिणि। वै.निघ.।

**चित्रकन्धरः**। पुं। पक्षिविशेषे। वै.निघ.।

**चित्रकर्म्मा**। पुं। तिनिशवृक्षे। श.च.।

**चित्रकाण्डाली**। स्त्री। गोनसवल्ल्याम्। वै.निघ.।

**चित्रकाद्यलौहम्**। क्ली। शोथाधिकारे। चित्रकमूलशुण्ठीवासाशालपर्णीसैन्धवगुडूचीतालपुष्पाणां प्र. ६ तो. जारितलौहं यवक्षारः सौवर्चललवणं पिप्पली विट् एषां प्र. चूर्णं ४ तो. गोमूत्रं २ श. एकत्र पचेत्। प्रक्षेपः मधु ३ प.। मा. १ तो.। सा.कौ.। [रा.नि.व.१८।

**चित्रकायः**। पुं। चित्रकव्याघ्रे। চিতিবাগ।

**चित्रकूला**। स्त्री। क्षुद्रदन्तीवृक्षे। वै.निघ.।

**चित्रकृत्**। पुं। तिनिशवृक्षे। अम.।

**चित्रकोलः**। पुं। आञ्जनेयै। আঞ্জনী। त्रिका.।

**चित्रगन्धम्**। क्ली। हरिताले। रा.नि.व.१३।

**चित्रगन्धा**। स्त्री। शुकनासायाम्। গামার। वै.निघ.।

**चित्रगुडिका**। स्त्री। वातग्रहण्याम्। "चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च। व्योषं हिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत्। गुडिका मातुलुङ्गस्य दाडिमस्य रसेन वा॥" च.द.। भा.।

**चित्रग्रीवः**। पुं। सारसपक्षिणि। वै.निघ.।

**चित्रटम्**। क्ली। वङ्गे। वै.निघ.।

**चित्रतण्डुलम्**। क्ली। विडङ्गे। प.मु.।

**चित्रतण्डुला**। स्त्री। विडङ्गक्षुपे। रा.नि.व.६।

**चित्रतनुः**। पुं। लावपक्षिणि। वै.निघ.।

**चित्रत्वक्**। पुं। भूर्जवृक्षे। रा.नि.व.९।

**चित्रदण्डकः**। पुं। शूरणक्षुपे। ওল গাছ। र.सा.सं.। वनशूरणे। कार्पासवृक्षे। वै.निघ.।

**चित्रदेवी**। स्त्री। महेन्द्रवारुणीलतायाम्। বড় মাকাল। रा.नि.व.३।

**चित्रदेहः**। पुं। लावपक्षिणि। वै.निघ.।

**चित्रनेत्रा**। स्त्री। सारिकायाम्। শালিক পাখী। हारा.।

**चित्रपत्रः**। पुं। भूर्जवृक्षे। वै.निघ.।

**चित्रपत्रकः**। पुं। मयूरे। वै.निघ.।

**चित्रपत्रिका**। स्त्री। द्रोणपुष्प्याम्। घल्घसा। रा.नि.व.५। पृश्निपर्ण्याम्। চাকুলিয়া। वै.निघ.। कपित्थपर्णीवृक्षे। र.मा.।

**चित्रपत्री**। स्त्री। महाराष्ट्रीनामक्षुपे, जलपिप्पल्याम्। কাঁচড়া। रा.नि.व.४। पृश्निपर्ण्याम्। वै.निघ.।

**चित्रपदा**। स्त्री। गोधापदीलतायां। श.मा.।

**चित्रपर्णिका (र्णी)**। स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। जलपिप्पल्याम्। र.मा.। रा.नि.व.४। कर्णस्फोटालतायां। কাণফোড়া। रा.नि.व.३। मञ्जिष्ठायाम्। प.मु.।

**चित्रपक्षः**। पुं। वनकुक्कुटे। तित्तिरपक्षिणि। তিতির পাখী। त्रिका.। जटा.।

**चित्रपाठी (स्त्री)**। पुं। चित्रके। वै.निघ.।

**चित्रपादा**। स्त्री। शारिकायाम्। हारा.।

**चित्रपिच्छः (कः)**। पुं। मयूरे। त्रिका.। च.चि.२७अ.।

**चित्रपुङ्खः**। पुं। शरे। त्रिका.।

**चित्रपुष्पी**। स्त्री। अम्बष्ठायाम्। रा.नि.व.४। पुं। आम्रातकवृक्षे। वै.निघ.।

**चित्रपृष्ठः**। पुं। चटकपक्षिणि। हारा.।

**चित्रप्रिया**। स्त्री। हरिताले। वै.निघ.।

**चित्रफलः (कः)** । पुं । तरक्षुजडचे । चि-का. । (Mystus chitala.) चितलमत्स्ये । চিতল মাছ । गुणाः —गुरुः स्वादुः स्निग्धः हृद्यः बल्यश्च । राज.२प. ।

**चित्रफला** । स्त्री। महेन्द्रवारुण्याम् । বড় মাকাল । लिङ्गिन्याम् । हिं पचगुड़िया । रा.नि.व.३। चिर्भिटायाम् । कण्टकार्य्याम् । भा.४भ.पूतनाग्रह चि.। वार्त्ताकौ। रा.नि.व.४ । पटोले । मत्स्यभेदे । ফলুই মাছ । श्र.र. । [मर्कटचे । श्र.र. ।

**चित्रभानुः** । पुं । चित्रकवृचे । भल्लातकवृचे ।

**चित्रभेषजम् (जा)** । क्ली, स्त्री । काकोदुम्बरिकायाम् । रा.नि.व.११ । मद.व.५ ।

**चित्रमण्डलः** । पुं । मण्डलिसर्पविशेषे । सु.कल्प.४अ. । See मण्डली ।

**चित्रमृगः** । पुं । चित्रवर्णमृगे । च. ।

**चित्रमेखलः** । पुं । मयूरे । त्रिका. ।

**चित्रयोधी** (इन्) पुं । अर्जुनवृचे । रा.नि.व.९ । स्वावपचिष्णि । वै निघ. ।

**चित्ररञ्जकम्** । क्ली । वङ्गे । वै.निघ. ।

**चित्रलता** । स्त्री । मञ्जिष्ठायां । रा.नि.व.६ ।

**चित्रला** । स्त्री । गोरक्ष्याम् । रा.नि.व५ । राजिकायाम् । রাই । वै.निघ. ।

**चित्रलेखिनी** । स्त्री । तूलिकायाम् । हारा. ।

**चित्रलोचना** । स्त्री। शारिकापचिणि। जटा.।

**चित्रवदालः** । पुं । मत्स्यभेदे । চিতল মাছ। जटा. ।

**चित्रवर्त्तिनी** । स्त्री । रेणुकबीजे । वै.निघ. ।

**चित्रवल्लिकम्** । क्ली । तरक्षुजफले । তরমুজ । पुं । वदालमत्स्ये । हे.च. ।

**चित्रवल्ली** । स्त्री । महेन्द्रवारुणीलतायाम् । বড় মাকাল । रा.नि.व.३ ।

**चित्रबीजः** । पुं । रक्तैरण्डे । (आ) स्त्री । विडङ्गे । रा.नि.व.८ ।

**चित्रवीर्य्यः** । पुं । रक्तैरण्डे । रा.नि.व.८ ।

**चित्रव्याघ्रः** । पुं। चित्रकव्याघ्रे । रा.नि.व.१९।

**चित्रशीर्षः** । पुं। वायव्यकीटविशेषे । सु.कल्प.८अ. । See कीटः ।

**चित्रशोकः** । पुं । अशोकवृचे । वै.निघ. ।

**चित्रसर्पः** । मालुधानसर्पे । श्र.र. ।

**चित्रसारा** । स्त्री । हरिताले । वै.निघ. ।

**चित्रसुपः** । पुं । द्रोणपुष्पाम् । ঘলঘসিয়া । रा.नि.व.५ ।

**चित्रांशुः** । पुं । गुग्गुलौ । अ.द.१२अ. ।

**चित्रा** । स्त्री । इन्द्रवारुण्याम् । রাখালশশা । दन्त्याम् । दन्तीमूले । च.द.अपस्मा.चि. । च.सू.४अ । विडङ्गायाम् । বিড়ঙ্গ । मञ्जिष्ठायाम् । गोडुम्बायाम् । রাজ গোমক । प.मु. । बृहद्दन्त्याम् । भा. । आखुकर्णीलतायाम् । মূষাকাণী । रा.नि.व.३ । वा.सू.१५अ. । सुतश्रेण्याम् । रा.नि.व.४ । द्रवन्त्याम् । रा.नि.व.५ । मण्डदूर्व्वायाम् । रा.नि.व.८ । [नि.व.१३ ।

**चित्राङ्गम्** । क्ली । हरिताले । हिङ्गुले । रा.

**चित्राङ्गः** । पुं । चित्रकवृचे । रक्तचित्रके । रा.नि.व.६। सर्पविशेषे । চিতিসাপ । रा.नि.व.१९। हरिणविशेषे । गुणाः—"चित्राङ्गो वातशमनो हंहणो बलकृन्मतः । श्लेष्मलः कथितो वापि दुर्जरो मेदवर्द्धनः ॥" अत्रि.२० । ऋषिके । দিছা । वै.निघ. ।

**चित्राङ्गा (ङ्गी)** । स्त्री । मञ्जिष्ठायाम् । रा.नि.व.६ । राजसुवर्ण्याम् । গয়া করলা । प.मु. । कर्णजलौकायाम् । रा.नि.व.१९ ।

**चित्रान्नम्** । क्ली । खेचरान्ने । वै.निघ. ।

**चित्रापूपः** । पुं । अपूपविशेषे । চিতাই পিঠা । त्रिका. ।

**चित्राम्बररसः** । पुं । ग्रहण्यधिकारे । पारदः १ भ. ताम्रं १भ. गन्धकः १भ. दिनं मर्दयेत् । अथ घृताभ्यक्ते लौहपात्रे मृदग्निना प्रहरं पचेत् लौहदण्डेन चालयेच । अवतार्य्य जीरकक्वाथेन दिनत्रयं भावयेच । मात्रा ४ माषा ।

**चित्रायसम्** । क्ली। तीक्ष्णलोहे। रा.नि.व.१३।

**चित्राली** । स्त्री । तिलकुसुमे । [त्रिका. ।

**चित्राची** । स्त्री। शारिकायां । শালিকপাখী।

**चित्रिकः** । पुं । चैत्रमासे । श.र. ।

**चित्रौदनम्** । क्ली । विचित्रान्ने । খেচরান্ন ।

**चिन्तामणिचतुर्मुखः** । पुं । वातव्याधौ रसः । रससिन्दूरं २ तो. लौहं १ तो. अभ्रं १ तो. स्वर्णं ॥० तो. घृतकुमारीरसेन सम्मर्द्य एरण्डपत्रैः रावेष्ट्य धान्यमध्ये ३ दिनं स्थापयेत् । भैष. ।

**चिन्तामणिरसः** । पुं । जीर्णज्वरे रसः । हरितालं शुक्तिचूर्णं (वा तालचूर्णं) तुल्यकं समभागं जलेन पिष्ट्वा चक्रिका कार्य्या । अथ शरावसंपुटे गजपुटेन रात्रौ पचेत् ।र.सा.सं. । [कोषः ।

**चिन्तिड़ा (ड़ी)** । स्त्री । तिन्तिड़्यां । हि.

**चिनः** । पुं । चीनधान्ये । চীনা ধান । श.च. ।

**चिपिटः** । पुं । अश्वस्य नेत्ररोगविशेषे । চক্ষের পিচুটী রোগ । ज.द.३०अ. । चिपीटके । চিঁড়া । वै.च. ।

**चिपिटकः** । पुं । पृथुके । চিড়ে । हिं चूड़ा । त्रिका. । गुणाः—गुरुः स्निग्धः बृंहणः कफवर्द्धनश्च । राज. । See पृथुकः ।

**चिपिटा** । स्त्री । गुण्डासिनीतृणे । रा.नि.व. ८ । वनकुलत्थे । वै.निघ. ।

**चिपुटः** । पुं । चिपिटके । रुद्रकोषः ।

**चिप्पटम्** । क्ली । वङ्गे । वै.निघ. ।

**चिप्यः** । पुं । नखमांसाश्रितक्षुद्ररोगे । আঙুল হাড়া । बेड़वा इति भा.म.४भ. । चिप्यलक्षणं—"नखमांसमधिष्ठाय वातः पित्तश्च देहिनां । करोति दाहपाकौ च तं व्याधिं चिप्यमादिशेत्॥" सु.नि.१३अ. ।

**चिमः** । पुं । पट्टशाके । পাটশাক । श.मा. ।

**चिमिः (कः)** । पुं । तिमिमत्स्ये । पट्टशाके । श.मा. । शुकपक्षिणि । श.र. ।

**चिमिचिमिः** । स्त्री । वातजपीड़ायाम् । झिन्झिनीति लोके ।

**चिरम्** । क्ली । स्वर्णे । वै.निघ. । [जटा. ।

**चिरजीवकः** । पुं । असनवृक्षे । जीवकवृक्षे ।

**चिरजीविनी** । स्त्री । श्यामलीवृक्षे । वै.निघ. ।

**चिरजी(ञ्जी)वी** । पुं । जीवके । रा.नि.व. ५ । श्यामलीवृक्षे । रा.नि.व.८ । काके । शै. । वै.च. । शूकायाम् । পিঁড়িং ।

**चिरज्वरः** । पुं । दीर्घकालानुबन्धिज्वरे । वा. चि.१अ. । वक्ष्यः । [नि.व.१८ ।

**चिरटी** । स्त्री । प्रागरजस्कायां स्त्रियि । रा.

**चिरतिक्तः** । पुं । किराततिक्तके । চিরেতা । श.र. । (क्ता) स्त्री । तिक्तकर्कटिकायाम् । তিৎ-কাঁকুড়ী । वै.निघ. ।

**चिरन्तनम्** । क्ली । पुष्करमूले । वै.निघ. ।

**चिरपत्रकः** । पुं । क्षुद्रसर्ज्जवृक्षे, लघुशालवृक्षे । वै.निघ. । [आम । वै.निघ. ।

**चिरपत्रा (त्री)** । स्त्री । भूमिजम्बूवृक्षे । वन

**चिरपत्रिका** । स्त्री । कुखुशाके । वै.निघ. ।

**चिरपर्णः** । पुं । सर्ज्जवृक्षे । শাল গাছ । वै. निघ. । [त्रि । चिरकालीन पक्के रोगे ।

**चिरपाकी** । पुं । कपित्थवृक्षे । रा.नि.व.११ ।

**चिरपुष्पः** । पुं । वकुलवृक्षे । रा.नि.व.१० ।

**चिरपोटा** । स्त्री । वास्तूकभेदे । বেতুয়াবিশেষ । वै.निघ. ।

**चिरमेहो** । पुं । गर्दभे । त्रिका. । वै.च. ।

**चिरभ्रणः** । पुं । चिल्लपक्षिणि । চিল পাখী । त्रिका. ।

**चिरविल्वः (कः)** । पुं । करञ्जवृक्षे । ডহর করঞ্জ । रा.नि.व.९ । च.सू.४अ. । सु.चि.२अ. ।

**चिरा** । स्त्री । स्वनामख्यातगन्धद्रव्ये । চিড়া দেবদারু । जलौकायाम् । জোঁক । वै.निघ. ।

**चिराटिका** । स्त्री । श्वेतपुनर्नवायाम् । শেয়া পুণ্যা । रा.नि.व.९ । लौहचटकायाम् । भैष.शूलचि.विद्याधराभ्रे । चटिकायाम् । পাতাড়ী । वैद्यकसंग्रहः ।

**चिरातच्छदा** । स्त्री । कदलीवृक्षे । वै.निघ. ।

**चिरातिक्तः** । पुं । चिरतिक्तके । চিরাতা । श.र. । [वै.निघ. ।

**चिरायुः** । पुं । तालवृक्षे । रा.नि.व.९ । काके ।

**चिरिः** । पुं । चिल्लपक्षिणि । চিল পাখী । वै.निघ. । शुकपक्षिणि । টিয়া পাখী । त्रिका. ।

**चिरिटी** । स्त्री। मधुदपक्षिविशेषे। अ.सू.२७अ.।

**चिरिण्टी** । स्त्री । मल्लपुष्पायाम् । रा.नि.व.२ । युवत्यां । मे. ।

**चिरिपत्र:** । पुं । क्षुद्रकारवेल्ले । वै.निघ. ।

**चिरिल्ल:** । पुं । मत्स्यमत्स्यभेदे । वै.निघ. ।

**चिरिविल्व:** । पुं । करञ्जवृक्षे । ডহর করঞ্জ । अ.टी.भ. ।

**चिरु** । क्ली । बाहुसन्धौ । श.च. ।

**चिर्भटी** । स्त्री । राजसर्षप्याम् । গয়া করলা। प.मु.। फलशाकविशेषे । কাঁকুড়, গোমুক, ফুটী । हिं भुकुर । मं वेलमॆंधाकं अरमीकें । गुणा: —बाल्ये तिक्ता ईषदम्ला च, पाके दीपनी । शुष्का रुचा श्लेष्मवातारुचिघ्नी जाड्यघ्नी रोचनी दीपनी च । रा.नि.व.७ । "चिर्भिटं मधुरं रूचं गुरु पित्तकफापहम् । अनुष्णं ग्राहि विष्टम्भि पक्वन्तूष्णञ्च पित्तलम् ॥" भा.पू.१भ.आम्रव. । पुष्पञ्च चिर्भटस्यैव दोषत्रयकरं स्मृतं । अपक्वं जीर्णकफकृत् पक्वं किञ्चिद्विशिष्यते ॥" अत्रि.१६अ. ।

**चिर्भिट:** । पुं क्ली । चिर्भटिकायाम् । ফুটী । रा.नि.व.७ ।

**चिर्भिटा (टिका) (टी)** । स्त्री । चिर्भट्याम्, कर्कटिकायाम् । ফুটী, কাঁকুড় । रा.नि.व.७।

**चिलमीलिका** । स्त्री । खद्योते । मे. ।

**चिलि(ली)चि(ची)म: (मि:)** पुं । मत्स्यभेदे । ননা চেলা, বেলে গুড়্গুড়ি মাছ । स लघु: रूच: अनभिष्यन्दी वातकर: कफघ्नश्च । चेङ्गमीने । চ্যাং মাছ । गुणा: —लघु: रूच: अनभिष्यन्दी वातवर्द्धक: कफघ्नश्च । राज.३प. । अ.टी.भ. । इञ्चाके । এঁচ্‌লা মাছ । भ. ।

**चिलिमीलक: (लिका)** । पुं. स्त्री । चिलिचिममत्स्ये । अ.टी.भ. । [वै.निघ. ।

**चिलिम्ब:** । पुं । प्लक्षवृक्षे । পাকুড় গাছ ।

**चिल्ल:** । पुं । तन्नामकपक्षिणि । চিল পাখী । अयं प्रसहजातीय: काकसमगुण: । सु.सू.४६अ. । चन्दनवृक्षे । वै.निघ. । क्लिन्ननेत्ररोगे । अम. ।

**चिल्लका** । स्त्री । झिल्लिकायाम् । श.च. ।

**चिल्लभक्ष्या** । स्त्री । नखीनामकद्रव्ये । श.र. ।

**चिल्लि: (ल्लि(ल्ली)का) (ल्ली)** । स्त्री । स्वनामख्यातपत्रशाके, लघुपत्रगौरवास्तूके । শাদা বেতো শাক । हिं चिलारी । सा त्रिधा श्वेतरक्तशुनकभेदेन । श्वेतचिल्लीगुणा:—मधुरा क्षारा शीतला त्रिदोषघ्नी पथ्या ज्वरघ्नी च । इयं भागीरथीतीरे ख्याता । रक्तचिल्लीगुणा:—वास्तूकतुल्या सलवणा श्लेष्मपित्तघ्नी प्रमेहमूत्रकृच्छ्रघ्नी पथ्या रुचिरा च । शुनकचिल्लीगुणा:—कटु: तीक्ष्णा कण्डूघ्नी व्रणघ्नी च । रा.नि.व.७। लघुपत्री तु चिल्ली या सा वास्तूकसमा मता । च.द. । "तरश्चिल्ली तु विज्ञेया वातपित्तविकारिणाम् ।" अत्रि.१६अ. । लोध्रवृक्षे । चिल्लपक्षिणि । গোদা চিল, শঙ্খ চিল । वै निघ. । झिल्लिकायाम् । श.र. । भुवि । रा.नि.व.१८।

**चिवि: (वु:)** । पुं । चिबुके । जटा. । भ. ।

**चिविट:** । पुं । चिपिटे । अ.टी. ।

**चिविल्लिका** । स्त्री । शाकपत्रविशेषे । मं कं चिविलि । किरुंगीलि । गुणा: —कटु: कषाया ज्वरे अतिसारे च हिता रसायनी च। रा.नि.व.५।

**चिवुक:** । पुं । मुचुकुन्दवृक्षे । रा.नि.व.१० । क्ली । ओष्ठाधरभागे । थूँति । रा.नि.व.१८ ।

**चिह्नम्** । क्ली । रूपे, लक्षणे । अ.टी.भ. । "लक्षणं चिह्नमाकृति: ।" मा.नि. ।

**चिह्नधारिणी** । स्त्री । श्यामालतायां । श.च.।

**चिह्ल: (क:)** । पुं । वृक्षविशेषे । চিহ্লা । हिं चिल्ह । गुणा:—"चिह्लको वातनिर्हार: श्लेष्मघ्नो धातुपुष्टिकृत् । आग्नेयो विषवद्यस्य फलं मत्स्यनिसूदनम् ॥" भा. ।

**चीड़ा** । स्त्री । स्वनामख्यातदेवदारुविशेषे । सा पञ्जाबदेशीया अतिसुगन्धि: । চীড়া দেবদারু, গন্ধদ্রব্যবিশেষ । गुणा: —कटूष्णा कासघ्नी दीपनी, अतिसेविता पित्तभ्रमहरा । रा.नि.व.१२ ।

**चीड़ागन्ध:** । पुं । श्रीवेष्टनामकगन्धद्रव्ये । रा.नि.व.१२ ।

**चीनम्** । क्ली । शीसके । पुं । लौहविशेषे । তীক্ষ্ণ লোহ । हरिणभेदे । मे. । षष्टिकाद्धीनगुणे

शालिधान्यविशेषे। চীনাধান্য। भ.र.२७भ.। अपाङ्गव्रणबन्धनभेदे। सु.सू.१८श.।

**चीनकः।** पुं। काककङ्गौ। কাংণী ধানবিশেষ। गुणाः—शोषणं वायुवर्द्धनं पित्तश्लेष्मघ्नं कषञ्च। रा.नि.व.१६। कङ्गुसमगुणः। भा.। धूनके। चीनकर्पूरे। চীনের কর্পূর। रा.नि.व.१२

**चीनकर्कटिका (टी)।** स्त्री। कर्कटीविशेषे। চীনা কাঁকুড়। वै.निघ.।

**चीनकर्पूरः।** पुं। स्वनामख्यातकर्पूरे। চীনের কর্পূর। गुणाः—तिक्तः कफचयकुष्ठकण्डूवमिहरः कटुतिक्तः ईषच्छीतः पाचनश्च। रा.नि.व.१२।

**चीनजम्।** क्ली। तीक्ष्णलौहे। रा.नि.व.१३।

**चीनपिष्टम्।** क्ली। सीसके। रा.नि.व.१३। सिन्दूरे। हे.च.।

**चीनबन्धः।** पुं। अपाङ्गव्रणबन्धनविशेषे। চীনা কাছা। बहुभिश्चीराभिर्हंती ग्रन्थिबन्धनरहितश्चीराभिरेव वेष्टिताभिर्बन्धनयुक्तश्चीनबन्धः। ड.। "चीनबन्धं विजानीयात् चीराभिर्बहुभिर्हंत" इति लक्षणम्। [व.१३।

**चीनवङ्गम्।** क्ली। शीषके। সিসা। रा.नि

**चीना (कः)।** स्त्री, पुं। चीनकर्कट्याम्। सअंरसे। धूना। वै.निघ.।

**चीनाकर्कटी।** स्त्री। चित्रकूटदेशप्रसिद्धस्वनामख्यातकर्कटिकायाम्। চীনা কাঁকুড়। गुणाः—रुच्यं शीतलं पित्तदाहशोषघ्नं मधुरं रुचिदं हृद्यञ्च। रा.नि.व.७। [चिरद्रव्ये। भैष.वाजी.।

**चीनीचोपः।** पुं। तोपचीनी इति ख्याते व-

**चीरम्।** क्ली। वल्कले। গাছের ছাল। जीर्णवस्त्रखण्डे। (सुभूतिः)। सीसके। हे.च.। गोस्तने। मे.। [चुचुशाके। रा.नि.व.७।

**चीरपत्रा (त्रिका)।** स्त्री। चिल्लीशाके।

**चीरपर्णः।** पुं। सर्ज्जवृक्षे। শাল গাছ। रा.नि.व.६।

**चीरिः।** स्त्री। नेत्रांशुके। श.र.।

**चीरिका (री)।** स्त्री। झिल्लयाम्। हे.च.।

**चीरितच्छदा (पत्रिका)।** स्त्री। पालङ्कशाके। পালং শাক। भा.।

**चीरुकम्।** क्ली। চেঁচর इति ख्याते फले। गुणाः—रुचिकरं दाहकरं कफकरं पित्तकरं श्लेष्मञ्च। राज.३प.।

**चीर्णपर्णः।** पुं। निम्बवृक्षे। खर्जूरवृक्षे। मे.।

**चीलिका।** स्त्री। चीरिकायाम्। श.र.।

**चील्लका।** स्त्री। झिल्लयां। श.र.।

**चील्लिका।** स्त्री। चिल्लीशाके। वै.निघ.।

**चीवरम्।** स्त्री। शाकविशेषे। उणा.।

**चुक्रम्।** क्ली। Distilled vinegar. अम्लकाञ्जिकविशेषे। সির্কা। "विनष्टमम्लं मद्यं वा मधुरद्रवः पुनः संहितचुक्रम्।" शार्ङ्ग.। गुणाः—तिक्ताम्लं स्वादु कफपित्तघ्नं नासारोगशिरोरोगदुर्गन्धघ्नञ्च। रा.नि.व.१५। सन्धानविशेषे। मधुशुक्तं। "यन्मस्त्वादि शुची भाण्डे सगुडक्षौद्रकाञ्जिकम्। धर्यत्तु धान्यराशिस्थं शुक्तं चुक्रं तदुच्यते॥" प.प्र.२ख.। "गुड़माक्षिकधान्याम्लमस्त्वम्बुद्विगुणं क्रमात्। संघ्नन्ति चुक्रसिद्धार्थं किञ्चिन्मधुकान्वितम्॥" तोड़.। वृक्षाम्ले, महार्द्रके। মহা আদা। रा.नि.व.६। जटा.। चुक्रवास्तूकनामपत्रशाके। চুকা বেতো। मं चुकावड़िलि। आंववती, चुलिकक्कीत इति कर्णाटादौ ख्यातम्। गुणाः—अम्लपत्रं लघु उष्णं वातगुल्मघ्नं रुच्यं दीपनं पथ्यम् ईषत्पित्तकरञ्च। रा.नि.व.७। अम्लवेतसे। भा.।

**चुक्रः।** पुं। अम्लरसे। अम्लपालङ्के। টক পালং। प.मु.। अम्लवेतसे। मद.व.६।

**चुक्रकम्।** क्ली। चुक्रे। চুকা পালং। प.मु.। गुणाः—दुर्जरं भेदि वातघ्नं पित्तकरं गुरु च। राज.३प.। पुं। अम्लवेतसे। वै.निघ.।

**चुक्रकेतुः।** पुं। अम्लवेतसे। वै.निघ.। [६।

**चुक्रचक्रिका।** स्त्री। तिन्तिड़ीवृक्षे। मद.व.

**चुक्रफलम्।** क्ली। वृक्षाम्ले। আম্ড়া। रा.नि.व.६। [पालङ्। भा.।

**चुक्रवास्तूकम्।** क्ली। महाम्लवास्तूके। চুকা

**चुक्रवेतसः।** पुं। अम्लवेतसे। वै.निघ.।

**चुक्रवेधकम्।** क्ली। काञ्जीविशेषे। সির্কা। रा.नि.व.१०। [वै.निघ.।

**चुक्रशाकः।** पुं। चुक्रपालङ्के। চুকা পালং।

**चुक्रा (क्री)** । स्त्री । Indian sorrel. (Rumex vesicarius.) चाङ्गेर्य्याम् । आमरुल । रा.नि.व.५ । अम्लपालङ्के । चूका पालङ । हिं चुका । गुणाः—"चुक्रा लघुतरा स्वाद्वी वातघ्नी.कफपित्तकृत् । रुच्या लघुतरा पाके वन्ताके नातिरोचनी ॥" भा.पू.१भ.शाकव. । तिन्तिड्याम् । रा.नि.व.११ ।

**चुक्राम्लम्** । क्ली । वृक्षाम्ले । तेँतुल । रा.नि.व.६ । चिञ्चाम्ले । तेँतुलेर अम्बल । रा नि.व.११ । अम्लकाञ्जिके । सिर्काम्न ।

**चुक्राम्ला** । स्त्री । अम्ललोणिकायाम् । See चाङ्गेरी । चिञ्चायाम् । काञ्जिकभेदे । सिर्काम्न । वै.निघ. ।

**चुक्रि(क्री)का** । स्त्री । चुक्रनामककाञ्जिके । सिर्काम्न । रा.नि.व.१५ । अम्ललोणिकायाम् । रा.नि.व.५ । भा.पू.१भ.शाकव. । कुठारिया इति च.द.तृष्णा.चि. । "चुक्रीका चुक्रिकारसः ।" चुक्रपालङ्के । चूका पालं । र.मा. । भा.पू.१भ.शाकव. । तिन्तिड्याम् । रा.नि.व.११ । मद.व.६ । आम्रातकफले । वै.निघ. ।

**चुचु(चू)कम्** । क्ली । स्तनाग्रभागे । रा.नि.व.१८ । श.र. ।

**चुचुन्दरः** । पुं । छुछुन्दरे । छुँचो । वै.निघ. ।

**चुचूः** । पुं । सुनिषण्णकशाके । त्रिका. । पत्रशाकभेदे । गुणाः—पाके लघुः जन्तुघ्नः पिच्छिलो व्रणिनां हितः कषायः मधुरो ग्राही त्रिदोषघ्नश्च । सु.सू.४६अ. ।

**चुञ्चुः** । पुं, स्त्री । (Marsilea dentata.) पत्रशाकविशेषे । चेँचको । हिं चेंचुना । तें चित्तचेट्टु । सा द्विधा क्षुद्रचुञ्चुमहाचुञ्चुभेदेन । सा. गुणाः—मधुरा तीक्ष्णा कषाया मलशोधनी गुल्मोदरविबन्धार्शोग्रहणीहरी च । महाचुञ्चुः कटूष्णा कषाया मलरोधनी गुल्मशूलोदरार्शोविषघ्नी रसायनी च । क्षुद्रचुञ्चुः मधुरा कटूष्णा कषाया दीपनी शूलगुल्मार्शोघ्नी विबन्धकृच्च । महाचुञ्चुबीजं कटूष्णं गुल्मशूलोदरघ्नं विषघ्नं त्वग्दोषघ्नं कण्डूघ्नं कुष्ठघ्नम् आखुविषघ्नं च । रा.नि.व.४ । रक्तैरण्डे । रा.नि.व.८ । छुछुन्दर्य्याम् । हारा. ।

**चुञ्चुपत्रः** । पुं । चुञ्चुक्षुपे । रा.नि.व.४ ।

**चुञ्चुरः** । पुं । चुञ्चुक्षुपे । रा.नि.व.४ ।

**चुण्टा (ण्टी)** । स्त्री । क्षुद्रे । कृत्रिमजलाशयभेदे । हे.च. । कूपे । त्रिका. । [श.र. ।

**चुतः (तिः)** । पुं,स्त्री । अपानद्वारे । मलद्वार ।

**चुम्बकः** । पुं,क्ली । कान्तलौहविशेषे । चुम्बक । हिं चुम्बक । रा.नि.व.१३ । गुणाः—शीतलो लेखनो मेदोविषगरघ्नश्च । भा.पू.१भ.उपरस.व. ।

**चुम्बला** । स्त्री । मुण्डर्य्याम् । मुण्डीरी । वै.निघ. ।

**चुरवः** । पुं । क्रमी । वै.निघ. ।

**चुरी** । स्त्री । उपकूपे । स्वल्पजलाशये । हे.च. ।

**चुलुकः** । पुं । प्रसृतिपरिमाणे । हे.च. । गण्डूषे । घनपङ्के । त्रिका. । क्ली । भाण्डमज्जनजले ।

**चुलुकी (इन्)** । पुं । शीधामत्स्ये । घड़ियाल माछ । श.र. ।

**चुलुम्पः** । पुं । बाललालने । जटा. ।

**चुलुम्पा** । स्त्री । छाग्याम् । त्रिका. । [श.र. ।

**चुलुम्पी** । पुं । शिशुमाराकृतिमत्स्ये,उत्पलमत्स्ये ।

**चुल्लः** । पुं । क्लिन्ननेत्रतारोगे । अम. । [श.र. ।

**चुल्लकी** । स्त्री । शिशुमारे । कोषीभेदे । मे. ।

**चुल्लिः** । स्त्री । पाकार्थमग्निस्थाने । উনান । अ.टी. । [वै.निघ. ।

**चुल्लिका** । स्त्री । शिशुमारविशेषे । शुशुक ।

**चुल्लिकालवणम्** । क्ली । लवणविशेषे । वै.निघ. । [राजम.तैले. । चितायाम् । मे. ।

**चुल्ली** । स्त्री । गुवाकपुष्पे । च.द.वा.व्या.महा-

**चुवुकः** । पुं । अधरोष्ठाधोभागे । मुखे । वै.निघ. ।

**चुस्तः** । पुं, क्ली । स्थालीपक्वमांसे । पनसफलस्यासारभागे । भूँति । लिङ्गसं.भ. । कूपे । त्रिका. । मयूरशिखायाम् । अम. ।

**चूचुकम्** । क्ली । स्तनाग्रभागे । रा.नि.व.१८ ।

**चूड़ा** । स्त्री । मस्तके । श्वेतगुञ्जायाम् । वै.निघ. ।

**चूड़ामणिः** । पुं । गुञ्जालतायाम् । रा.नि.व.३ । रक्तगुञ्जायाम् । वै.निघ. ।

**चूड़ाम्लम्** । क्ली । वृक्षाम्ले । रा.नि.व.६ ।

**चूड़ालम्** । क्ली । मस्तके । श.र. । स्त्री । श्वेतगुञ्जायाम् । रा.नि.व.३ । उच्चटायां । अम. । ज.द.१२अ. । नागरमुस्तायाम् । रा.नि.व.६ ।

**चूतः (कः)** । पुं । आम्रवृक्षे । रा.नि.व.११ । पायौ । श.र. । कूपे । मे. ।

**चूर्णः** । पुं, क्ली । क्षुद्रवस्तुनि । गुंड़ा । "चूर्णानु वस्तुभिः क्षुद्रैः ।" अम. । रा.नि.व.२० । लक्षणं —"अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् । तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्राकर्षसम्मिता । चूर्णे गुड़ः समो देयः शर्करा द्विगुणा भवेत् । चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् । लिहेच्चूर्णं द्रवैः सर्व्वैः घृताद्यैः द्विगुणोन्मितैः । पिबेच्चतुर्गुणैरेव चूर्णमालोड़ितं द्रवैः ॥" शार्ङ्ग.६अ. । क्षारविशेषे । चून् । गुणाः—वातश्लेष्मघ्नः मेदोघ्नः । शङ्खचूर्णगुणाः—कटुः क्षारः उष्णः क्रिमिघ्नश्च । राज. । चूर्णजलगुणाः—"सदुग्धं चूर्णसलिलं मधुमेहे हितं मतं । अम्लपित्ते च शूले च पथ्यमप्यौषधञ्च तत् ।" तत्करणविधिः—"चतुःकर्षमिते चूर्णे तोयपञ्चशरावके । क्षिप्ते चूर्णोदकं तत्स्यात्प्रहरद्वयसंस्थितम् ॥" अत्रिः ।

**चूर्णकः** । पुं । भ्रष्टतण्डुलकृतपिष्टे । वै.निघ. । षष्टिकधान्यभेदे । स व्रीहेर्हीनगुणः । सु.सू.४६अ. । च.सू.२७अ. । धान्यज्वरे । गजवैद्यकम् । सक्तौ । छातु । त्रिका. । क्ली । गुण्डायां । गुंड़ा । च.इ.१०अ. ।

**चूर्णकीलः** । पुं । अश्वस्य पादरोगभेदे । "सूक्ष्मचूर्णतलश्चैव चूर्णकीलः ।" ज.द.३९अ. ।

**चूर्णकुन्तलः** । पुं । अलके । अम. ।

**चूर्णखण्डः** । पुं, क्ली । कङ्करे । काँकर । घुसिम् । हारा. । [१२ । भा. ।

**चूर्णपारदः** । पुं, । हिङ्गुले । रा.नि.व.

**चूर्णवज्रम्** । क्ली । वैक्रान्तमणौ । रा.नि.व.१३ ।

**चूर्णमषी** । स्त्री । मसीविशेषे । कृष्णसर्पो दह्यमानो यदा कपालं गच्छति तदा चूर्णमसीत्युच्यते । सु.चि.९अ. । [नि.व.७ ।

**चूर्णशाकाङ्कः** । पुं । गौरसुवर्णशाके । रा.

**चूर्णाञ्जनम्** । क्ली । विविधाञ्जनान्यतमे अञ्जने । गुंड़ा काजल । भा. ।

**चूर्णिः (र्णी)** । स्त्री । कपर्द्दके । उणा. । मे. ।

**चूर्णिका** । स्त्री । सक्तौ । छातु ।

**चूर्णितम्** । क्ली । तन्नामककाण्डभग्ने ऽस्थिभङ्गरोगे । See भग्नम् ।

**चूर्व्वरः** । पुं । ऋषभके । रा.नि.व.५ ।

**चूलः (कः)** । पुं । केशे ।

**चूलिकम्** । क्ली । लोचिकायाम् । लूची । श.च. । गुणाः—ग्राहि वातश्लेष्मघ्नं पाके किञ्चिदम्लकारि रुच्यम् आमग्रहणीकासघ्नञ्च । वैद्यचन्द्रिका ।

**चूलिका** । स्त्री । हस्तिकर्णमूले । अम. ।

**चूलिकालवणम् (क्षारः)** । क्ली । चुल्लिकालवणे । नकुल.१३अ. । वै.निघ.२भ.अर्श.चि. राजवल्लभरसे ।

**चूषणम्** । क्ली । चोषणे, पाने । रा.नि.व.२० ।

**चूषा** । स्त्री । चूषणे । कक्ष्यायां । काछ दड़ि । अम.

**चेउलपूगम्** । क्ली । कोङ्कणदेशख्याते पूगफलविशेषे । रा.नि.व.११ । See अकोटः ।

**चेतः** । क्ली । चित्ते । अम. ।

**चेत(न)की** । स्त्री । हिमालयजत्रिशिरहरीतक्याम् । प.मु. । भा. । See हरीतकी । जात्याम् । जाती फुल । रा.नि.व.१० ।

**चेतनः** । पुं । मनुष्ये । आत्मनि । रा.नि.व.१८ । स्त्री । त्रिशिरहरीतक्यां । भल्लातकवृक्षे । वै.निघ. ।

**चेतनाधिष्ठा(स्था)नम्** । क्ली । हृदये । च.शा.७अ. । [नि.व.११ ।

**चेतनिका** । स्त्री । चेतकीहरीतक्याम् । रा.

**चेतनीया** । स्त्री । ऋद्धौ । शक्ति । रा.नि.व.५ ।

**चेतिका** । क्ली । जातीपुष्पवृक्षे । वै.निघ. ।

**चेदारः** । पुं । सरटे । वै.निघ. ।

**चेलकल्कः** । स्त्री । गुवाकपुष्पत्वचि । सुपारि फुलेर बाकड़ा । च.द.वा.व्या.चि. । "व्याघ्रीवचाचेलकल्कः ॥"

**चेलान: (ल:)** । पुं । लतापणसे । তরমুজ । चिका. । गुणा:—गुरु मधुरं विष्टम्भि कफवातक-रञ्च । राज.३प. ।

**चेलीम.** । पुं । मत्स्यविशेषे । वै.निघ. । [श.च.।

**चेष्टक:** । पुं । तपस्विमत्स्ये । তপসি মাছ ।

**चेष्टा** । स्त्री । कायिकव्यापारे । आयासे । वाङ्म-नःशरीरप्रवृत्तौ । [नि.व.२० ।

**चेष्टानाश:** । पुं । इन्द्रियस्वापे । प्रलये । रा.

**चेष्टितम्** । क्ली । चेष्टायाम् । मे. । [व.२० ।

**चैतन्यम्** । क्ली । चेतनायाम् । प्रकृतौ । रा.नि.

**चैतसघृतम्** । क्ली । उन्मादे घृतविशेषे । पाठ:—"पञ्चमूल्यावकाश्मर्य्यौ व्याघ्रीरक्तत्रिवृद्वला: । मूर्व्वा शतावरी चेति क्वाथैर्द्विपलिकैरिमै:। कल्ध्या-कस्य चाङ्गेन तद्भृतं चैतसं स्मृतम् । सर्व्वचेतोवि-काराणां शमनं परमं मतम् ॥" क्वाथार्थ—কণ্ট-কারী, শালপাণি, বৃহতী, চাকুলে, গোক্ষুর, বেলছাল, শোণাছাল, পারুলছাল, গণিরি-ছাল, রাস্না, এরণ্ডমূল, তেউড়ী, বেলেড়া, মূর্ব্বা, শতমূলী, প্রত্যেকে ২ প. জল ৬৪ শ. শে. ১৬ শ. ঘৃত ৪ শ. । কল্কার্থ—রাখালশ-শা, ত্রিফলা, রেণুক, দেবদারু, এলবালুক, শালপাণী, তগরপাদুকা, হরিদ্রা, দারুহরি-দ্রা, অনন্তমূল, শ্যামালতা, প্রিয়ঙ্গু, নী-লোৎপল, এলাইচ, মঞ্জিষ্ঠা, দন্তী, দাড়িম, নাগেশ্বর, তালীশপত্র, মালতীফুল, বিড়ঙ্গ, চাকুলে, কুড়, রক্তচন্দন, পদ্মকাষ্ঠ প্রত্যেকে ২তো. ২মা. ৪র. । सा.कौ । भैष. । च.द. । भा. ।

**चैत्यद्रु: (म:) (वृक्ष:)** । पुं । अश्वत्थवृक्षे । प.मु. । रा.नि.व.११ । र.मा. ।

**चैत्र: (क:)** । पुं । चित्रानक्षत्रयुक्तमासे । अम. ।

**चैत्रवृक्ष:** । पुं । आम्रवृक्षे । वै.निघ. ।

**चोक(ख)म्** । क्ली । स्वर्णक्षीरीमूले । শেয়াল-কাঁটার মূল । "कटुपर्णी हैमवती हेमक्षीरी हि-मावती । हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्य-ते ॥" भा. ।

**चोचम्** । क्ली । त्वचि । গুড়ত্বক্ । र.मा. । (सर्व्वतोभद्ररसे) । कदलीफले । (सारसुन्दरी) । नारिकेले । भा. । तालफले । भ. । पत्रे । (तेजःप-त्र । चर्म्मणि । धरणि: वल्कले । लवङ्गे । द्वीप-खर्ज्जूरे । वै.निघ. । भुक्तफलाद्यवशेषे । চিবা, চোঁচা ।

**चोचकम्** । क्ली । वल्कले । श.र. ।

**चोदनी** । स्त्री । दुरालभायाम् । वै.निघ. ।

**चोर:** । पुं । चौरके । গেঁটেলা । क्रमाश्मघ्याम् । (हड्डचन्द्र:) । पारसीकयमान्याम् । वै.निघ.क्रमि. चि.निम्बादिचूर्णे । शिरोरोगविशेषे । लक्षणं— "हलैकदातिशरणं वमनं तथैव आध्मानघूर्णनरुज-ञ्च शिरोविधाय । य: श्वासमात्रपरिरच्चितजीवयो-गी रोगी वधूभिरुदित: स हि चोरनामा ॥" र-स.र.बाल चि. ।

**चोरक:** । पुं । पृक्कायाम् । प.मु. । चण्डायां । চোরকাঁচকি । वा.उ.६अ. । च.सू.४अ. । स्वना-मख्यातगन्धद्रव्ये । ग्रन्थिपर्णस्यैव भेदे, भटेउर इति नेपालदेशे, गाठिवना इति महाराष्ट्रादौ, चौरा इति पार्व्वतीयदेशादौ प्रसिद्धे । वा.उ.२अ. म-हालाक्षादितैले । गुणा: – तीव्रगन्ध: उष्ण: तिक्त: वातकफघ्न: नासारोगमुखरोगघ्न: अजीर्णक्रमिघ्न-श्च । रा.नि.व.१२ ।

**चोरकण्टक:** । पुं । शङ्खिनीवृक्षे । वै.निघ. ।

**चोरकपत्र:** । पुं । लाक्षावृक्षे । सु.सू.३८अ. ।

**चोरका** । स्त्री । चोरपुष्प्याम् । চোরহুলী । च.द.उन्मा.चि.महापैशाचघृते ।

**चोरपुष्पिका (ष्पी)** । स्त्री । शङ्खिन्याम् । চোরহুলী । श.र. । वा.व्या.महाराजप्रसारणीतैले ।

**चोरभण्टि(ण्ड)का** । स्त्री । वार्त्ताकौ । वै. निघ. ।

**चोरशुण्ठी** । स्त्री । श्वेतकिणिह्यां । वै.निघ. ।

**चोरस्नायु:** । स्त्री । श्वेतकाकजङ्घायाम् । काक-नासायाम् । रा.नि.व.३ ।

**चोरा** । स्त्री । चोरपुष्प्याम् । श.च. ।

**चोलकम्** । क्ली । वल्कले । श.र. ।

**चोलकी** । पुं । शङ्खिन्याम् । वै.निघ. । करीरे । नारङ्गे । किष्कुपर्व्वणि । मे. ।

**चोलण्डुक:** । पुं । शिरोवेष्टने । त्रिका. ।

**चोलीपूगम्** । क्ली । आन्ध्रदेशभवपूगफले । मं चोलीपोफल । कं चोलियअड़की । रा.नि.व.११ । See चक्कोटः । [याम् । भा. ।

**चोषः** । पुं । चूषणवत्पीड़ायाम् । पार्श्वज्वाला-

**चोष्यम्** । क्ली । अष्टविधान्नान्यतमे अन्ने । रा.नि. व.२० ।

**चौञ्ज(ण्ट्य,ण्ड्य)म्** । क्ली । जलाशयविशेषे । तस्य लक्षणं यथा—"शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकं । लतावितानसम्पन्नं चौञ्जमित्यभिधीयते ॥" भा. ।

**चौरः (कः)** । पुं । खर्परे । वै.निघ । ग्रन्थिपर्णे । গেঁটেলা । रा.नि व.२० । वै.निघ.अपस्मा. चि वचाद्यघृते ।

**चौरिकः** । पुं । चोरानामगन्धद्रव्ये । चोरपुष्प्याम् । চোরহুলী । च.द.वा.व्या.चि.अष्टादशशतीप्र.तैले ।

**चौरी** । स्त्री । ग्रन्थिपर्णवृक्षे । वै.निघ. ।

**च्यवनप्राशः** । पुं । राजयक्ष्माधिकारे । दशमूलं बला मुद्गपर्णी माषपर्णी पिप्पली कर्कटशृङ्गी भूम्यामलकी द्राक्षा जीवन्ती कुष्ठं अगुरु हरीतकी ऋद्धिः (अभावे बला) वृद्धिः (अभावे महाबला) जीवकः ऋषभकः (अभावे गुड़ूची वंशरोचना) शटी मुस्ता पुनर्नवा मेदा (अभावे अश्वगन्धा) क्षुद्रैला उत्पलं रक्तचन्दनं भूकुष्माण्डं वासामूलं काकोली काकजङ्घा प्र. १ प. पोटलीबद्धा आमलकी ५०० शतं, क्वाथार्थं जलं ६४ श. शे. १६ श. । अथ क्वाथं गालयेत् । आमलकानि निष्कुलीकृतपिष्टानि कारयेत् । आमलकभर्ज्जनार्थं तिलतैलं ६ प. घृतं ६ प. सिता ५० प. एकत्र पक्का लेहपाके सिद्धे शीतले च प्रक्षेपः मधु ६ प. वंशलोचना ४ प. पिप्पलीचूर्णं २ प. त्वगेलापत्रनागकेशराणां चूर्णं प्र. २ तो. । দশমূল, বেলেড়া, মুগানী, মাষাণী, পিপুল, কাঁকড়াশৃঙ্গী, ভুঁই আমলা, দ্রাক্ষা, জীবন্তী, কুড়, অগুরু, হরীতকী, ঋদ্ধি, বৃদ্ধি, জীবক, ঋষভক, শটী, মুতা, পুনর্নবা, মেদা, ছোট এলাচ, উৎপল, রক্তচন্দন, ভূমিকুষ্মাণ্ড, বাসকমূল, কাকোলী, কাকঠুঁটী প্রত্যেকে ১ প. পোটলীবদ্ধ আমলকী ৫০০ শত, ক্বাথার্থ জল ৬৪ শ. শে. ১৬ শ. । ছাঁকিয়া ক্বাথ লইবে। এবং পোটলীবদ্ধ আমলকী আঁটী ফেলাইয়া দিয়া শস্য বাটিয়া লইবে। আমলকী ভর্জনার্থ তিলতৈল ৬ প. ঘৃত ৬ প. মিছরি ৫০ প. একত্র পাক করিয়া লেহপাক সিদ্ধ হইলে এবং শীতল হইলে প্রক্ষেপ মধু ৬ প. বংশলোচন ৪প. পিপুল ২প. গুড়ত্বক্, এলাচ, তেজপত্র, নাগেশ্বর প্রত্যেকে চূর্ণ ২ তো. । च. । शा.कौ. । [भ.र. ।

**च्युतिः** । स्त्री । भगे । हे.च. । पायौ । মলদ্বার ।

**च्युरवः** । पुं । कफजकृमिभेदे । च.वि.७अ. ।

## छ

**छगः** । पुं । छागे । त्रिका. ।

**छगणः** । पुं, क्ली । करीषे । त्रिका. ।

**छगलः (कः)** । पुं, स्त्री । छागे । अम. । मे. ।

**छगला** । स्त्री । वृद्धदारकलतायाम् । বীজতাড়ক । भ.र. ।

**छगलाङ्घ्री (ण्डी)** । स्त्री । वृद्धदारकलतायाम् । र.मा. । सु.सू.३८अ. । छगलान्त्रीलतायाम् । ছাগলবেঁটে । अ.टी.र. ।

**छगलान्त्रिका (न्त्री)** । स्त्री । वृद्धदारकलतायाम् । रा.नि.व.३ । नीलवुह्नायाम् । प.मु. । सु.सू.३८अ. । गुणाः—कषाया तिक्ता स्वादुः रक्तपित्तघ्नी लघुः कफघ्नी वातवर्द्धनी संग्राहिणी च । सु.सू.४६अ. । [विश्व. ।

**छगली** । स्त्री । वृद्धदारके । प.मु. । छाग्याम् ।

**छच्छिका** । स्त्री । सनवनीततक्रे । ননি তুলিবার ঘোল । वै.निघ. ।

**छटाफलः** । पुं । नारिकेलवृक्षे । तालवृक्षे । वै.निघ. । गुवाकवृक्षे । त्रिका. ।

**छत्रम्** । क्ली । आतपत्रे । ছাতা । तत्र छत्त्यात-

**जलवायस:** । पुं । मलकाके । পানকৌড়ি । हे.च. ।

**जलवास: (सा:)** । पुं । विष्णुकन्दे । रा.नि.व.७ । गुण्डासिनीतृणे । रा.नि.व.८ । क्ली । उशीरे । रा.नि.व.१२ । [११ ।

**जलविक्रमा** । स्त्री । सल्लकीवृक्षे । रा नि.व.

**जलविड़ाल:** । पुं । जलमार्ज्जारे । উদ্বিড়াল । हारा. । [रा.नि.व.१४ ।

**जलविन्दुजा** । स्त्री । यावनालीशर्करायाम् ।

**जलविल्व:** । पुं । कर्कटे । पद्माङ्के । जलवल्कले । পানা । हारा. । [गाछ । हारा. ।

**जलवृश्चिक:** । पुं । इच्चाकमत्स्ये । এঁচলা

**जलवेतस:** । पुं । जलजातवेतसविशेषे । জলবেত । मं वञ्चालु । कं वैसियमरण्ण । प.मु. । गुणा:—तिक्तशीतल: व्रणशोधन: कफरक्तपित्तघ्न: संग्राही कषायी रचोघ्नश्च । रा.नि.व.९ ।

**जलव्यध:** । पुं । कङ्कोटमत्स्यभेदे । কাঁকিলা মাছ বা গান্দাড়া । हारा. ।

**जलव्याल:** । पुं । जलसर्पे । अम. ।

**जलशिरीष: (षिका)** । पुं, स्त्री । शिरीषभेदे । हिं टिंटिनी । "त्रिदोषविषकुष्ठार्शोहरी वारिशिरीषिका ।" भा. ।

**जलशुक्ति:** । स्त्री । शम्बूके । শামুক, ঝিণুক। जलसिंपी इति च ख्याते । गुणा:—"कटु: स्निग्धा दीपनी गुल्मशूलविषदोषहरी रुच्या पाचनी बल्या च ।" रा.नि.व.१३ ।

**जलशुचि:** । पुं । शृङ्गाटके । পানিফল ।

**जलशूकम्** । क्ली । शैवाले । हे.च. ।

**जलशूकर:** । पुं । शिशुमारे । শুশুক । हारा. । कुम्भीरे । हे.च. । [—श्यामाकवत् ।

**जलश्यामाक:** । पुं । तृणधान्यविशेषे । गुणा:

**जलसर्पिणी** । स्त्री । जलौकायाम् । জোঁক। हे.च. । [शेन जलं हृत्वा वसति । वा.चि. ।

**जलसन्त्रास:** । पुं । कुक्कुरदंशजरोगविशेषे ।

**जलसम्भव:** । पुं । जलवेतसे । रा.नि.व.९ ।

**जलसूकर:** । पुं । कुम्भीरे । वनसूकरे । वै.निघ. ।

**जलसूचि:** । पुं । क्रौञ्चपक्षिणि । कङ्कोटमत्स्ये । जटा. । शृङ्गाटके । शिशुमारे । मे. । काके । हे.च. । स्त्री । जलौकायाम् । জোঁক ।

**जलस्था** । स्त्री । गण्डदूर्वायां । रा.नि.व.८ ।

**जलहास:** । पुं । समुद्रफेने । त्रिका. । [श.र. ।

**जलाका** । स्त्री । जलौकायाम् । জোঁক ।

**जलाखु:** । पुं । जलमूषके । त्रिका. ।

**जलाख्या** । स्त्री । जलमधूकवृक्षे । वै.निघ. ।

**जलाञ्चलम्** । क्ली । शैवाले । শেওলা । मे. ।

**जलाटन:** । पुं । कङ्कपक्षिणि । কাঁক পাখী । स्त्री (नी) । जलौकायाम् । मे. । रा. ।

**जलाण्टक:** । पुं । शिशुमारे । नक्रराजे । हा-

**जलाण्डकम्** । क्ली । रोहितादिशिशौ । মাছের পোণা । हारा. ।

**जलात्मिका** । स्त्री । जलौकायाम् । श.र. ।

**जलाधारम्** । क्ली, पुं । पीतोशीरे । वै निघ. । जलाशये । अम. ।

**जलाबु(म्बु)का** । स्त्री । जलौकायां । वै.निघ. ।

**जलामोदम्** । क्ली । उशीरे । रा.नि.व.१२ ।

**जलायु(वु)का** । स्त्री । जलमस्या आयुरिति जलौकायाम् । জোঁক । मं जलू । सु.सू.१३अ. । सा द्वादशविधा । सविषा: षट्, तावत्य एव निर्व्विषा: । तत्र सविषा: कृष्णा कर्व्वुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तासु अञ्जनचूर्णवर्णा पृथुशिरा: कृष्णा । वर्म्मिमत्स्यवदायता छिन्नोन्नतकुक्षि: कर्व्वुरा । रोमशा महापार्श्वा कृष्णमुखी अलगर्द्दा । इन्द्रायुधवदूर्द्धराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृति: अणुमुखी गोचन्दनेति । आभिर्दष्टे ज्वरादिर्भवति । निर्व्विषा:—कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति । तत्र मन:शिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला । किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिकाकृतिवर्णा अनिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा

पुण्डरीकमुखी। स्निग्धा पद्मपत्रवर्णाऽदशाङ्गुलप्रमाणा सावरिका पशव्यें। सु.सू.१३अ.।

**जलार्द्र: (र्द्रा)** । पुं, स्त्री। आर्द्रवस्त्रे। ভিজে কাপড়। त्रिका.। हे.च.। आर्द्रतालवृन्ते। माघ.।

**जलार्व्वुद:** । पुं। वातकफजनेत्ररोगे। "जलबुद्बुदवद्वातकफाद्वर्त्मनि जलार्व्वुदम्।" वा.उ.२१अ.।

**जलालु:** । पुं। पानीयालुके। रा.नि.व.७।

**जलालुकम्** । क्ली। पद्मकन्दे। भा.पू.१भ.शाक व.। [अ.टी.भ.।

**जलालु(लो)का** । स्त्री। जलौकायाम्। श.र.।

**जलाशय:** । पुं। सरोवरे। शृङ्गाटके। क्ली। उशीरे। अम.। लामज्जके। গন্ধ বেণা। रा.नि.व.८। स्त्री। गुण्डालायाम्। रा.नि.व.५।

**जलाश्रय:** । पुं। शृङ्गाटके। रा.नि.व.७। गुण्डतृणे। रा.नि.व.८। ईहामृगे। रा.नि.व.१९। स्त्री। गर्म्मोटिकातृणे शूलीतृणे। रा.नि.व.८। क्ली। लामज्जके। रा.नि.व.१२।

**जलाष्ठीला** । स्त्री। पुष्करिण्याम्। हारा.।

**जलाह्व(य)म्** । क्ली। बालके। वाला। उत्पले। শুঁদি ফুল। रा.नि.व.१०। [श.र.।

**जलाच्ची** । स्त्री। जलपिप्पल्याम्। পাণিমগা।

**जलि: (का)** । स्त्री। जलौकायां। अ.टी.भ.।

**जलु(लू)का** । स्त्री। जलौकायाम्। श.र.। हे.च.। चर्म्मचटिकायाम्। वा.उ.६अ.।

**जलेच्छया** । स्त्री। हस्तिशुण्डीवृत्ते। श.र.।

**जलेजात(रुह)म्** । क्ली। पद्मे। श.र.।

**जलेरुहा** । स्त्री। कुटुम्बिनीक्षुपे। रा.नि.व.५।

**जलेवाह:** । पुं। जलकुक्कुटे। वै.निघ.।

**जलेशय:** । पुं। जलचारिमत्स्यादौ।

**जलोका** । स्त्री। जलायुकायां। हारा.। अम.।

**जलोदर:** । पुं, क्ली। तन्नामकोदररोगभेदे। জল উদরী। निदानलक्षणं यथा—"य: स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ़:। पिवेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि। स्नेहोपलिप्तेष्वथवापि तेषूदकोदरं पूर्व्ववदभ्युपैति। स्निग्धं महत्तत्परिवृत्तनाभि समाततं पूर्णमिवाम्बुना च। यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्॥ जन्मनैवोदरं सर्व्वं प्राय: कृच्छ्रतमं मतं। बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम्॥" इति। मा.नि.।

**जलोदरारिरस:** । पुं। जलोदराधिकारे रस:। रसगन्धकौ प्र. २ तो. (मतान्तरे गन्धक: ४ तो.) मन:शिला हरिद्रा जयपालबीजं त्रिफला त्रिकटु चित्रकमूलं एषां प्रति १ तो. दन्तीरसेन स्नुहीक्षीरेण (সিজুর আঠা) भृङ्गराजरसेन च पृथक् ७ भावयित्वा संशोष्य च वटीं कुर्य्यात्। मात्रा २ र.।

**जलोद्भव:** । पुं। शङ्खे। শাঁক। वै.निघ.। स्त्री। लघुब्राह्मीशाके। कुङ्कुमशाली। रा.नि.व.५।१६।

**जलोद्भूता** । स्त्री। गुण्डालायाम्। रा.नि.व.५।

**जलोरगी** । स्त्री। जलौकायाम्। জোঁক। अ.टी.।

**जलोलूका** । स्त्री। पद्मबीजे। रा.नि.व.१०।

**जलौक:** । पुं। जलवेतसे। वै.निघ.। स्त्री (का)। जलायुकायाम्। हारा.।

**जलौकाविधि:** । पुं। तया रक्तमोक्षणकार्य्ये। জোঁক ধরান। "अथ जलौकावसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुज: स्यात्। गृहीताश्च ता: सर्षपरजनीकल्कोदकप्रदिग्धगात्री: सलिलसरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत्। सूक्ष्मशुक्लार्द्रपिचुप्लोतावच्छन्नां कृत्वा मुखमपावृणुयादगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्याच्छस्त्रपदानि वा कुर्व्वीत। यद्येवमपि न गृह्णीयात् तदान्यां ग्राहयेत्। यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नमय्य च स्कन्धं तदा जानीयात् गृह्णातीति गृह्णन्तीञ्चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च।" इत्यादि। तस्य गुणा:—"शीताधिवासा मधुरा जलौका वारिसम्भवा। तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने॥" सु.सू.१३अ.।

**जलौदनम्** । क्ली। अजलान्ने। भा.कुष्ठ-चि.।

**जवन:** । पुं। अश्वे। शीकारिहरिणे। रा.नि.व.१९।

**जवनाल:** । पुं, क्ली। धान्यविशेषे। জনার।

...जगुणाः—स्वादु शीतलं वातलं कफपित्त-घ्नञ्च। राज.।

**जवली**। स्त्री। कषायफलवृक्षे। জওয়ার। तस्याः फलगुणाः—"कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम्। हृद्यं सुगन्धि विशदं जवलीफलमुच्यते॥" सु.।

**जवसम्**। क्ली। तृणे। घासे। श.र.।

**जवसाह्वा**। स्त्री। यमान्याम्। मद.व.२।

**जवा**। स्त्री। ओड्रपुष्पवृक्षे। জবাফুলের গাছ। रा.नि.व.१०। घृतभर्ज्जितजवापुष्पम् आर्त्तवकरम्। च.द.।

**जवादि**। क्ली। गन्धराजे। গন্ধরাজ, খাটাশী। मं जवादीकस्तूरी। गुणाः—स्निग्धमुष्णं सुखकरं वातहितञ्च। तल्लक्षणं—"जवादि नीलं सुस्निग्धमीषत्पीतं सुगन्धिदं। आतपे बहलामोदं राज्ञां योग्यं न चान्यथा॥" रा.नि.व.१२।

**जवानी**। स्त्री। यमान्याम्। मद.व.२।

**जवापुष्पम्**। क्ली। ओड्रपुष्पे। জবা ফুল। श.र.।

**जवाह्वा**। स्त्री। यमान्याम्। मद.व.२।

**जविनः**। पुं। विलेशयमृगविशेषे, कोकडमृगे। रा.नि.व.१९।

**जवी** (इन्)। पुं। अश्वे। उष्ट्रे। रा.नि.व.१९।

**जसदम्**। क्ली। यशदे। দস্তা। वै.निघ.।

**जहा**। स्त्री। मुण्डितिकायां। মুণ্ডীরী। श.च.।

**जक्षणम्**। क्ली। भक्षणे। रा.नि.व.२०।

**जक्ष्मः** (क्ष्मा (न्))। पुं। क्षयरोगे। যক্ষ্মা রোগ। भ.टी.भ.। See यक्ष्मा।

**जागतः**। पुं। सोमलताभेदे। सु.चि.२९अ.।

**जागरः** (णम्) (री)। पुं, क्ली, स्त्री। निद्राभावे। জাগিয়া থাকা। अम.।

**जागुडम्**। क्ली। कुङ्कुमे। रा.नि.व.१२।

**जावनी**। स्त्री। ऊरी। त्रिका.।

**जाङ्गमद्रव्यम्**। क्ली। जङ्गमजातद्रव्यगणेषु, मधुगोमूत्रपित्तवसामज्जासृङ्मांसविण्मूत्रचर्म्मरेतोऽस्थिस्नायुशृङ्गनखखुरकेशरोचनालोमसु। च.सू.१अ.।

**जाङ्गलः**। पुं। कपिञ्जलपक्षिणि। গৌর তিতির পাখী। मे.। मरुप्रायवातलदेशे। মরু-প্রায় বেতো দেশ। "मरुप्रायस्तु यो देशः स चोक्तो जाङ्गलाभिधः।" रा.नि.व.२। "अल्पोदकोऽल्पवृक्षश्च पित्तरक्तामयान्वितः। ज्ञातव्यो जाङ्गलो देशः॥" गुणाः—वातपित्तकरः उष्णः रूक्षश्च। राज.। अपिच—"आकाशशुभ्र उच्चश्च ततश्च स्वल्पपादपः। शमीकरीरविल्वार्कपीलुकर्कन्धुसङ्कुलः। हरिणैणर्क्षपृषतगोकर्णखरसङ्कुलः। सुस्वादुफलवान्देशो वातलो जाङ्गलः स्मृतः॥" भा.। तज्जलगुणाः—स्वादु त्रिदोषघ्नं रुच्यं पथ्यम् आयुर्बलवीर्य्यपुष्टिकान्तिकरञ्च। रा.नि.व.१४। स्थलजपशुवर्गे। सोऽष्टविधः यथा—जङ्घाला विष्किराः प्रतुदा गुहाशयाः प्रसहाः पर्णमृगा विलेशया ग्राम्याश्च। तत्र जङ्घालविष्किरौ प्रधानतमौ तावेणहरिणर्क्षकुरङ्गकरालकृतमालशरभश्वदंष्ट्रापृषतचारुष्करमृगमातृकाप्रभृतयो जङ्घालाः कषाया मधुरा लघवश्च। "शशलावकवाताटा गोधा हरिणकूटकाः। किङ्कराद्यास्तथाचान्ये तित्तिराद्याश्च कूर्चकाः। भारद्वाजास्तथा श्येना मूषका वरवारणाः। इत्येते जाङ्गला जीवा ये जलेन विना स्थिताः॥" अत्रि.२०अ.। क्ली। मांसे। रा.नि.व.१७।

**जाङ्गलमांसम्**। क्ली। शिखिखगादिजन्तुमांसे। रा.नि.व.१७।

**जाङ्गलयकृत्**। क्ली। जाङ्गलपशुयकृति। तच्च रक्तपित्तहरम्। वा.चि.२अ.। [लाकुशी। मे.।

**जाङ्गला** (ली)। स्त्री। शुकशिम्ब्याम्। आ-

**जाङ्गुडम्**। क्ली। कुङ्कुमे। त्रिका.।

**जाङ्गुलिः**। पुं। विषवैद्ये। সাপুড়ে। श.र.। (ली) स्त्री। विषविद्यायाम्। हे.च.।

**जाङ्घिकः** (काह्वयः)। पुं। शीकारिमृगे। मे.। उष्ट्रे। रा.नि.व.१९। त्रि। जङ्घाजीविनि।

**जाजी**। स्त्री। जीरके। भा.म.४भ.प्रद.चि.। "दध्ना सौवर्चलं जाजी।"

**जाटलिः**। पुं। पटोललतायाम्। अम.।

**जाठरः**। पुं। जठरानले। वै.निघ.।

**जाठरग्रन्थिः**। पुं। गुल्मरोगे। रा.नि.व.२०।

**जाद्यम्**। क्ली। मन्दजडतायाम्। रा.नि.व.२०।

**जाम्बिरिः** । पुं । जम्बीरवृक्षे । গোঁড়া নেবুর গাছ । रा.नि.व.११ ।

**जातकध्वनिः** । पुं । जलौकायाम् । वै.निघ.।

**जातकर्म्म** । क्ली । शिशौ भूमिष्ठे कर्त्तव्ये कर्म्मणि । नाड़ीच्छेद । सूतिकापूजादौ ।

**जातघ्नी** । स्त्री । पुत्रघ्नीनामयोनिदोषे । वा.उ. ३३ अ । See पुत्रघ्नी । [जूरे । अम. ।

**जातरूपम्** । क्ली । सुवर्णे । रा.नि.व.१३ । धु-

**जातरूपप्रभम्** । क्ली । हरिताले । वै.निघ. ।

**जातवेदाः** । पुं । अग्नौ । चित्रकवृक्षे । अम. ।

**जातसारा** । स्त्री । जिङ्गिन्याम् । वै.निघ. ।

**जातापत्या** । स्त्री । प्रसूतायां स्त्रियि । अम.।

**जातिः** । स्त्री । जन्मनि । आमलक्याम् । मालतीपुष्पलतायाम् । जातीफले । मे. । च.चि.३अ. गुञ्जारोचन्याम् । काम्पिल्लके । কমলাগুঁড়ি । विश्व. । रोगसम्प्राप्तौ । मा.नि. । जातीपुष्पवृक्षे । च.द.वा.व्या.चि. ।

**जातिकोश(ष)म्** । क्ली । जातीपत्र्यां । जयित्री । जातीफले । भा. । सु.सू.४६अ. । हे.च. ।

**जाति(ती)कोशा (षी)** । स्त्री । जातीपत्राम् । जयित्री । रा.नि.व.१२ । वै.निघ.२भ. सुदर्शनचूर्णे ।

**जातिजम्** । क्ली । जातीफले । वै.निघ. ।

**जाति(ती)पत्र(क)म्** । क्ली । जातीफले । "जातीपत्रसुपत्रपत्रकयुतं ।" भा.उ.वाजी.चि. । वै.निघ.२भ.वा.व्या.चि.एरण्डपाके । जातीवृक्षपत्रे । চামেলীর পাতা । रस.र.बाल.चि. ।

**जातिपत्रिका (त्री) (र्णी)** । स्त्री । जातीफलत्वचि । जयित्री । हिं जावत्री । कं जाइपत्री । गुणाः— कटुतिक्तसुरभिः कफजाड्यहरी मुखवैशद्यजननी च । रा.नि.व.१२ । दुर्गन्धहरी । राज. । "जातीफलस्य त्वक् प्रोक्ता जातीपत्री भिषग्वरैः । जातीपत्री लघुः स्वादुः कटूष्णा रुचिवर्णकृत् । कफकासवमिश्वासतृष्णाकृमिविषापहा ॥" भा. ।

**(ती)प्रबालः** । पुं । जातिकिसलये । পাতা । च.सू.४अ. ।

**जातिफलम्** । क्ली । जातीफले । জায়ফল । हे.च. ।

**जाति(ती)फलत्वक्** । स्त्री । जातीपत्राम् । जयित्री । वै.निघ. । [ल । वै.निघ. ।

**जाति(ती)रसः** । पुं । रक्तबोले । निशाप-

**जाति(ती)शस्यम्** । क्ली । जातीफले । জায়ফল । रा.नि.व.१२ । वै.निघ.२भ.अतिसा.चि. मोचरसपुटपाके । [नि.व.१२ ।

**जाति(ती)सारम्** । क्ली । जातीफले । रा.

**जाति(ती)सुतः** । पुं । जातीफले । वै.निघ.।

**जातिहिङ्गुलकम्** । क्ली । हिङ्गुले । वै.निघ.।

**जाती** । स्त्री । (Jasminum Grandiflorum.) स्वनामख्यातपुष्पवृक्षे । জাতি বা চামেলী ফুলের গাছ । हिं चमेली, स्वर्णजाती । म जाइ । कं जाजि । गुणाः—शीता तिक्ता कफघ्नी मुखपाकघ्नी च । तत्कुसुमं नेत्ररोगघ्नं व्रणविस्फोटकघ्नं कुष्ठघ्नञ्च । रा.नि.व.१० । "जातीयुगं तिक्तमुष्णं तुवरं लघु दोषजित् । शिरोऽक्षिमुखदन्तार्त्तिविषकुष्ठानिलास्रजित् ॥" भा. । मालत्याम् । सु.सू.३८अ. । जातीफलवृक्षे । वै.निघ. ।

**जातीकन्दः** । पुं । जातीमूले । सु.सू.मिश्र.अ.।

**जातीको(श)षम्** । क्ली । जातीफले । हे.च.।

**जातीकोषफलम्** । क्ली । जातीपत्राम् जातीफलं च । জৈত্রী, জায়ফল । वै.निघ.अजीर्णचि.वह्निरसे । [निघ. ।

**जातीजातम्** । क्ली । जातीकोषफले । वै.

**जातीतैलम्** । क्ली । कर्णरोगाधिकारे । "जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ।" कटुतैलं ४ श. जातीपत्ररसः १६ श. (वृद्धोपदेशात्, कल्कार्थं जातीपत्रं १ श, । सा.कौ. ।

**जातीदलम्** । क्ली । जातीकोषे । জৈত্রী । वै.निघ.२भ.रक्तपि.चि.कर्पूरादिचूर्णे । जातीपत्रे ।

**जातीद्वयम्** । क्ली । जातीकोषफले । জায়ফল, জয়িত্রী । जीवकद्वयमिति तालीशादिचूर्णे वृद्धोपदेशः । [कोषे । भा.उ.वाजीकरणे ।

**जातीपत्रिका (त्री) (र्णी)** । स्त्री । जाती-

**जातीफलम्** । क्ली । स्वनामख्यातसुगन्धफले । জায়ফল। "जातीफलं समब्दञ्च स्निग्धं गुरु च शस्यते । लघुकं शब्दहीनञ्च रुग्वाङ्गमतिनिन्दितम् ॥" भैष.। गुणाः—तिक्तं कटु कफघ्नं लघु तृष्णाघ्नं मुखक्लेददौर्गन्ध्यघ्नञ्च । सु.सू.४६अ.। कषायोष्णं कटु कण्ठामयघ्नं वातातिसारमेहघ्नं वृष्यं लघु दीपनञ्च । रा.नि.व.१२ । तृष्णाशूलघ्नम् । राज. । रसे तिक्तं तीक्ष्णं रोचनं ग्राहि स्वरकरं श्लेष्मवातमुखवैरस्यमलदौर्गन्ध्यघ्नं क्रमिकासवमिश्वासशोषपीनसहृद्रोगहरञ्च । भा. । "तैलं जातीफलोद्भूतं समुत्तेजनमग्निदम् । जीर्णातिसारशमनम् आध्मानारोचनशूलहृत् । आमवातहरं बल्यं दन्तवेष्टव्रणार्त्तिनुत् ॥" अचि. । जातीकोषवद्गुणम् । सु.सू ४६अ. ।

**जातीफला** । स्त्री । आमलकीवृत्ते । আমলা গাছ । रा.नि.व.११ ।

**जातीफलादिवटी** । स्त्री । अजीर्णे वटी । जातीफलं लवङ्गं पिप्पली निर्गुण्डी (निशिन्दा) विषं शुण्ठी धुस्तूरबीजं हिङ्गुलं टङ्कणचारः (সোহাগার খই) एषां प्र. समभागः जम्बीररसेन वटी कार्य्या । मा. २।३ रक्तिः । र.सा.सं. ।

**जातीफलाद्या (वटिका)** । स्त्री । ग्रहण्यधिकारे । शुद्धपारदः ४मा. गन्धकः ४मा. कज्जली कार्य्या । जातीफलं मोचरसः मुस्तकं टङ्कणचारः (সোহাগার খই) अतिविषा जीरकं मरिचं एषां प्र. ४ मा. विषं १ मा. एकत्र सचूर्ण्य, वंश आम्रः कच्चटः(কাঁচড়া) प्रसारणी (গন্ধভাদলি) निर्गुण्डी विजया (সিদ্ধি) जम्बू (জাম) जयन्ती (জন্তি) दाड़िमः केशराजः(কেশুতে) पाठा(আকনাদি) भृङ्गराजः एषां पत्ररसैर्भावयित्वा सम्मर्द्य च कोलास्थिमात्रा वटी कार्य्या । अन्या यथा—जातीफलं टङ्कणचारः अभ्रं धुस्तूरबीजं एषां प्र. १ तो. अहिफेनं २ तो. प्रसारणीरसेन सम्मर्द्य वटी चणकाभा कार्य्या । प्रथमे अभ्रकस्यापि माषचतुष्टयं दीयते । र.सा.सं. ।

**जातुकम्** । क्ली । हिङ्गौ । श.च. ।

**जात्यन्धः** । त्रि । जन्मान्धे । জন্মকাণা ।

**जात्युत्पलम्** । क्ली । श्वेतरक्तकमले । वै.निघ. ।

**जानु** । क्ली । जङ्घोरुमध्यभागे, चक्रिकायां, चक्रीवद्भागे वा । হাঁটু । "जान्वष्ठीवच्च चक्रिका ।" रा.नि.व.१८ । [হাড় । तै च ई । च.शा.७अ. ।

**जान्वस्थि** । क्ली । जानुदेशास्थनि । হাঁটুর

**जामाता** । पुं । गजपिप्पल्याम् । प.मु. । सूर्य्यावर्त्ते । হুড়হুড়ে । मे. । भैष.अम्लपि.चि.सुधावल्यां ।

**जाम्बवम्** । क्ली । स्वर्णे । रा.नि.व.१३ । जम्बूफले । জাম ফল । अम. । पुं । जम्ब्वासवे । জামের আসব । "जाम्बवः चौद्रसहितो जम्बूरसगुड़ोद्भवः ।" तोड़.वृद्धसु. । गुणाः—"जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः ।" सु. ।

**जाम्बवती (वी)** । स्त्री । नागदमन्याम् । নাগদনা । रा.नि.व.५ ।

**जाम्बवौष्ठम्** । क्ली । चततिशोधनशलाकाविशेषे । "जम्बूफलाग्रसदृशमुखायाक्लृप्तपाषाणरचितवर्त्तौ ।" सु.सू.५अ. ।

**जाम्बौष्ठम्** । क्ली । जाम्बवौष्ठे । सु.चि.१९अ. ।

**जाम्बूनदम्** । क्ली । सुवर्णे । रा.नि.व.१३ । धुस्तूरे । रा.नि.व.१० । [श्विचन्दने । अम. ।

**जायकम्** । क्ली । कलिया इति ख्यातपीतसुग-

**जाया** । स्त्री । शमीवृक्षे । वै.निघ.२भ.कर्णकज्व.चि. ।

**जायाघ्नम्** । क्ली । तिलकालके । वै.निघ. ।

**जायानुजीवी** (इन्) । बकपक्षिणि । मे. ।

**जायुः** । पुं । औषधे । रा.नि.व.२० ।

**जारगर्भा** । स्त्री । क्षुद्ररोगविशेषे । वै.निघ. ।

**जारणः** । पुं । कासमर्दक्षुपे । কালকাসন্দা । रा.नि.व.४ । जीरके । वै.निघ. । स्त्री । स्थूलजीरके । মোটা জীরে । रा.नि.व.६ ।

**जारणबीजम्** । क्ली । रसजारणार्थं बीजद्रव्यभेदे । र.चि. । [ঝাড়ি । मे. ।

**जारी** । स्त्री । আড়ীতিখ্যাতে औषधविशेषे ।

**जालः** । पुं । कदम्बवृक्षे । मे. । (कः) शुक्लगतनेत्ररोगभेदे । See जालसंज्ञितः । सु.उ.४अ. । क्ली । लोचकपिण्डे । शरीरस्थजालवत् पदार्थे । तानि च शिरास्नायुस्थिमांसेभ्यः सम्भवन्ति । तथा

प्रत्येकं चत्वारि चत्वारि संख्यया षोड़श भवन्ति। भा.। घारके। जालि कुणी। मे.।

**जालकम्।** क्ली। कुष्माण्डादतिक्षुद्रफले। जालि। रा.मु.। कुटुम्बिनीक्षुपे। वै.निघ.। मो चकफले। मे.। [हे.च.।

**जालकारकः।** पुं। मर्कटे। माकड़शा।

**जालकिनी।** स्त्री। मेष्याम्। त्रिका.।

**जालगर्द्दभः।** पुं। क्षुद्ररोगविशेषे। अग्नि-बात। तस्य लक्षणं यथा—"विसर्पवत्सर्पति यो दाहज्वरकरस्तनुः। अपाकः स्वयथुः पित्तात् ज्ञेयो जालगर्द्दभः सु.।

**जालपात्।** पुं। हंसे। त्रिका.।

**जालमोटा।** स्त्री। शुक्लयूथिकायां। वै.निघ.।

**जालवर्व्वूरकः।** पुं। वर्व्वूरकवृक्षभेदे। बाब्ला विशेष। पुलड़, जालि। गुणाः—वृक्ष वातरोगघ्नः पित्तकृत्कषायोष्णः कफहृत् दाहकरश्च। रा.नि.व.८। [निघ.।

**जालवव्वूलिका।** स्त्री। वव्वूलविशेषे। वै.

**जालविन्दुजा।** स्त्री। यावनालीशर्करायां। रा.नि.व.१४।

**जालसंज्ञकः।** पुं। शुक्लगतनेत्ररोगविशेषे। चक्षे जालि पड़ा। लक्षणं—"जालाभः कठिनशिरोमहान् सरक्तः सन्तानः स्मृत इह जालसंज्ञितस्तु।" सु.उ.४अ.।

**जालक्षीरम्।** क्ली। तन्नामकवृक्षस्य क्षीररूपविषे। सु.कल्प.२अ.। See क्षीरविषं।

**जालिः।** स्त्री। खाद्यद्रव्यविशेषे। जालि। हिंजारी। "आममाम्रफलं पिष्टं राजिकालवणान्वितं। भृष्टहिङ्गुयुतं पूतं घोलितं जालिरुच्यते॥" गुणाः—जिह्वाकण्डूघ्नी कण्ठशोधनी रोचनी दीपनी च। भा.। [शा। हे.च.।

**जालिकः (कारः)।** पुं। मर्कटे। माकड़-

**जालिका (की)।** स्त्री। कोषातक्यां। झिङा। रा.नि.व.३। जलौकायां। लौहं। वस्त्रभिदि। मे.।

**जालिनी।** स्त्री। महाकोषातक्यां। झिङा। रा.नि.व.३। वै.निघ.कामला-चि.। घोषालतायाम्। घोषालता। र.मा.। सु.चि.१७अ.। देवदाल्याम्। দেয়াতাড়া। दारुहरिद्रायाम्। वै.निघ.। प्रमेहपिटिकाभेदे। लक्षणं—"जालिनी तीव्रदाहा तु मांसजालसमावृता।" सु.नि.६अ.। असाध्यलूताभेदे। सु.कल्प.८अ.। See लूता।

**जालिनीफलम्।** क्ली। घोषाफले। घोषाफलेर बीचि वा झिंङेर बीचि। च.द.पाण्डु-चि.। गुणाः—शिरोरोगपाण्डुरोगहरं वमकरञ्च। अत्रि.।

**जाली।** स्त्री। पटोललतायाम्। रा.नि.व.७। घोषायाम्। प.मु.। ज्योत्स्नायाम्। झिङा। अम.।

**जावकः।** पुं। अलक्तके। वै.निघ.।

**जापकम्।** क्ली। कालीयचन्दने। पीत चन्दन। अ.टी.सा.।

**जाहकः।** पुं। कृष्णसरटे। काल गिरगिट्। रा.नि.व.१९। गोनासमर्पे। जलौकायाम्। वै.निघ.। विडाले। श.र.। त्रिका.। घोंङ्गे। घोग्। मे.। [कायां। जोंक। हारा.।

**जाहकध्वनिः।** पुं। घोंङ्गे। घोग। जलौ-

**जिगतुः।** पुं। उच्छ्वासे। प्राणवायौ। उणा.।

**जिघत्सा।** स्त्री। क्षुधायाम्। हे.च.।

**जिङ्गिनी।** स्त्री। गुड़मञ्जनिकायाम्, गुलदुली इति ख्याता। भैष.योनिव्यापत्चि.। सु.सू. लोध्रादि.। "जिङ्गिनी कृष्णशाल्मली।" वा.सू.१५ अ.रोध्रादिः, च.वि.८अ.। गुणाः—"मधुरा शीता कषाया योनिशोधनी। कटुका व्रणहृद्रोगवातातीसारहृत्पटुः। तमालशालवद्वेद्यो दाहविस्फोटहृत् पुनः॥" भा.वटादिः।

**जिङ्गिः (ङ्गी)।** स्त्री। मञ्जिष्ठायाम्। प.मु. कन्दर्पसारतैले। च.द.मेह.चि.। गुड़मञ्जनिकायाम्। सु.सू.३८अ.।

**जिज्ञासा।** स्त्री। परीक्षायां। यथा—"भेषजपरीक्षोत्तरकालमुपदेक्ष्यते।" च.वि.८अ.।

**जितेन्द्रियाह्वः।** पुं। कामवृद्धिनामक्षुपे। रा.नि.व.४।

**जिनयोनिः।** पु। हरिणे। श.र.।

**जिभमोहनः।** पुं। भेके। श.र.।

**जिभग्रस्थ:** । पुं । खदिरे । रा.नि.व.८ ।

**जिम्भा (म्भिका)** । स्त्री । जृम्भिकायाम् । हाई । रा.नि.व.२० ।

**जिवाजिव:** । पुं । जीवञ्जीवपक्षिणि । अ.र. ।

**जिव्रि:** । पुं । पक्षिणि । उणा. ।

**जिह्मम्** । क्ली । तगरपादुके । प.मु. । रा.नि. व.१० । ज.द.१२अ. । पिण्डीतगरे । वै.निघ. । पुं स्त्री । जिह्वायाम् । भटी.भ. ।

**जिह्मग:** । पुं । सर्पे । जिह्वकसन्निपाते ।

**जिह्वक:** । पुं । तन्नामकसन्निपातज्वरविशेषे । लक्षणम्—"श्वसनकासपरितापविह्वल: कठिनकण्टकवतोऽतिजिह्वक: । बधिरमूकबलहीनलक्षणो भवति कष्टतरसाध्य एव वै ।" वै.निघ. । अस्य तन्त्रान्तरीक्तलक्षणं भावप्रकाशे द्रष्टव्यम् ।

**जिह्वा** । स्त्री । रसनेन्द्रिये । जिभ् । रा.नि.व. १८ सा च उदरे पच्यमानकफशोणितमांससारभूता । सु.शा.४अ. । तत्परीक्षा यथा—वातेन—शाकपत्रनिभा रुक्षा स्फुटना च । पित्तेन—रक्ता श्यावा च । कफेन - लिप्ता आर्द्रा धवला च । त्रिदोषेण—परिदग्धा खरस्पर्शा कृष्णा च । दोषद्वयाधिक्येन – दोषद्वितयलक्षणा च । भा. ।

**जिह्वानिर्लेखनम्** । क्ली । जिह्वामलहरदशाङ्गुलकाष्ठिकायाम् । चियड़ि जिह्वछोला इति लोके । "जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च । तन्मलापहरं शस्तं मृदुश्लक्ष्णं दशाङ्गुलम् ॥" सु.चि.२४अ. । "निहन्ति वक्त्रवैरस्यं जिह्वादन्ताश्रितं मलम् । आरोग्यं रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥" राज.१प. ।

**जिह्वाप:** । पुं । विड़ाले । कुक्कुरे । भल्लूके । अ र. । चित्रकव्याघ्रे । विश्व. ।

**जिह्वाप्रबन्ध:** । पुं । जिह्वामूले । वा.उ.२१अ. ।

**जिह्वामलम्** । क्ली । रसनामले । त्रिका. ।

**जिह्वारद:** । पुं । पक्षिणि । हारा. ।

**जिह्वारोग:** । पुं । जिह्वागतरोगे । जिबेर घा प्रभृति । नि. । स पञ्चधा—"वातज: पित्तजश्चापि कफजोऽलाससंज्ञक: । उपजिह्विका च गदा जिह्वाया: पञ्च कीर्त्तिता: ॥ जिह्वानिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा । पित्तात् सदाहैरुपचीयते च दीर्घै: सरक्तैरपि कण्टकैश्च । कफेन गुर्व्वी बहुलाचिता च मांसोच्छ्रयै: शाल्मलिकण्टकाभै: । जिह्वातले य: श्वयथु: प्रगाढ़: सोऽलाससंज्ञ: कफरक्तमूर्त्ति: ॥" इत्यादि । मा.नि. । अधिजिह्विकोऽपीति षड्विधमाह वाभट: । यथा—"शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता । जिह्वा पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता: । शाल्मलीकण्टकाभैस्तु कफेन बहुला गुरु: । कफपित्तादध:शोफो जिह्वास्तम्भकृदुन्नत: । मत्स्यगन्धिर्भवेत् पक्व: सोऽलसो मांसशातन: । प्रबन्धनेऽधो जिह्वाया: शोफो जिह्वाग्रसन्निभ: । साङ्कुर: कफपित्तास्रै: लालोषालम्भवान् खर: । अधिजिह्व: स रुक्चूर्वीक्याहारविघातकृत् । तादृगेवोपजिह्वस्तु जिह्वाया उपरिस्थित: ॥" वा.उ.२१अ. ।

**जिह्वालिट्** । पुं । कुक्कुरे । वै.निघ. ।

**जिह्वास्तम्भ:** । पुं । स्वनामख्यातवातव्याधौ । জিভ্ এড়াইয়া যাওয়া । "वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिल: । जिह्वास्तम्भ: स तेनान्नपानवाक्येष्वनीशता जिह्वास्तम्भे यथावस्थं वातव्याधिचिकित्सितम् । सामान्योक्ता: क्रियाश्चाहितस्यापि हिता मता: ॥" अयमस्य मुखरोगे । ज द.२६अ. । See मुखरोग: ।

**जीन:** । पुं । वृद्धे । रा.नि व.१८ ।

**जीमूत: (क:)** । पुं । मुस्तायाम् । मुता । रा. नि.व.६ । पीतदेवदाल्याम् । भा. । देवदाल्याम् । দেয়াতাড়া । रा.नि.व.३ । घोषकलतायाम् । ঘোষা লতা । हे.च. । क्ली । घोषाफले । च.सू.२अ. ।

**जीमूतकतैलम्** । क्ली । कोशातकीतैले ।

**जीमूतमूलम्** । क्ली । शट्याम् । प.मु. ।

**जीमूताह्वा** । स्त्री । देवदाल्याम् । দেয়াতাড়া । जलमुस्तायाम् । वै.निघ. ।

**जीर: (क:) (ण:)** । पुं,क्ली । (Cuminum cyminum.) Cumin seed. स्वनामख्यातक्षुपे । বড় জীরে, শাদা জীরে । हिं जीरा । तें जीलकर्र । गुणा:—कटुकत्व: वातघ्न: दीपन: गुल्माध्मानातिसारघ्न: ग्रहणीकृमिहृच्च । रा.नि. व.६ । जीरका: पञ्च तत्र श्वेतकृष्णस्थूलसूक्ष्मभेदाश्चतुर्धा, वनजीरकञ्च इति पञ्च । भावप्रकाशेषु

त्रिभेदानाह शुक्लकृष्णकणाज्जीभेदेन । गुणाः—दीपनं पाचनम् उष्णत्वाद्द्वयशोषकं ग्राहि च । शार्ङ्ग. । लघु संग्राहि गर्भाशयशुद्धिकरं ज्वरघ्नं पाचनं हृष्यं बल्यं रुच्यं कफघ्नं चक्षुष्यमतिसारघ्नञ्च । भा. । विशेषाः पर्य्याये द्रष्टव्याः । एततैलं मिषितैलगुणं ज्ञेयम् । अत्रि. ।

**जीरकद्वयम्** । क्ली । शुक्लपीतजीरके । गुणाः—"तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम् । कटु श्लेष्मानिलहरं गन्धाढ्यं जीरकद्वयम् ॥" सु.सू. ४६अ. । [वातपित्तघ्नी । अत्रि.१५ ।

**जीरका** । स्त्री । शालिधान्यविशेषे । सा च

**जीरकादिमोदकः** । पुं । ग्रहण्यधिकारे । जीरकचूर्णं ८ प. घृतभर्ज्जितसिद्धिबीजचूर्णं ४ प. लौहम् अभ्रं वङ्गं मधुरिका तालीशपत्रं जयित्री जातीफलं धान्यकं आमलकी हरीतकी विभीतकं गुड़त्वक् तेजपत्रम् एला नागकेशरं लवङ्गं शैलजं सारचन्दनं रक्तचन्दनं जटामांसी द्राक्षा शटी टङ्कणक्षारः कुन्दुरुखोटी यष्टिमधु वंशरोचना काकोली बालकं गोरक्षी शुण्ठी पिप्पली मरिचं धातकीपुष्पं विल्वपेशी अर्ज्जुनत्वक् शलुफा देवदारु कर्पूरं प्रियङ्गुः जीरकं मोचरसः कटुकी पद्मकाष्ठं नलिका एषां प्रतिचूर्णं २ तो. सर्व्वचूर्णद्विगुणा शर्करा एकत्र पचेत् । मात्रा १ तो. ।

**जीरकाद्यघृतम्** । क्ली । व्रणशोथाधिकारे । "जीरकपक्वं पश्चात्सिक्थसर्ज्जरसमिश्रितं हन्ति । घृतमभ्यङ्गात्पावकदग्धजदुःखं क्षणार्द्धेन ॥" गव्यघृतं ४ श. पाकार्थजलं १६ श. । कल्कार्थजीरकं ८ प. । सिद्धे सिक्थसर्ज्जरसयोः (मम ও धुना) ४ प. प्रक्षेपः । अन्यत् अम्लपित्ताधिकारे—"पिष्टाजाजीं सधान्याकां घृतप्रस्थं विपाचयेत् ।" गव्यघृतं ४ श. कल्कः १ श. जलं १६ श. । च.द. ।

**जीरिका** । स्त्री । वंशपत्रीतृणे । रा.नि.व.८ ।

**जीर्णः** । पुं । जीरके । रा.नि.व.६ । क्ली । शैलजे । रा.नि.व.१२ । त्रि । वृद्धे । पक्के । रा.नि.व.१८ ।

**जीर्णज्वरः** । पुं । पुरातनज्वरे । পুরাতন জ্বর । द्वादशदिवसातीते वा तद्विगुणातीते वा एकविंशदिवसातीते वा तनुभावं गतो यो ज्वरः काये तिष्ठति । तत्र द्वादशदिवसातीते ज्वरः जीर्णः इति जातूकर्णः । एकविंशदिवसातीते इति सि. यो. । र.सा.सं. । "त्रिसप्ताहे व्यतीते तु ज्वरो यस्तनुतां गतः । प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥" "यो द्वादशभ्यो दिवसेभ्य ऊर्द्ध्वं दोषत्रयस्तद्विगुणेभ्य ऊर्द्ध्वं । नृणां तनौ तिष्ठति मन्दवेगो भिषग्भिरुक्तो ज्वर एव जीर्णः ॥" भा. ।

**जीर्णदारुः** । पुं । वृद्धदारकविशेषे । কাল বিচতাড়ক । बीजगुणाः—गौल्यं पिच्छिलं कफवातकासामदोषघ्नं बल्यञ्च । रा.नि व.३ ।

**जीर्णपत्रः** । पुं । पट्टिकारोध्रे । रा.नि.व.६ ।

**जीर्णपत्रिका** । स्त्री । वंशपत्रीतृणे । रा.नि. व.८ । [त्रिका. । पुरातनपत्रे ।

**जीर्णपर्णः** । पुं । पट्टिकारोध्रे । कदम्बवृक्षे ।

**जीर्णफञ्जी** । स्त्री । कृष्णवृद्धदारके । रा.नि.व.३ ।

**जीर्णवालः (लुकः)** । पुं । कृष्णवृद्धदारके । रा.नि.व३ । स्थूलजीरके । रा.नि.व.६ ।

**जीर्णवु(ब्र)घ्नः** । पुं । पट्टिकारोध्रे । পাটি-শালোধ । रा.नि.व.६ । मुस्तायाम् । वै.निघ. ।

**जीर्णबुध्नकम्** । क्ली । परिपेल्लतृणे । কেওট মুতা । रा.नि.व.८ ।

**जीर्णवज्रम्** । क्ली । वैक्रान्तमणौ । रा.नि.व.१३ ।

**जीर्णा** । स्त्री । स्थूलजीरके । रा.नि.व.६ ।

**जीर्णाहारः** । पुं । आहारस्य जीर्णावस्थायां । আহার পরিপাক অবস্থা । लक्षणं—"उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः । लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥" भा. ।

**जीर्विः** । पुं । शरीरे. काये । सङ्क्षिप्त-उणा. ।

**जीवः** । पुं । जीवकवृक्षे । जिय२९षष्टि । प.मु. । प्राणिनि, जन्तौ । त्रिका. । कर्णे । धरणिः । जीविते । मे. ।

**जीवकः** । पुं । (Pentaptera tomentosa.) A medicinal plant, commonly called jívaka. अष्टवर्गान्तर्गतस्वनामख्यातक्षुपे । জীবক । हिं जीवक । तें वेगिसपुचेट्टु । गुणाः—मधुरः शीतः रक्तपित्तघ्नः वातघ्नः क्षयदाहज्वरघ्नः शुक्रश्लेष्मवर्द्धनश्च । रा.नि.व.५ । See ऋषभकः । एतदभावे गुडूची ग्राह्या । असनवृक्षे । পেয়াশাল । तन्नामकपर्यायि । मे. ।

**जीवकद्रुमः** । पुं । जियत्पुष्पीतिख्याते द्रुमे । प.मु. ।

**जीवकादिः** । पुं । जीवनीयगणे । स च जीवकर्षभकमेदामहामेदर्द्धिवृद्धिकाकोलीचीरकाकोलीसूपपर्णीद्वयात्मकः । रा.नि.व.२२ । जीवकर्षभककाकोलीचीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृद्धमहाजटिलाकुलिङ्गाः । एतानि शुक्रजननानि प्रभावात् । च.सू.४अ. ।

**जीवजी(ञ्जी)वः** । पुं । स्ववजातीये चकोरपक्षिणि । त्रिका. । वृक्षभेदे । मे. ।

**जीवत्तोका** । स्त्री । जीवत्पुत्रिकायाम् । हे.च. ।

**जीवथः** । पुं । मयूरे । कच्छपे । प्राणे । उणा. ।

**जीवदः** । पुं । वैद्ये । जीवके । वै.निघ. ।

**जीवदा (त्री)** । स्त्री । जीवन्त्याम् । रा.नि.व. ३ । ऋद्धौ । रा.नि व.५ ।

**जीवद्वन्द्वम्** । क्ली । जीवके ऋषभके च । "जीवद्वन्द्वनविश्वभूषणम् ।" । भैष.वाजी. ।

**जीवनः** । पुं । वाते । जीवकक्षुपे । रा.नि.व. ४ । वैद्ये । क्ली । अन्ने । रा.नि.व.२० । जले । प्राणधारणे । मे. । मज्जायाम् । रा.नि.व.१८ । सद्योघृते । श च. । दुग्धे । शरीरजीवयोः संयोगे । त्रि । आयुर्वर्द्धने ।

**जीवनकम्** । क्ली । अन्ने । हे.च. ।

**जीवनदशकम्** । क्ली । जीवनीयगणोक्तदशद्रव्येषु । वा.सू.१५अ. ।

**जीवनपञ्चमूलम्** । क्ली । अभीरुवीरा जीवन्ती जीवकर्षभकौ चेति । वा.सू.१५अ. ।

**जीवना** । स्त्री । सिंहपिप्पल्याम् । रा.नि.व.६। मेदायाम् । मे. । जीवन्तीलतायाम् । जिघ्रातौ । अम. । [च. ।

**जीवनाघातम्** । क्ली । वत्सनाभे विषे । श. ।

**जीवनार्हम्** । क्ली । दुग्धे । धान्ये । वै.निघ. ।

**जीवनिका** । स्त्री । जीवन्त्याम् । हरीतक्यां । काकोल्याम् । रा.नि.व.११ ।

**जीव(वि)नी** । स्त्री । मेदायां । (मेदा) । महामेदायां । महामेदा । रा.नि.व.५। काकोल्याम् । जीवन्तीशाके । रा.नि.व.३ । डोडीक्षुपे । रा.नि. व.४ । यूथिकायां । यूँई । श.च. ।

**जीवनीयम्** । क्ली । घृते । जले । हे.च. । त्रि । प्राणधारणे । वा.टी.हे. ।

**जीवनीयगणः** । पुं । जीवन्त्यादिगणे । स च जीवन्ती काकोली चीरकाकोली मेदा महामेदा मुद्गपर्णी माषपर्णी जीवकः ऋषभकः मधुकश्चेति। च.सू.४अ. । "अष्टवर्गश्च पर्णिन्यौ जीवन्ती मधुकं तथा । जीवनीयगणः प्रोक्तो जीवनश्च पुनस्ततः ॥" प.प्र.१ख. । गुणाः—स्वादुः गर्भसन्धानकृत् गुरुः सन्धानकृत् बृंहणः वृष्यः स्निग्धः शीतः तृष्णाघ्नः रक्तपित्तक्षयशोषज्वरदाहवातघ्नश्च । शार्ङ्ग.म.६अ. ।

**जीवनीया** । स्त्री । स्वर्णजीवन्त्यां । रा.नि.व. ३ । हरीतक्याम् । मद.व.१ । [रा.नि.व.६ ।

**जीवनेत्रा (त्री)** । स्त्री । सैंहलीपिप्पल्याम् ।

**जीवनौषधम्** । क्ली । जीवनीयौषधे । अम. । अन्ने । वै.निघ. । [औषधे । प्राणे । उणा. ।

**जीवन्तः (कः)** । पुं । जीवशाके मालवदेशप्रसिद्धे । गुणाः—मधुरः बृंहणः वस्तिशोधनः दीपनः पाचनः बल्यः वृष्यः पित्तहरश्च । रा.नि.व.७।

**जीवन्तिका** । स्त्री । वृक्षोपरिजातवृक्षे । मान्दड़ा । गुडूच्याम् । जीवशाके । मे. । भा.शिरोरोग-चि.। हरीतकीभेदे । रा.नि.व.११ । "जीवन्तिका स्यादथ जीर्णरोगजित् ।"

**जीवन्ती** । स्त्री । स्वनामख्यातशाकविशेषे, जीवशाक इति लोके । या शर्करावन्मधुरपुष्पा व्रततिः, "जियत्पुष्टी" सा रक्तपित्ते वर्ज्या इति । भा. । स्वर्णनाड़ इति चक्रपाणिः । तन्मते मधुरामधुरभेदेन द्विविधा, तत्र मधुरायाः त्रिदोषहन्तृत्वम् अमधुरायाः सञ्जातपित्तहरत्वम् । आयस्य रसो मधुरः वीर्य्यं शीतलं तथा पाकोऽपि मधुर एव । प्रभावश्चक्षुष्यः सर्व्वदोषघ्नश्च । एवा शाकेषु श्रेष्ठा 'वरा शाकेषु जीवन्ती' इति । वा.सू.१५अ.। वै.निघ.श्वास,चि.गुण्ठ्यादिचूर्णे । गुडूच्यां । रा.नि.व.३।२३ । वन्दायाम् । हरीतक्यां । भा. । डोडीशाकक्षुपे । रा.नि.व.४ । मेदायां । काकोल्यां । झरिण्यां । रा.नि.व.२३ । मधूकवृक्षे । शमीवृक्षे । वै.निघ.। (Celtis orientalis.) लताविशेषे ।

जीवन्ती, जीवई, जियाती। सं के लाहानिइ-रिणबैलि, किरियडाले। सा जुस्वदीर्घस्वर्णवर्ण-भेदेन विधा। "जीवन्ती स्वर्णवर्णाभा क्षुद्रा दृढ्वा च। जीवनोयोगात् जीवन्ती नाम।" मद.व१.। गुणा:—मधुरा शीता रक्तपित्तवातक्षयदाहज्वरघ्नी कफवर्द्धनी वीर्य्यवर्द्धनी च। अन्या रसवीर्य्ययो: क्र-मतुल्या भूतविद्रावणी रसनियामिका च। स्वर्ण-वर्णा वृष्या चक्षुष्या मधुरा शीतला वातपित्तरक्त-दाहघ्नी बलवर्द्धनी च। रा.नि.व.३। क्षपिच श्वास-कासधातुक्षयघ्नी स्वरकरी च। राज.। "जीवन्ती शीतला स्वादु: स्निग्धा दोषत्रयापहा। रसायना बलकरी चक्षुष्या ग्राहिणी लघु:।" भा.। "चक्षुष्या सर्व्वदोषघ्नी जीवन्ती मधुरा हिमा।" चवि.१६ अ.। तैलगुण: विभीतकतैलवत्। जीवनीयाख्ये गणे। वा.सू.१५अ.। See जीवनीयगण:।

**जीवन्त्यादिवर्ग:**। पुं। जीवनीयगणे। वा. सू.१५अ.। [क्षुद्रवे। वै.निघ.।

**जीवपुत्रक:**। पुं। इङ्गुदीवृक्षे। श.र.। हि

**जीवपुष्पा**। स्त्री। वृहज्जीवन्त्यां। रा.नि.व.७।

**जीवपृष्ठा**। स्त्री। जीवन्तीशाके। वृहज्जीवन्त्यां। रा.नि.व.३।

**जीवप्रिया**। स्त्री। हरीतक्याम्। रा.नि.व.१२।

**जीवभद्रा**। स्त्री। ऋद्ध्यौषधौ। रा.नि.व.५। जीवशाके, जीवन्तीलतायाम्। रा.नि.व.३।

**जीवमन्दिरम्**। क्ली। शरीरे। श.र.।

**जीवरत्नम्**। क्ली। पुष्परागमणौ। प.मु.।

**जीववती**। स्त्री। चीरकाकोल्याम्। वै.निघ.।

**जीववत्सा**। त्रि। जीवत्पुत्रायाम्। च.शा.८अ.।

**जीववर्द्धिनी**। स्त्री। ऋद्धौ। वृद्धि। वै.निघ.।

**जीववल्ली**। स्त्री। चीरकाकोल्याम्। रा.नि. व.३। काकोल्याम्। वै.निघ.।

**जीववृक्ष:**। पुं। जीवकवृक्षे। जियापुता इति लोके। द्रव्याभिधानम्।

**जीवशाक:**। पुं। शाकविशेषे। खोषरा इति लोके। प.मु.। जीवशाक इति मालवदेशे। गुणा:—बल्य: मधुर: दीपन: पाचन: बृंहण: व-स्तिशोधन: पित्तघ्नश्च। रा.नि.व.७।

**जीवशुक्ला**। स्त्री। चीरकाकोल्यां। रा.नि. व.३।

**जीवशोणितम्**। क्ली। जीवनपोषकशुद्धशो-णिते। जीवनपोषक विशुद्ध रक्त। जीवशो-णितरक्तपित्तयो: जिज्ञासार्थं पिचुमोतं वा क्षिपे-त्, यद्युष्णोदकप्रक्षालितमपि वस्त्रं रञ्जयति त-ज्जीवशोणितमवगन्तव्यम्। सभक्तञ्च शुने दद्यात् शक्तुमिश्रं वा, स यद्युपभुञ्जीत तज्जीवशोणितमव-गन्तव्यम्। सु.।

**जीवश्रेष्ठा**। स्त्री। ऋद्धौ। रा.नि.व.५।

**जीवसंज्ञ:**। पुं। कामवृद्धिक्षुपे। रा.नि.व.४।

**जीवसाधनम्**। क्ली। धान्ये। धनिया। रा. नि.व.६। [रा नि व.१८। हृदये। वै.निघ.।

**जीवस्थानम्**। क्ली। मर्म्मणि। मर्म्मस्थान।

**जीवा**। स्त्री। जीवन्तीलतायां। रा.नि.व.३। ऋद्धौ। प.मु.। वचायां। मे.। जीवके। रा.नि. व.२३। हरीतक्याम्। वै.निघ.।

**जीवागारम्**। क्ली। मर्म्मस्थाने। रा.नि.व.१८।

**जीवातु:**। पुं। जीवनीयौषधे। अन्ने। मे.।

**जीवात्मा**। पुं। देहिनि। हे.च.।

**जीवादानम्**। क्ली। जीवशोणितनिर्गमे। च. सू.१५अ.।

**जीवाधार:**। पुं। चेते। हे.च.। [४अ.।

**जीवापगम:**। पुं। षड्धातुविभागे। च.शा.

**जीवाला**। स्त्री। सैंहलीपिप्पल्यां। रा.नि.व.५।

**जीविका**। स्त्री। जीवन्त्यां। मे.।

**जीवितम्**। क्ली। जीवने। प्राणधारणे। हे. च.। च.सू.१अ.।

**जीवितकाल:**। पुं। आयुषि। अम.।

**जीवितज्ञा**। स्त्री। शरीरान्त:स्पन्दनाड्यां, शि-रायाम्। रा.नि.व.१८।

**जीविता**। स्त्री। जलपिप्पल्याम्। वै.निघ.।

**जीविताभिसर:**। त्रि। जीवनरक्षाकर्त्तरि (वैद्ये)। च.सू.११अ.। [जीड़ीक्षुपे। रा.नि.व.४।

**जीविनी**। स्त्री। काकोल्यां। रा.नि.व.३।

**जीव्यः** । पुं । जीवकौषधौ । रा.नि.व.५ ।

**जीव्या** । स्त्री । जीवन्त्यां । रा.नि व.३ । हरीतक्याम् । गौरचदुग्धायाम् । रा.नि.व.११।५ ।

**जुगुप्सितम्** । क्ली । श्वेतलशुने । वै.निघ. ।

**जुग्धम्** । पुं,क्ली । यवनाले । जनार । वै.निघ.।

**जुङ्गः (कः)** । पुं । वृद्धदारकलतायां । रा.नि. व.३ ।

**जुङ्गा** । स्त्री । वृद्धदारकलतायां । प.मु. ।

**जुष्ककः** । पुं । यूषे । ঝোল । श्र.च. ।

**जूटिका** । स्त्री । कर्पूरविशेषे । ভীমসেনী । रा.नि.व.१२ । [न्ये । দেধান । रा.नि व.१६ ।

**जून(र्ण्)लः** । पुं । धवलयावनालाख्यशिम्बीधा-

**जूनाख्यः** । पुं । उलूकतृणे । উলু । प.मु. ।

**जूर्णाह्वः (यः)** । पुं । धवलयावनाले । দেধান । रा.नि व.१६ । है.च. । च.सू.२७अ. ।

**जूर्णिः (र्त्तिः)** । पुं । शरीरे । उणा. । ज्वरे । अम. ।

**जूषः** । पुं, क्ली । क्वाथे । भ. ।

**जूषणम्** । क्ली । धातकीपुष्पे । श्र.च. ।

**जृम्भः (णम्)** । पुं, क्ली । जृम्भायाम् । হাই । श्र.र. । मा.ज्व.नि. ।

**जृम्भा (म्भिका, णी)** । स्त्री । जृम्भकायां । হাই । रा.नि.व.२० । "चैतन्यशिथिलत्वायत्पीलेकं श्वासमुद्वमेत् । विदीर्णवदनः श्वासं जृम्भा सा कथ्यते बुधैः ॥" शार्ङ्ग.पू.६अ. । "पीत्वैकमनिलोच्छ्वासमुद्वेष्टन् विवृतानमः । यन्मुञ्चति सनेत्रास्रं सा जृम्भा इति संज्ञितः ॥" सु.शा.४अ. । एलापर्ण्यां । श्र.च. ।

**जेन्ताकः** । पुं । स्वेदविशेषे । च.सू.१४अ. ।

**जेमनम्** । क्ली। लेपे। वै.निघ.। आहारे। अम.।

**जैवः** । पुं । पारदे । रा.नि.व.१३ । क्ली । औषधे । रा.नि.व.२० ।

**जैत्री** । स्त्री । जयन्तीवृक्षे । श्र.र. ।

**जैपालः** । पुं । जयपालवृक्षे । विकल्पकोषः ।

**ः** । पुं । कर्पूरे । चन्द्रे । अम.। दर्भे ।

औषधे । है.च.। त्रि । लक्ष्मी । दीर्घायुषि । त्रिका.।

**जोङ्गकम्** । क्ली । अगुरुणि । त्रिका. । वा.चि. ६अ. । काकमाच्याम् । च.चि.१अ. ।

**जोङ्गटः** । पुं । गर्भिण्यभिलाषे । সাধ । हारा.।

**जोङ्गलः** । पुं । क्षणवृद्धदारके । वै.निघ. ।

**जोन्नाला** । स्त्री,पुं(लः)। देवधान्ये। দেধান । है.च. । [लिकायाम् । কসি, জালি । श्र.र. ।

**जोषिका** । स्त्री । नवाङ्कुरे । वै.निघ. । ज्ञा-

**ज्ञानेन्द्रियम्** । क्ली । नेत्रादिषड्बुद्धीन्द्रिये ।

**ज्येष्ठतीयाम्लम्** । क्ली । काञ्जिके ।

**ज्येष्ठबला** । स्त्री । महाबलायाम्, सहदेव्याम् । रा.नि.व.४ ।

**ज्येष्ठा** । स्त्री । कदलीवृक्षे । गृहगोधिकायाम् । টিকটিকি । त्रिका. । तर्ज्जन्याम् । वै.निघ. ।

**ज्येष्ठामलकः** । पुं । निम्बवृक्षे । रा.नि.व ९ ।

**ज्येष्ठामूलीयः** । पुं । ज्येष्ठमासे । वै.निघ. ।

**ज्येष्ठाम्बु (म्भः)** । क्ली । तण्डुलोदके । চেলুনির জল । च.द.उन्मा.चि. । "श्वेताज्येष्ठाम्बुनिर्मितम् ।" मञ्जे। त्रिका. । वा.उ.१६अ. ।

**ज्येष्ठी** । स्त्री। गृहगोधायां । টিকটিকি। त्रिका.।

**ज्येष्ठीमधु** । क्ली । यष्टिमधुनि । वै.निघ. ।

**ज्योतिः (स्)** । पुं । चित्रकवृक्षे । क्ली । रक्तचन्दने । वै.निघ. । मेथिकायाम् । रा.नि.व.६ ।

**ज्योतिःसोमम्** । क्ली । रक्तचन्दने । मद. ।

**ज्योतिरिङ्गः (णः)** । पुं । खद्योते । श्र.र. । धूम्याटपक्षिणि । वै.निघ. ।

**ज्योतिर्लता** । स्त्री । ज्योतिष्मतीलतायाम् । লতাফট্‌কী । रा.नि.व.३ ।

**ज्योतिर्बीजम्** । क्ली । खद्योते । त्रिका. ।

**ज्योतिष्कः** । पुं। अग्निमन्थे । গণিরি । र.मा.। चित्रकवृक्षे । मेथिकायाम् । रा.नि.व.६ । स्त्री (का) । ज्योतिष्मत्याम् । भ.टी.स्वा.। सु.चि.९अ.। वचायाम् । वै.निघ. ।

**ज्योतिष्मती** । स्त्री । (Cardiospermum halicacabum.) स्वनामख्यातलतायाम् । न-

लताफट्की. बन उच्छे। तें वेकक्कुडुतीगे। हिं मं मालकंगुणी, बाकुमईनिका। ककुन्दकीति च:। सु.सू.३८ग्र.। सा द्विधा लघुदीर्घभेदेन। स्वा. गुणा:—अतितिक्ता किञ्चित्कटुः कषा वातकफघ्नी दाहप्रदा दीपनी च।; विशेषेण द्वितीया मेधाप्रज्ञाबुद्धिकरी। रा.नि.व.७। तीक्ष्णा व्रणविस्फोटघ्नी। राज.। "ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित्। अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा॥" भा.।

**ज्योतिष्मतीतैलम्** । क्लो। तत्फलोत्थतैले। लताफट्कीर तैल। गुणा:—तिक्तोष्णं वातघ्नं पित्तघ्नं मेधाप्रज्ञाबुद्धिवर्द्धनञ्च। रा.नि.व.१५।

**ज्योतीरथः** । पुं। निर्विषसर्पविशेषे। सु.कल्प. ४ग्र.। See सर्पः।

**ज्योत्स्ना (त्स्निका) (त्स्नी)** । स्त्री। ज्योतिष्मत्याम्। लताफट्की। रेणुकबीजे। श.च.। चन्द्रिकायाम्। चन्द्रकिरण। गुणा:—त्रिदोषघ्नी दाहास्रकपित्तनाशिनी। राज.। कोषातक्याम्। श्वेत घोषा। र.मा.। पटोलिकायां। झिंगा। अम.।

**ज्योत्स्नाप्रियः** । पुं। चकोरे। हे.च.।

**ज्वरः** । पुं। सर्व्वरोगप्रधानरोगविशेषे। ज्वर। हिं बोखार, ज्वर। ज्वरोत्पत्तिः—दक्षापमानसंक्रुद्धरुद्रनिःश्वासेन सम्भूतत्वात् ज्वरः स्वभावात् पैत्तिक इति बोद्धव्यः, यत उक्तं चरकेण। "क्रोधात्पित्त"मित्यादि। तेन सर्व्वज्वरेषु पित्तोपशमनी चिकित्सा कर्त्तव्या। भा.। ज्वरस्य मूर्त्तिः—सर्व्वभूततापनः त्रिपात् त्रिशिराः महोदरः कपिलवर्णो व्याघ्रचर्म्मवासाः माल्यधारी पिङ्गलनेत्रः क्षुद्रतरजङ्घः विकृताकारी भस्मभूषिताङ्गो महाबलवान् लोकनाशाय लोकेऽवतिष्ठते। सु.। तस्य प्रकृतिः—"तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः। देहिनं न हि निर्द्दोषं ज्वरः समुपसेवते॥" ज्वरस्य संख्याकपसम्प्राप्तिः—ज्वरोऽष्टधा, वातिकः पैत्तिकः श्लैष्मिकश्चेति त्रयः, द्वन्द्वजाश्च त्रयः—वातपैत्तिकः वातश्लैष्मिकः पित्तश्लैष्मिकश्चेति, सान्निपातिकः आगन्तुकश्चेति साकल्येन अष्टधा। सान्निपातिकज्वरः त्रयोदशविध इति। चर.। See सन्निपातज्वरः। शार्ङ्गधरस्तु पञ्चविंशतिभेदान्नाह यथा—पृथग्दोषैस्त्रिधा, द्वन्द्वभेदेन च तथा, सन्निपातेन चैकः; विषमज्वरः पञ्चधा—सन्ततसततान्येद्युष्कतृतीयकचातुर्थकभेदेन; आगन्तुरेक एवेति त्रयोदशविधः; आगन्तुः पुनस्त्रिधा, अभिघातजः चतुर्धा, अभिषङ्गजश्च पञ्चविध इति पञ्चविंशतिधा। शार्ङ्ग.पू.ख ७ग्र.। ज्वरस्य विप्रकृष्टकारणं—मिथ्याहारविहारादि—तेन वातादयः आमाशयगता ज्वरं जनयन्तीति सम्प्राप्तिः। तस्य रूपं—श्रमारतिविवर्णतामुखवैरस्यनेत्रप्लवताजृम्भाङ्गमर्द्दगुरुतारोमहर्षारुचितमोऽप्रहर्षशीतादिकं शीतवातातपेषु मुहुरिच्छाद्वेषौ च भवन्ति। तस्य सामान्यलक्षणं—स्वेदावरोधादि। सामान्यतो ज्वरचिकित्सा—सामान्यतो ज्वरे पूर्व्वं निवातनिलये वासः। व्यजनानिलः तालपत्रवातः वंशव्यजनजवायुः चामर वस्त्र-मयूरपुच्छ वेतसव्यजनवायुश्च। तथा गुरुप्रावसनावरणं यथर्त्तु पक्वपानीयव्यवहारश्च। ज्वरे वर्ज्यं स्नानप्रदेहादिकम्। भा.म.१भ.। ज्वरादौ लङ्घनं मध्ये पाचनं अन्ते च भेषजं प्रयोक्तव्यम्। प्राणिभेदे तदसाध्यता—"असाध्योऽयं ज्वरो व्याधिः गोमहिषाश्वकुञ्जरे। किञ्चित्कृच्छ्रतमो नृणामन्येषां जीवघातकः॥ यथा मृगाणां मृगयुर्बलिष्ठः तथा गदानां प्रबलो ज्वरोऽयम्। नान्योऽपि शक्तो मनुजं विहाय सोढुं भुवि प्राणभृतः सुराद्याः॥" नरस्य ज्वरसहत्वे कारणं—"कर्म्मणा लभते यस्माद्देवत्वं मानुषो दिवि। ततश्चैवाच्युतः स्वर्गान्मानुष्यमभिवर्त्तते। तस्मात्स दैवभावात्तु सहते मानुषो ज्वरमिति॥" अत्रि.। प्राणिविशेषे ज्वरनाम यथा—"पातकः स तु नागानामभितापस्तु वाजिनाम्। गवामीश्वरसंज्ञस्तु मानवानां ज्वरो मतः। दारिद्रो महिषाणाञ्च मृगरोगी मृगेषु च। अजावीनां प्रलापाख्यः करभेष्वलसो भवेत्। शुनोऽलर्कः समाख्यातो मत्स्येष्विन्द्रमदो मतः। पक्षिणामभिघातस्तु व्यालेष्वक्षिवतसंज्ञितः। गुल्मस्य नलिका प्रायो भूमेरूषरनामतः। वृक्षस्य कोटराख्यस्तु ज्वरः सर्व्वत्र दृश्यते॥" अत्रि.२स्थान.२ग्र.।

**ज्वरकुञ्जरपारीन्द्ररसः** । पुं। विषमज्वरे रसः। यथा—"मूर्च्छितं रसकर्षैकं तदर्द्धं जारिताभ्रकं। तारं ताम्रञ्च रजतं रसकं ताम्रकं तथा। मौक्तिकं विद्रुमं लौहं गिरिजं गैरिकं शिला।

गन्धकं हेमसारञ्च पलार्द्धञ्च पृथक् पृथक्। चीराग्री सुरवल्ली च श्रीघन्नी गणिकारिका। झाटामला ज्योतिष्मिका च सतिक्ता च सुदर्शना। अग्निजिह्वा पूतितैला सूर्पपर्णी प्रसारणी। प्रत्येकं स्वरसं दत्त्वा मर्द्दयेच्चिदिनावधि। भक्षयेत्पर्णखण्डेन चतुर्गुञ्जाप्रमाणतः॥"……। মূর্চ্ছিত রস ২ তো. জারিত অভ্র ১ তো. স্বর্ণমাক্ষিক, স্বর্ণ, রৌপ্য, খাপর, তাম্র, মুক্তাভস্ম, প্রবালভস্ম, লৌহভস্ম, শিলাজতু, গিরিমাটী, মনছাল, গন্ধক, তুঁতেভস্ম প্র. ২ তো.। থিরুই, তুলসী, শ্বেতপুন্যা, গণিরি, ভূঁই আমলা চিরাত', পদ্মগুলুঞ্চ, ঈশলাঙ্গুলিয়া, লতাফট্কী, পটোল, মুগানী, গন্ধভাদুলিয়া প্রত্যেকের রসে ৩ দিন মাড়িবে। र.सा.सं.।

**ज्वरघ्नः** । पुं। वालूकभेदे। स्त्री। गुडूच्याम्। रा.नि.व.७।२२। मञ्जिष्ठायां। वालूकी। वै.निघ।

**ज्वरघ्नी(वटिका)** । स्त्री. ज्वरे रसः। शुद्धजैपालवीजं १ तो. कटुकी २ तो. गैरिककं १ तो. घृतकुमारीरसेन मर्द्दयेत्। শুদ্ধ জয়পালবীজ ১ তো. কট্কী ২ তো. গেরিমাটী ১ তো. ঘৃতকুমারীরসে মর্দ্দন। বটী ১ কলায়। भा.। अन्या—रसः १ तो. शिलाजतु पिप्पली हरीतकी अककरा(वचा) कटुतैलशुद्धगन्धकं इन्द्रवारुणीफलं प्र. ४ तो. इन्द्रवारुणीरसेन मर्द्दयेत्। পারা ১ তো. শিলাজতু, পিপুল, হরীতকী, আকরকরা বচ, কটুতৈলে শুদ্ধ গন্ধক এবং রাখালশশার ফল প্রত্যেকে ৪ তো. রাখালশশামূলের রসে মর্দ্দন। বটী ১ মাষকড়াই। शार्ङ्ग.। अपरा—पारदः १ तो. गन्धकः २ तो. हिङ्गुलं ३ तो. जैपालवीजं ४ तो. दन्तीक्वाथेन मर्द्दयेत्। পারা ১ তো. গন্ধক ২ তো. হিঙ্গুল ৩ তো. জয়পালবীজ ৪ তো. দন্তীকাথে মর্দ্দন। रस.र.। [यद्दि मार्ङ्गधरकृते।

**ज्वरनिश्चती** । स्त्री। ज्वरनिदानचिकित्सासं-

**ज्वरनाशनः** । पुं। पर्पटके। ক্ষেৎপাবড়া। स्त्री (शिनी)। मञ्जिष्ठायाम्। गुडूच्याम्। वै.निघ.।

**ज्वरहन्त्री** । स्त्री। मञ्जिष्ठायाम्। रा.नि.व.६।

**ज्वराङ्गी** । स्त्री। भद्रदन्त्याम्। दन्ती। रा.नि.व ६।

**ज्वरातङ्कः** । पुं। ज्वररोगे। रा.नि.व.२०।

**ज्वराधिष्ठानम्** । क्ली। शरीरे मनसि च। "केवलं समनस्कञ्च ज्वराधिष्ठानमुच्यते।" च.चि. ३अ.।

**ज्वरान्तकः** । पुं। किराततिक्तके। চিরেতা। आरग्वधवृक्षे। रा.नि.व.६।

**ज्वरान्तकरसः** । पुं। ज्वरे रसः। ताम्रं गन्धकः पारदः सीराष्ट्रजम् (पङ्कपर्पटी) लौहं स्वर्णमाक्षिकं हिङ्गुलं टङ्कणक्षारः (সোহাগার খৈ) रसाञ्जनं स्वर्णभस्म प्र. समभागं चित्रकादीनां (त्रिकक-गुडूची मुस्ता-मुण्डीनां प्र ॥० तोलं वारि ॥० श.) पादावशिष्टेन क्वाथेन मर्द्दयेत्। रस.कौ.।

**ज्वरारिः** । पुं। गुडूच्याम्। रा नि.व.२३। ज्वरे रसविशेषः। पारदः गन्धकः हिङ्गुलं ताम्रं शीषं टङ्कणं (সোহাগার খই) विड्लवणं मनःशिला एषां प्र. समभागः। आरग्वधपत्ररसेन १० भावना देयाः। भैष.। अन्यः—पारदः १ भ. गन्धकः २ भ. हिङ्गुलं ३ भ. धुस्तूरवीजं ४ भ. दन्तीक्वाथेन मर्द्दयेत्। रस.कौ.।

**ज्वरारि (अभ्रम्)** । क्ली। जीर्णज्वरे रसः। अभ्रं ताम्रं पारदः गन्धकः विषं, एषां समभागः। धुस्तूरवीजम् एकभागापेक्षया द्विगुणं त्रिकटु मिलित पञ्चगुणं जलेन वटी कार्य्या। অভ্র, তামা, পারা, গন্ধক, বিষ প্রত্যেকে সমভাগ ধুতুরার বীজ ২ ভ. ত্রিকটু মিলিত ৫ ভ. জলে মাড়িবে। र.सा.सं.।

**ज्वराशनिः** । पुं। विषमज्वरे रसः। रसः गन्धकः सैन्धवं विषं ताम्रं प्र. समभागः, सर्व्वसमं लौहचूर्णं लौहसमम् अभ्रम्। लौहपात्रे लौहदण्डेन निर्गुण्डीरसेन सम्मर्द्य तेन सह पारदसमभागं मरिचचूर्णं मिश्रयेत्। রস, গন্ধক, সৈন্ধব, বিষ, তামা প্রত্যেকে সমভাগ। সর্ব্বসমান লৌহচূর্ণ, লৌহসমান অভ্রভস্ম। লৌহপাত্রে লৌহদণ্ডে নিশিন্দারসে মাড়িয়া তাহার সহিত পারার সমান মরিচচূর্ণ মিশ্রিত করিবে। र.सा.सं.।

**ज्वरी (इन्)** । त्रि। ज्वरयुक्ते। [निघ.।

**ज्वलत्प्रभा (न्ती)** । स्त्री। कृष्णसर्षपे। वै.

**ज्वलनः** । पुं । चित्रकवृक्षे । अम. । भा.४भ. नाड़ीव्रण-चि. । [प सु. । रा.नि.व.१२ ।

**ज्वलनाश्मा (श्मा)** । पुं । सूर्य्यकान्तमणौ ।

**ज्वलनाभः** । पुं । गन्धतृणे । वै.निघ. ।

**ज्वल(लि)नी** । स्त्री । मूर्व्वायां । मूर्गा । रा. नि.व.३ । [निघ. । दग्धान्ने । श.च. ।

**ज्वाला** । स्त्री । धातकीवृक्षे । चित्रकवृक्षे । वै.

**ज्वालाखरगदः** । पुं । जालगर्द्दभकरोगे । रा.नि.व.२० ।

**ज्वालागर्द्दभकः** । पुं । जालगर्द्दभकरोगे ।

**ज्वालानलरसः** । पुं । अजीर्णाधिकारे । सर्जिक्षारः यवक्षारः पारदः गन्धकः पञ्चकोलम् इति नवद्रव्यं प्र. समं, सर्व्वतुल्या जया (सिद्धि) जयार्द्ध शिग्रुत्वक् (सजिनार छाल) चूर्णं । जया शिग्रुचित्रकभृङ्गराजरसैन प्र. दिनत्रयं भावयित्वा शुष्कः लघुपुटेन पाच्यः । उद्धृत्य आर्द्रकरसेन ७ भावना देयाः । र.सा.सं. । मतान्तरे टङ्कणमपि ग्राह्यम् । भावप्रकाशे चास्त्येवं पाठः ।

**ज्वालामरिचकः** । पुं । कटुवीरायां । गाछ मरिच । See कटुवीरा ।

**ज्वालामुखरसः** । पुं । ग्रहण्यधिकारे । "शु-द्धसूतं समञ्जस्यं सुवर्णं मरिचं समं । रक्तचित्रकजै-र्द्रावैः जलमण्डूपिकाद्रवैः । दिनैकं मर्द्दयेत् खल्ले चतुर्गुञ्जाञ्च भक्षयेत् ॥" पारद, गन्धक, स्वर्ण, म-रिच प्रत्येक समभाग रक्तचितेर रस ओ पानार रसे १ दिन मर्द्दन करिबे । रस.कौ. ।

**ज्वालारासभकः** । पुं । जालगर्द्दभकरोगे । रा.नि.व.२० ।

# झ

**झटा (आमला)** । स्त्री । भूम्यामलक्याम् । भूँइ आमला । मा.नि. । वै.निघ. ।

**झगटी** । स्त्री । कुन्दवृक्षे । वै.निघ. ।

**झम्पाकः (रुः)** । पुं । वानरे । मर्कटे । वै. निघ. । श.र. ।

**झम्पाशी (इन्)** । पुं । जलकाके । पानकौ-ड़ी । वै.निघ. । मत्स्यरङ्के । जटा. ।

**झम्पी (इन्)** । पुं । वानरे । श.र. ।

**झर्झरिका** । स्त्री । धूमस्याम् । दाले रुटी । गुणाः धूमसीशब्दे मृग्याः ।

**झर्झरीकः** । पुं । शरीरे । उणा. ।

**झला** । स्त्री । झिल्लिकायाम् । वै.निघ. ।

**झलिः** । स्त्री । क्रमुके । शुपारि । वै.निघ. ।

**झल्लकण्ठः** । पुं । पारावते । हारा. ।

**झल्लिका** । स्त्री । उद्वर्त्तनपटे मले च । मे. ।

**झषः** । पुं । मत्स्ये । अम. । जलचरभेदे । वा. उ.५च. ।

**झषलोचना** । स्त्री । मत्स्याक्ष्याम् । वै.निघ. ।

**झषा (सा)** । स्त्री । गोरक्षतण्डुलायाम्, नाग-बलायाम् । प.मु. । अम. ।

**झषाशनः** । पुं । शिशुमारे । त्रिका. ।

**झाटः** । पुं । व्रणमार्ज्जने । मे. । [ल । अम. ।

**झाटलः** । पुं । घण्टापाटलायाम् । घण्टापारु-

**झाटा (आमला)** । स्त्री । भूम्यामलक्याम् । अम. । ज्वरकुञ्जरपारीन्द्ररसे मृग्या । यूथिकायां । यूँइ । श च. ।

**झाटिका (टी)** । स्त्री । भूम्यामलक्याम् । श.च. । जातीपुष्पवृक्षे । वै.निघ. । [टि । हारा. ।

**झामकम्** । क्ली । दग्धेष्टकायाम् । झामा इ-

**झालिः** । स्त्री । व्यञ्जनभेदे, झारीति भाषा । तत्साधनं यथा—"आममाम्रफलं पिष्टं राजिकाल-वणान्वितं । भृष्टं हिङ्गुयुतं पूतं घोलितं झालिरु-च्यते । झालिरिरति जिह्वाया कुण्ठत्वं कण्ठशोध-नी । मन्दं मन्दं निपीता सा रोचनी वह्निबोध-नी ॥" भा. । [झाउ गाछ । श.र. ।

**झाबुः (कः, का)** । पुं, स्त्री । वृक्षविशेषे ।

**झिङ्गाकम्** । क्ली । कर्कटीभेदे । फलशाकवि-

शेषे। ঝিঙা গাছ। খটর, झिमनीति पाश्चात्ये। गुणा:—तिक्तं मधुरम् आमवातमन्दाग्निकरञ्च। राज.१प.। [ঝিঙে। भा.। वै.निघ.।

**झिङ्गिनी (ङ्गी) (ल्ली)**। स्त्री। जिङ्गिन्यां।

**झिञ्झिनी**। स्त्री। जिङ्गिन्याम्। ঝিঙে। वै.निघ.।

**झिञ्झिरिण्टिका (ण्टा) (रीटा)**। स्त्री स्वनामख्यातक्षुपविशेषे। झिंझिरीटा इति लोके। गुणा:—शीता कषाया रक्तातिसारघ्नी सन्तर्पणी वृष्या बल्या महिषीदुग्धवर्द्धनी च। रा.नि.व.४।

**झिण्टिका (ण्टी) (रीटिका)**। स्त्री। (Barlaria cristata, or B. Prionitis.) पुष्पवृक्षविशेषे। ঝাঁটী গাছ, কুলঝাঁটী। হিং कटसरैया। म्रा. गुणा:—कटुका: तिक्ता दन्तरोगघ्ना: शूलघ्ना: वातकफशोफकासत्वग्दोषश्रमन्यश्च। रा.नि.व.१०। "सैरेय: कुष्ठवातास्रकफकण्डूविषापह:। तिक्तोष्णो मधुरोऽनम्ल: सुस्निग्ध: केशरञ्जन:॥" भा.। तृणधान्यभेदे। गुणा: श्यामाकवत्। च.सू.२७अ.।

**झिल्लिकण्ठ:**। पुं। पारावते। त्रिका.।

**झूनि:**। पुं। क्रमुके। শুপারি গাছ। मे.।

**झेण्डू:**। स्त्री। तन्नामकक्षुपे। रा नि.व.५।

**झोड़:**। पुं। क्रमुकवृक्षे। শুপারি গাছ। भूरिप.।

**टगर:**। पुं। टङ्कणक्षारे। সোহাগা। त्रि। केकराक्षे। मे.।

**टङ्क: (क:)**। पुं। धरणे शाणमाने, २४ रक्तिके वा। प.प्र.१ख। क्ली। नीलकपित्थे। मे.। गुणा:—"शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु।" सु.सू.४६अ.। टङ्कणक्षारे। मे.। ज्व.चि.पञ्चवक्त्ररसे। जङ्घायाम्। हे.च.। राजाम्रे। থাস আম। भा.। रजतमुद्रायाम्। पाषाणदारणे।

**टङ्कण:**। पुं। टङ्कणक्षारे। সোহাগা। हे.च.। वै.निघ.ज्व.चि.मृतसञ्जीवन्याम्।

**टङ्कदेशज: (शीय:)**। पुं क्ली। वास्तूकशाकविशेषे। ঐদেশীয় বেতো। प.मु.।

**टङ्कनल:**। पुं। आम्रे। वै.निघ.।

**टङ्का**। स्त्री। जङ्घायाम्। मे.।

**टङ्कानक:**। पुं। वृक्षविशेषे। ब्रह्मदारुवृक्षे। তুঁত গাছ। श.च.।

**टङ्कारी**। स्त्री। स्वनाम्नैव प्रसिद्धे क्षुपविशेषे टेकारीति भाषा। गुणा:—"टङ्कारी वातजित्तिक्ता श्लेष्मघ्नी दीपनी लघु:। शोथोदरव्यथाध्मानी हिता पीठविसर्पिणाम्॥" भा.।

**टङ्कण: (न:)**। पुं, क्ली। खनिजोपरसविशेषे। সোহাগা। हिं मं टङ्कणखार। रस.र.यक्षक्षारे। स द्विविध: साधारणश्वेतभेदेन। प्रथमगुणा:—अग्निकरो रूक्ष: कफघ्न: वातपित्तकृच्च। भा.पू.१भ.धातव.। कटु: उष्ण: कफघ्न: स्थावरादिविषघ्न: कासश्वासघ्नश्च। द्वितीयगुणा:—स्निग्ध: कटूष्ण: वातकफघ्न: आमचयहर: श्वासविषकासमलहरश्च। रा नि.व.६। श्लेष्मवातघ्न: क्षाररस: तीक्ष्ण: उष्ण: अग्निवर्द्धक: रूक्ष: भेदक: बलवर्द्धनश्च। "टङ्कण: कामणष्टङ्क: सम्यक् क्षारश्च पाचन:। सुभगो मालतीजातो द्रवो लौहविशुद्धिद:॥" तच्छुद्धि:—"आदौ टङ्कणमादाय काञ्जिकाम्ले विनि:क्षिपेत्। एकरात्रात् समुद्धृत्य रौद्रयन्त्रे विभावयेत्। नरमूत्रगतं टङ्कं गवां मूत्रगतं तथा। दिनान्ते तत्समुद्धृत्य जम्बीराम्बुगतं तत:। जम्बीराम्लात्समुद्धृत्य नारिकेलस्य पात्रके। मरीचचूर्णसंयुक्तं क्षालयेच्छीतलाम्बुना॥" र.सा.सं.।

**टङ्काण: (क:)**। पुं। वृक्षविशेषे। তুন্দ গাছ। श.र.।

**टङ्गिणी**। स्त्री। पाठायाम्। श.च.। [त्रिका.।

**टट्टनी**। स्त्री। गृहगोधिकायाम्। টিকটিকি।

**टण्टुक:**। पुं। पीतलोध्रे। वै.निघ.।

**टलनम्**। क्ली। हृद्रोगे। वै.निघ.।

**टार:**। पुं। अश्वे। हे.च.।

**टिटि(ट्टि)भः (कः)** । पुं । पक्षिविशेषे । তিতির পাখী । अ.टी. । [भा. ।

**टिट्टिनिका (नी)** । स्त्री । जलभिरीषे ।

**टिण्टुकः** । पुं । श्योणाकवृक्षे । वा.उ.३७अ. । शीतलीभे । वै.निघ. । [ढेंड़शी । भा. ।

**टिण्डिशः** । पुं । डिण्डिशे । ঢেঁড়শ । डिं

**टीटिभकः** । पुं । टिट्टिभपक्षिणि । श.र. ।

**टुण्टु(ण्ठु)कः** । पुं । श्योणाकवृक्षे । अम. । श्योणाकभेदे । रा.नि.व.२२ । अ.द.१२अ. । च. द.मायतैले । स्वर्णलीवृक्षे । সোণালু । वै.निघ. । पक्षिविशेषे । টুনটুনী পাখী । श.र. । क्षुद्रखञ्ज-रिटे । श.च. । [क्षिणीवृक्षे । श.च. ।

**टुण्टुका** । स्त्री ; पाठायाम् । আকনাদি । ट-

**टुनाका** । स्त्री । तालमूल्याम् । श.च. ।

**टेन्दुकः** । पुं । श्योणाकवृक्षे । শোণা, সোণালু । वैद्यकम् । [श.र. ।

**टेरः (कः)** । त्रि । काणे । वक्रनेत्रे । টেরা ।

**टोलाफलः** । पुं । मधूकवृक्षे । वै.निघ. ।

**ठः** । पुं । शिवे ।

**ठक्कदेशीयः** । पुं । वाह्लीके । त्रिका.

## ड

**डङ्ग(ङ्गा)रिः (री)** । स्त्री । फलशाकलताविशेषे । ঢেঁাপা, চিচিঙ্গা । मं डांगर । कं डंगर । गुणाः—शीतला रुच्या वातपित्तरक्तदोषघ्नी शोषघ्नी जाड्यमूत्ररोधहरी तर्पणी गौल्या । बालफलगुणाः—सुमधुरं शीतलं पित्तघ्नं तृष्णादाहघ्नं रुच्यं सन्तर्पणं पुष्टिकरं वीर्य्यवृद्धिकरं बलकरं भ्रमघ्नं श्रमहरं । पक्वं तत् गुरु तृष्णादाहरक्ताद्य कुरुते । रा.नि.व.७ । See चिचिण्डः ।

**डण्डमत्स्यः** । पुं । मत्स्यविशेषे । দাঁড়িকা মাছ । वै.निघ. । [कारयन्त्रविशेषे ।

**डमरुयन्त्रम्** । क्ली । औषधपाकार्थं डमरुका-

**डल्लकम्** । क्ली । वंशनिर्म्मितपात्रे । ডালা ।

**डल्लणः** । पुं । निबन्धसंग्रहकारी ।

**डहुः (हूः)** । पुं । लकुचवृक्षे । ডেহুয়া ফল, ডেলো মান্দার । श.र. । फलगुणाः—गुरु विष्टम्भि त्रिदोषशुक्रदोषकरञ्च । राज. ।

**डाङ्गरः (री)** । पुं, स्त्री । अलाबूविशेषे । वै. निघ. । डङ्गरीफले । ঢেঁাপা । रा.नि.व.७ ।

**डालिमः** । पुं । दालिम्बवृक्षे । দাড়িম গাছ । अ.टी.भ. । [त्यूहपक्षिणि । जटा. ।

**डाहुकः** । पुं । हरिणविशेषे । वै.निघ. । दा-

**डिडि(ण्डि)माणकः** । पुं । प्रतुदपक्षिजाती । सु.सू.४६अ. । च.सू.२७अ. ।

**डिण्डः (ण्डकः)** पुं । रक्तैरण्डे । वै.निघ. ।

**डिण्डिमः** । पुं । करञ्जवृक्षे । वै.निघ. ।

**डिण्डि(ण्डी)रः** । पुं । समुद्रफेने । हे.च. । नकुल.१२अ. ।

**डिण्डिशः** । पुं । फलशाकविशेषे । ঢেঁড়শ । मं ढेड़शफल । वै निघ.२भ.अतिसा.पथ्य. । गुणाः —रुचिकृत् भेदनः पित्तश्लेष्मघ्नः शीतलो वातलः मूत्रलः अश्मरीहरो रुच्यश्च । भा.पू.१भ.शाकव. ।

**डिण्डीरमोदकम्** । क्ली । गृञ्जने । গাজর । रा.नि.व.७ । लशुने । रक्तमूलके । वै.निघ. ।

**डितिका** । स्त्री । बालरोगे । वै.निघ. ।

**डिम्बः (म्भः)** । पुं । शिशौ । रा.नि.व.१८ । उदररोगे । मूत्राशये । गर्भाशये । वै.निघ. । क्ली । फुस्फुसे । ह्रारा. । अण्डे । प्लीह्नि । পিলে । मे. ।

**डिम्बिका** । स्त्री । जलमक्षिकायां । वै.निघ. । श्योणाकवृक्षे । कामुक्याम् । श.र. ।

**डिम्भा** । स्त्री । अतिबालिकायां । रा.नि.व.१८ ।

**डुक्करी** । स्त्री । अलाबूभेदे । ঢেঁড়শ । वै.निघ. ।

**डुण्डुः** । पुं । द्विमुखसर्पे । त्रिका ।

**डुण्डुभः** । पुं । जलसर्पे । ঢেঁ ড়া সাপ । अम. ।

**डुण्डुलः** । पुं । क्षुद्रपेचके । रा.नि.व.१९ ।

**डुन्दुकः** । पुं । हरिणभेदे । पक्षिभेदे । ডাক পাখী । वै.निघ. ।

**डुलिः** । स्त्री । कच्छप्याम् । अम. । जटा. ।

**डुलिका** । स्त्री । खञ्जरीटाकारपक्षिविशेषे ।

**डूली** । स्त्री । चिल्लीशाके । रा.नि.व.७ ।

**डोड़ी** । स्त्री । जीवन्तीक्षुपे । गुणाः – मलबन्धकरी वातला रुच्या दुर्जरा च । राज. ।

**डोड़ि(ण्डि)का** । स्त्री । फलशाकविशेषे । हिं करेकका । मं हरणदोड़ी । गुणाः -- पुष्टिकरी रुच्या दीपनी लघुः पित्तकफार्शोघ्नी क्रमिगुल्मघ्नी च । भा.पू.१भ.शाकव. ।

**डोरड़ी** । स्त्री । बृहत्याम् । रा.नि.व.४ ।

**डोलाफलम्** । क्ली । फलविशेषे । वै.निघ.२ भ.वा.व्या. ।

**ढक्कः** । पुं । अभिलाषे । वै.निघ ।

**ढक्कणम्** । क्ली । शैवाले । वै.निघ. ।

**ढ(ढा)मरा** । स्त्री । हंसे ।

**ढिण्ढिणिका (णी)** । स्त्री । जलशिरीषे । वै.निघ. ।

**ढोलसमुद्रिका** । स्त्री । ढोलसमुद्र इति ख्याते वृक्षविशेषे । सा कीटादिविषहरी । अत्रि. ।



**तक्किलम् (ला)** । क्ली, स्त्री । औषधे । वै. निघ. । उणा. ।

**तक्कोलम्** । क्ली । कक्कोले । কাঁকলা । वै.निघ. ।

**तक्रम्** । क्ली । पादजलघोले । र.मा. । प.प्र २ ख. । रा.नि.व.१५ । घोलसामान्ये । ঘোল । तक्रं चतुर्विधं मस्तुमथितोदश्विद्घोलभेदेन । छच्छिका चेति पञ्च । तेषां नामगुणाः –"ससरं निर्जलं घोलं मथितं त्वसरोदकं । तक्रं पादजलम्प्रोक्तमुदश्विदर्द्धवारिकं । छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका ॥" तक्रगुणाः –"तक्रं त्रिदोषशमनं रुचिदीपनीयं रुच्यं वमिश्रमहरं क्रमहारि मस्तु । वर्णप्रदं पवननाशमुदश्विदाख्यं शस्तं कफश्रमहरं मनेषु घोलम् । अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः । आमातिसारे च विसूचिकायां वातज्वरे पाण्डुषु कामलेषु । प्रमेहगुल्मोदरवातशूले नित्यं पिबेत्तक्रमरोचके च ॥ शीतकालेऽग्निमान्द्ये च कफे पाण्ड्वामयेषु च । मार्गोपरोधे कुष्ठादिव्याधौ तक्रं प्रशस्यते । वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितं । शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् । जवानीसैन्धवाजाजीव्योषयुक्तं कफोदरे । सन्निपातोदरे तक्रं त्रिकटुक्षारसैन्धवम् ॥ इति तक्रसेवनस्थानम् । तक्रं दद्यान्न क्षते नोष्णकाले नो दौर्बल्ये नो तृषामूर्च्छने च । नैव भ्रान्तौ नैव पित्तास्रदोषे नैतद्दद्यात् सूतिकायां विशेषात् ॥" इति वर्ज्यस्थानम् । "तक्रं स्नेहान्वितं तुन्दनिद्राजाड्यप्रदं गुरु । अर्द्धावशिष्टं सामान्यं निःशेषं लघु पथ्यदम् ॥" रा नि.व.१५ । "समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । बल्यं स्तोकोद्धृतघृतं गुरु वृष्यं कफावहम् । अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥" इति उद्धृतानुद्धृतस्वल्पोद्धृतघृततक्रगुणाः । आमपक्वतक्रगुणाः —"तक्रमामङ्कफङ्कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥" गव्यादितक्रविशिष्टगुणाः—"यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् ।" भा. ।

**तक्रकूर्च्चिका (र्च्ची)** । स्त्री । दुग्धविकारविशेषे । ছানা । गुणाः—ग्राहिणी वातला रुक्षा दुर्जरा च । सु.सू.४५अ.दधिव. । "तक्रेण पक्वं यत्क्षीरं सा भवेत्तक्रकूर्च्चिका ।" प.प्र.३ख. ।

**तक्रजननी** । स्त्री । घोले । वै.निघ. ।

**तक्रजन्म** । क्ली । दधनि । वै.निघ. ।

**तक्रपर्य्याया** । स्त्री । तक्राक्षुपे । रा.नि.व.४ ।

**तक्रपिण्डः (ण्डिका)** । पुं, स्त्री । तक्रकूर्च्चिकायाम् । छाना । नष्टदधिपिण्डे । नट् दुध इति देशगिरे । लक्षणं यथा --"दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा । द्रवभावेन रहितं तक्रपिण्डः स उच्यते ॥" गुणाः—वृष्यः बृंहणः बलवर्द्धनश्च । भा. ।

**तक्रभक्षा** । स्त्री । तक्राह्वायाम् । रा.नि.व.४ ।

**तक्रभित्** । पुं । कपित्थवृक्षे । वै.निघ. ।

**तक्रमांसम्** । क्ली । यवनदेशप्रसिद्धव्यञ्जनविशेषे । 'एसनी' इति पारस्यभाषा । तत्साधनविधिः --"पाकपात्रे घृतं दत्त्वा हरिद्राहिङ्गु भर्ज्जयेत् । छागादेः सकलस्यापि खण्डान्यष्टौ च भर्ज्जयेत् । सिद्धयोग्यं जलं दत्त्वा पचेन्मृदुतरं यथा । जीरकादियुते तक्रे मांसखण्डानि धारयेत् ॥" गुणाः ---"तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदं । कफघ्नं पित्तलञ्चैवमर्व्वाहारस्य पाचनम् ॥" भा. ।

**तक्रा** । स्त्री । स्वनामख्यातक्षुपे । गुणाः—कटुः क्रिमिघ्नी व्रणघ्नी च । रा.नि.व.४ ।

**तक्रारिष्टम्** । क्ली । यक्ष्मामरिष्टौषधम् । "यमानी आमलकं हरीतकी मरिचानि प्र. त्रिपलांशकानि पञ्चलवणानि पलांशानि एकत्र चूर्णयित्वा तक्राढकयुतानि तक्रारिष्टं भवति ।" च.द. ।

**तक्राह्वा** । स्त्री । तक्राक्षुपे । रा.नि.व.४ ।

**तगर(पादिक)म्** । क्ली, पुं । (Tabernaemontana coronaria.) जलजातक्षुद्रक्षुपे । তগরপাদুকা, শিউলি ছোপ । हिं तगरचण्डी । तें नन्दिवर्द्धनचेट्टु, गंधितगरपुचेट्टु । उत्. पाणिफलरा । तच्च द्विविधं तगरं पिण्डीतगरञ्च । पिण्डीतगरं कौङ्कणदेशे प्रसिद्धम् । गुणाः —उष्णं स्निग्धं स्वादु लघु विषापस्मारमूर्च्छाचिरोगविदोषघ्नञ्च । शीतलं तिक्तं दृष्टिदोषघ्नं पथ्यञ्च । रा.नि.व.१० । तगराभावे कुष्ठं ग्राह्यम् । च.सू.४ अ. । च.द.एलादितैले । वा.सू.१५अ. । आढुल्यक्षुपे । मदनवृक्षे । रा.नि.व.४।८ । पुष्पवृक्षविशेषे । টগর গাছ । श.र. ।

**तज्वी** । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

**तडाकः (गः)** । पुं, क्ली । पुरुषखातसरोवरे । श.र. । तल्लक्षणं—"प्रबलभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तडागः स्यात् ताड़ागं तज्जलं स्मृतम् ॥" भा. । जलं स्वादु कषायं वातकरञ्च । रा.नि.व.१४ । पाके कटु शीतलं हेमन्ते प्रशस्तञ्च । राज. । यन्त्रकूटके । मे. । [कटु । प.मु. ।

**तड़ागजः** । पुं । कालक्रोडे । কোমরভোগ

**तड़िल्वान्** । पुं । मुस्तके । मुতা । अम. ।

**तण्डकः** । पुं । फेने । खञ्जनपक्षिणि । मे । रोगे । वै.निघ. । [तण्डुलजले । मे. ।

**तण्डुरीणः** । पुं । कीटसामान्ये । वै.निघ. ।

**तण्डु(न्दु)लः (कः)** । पुं । तण्डुलीयशाके । কাঁটানটে । श.र । भा.म.४भ.प्रद.चि.। विड़ङ्गे । मे. । (Oryza sativa.) Rice. धान्यनिकरे । চাল । हिं चाउल । मं तान्दुल । तें बियमु । गु. चोखा । द्रा. चत्रीयल । ता. अरिशि । गुणाः—मेहघ्नः क्रमिघ्नः । नवः सोऽतिदुर्ज्जरश्च । भा. । भृष्टं तत् सुस्निग्धं कफघ्नं रुच्यं पित्तकरञ्च । राज. । अष्टसर्षपमितमाने । च.कल्प.१२अ. ।

**तण्डु(न्दु)लधावनम्** । क्ली । तण्डुलोदके । চেলুনিজল । रा.नि.व.१५ । वै.निघ. ।

**तण्डु(न्दु)ला** । स्त्री । विड़ङ्गायाम् । रा.नि. व.६ । महासमङ्गायाम् । [व.१५ ।

**तण्डु(न्दु)लाम्बु** । क्ली । तण्डुलोदके । रा.नि.

**तण्डु(न्दु)ली** । स्त्री । तण्डुलीयशाके । চাঁপা নটিয়া । रा.नि.व ५ । यवतिक्तायाम् । यवची इति लोके । रा.नि.व.३ । शशाण्डुलीकर्कट्याम् । रा.नि.व.७ ।

**तण्डु(न्दु)लीयः (कः)** । पुं, क्ली । विड़ङ्गे । मे. । (Amarantus(thus) spinosus or Amblogina polygonoides) Prickly Amaranth. स्वनामख्यातपत्रशाकक्षुपे । वनतण्डुलीयके । কাঁটানটে, গোয়াল নটে, ক্ষুদে নটে । हिं अल्पमरसा, चवड़ाइ । मं तांदुलिजा । कं किरुकुशाले । द्रा. काण्टेमाट । ता. मुल्लुकिरइ । गुणाः—शिशिरमधुरविषघ्नः रुचिकद्दीपनः पित्तदाहभ्रमघ्नश्च । रा.नि.व ५ । सृष्टमलमूत्री विषहारकश्च । भा.पू.१भ शाकव. । रसे मधुरः, वीर्य्ये शीतपाकी मधुरः, प्रभावश्च रक्तपित्त-

विषहरः । च.द. । "मधुरौ रसपाकाभ्यां रक्तपित्तमदापहः । तेषां शीततमौ रूक्षतण्डुलीयौ विषापहः ॥" सु.सू.४६अ. । तन्मूलगुणाः—"तण्डुलीयकमूलं स्वादुष्णं श्लेष्मविनाशनं । रजोरोधकरं रक्तपित्तप्रदरसंहरम् ॥" भचि. । विशेषतः शूलघ्नम् । तच्छाकगुणाः—हिमम् अर्शःपित्तरक्तविषकासघ्नं ग्राहि मधुरं दाहशोषघ्नं रुच्यञ्च । रा.नि.व.७ । "स्वादुपाकमसृक्पित्तविषघ्नं तण्डुलीयकम् ।" भचि.१६अ. । [ड़ङ्ग । रा.नि.व.६ ।

**तण्डु(न्दु)लीयका** । स्त्री । विड़ङ्गायाम् । वि

**तण्डुलीयदलम्** । क्ली । तण्डुलीयशाके । रा.नि.व.७ । [কাঁটানটের শিকড় । भचि. ।

**तण्डुलीयमूलम्** । क्ली । तण्डुलीयकजटायां ।

**तण्डु(न्दु)लीवीजः** । पुं । तण्डुलीयशाके । भा.पू.शाकव. ।

**तण्डुलीयशाकम्** । क्ली । शाकभेदे । কাঁটানটিয়ার শাক । रा.नि.व.७ । सि.यो.र.पि.चि. ।

**तण्डुलुः** । स्त्री । विड़ङ्गे । श.र. ।

**तण्डु(न्दु)लेरः (कः)** । पुं । तण्डुलीयशाके । भा.पू.१भ.शाकव. ।

**तण्डु(न्दु)लोत्थ(दक)म्** । क्ली । प्रक्षालिततण्डुलजले । চেলুনির জল । तस्य विधिः—तण्डुलपलं कषायः कृत्वा चतुर्गुणजलेन क्षाल्यम् । प.प्र.१ख. । शीतकषायमानेन वा तण्डुलोदककल्पना इति केचित् । अष्टगुणजलमिति शार्ङ्ग. । "कुट्टितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत् । भावयित्वा जलं ग्राह्यम् ।" "जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात् । भावयित्वा ततो देयं तण्डुलोदककर्म्मणि ।" तन्त्रान्तरम् । गुणाः—कषायं मधुरं लघु संग्राहि विषच्छर्द्दितृष्णादाहनाशनम् । रा.नि.व.५ । [श.च. ।

**तण्डुलोघः** । पुं । वेष्टकवंशे । বেউড় বাঁশ ।

**ततः** । पुं । वायौ । वै.निघ. ।

**ततपत्री** । स्त्री । कदलीवृक्षे । श.च. । [निघ. ।

**तत्काललवणम्** । क्ली । सौवर्चललवणे । वै.

**तत्पदः** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**तत्फलः** । पुं । श्वेतपद्मे । कुष्ठे । কুড় । चोरानामगन्धद्रव्ये । धरणि. । रोहितवृक्षे । वै.निघ. ।

**तत्त्वम्** । क्ली । परमात्मनि । स्वरूपे । वस्तुनि । त्रिका. । चित्ते । धरणि. । [रा.नि.व.१५ ।

**तद्दूप्यम्** । क्ली । पातलदधनि । পাৎলা দই ।

**तद्विद्यसम्भाषा** । स्त्री । विजिगीषुया स्पर्द्धया सारोद्धारपूर्व्वं गुह्यार्थप्रकटने । च.वि.८अ. ।

**तनयः** । पुं । पुत्रे । स्त्री । कन्यायाम् । कृष्णतुलस्याम् । श.च. । पृश्निपर्ण्याम् । वै.निघ. ।

**तनुः (नूः)** । स्त्री । त्वचि । त्वक् । नार्य्याम् । मे. । शरीरे । रा.नि.व.१८ । (स्) क्ली । शरीरे । त्रि । अल्पे । कृशे । मे. ।

**तनुकम्** । क्ली । धातकीपुष्पे । विभीतके । त्वचि । দারুচিনি । वै.निघ. ।

**तनुकूपः** । पुं । रोमकूपे । वै.निघ. ।

**तनुच्छायः** । पुं । ज्वालावर्व्वूरकवृक्षे । ক্ষুদে বাব্‌লা । रा.नि.व.८ ।

**तनुत्वक्** । पुं । तेलाशाक इति ख्याते वृक्षे । प.मु. । सूक्ष्मत्वचि । দারুচিনি । वै.निघ. ।

**तनुत्वचा** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । रा.नि.व.९ ।

**तनुपत्रः** । पुं । इङ्गुदीवृक्षे । रा.नि.व.८ । क्ली । वंशपत्रहरिताले । वै.निघ. ।

**तनुभस्त्रा** । स्त्री । नासिकायाम् । श.र. ।

**तनुरसः** । पुं । स्वेदे । ঘাম । हारा. ।

**तनु(नू)रुट्(हम्)** । क्ली । रोम्णि । केशे । श.र. । मे. । [रा.नि.व.११ ।

**तनुवीजः** । पुं राजवदरे । নারকুলে কুল ।

**तनुव्रणः** । पुं । वल्मीकनामरोगे । श.र. ।

**तनु(नू)च्छदः** । पुं । पायौ, गुदे । মলদ্বার । त्रिका. । [छ । रा.नि.व.११ ।

**तनुक्षीरः** । पुं । आम्रातकवृक्षे । আমড়া গা-

**तनूनः** । पुं । वायौ । वै.निघ. ।

**तनूनपम्** । क्ली । घृते । श.च. ।

**तनूनपात्** । पुं । चित्रकवृक्षे । अग्नौ । अम. ।

**तनोशुः** । पुं । षष्टिकशाली । ষেটে ধানবিশেষ । वै.निघ. ।

**तन्तु: (का:)** । पुं । वनशूकरे । वायुरोगे । भा.म.४भ. । जलजन्तौ । हे.च. । सन्ततौ । सूत्रे । अम. । मण्डलिसर्पभेदे । सु.कल्प.४भ. । सर्षपवृक्षे । भ.टी.रा. ।

**तन्तुकी** । स्त्री । शिरायाम् । शरीरान्तर्नाड्यां । रा.नि.व.१८।१९ । नाडीशाकभेदे । राजिकायां । राई । वै.निघ. । [जटा. ।

**तन्तुकीट:** । पुं । कीटविशेषे । गुटीपोका ।

**तन्तुण: (नाग:)** । पुं । ग्राहे । हाङ्गर । हे.च. ।

**तन्तुनाभ:** । पुं । ऊर्णनाभौ । माकड़शा ।

**तन्तुनिर्यास:** । पुं । तालवृक्षे । श.र. ।

**तन्तुभ:** । पुं । श्वेतसर्षपक्षुपे । प.मु. ।

**तन्तुर(ल)म्** । क्ली । मृणाले । श.र. । हे.च. ।

**तन्तुवाप: (य:)** । पुं । लूतायां । माकड़शा । अम. ।

**तन्तुविग्रहा** । स्त्री । कदलीवृक्षे । त्रिका. ।

**तन्तुसार:** । पुं । गुवाकवृक्षे । त्रिका. ।

**तन्त्रम्** । क्ली । औषधे । मे. । द्रव्ये । अग्निवेशादिकृतषट्संख्यवैद्यकशास्त्रभेदे । च.सू.१भ । वस्त्रे । पुं । ऊर्णनाभौ । पुत्रे । वै.निघ. ।

**तन्त्रकार:** । पुं । अग्निवेशादिषट्संख्यतन्त्रकारेषु । यथा—"अग्निवेशश्च भेड़श्च जतूकर्ण: पराशर: । हारीत: क्षारपाणिश्च जगृहुस्तन्मुनेर्वच: । तन्त्रस्य कर्त्ता प्रथममग्निवेशो यतोऽभवत् । अथ भेड़ादयश्चक्रु: स्वं स्वं तन्त्रकृतानि च । श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधस: ॥" च.सू.१भ. ।

**तन्त्रयुक्ति:** । स्त्री । असद्वादिप्रयुक्तवाक्यप्रतिषेधनेन स्ववाक्यपोषकशास्त्रयुक्तौ । तस्या: प्रयोजनं वाक्ययोजनमर्थयोजनञ्च । "असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् । स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तित: ॥ व्यक्ता नोक्तास्तु ये ह्यर्था लीना ये चाप्यनिर्मला: । लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि प्रसाधनम् ॥ यथाम्बुजवनस्यार्क: प्रदीपो वेश्मनो यथा । प्रबोधस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तय: ॥" सु.उ.६५भ. । [टी. ।

**तन्त्रवाय:** । पुं । लूतायाम् । माकड़शा । भ.

**तन्त्रिका (न्त्री)** । स्त्री । गुडूच्याम् । भ.द. १२भ. । र.सा.सं.पुटपाकप्रकरणे । कर्णपालीगतरोगविशेषे । लक्षणं—"कृशा दृढ़ा च तन्त्रीवत् पाली वातेन तन्त्रिका ।" वा.उ.१७भ. । सैंहलीपिप्पल्यां । वै.निघ. । शोणितवाहिशिरायां । मे. ।

**तन्द्रा** । स्त्री । विषयाज्ञाने । रा.नि.व.२० । सा च श्लेष्मतमोऽनिलसम्भूता । "तन्द्रा श्लेष्मतमोऽनिलै: ।" शार्ङ्ग.पू.६भ. । लक्षणं—"इन्द्रियार्थेष्वसंवित्ति: गौरवं जृम्भणं क्लम: । निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्द्दिशेत् ॥ मा.नि. । निद्रावत्क्लान्तौ । च.सू.१९भ. । [निदानम् ।

**तन्द्राकफ:** । पुं । तज्जनकश्लेष्मिकरोगभेदे ।

**तन्द्रालु:** । पुं । निद्रालौ ।

**तन्द्रि: (का)** । स्त्री । निद्रायां । आलस्ये । उणा. । च.सू.१९भ. ।

**तन्द्रिक:** । पुं । तन्नामकसन्निपातज्वरे । लक्षणं—"प्रभूता तन्द्रार्त्तिर्ज्वरकफपिपासाकुलतरा भवेच्छ्यामा जिह्वा पृथुलकठिना कण्टकवृता । अतीसार: श्वास: क्लमथुपरितापौ श्रुतिरुजौ भृशं कण्ठे जाड्यं शयनमनिशं तन्द्रिकगदे ॥" ज्वरे प्रथममुत्पन्ने चक्षुर्भ्यां नैव पश्यति । निदा. ।

**तन्वि: (न्वि:)** । स्त्री । अक्रकुल्यावनस्पतौ । कालतुलसी । र.मा. ।

**तन्वी** । स्त्री । शालपर्ण्यां । शालपाणि । हिङ्गुपत्र्यां । रा.नि.व.४।६ । त्रि । कृशाङ्ग्याम् ।

**तप:** । पुं । ग्रीष्मर्त्तौ । ग्रीष्मे । अम. । [श.र. ।

**तप:कर:** । पुं । तपस्विमत्स्ये । তপসী মাছ ।

**तपन:** । पुं । शुक्लार्कवृक्षे । শ্বেত আকন্দ । रा.नि.व.१० । भल्लातकवृक्षे । रा.नि.व.११ । सूर्यकान्तमणौ । रा.नि.व.१३ । ग्रीष्मर्त्तौ । हे.च. ।

**तपनक:** । पुं । शालिधान्यभेदे । वा.सू.६भ. । See शालि: । [ढ़ । रा.नि.व.४ ।

**तपनच्छद:** । पुं । आदित्यपत्रक्षुपे । हुड़हु-

**तपनतनया (येष्टा)** । स्त्री । महाशमीवृक्षे । रा.नि.व.८ । वै.निघ. । [१२ ।

**तपनमणि:** । पुं । सूर्यकान्तमणौ । रा.नि.व.

**तपना** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । रा.नि.व.९ ।

**तपनी** । स्त्री । पाठायाम् । वै.निघ. ।

**तपनीय(क)म्** । क्ली । स्वर्णे । अम. । रा.नि. व.१३ । अन्ने । पुं । शालिधान्यभेदे । च.सू.२७अ. ।

**तपनेष्टम्** । क्ली । ताम्रे । रा.नि.व.१३ । (ष्टा) स्त्री । शमीभेदे । ক্ষুদ্র শমী । वै.निघ. ।

**तपस्यः** । पुं, क्ली । कुन्दपुष्पवृक्षे । श.च. । पुं । फाल्गुने मासि । अम. ।

**तपस्वी** । पुं । घृतकरञ्जे । रा.नि.व.९ । मत्स्यभेदे । তপসী মাছ । श.च. । हिङ्गुपत्त्रां । दमनकवृक्षे । वै.निघ. ।

**तपस्विनी** । स्त्री । जटामांस्याम् । रा.नि.व.२३ । कटुक्यां । हे.च. । मुण्डीर्य्यां । মুণ্ডীরী । भा. । जिङ्गिण्यां । জিঙ্গা । वै.निघ. ।

**तपस्विपत्रः** । पुं । मदनकवृक्षे । दना । रा.नि व.१० । [मे. । शरदि । च.सू.१अ. । च.द. ।

**तपाः** । पुं । ग्रीष्मर्त्तौ । अ.टी. । माघमासे ।

**तपात्ययः** । पुं । वर्षाकाले । हे.च. ।

**तपोधनः** । पुं । श्रावणीनाममहाक्षुपे । मदनकवृक्षे । रा.नि.व.५।१० । स्त्री (ना) । मुण्डीर्य्यां । মুণ্ডীরী । मे. ।

**तप्त(क)म्** । क्ली । रौप्ये । रा.नि व.१३ । माक्षिकनामोपधातौ । স্বর্ণমাক্ষিক । र.सा.सं. ।

**तप्तखल्वः** । पुं । छागशकृन्मिश्रतुषाग्नौ उष्णीकृतखल्वे । গরম খল । तद्यथा—"अजाशकृत्तुषाग्निञ्च ज्वालयित्वा भुवि क्षिपेत् । तस्योपरिस्थितः खल्वस्तप्तखल्व इति स्मृतः ॥" अनि. ।

**तप्तराजतैलम्** । क्ली । शिरोरोगे तैलम् । सर्षपतैलं ४ श. गोमूत्रं १६ श. । क्वाथार्थं—धुस्तूर-करञ्ज-भिण्टी-जयन्ती निर्गुण्डी शिरीष हिञ्जलवीज-शिग्रु-दशमूलानां प्र. २ श. जलं ६४ श. शे. १६ श. । कल्कद्रव्यं—मयनफल-त्रिकटु कुष्ठ-कृष्णाजीरक-शुण्ठी कट्फल वरुणत्वक् मुस्ता हिञ्जल-विल्व-हरिताल-जवापुष्प विष मन शिला कर्कटशृङ्गी रक्तचन्दन शिग्रु यमानी विकङ्कतत्वचां प्र. २ तो. । भैष. ।

**तप्तरूप(क)म्** । क्ली । रौप्ये । रा.नि.व.१३ ।

**तप्तलोमशः** । पुं । काशीशे । হিরাকস্ । वै.निघ. ।

**तप्ताम्भः** । क्ली । उष्णसलिले ।

**तभः** । पुं । छागे । श.टी. ।

**तमः** । पुं । तमालवृक्षे । श.च. । अन्धकारे । अन्धकारदर्शने । सु.चि.२२अ. । क्ली । वातकफयोः प्रकृतेरन्यतमगुणे । वै.निघ. । चित्तोन्मेषहृदयावरणे । विमोहने । रा.नि.व.२१ । व्याधौ । रा.नि. व.२० । [वित्तौ । मा नि. ।

**तमःप्रवेशनम्** । क्ली । अन्धकारप्रविष्टस्येवासं-

**तमकश्वासः** । पुं । श्वासरोगभेदे । তমক শ্বাস । लक्षणं—"प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते । ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च । करोति पीनसं तेन रुद्धो घुर्घुरकं तथा । अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीड़कं । प्रताम्यति सवेगेन तृष्यते सन्निरुध्यते । प्रमोहङ्कासमानश्च स गच्छति मुहुर्मुहुः । श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः । तस्यैव च विमोक्ष्यन्ते मुहूर्त्तं लभते सुखं । तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् । न चापि लभते निद्रां शयानः श्वासपीड़ितः । पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः । आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति । उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान् । विशुष्कास्यो मुहुः श्वासी मुहुश्चैवावधम्यते । मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते । स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥" मा.नि. ।

**तमका** । स्त्री । भूम्यामलक्याम् । वै.निघ. ।

**तमरम्** । क्ली । शीषधातौ । वङ्गे । हे.च. ।

**तमराजः** । पुं । शर्कराविकारे । "नवात् गुड़" इति भाषा । गुणाः—तृष्णाज्वरदाहरक्तपित्तघ्नः । राज. । [अम. ।

**तमस्विनी** । स्त्री । निशायाम् । हरिद्रायाम् ।

**तमा** । स्त्री । भूधात्र्याम् । ভূঁই আমলা । काकोल्यां । কাঁকলা । रात्रौ । हे.च. । तमालवृक्षे । श.च. ।

**तमालः (कः)** । पुं । (Xanthochymus

Pictorius.) स्वनामख्यातवृक्षे । তমাল গাছ । मं तमालु । कं कुदालउ । गुणाः—मधुरः बल्यः वृष्यः शीतलः गुरुः तृष्णादाहहरः कफपित्तहरः श्रमशान्तिकरश्च । वरुणवृक्षे । বরুণ গাছ । रा. नि.व.६ । कृष्णखदिरे । श.च. । स्वलपत्रे । कृष्णतिले । त्रिका. । वंशत्वचि । বাঁশের ত্বক্ । अम. । श.र. । यवासशर्करायाम् । खड्गे । तापिञ्छे । त्रिका. । क्ली । श्वेतसुनिषण्णकशाके । तेजपत्रे । रा नि.व ६ । मे. । सु.सू.३८अ.शिरीविरेके । त्वचि । গুড়ত্বক্ । वै.निघ. ।

**तमालका (की)** । स्त्री । भूधात्र्याम् । ভূঁই আমলা । वै.निघ. ।

**तमालच्छदम्** । क्ली । तेजपत्रे । वै.निघ ।

**तमालपत्र(क)म्** । क्ली । तेजपत्रे । रा.नि. व.६ । च.चि.३अ. । तमालवृक्षे, दारुचिनीति ख्याते । तिलके । मे. ।

**तमालिका (नी) (ली)** । स्त्री । भूम्यामलकाम् । रा.नि.व.५ । ताम्रवल्ल्याम् । मंजिष्ठा । रा नि.व.३ । "भूधात्र्यान्तु तमालिनी ।" रा.नि. व.२३ । (ली) वरुणवृक्षे । रा.नि.व.६ ।

**तमाह्वयम्** । क्ली । तालीशपत्रे । वै.निघ. ।

**तमिः (मी)** । स्त्री । हरिद्रायाम् । रात्रौ । अम. ।

**तमिस्रा** । स्त्री । हरिद्रायाम् ।

**तमोज्योतिः (भित्)** । पुं । खद्योते । জোনাকি পোকা । वै.निघ. । श.र. ।

**तमोदर्शनम्** । क्ली । पित्तजरोगे अन्धकारदर्शने । भा. । [द्योते । त्रिका. ।

**तमोमणिः** । पुं । गोमेदरत्ने । प.मु. । ख-

**तमोविकारः** । पुं । रोगे । रा.नि.व.२० ।

**तमोव्रणः** । पुं । वल्मीके । त्रिका. ।

**तम्पा** । स्त्री । गवि । हे.च. । [नि.व.११ ।

**तम्बुरुः** । पुं । तुम्बुरौ । নেপালি ধনে । रा.

**तरः** । पुं । वृक्षे । भूरिप्र. । [वै.निघ. ।

**तरटः** । पुं । चक्रमर्दक्षुपे । চাকন্দা গাছ ।

**तरटी** । स्त्री । शोलापुरादौ स्वनामख्यातरक्तबीजकण्टकवृक्षे । मं तरड़ि । कं रेउंड़े । गुणाः—तिक्ता मधुरा गुरुः बल्या कफघ्नी । रा.नि.व.८ ।

**तरणिः** । पुं । अर्कपत्रवृक्षे । আকন্দ গাছ । अम. । ताम्रे । स्त्री । कण्टकसेवत्याम् । সেউতী গোলাপ । रा.नि.व.१० । घृतकुमार्य्याम् । अम. ।

**तरणिरत्नम्** । क्ली । माणिक्ये । रा.नि.व.१३ ।

**तरणी** । स्त्री । घृतकुमार्य्यां । प.मु. । क्षुद्रलौहुपे । रा.नि.व.६ । ब्रह्मचारिण्यां । श.च. । स्वनामख्यातपुष्पवृक्षे । मं तरणी । कं चेंवड़े । শেউতী গোলাপ । गुणाः—शीतला स्निग्धा पित्तदाहज्वरघ्नी मधुरा मुखपाकहरी तृष्णाच्छर्द्दिघ्नी च । राजतरणी कषाया कफकरी चक्षुष्या हृद्या सुगन्धिश्च । रा.नि.व १० ।

**तरणीवल्ली** । स्त्री । कण्टकशतपत्रीपुष्पवृक्षे । বুনো গোলাপ । वै.निघ. ।

**तरन्** । पुं । कारण्डवपक्षिणि । मे. ।

**तरलः** । पुं । तृणाग्नौ । वै.निघ. ।

**तरदी** । स्त्री । तरव्याम् । रा नि.व.८ ।

**तरन्तः** । पुं । पक्षिविशेषे । भेके ।

**तरम्बुजम्** । क्ली, पुं । (Lupinus albus or Citrullus vulgaris. Syn. Cucurbita citrallus.) तरमुज इति ख्यातफले । हिं तरमूजा । प.मु. । तद्वृक्षे । वै.निघ. । वीजं शैत्यकरम् ।

**तरलः** । पुं । माणिक्ये । रा.नि.व.१३ । श्वेतपुनर्नवे । हारमध्यमणौ । वै.निघ. । (ला) स्त्री । यवाग्वाम् । त्रिका. । काञ्जिके । मद्यविशेषे । मे. । मधुमक्षिकायाम् । हे.च. । [नि.व.४ ।

**तरवटः** । पुं । चाड़ल्याख्यक्षुपे । हिं रग । रा.

**तरसं (तरः,स्)** । क्ली। मांसे । बले । वेगे । त्रिका. ।

**तरक्षः (क्षुः)** । पुं। मृगजातीयमृगादनव्याघ्रे । তেঁদো বাঘ, নেকড়ে বাঘ । हिं तरख । रा.नि.व.१६ ।

**तरिता** । स्त्री । रसोने । तर्ज्जन्याम् । श.च. । श्मश्रुने । গাঁজা । "तारिका तरिता तथा ।" कुलार्णवतन्त्रे ।

**तरी** । स्त्री । धूमे । त्रिका. ।

**तरु:** । पुं । वृक्षे । अम. ।

**तरुकूर्णि:** । पुं । वाग्गुदपक्षिणि । त्रिका. ।

**तरुज:** । पुं । श्वेतखदिरे । प.मु. ।

**तरुजीवनम्** । क्ली । तरुमूले । अ.च. ।

**तरुट:** । पुं । नीलोत्पलमूले । राज.२प. । च. सू.२७अ. ।

**तरुण:** । पुं । एरण्डवृक्षे । प.मु. । श्वेतैरण्डवृक्षे । भा. । रा.नि.व.८ । स्थूलजीरके । মোটা জীরা । रा.नि.व ६ । युवके । रा.नि व.१८ । चीड़ादेवदारौ । क्ली । कुब्जकपुष्पे, कुन्दपुष्पे । मे. । प्राणनेत्रयोवास्थनि । वै.निघ. ।

**तरुणज्वर:** । पुं । नवज्वरे । नव জ্বর, নূতন জ্বর । "आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिण: ।" च.द. ।

**तरुणज्वरारिरस:** । पुं । ज्वरे मलयुक्तिक रज्वरलाघवकररसविशेषे । पारदगन्धकविषजैपालबीजानि समभागानि कुमारीरसेन एकत्र मर्द्दानि । পারা, গন্ধক, বিষ, জয়পালবীজ প্রত্যেকে সমান । सा.कौ. ।

**तरुणदधि** । क्ली । पञ्चदिनातीतदधनि ।

**तरुणदारु:** । पुं । वृद्धदारौ । বীজতাড়ক । वै.निघ.सन्धिकज्व.चि. । [निघ. ।

**तरुणपीतिका** । स्त्री । मन.शिलायाम् । वै.

**तरुणाभास:** । पुं । कर्कट्यां । কাঁকুড় । वै. निघ. । [त्वास्थिषु । सु. । भा. ।

**तरुणास्थि** । क्ली । घ्राणकर्णाक्षिगुदेषु कोम-

**तरुणि: (णी)** । स्त्री । स्थूलकृष्णजीरके । कुद्रदन्त्याम् । रा.नि.व.६ । चीड़ादेवदारुणि । रा. नि.व.१२ । तरणीपुष्पवृक्षे । শেউতী গোলাপ ফুলের গাছ । सु.सू.४६अ. । रा.नि.व.१० । घृतकुमार्य्याम् । रा.नि.व.५ ।

**तरुणीकटाक्षमाल:** । पुं । तिलकवृक्षे । তিল গাছ । रा.नि.व.१० । [हारा. ।

**तरुतू(दू)लिका** । स्त्री । वादुली । বাদুড় ।

**तरुनख:** । पुं । कण्टके । কাঁটা । हारा. ।

**तरुभुक्** । पुं । वन्दाके । পরগাছা । वै.निघ. ।

**तरुमालिनी** । स्त्री । भूम्यामलक्यां । वै.निघ. ।

**तरुमृग:** । पुं । वानरे । वै.निघ. ।

**तरुरागम्** । क्ली । कोमलपल्लवे । हारा. ।

**तरुराज:** । पुं । तालवृक्षे । रा.नि.व.९ ।

**तरुरुट् (हा) (रोहिणी)** । स्त्री । वन्दाके । মন্দরা । रा.नि.व.५ ।

**तरुवल्ली** । स्त्री । जतुकालतायाम् । জতুকা নাম গন্ধদ্রব্য । रा.नि.व.३ ।

**तरुशायी (इन्)** । पुं । पक्षिणि । हारा. ।

**तरुसार:** । पुं । कर्पूरे । हारा. । [व.५ ।

**तरुस्था** । स्त्री । वन्दाके । পরগাছা । रा.नि.

**तरूट:** । पुं । कमलमूले । उत्पलकन्दे । गुणा: —गुरु: विष्टम्भि: शीतलश्च । राज. ।

**तर्कारी** । स्त्री । (Sesbania aculeata.) जयन्तीवृक्षे । ধনিচা গাছ । हिं बहवकमेद । मं रान्शेवरि । तें तक्केडुचेट्टु । ता. एराजिल्गना । देवताड़वृक्षे । रा.नि.व.३ । अग्निमन्थ । भा.म.१ भ.ज्व.चि. । रा.नि.व.९।२३ । क्षुद्राग्निमन्थे । जीमूते । रा.नि व.२३ । वै.निघ.सा.ज्व.चि.चक्रादि । शिंशपावृक्षे । वनकर्कट्याम् । वै.निघ. । चक्रमर्द्दक्षुपे । वै.निघ.२भ.वा.व्या.चि. ।

**तर्किण: (ल:)** । पुं । चक्रमर्द्दक्षुपे । চাকন্দা গাছ । प.मु. । वै.निघ. । [ल । त्रिका. ।

**तर्कुपीठी** । स्त्री । वर्त्तन्यां । টেকোর বাঁটু-

**तर्कुशाण:** । पुं । शाणके । টেকোর শাণ । त्रिका. । [सा तु गर्भस्य चतुर्थे मासि भवति ।

**तर्जनी** । स्त्री । प्रदेशिन्यामङ्गुल्यौ । रा.नि.व.१८ ।

**तर्ण: (क:)** । पुं । शालिधान्यविशेषे, काश्मीरे आजव इति प्रसिद्धे । तूर्णक इति अरुणदत्त: । स कलमाद्यैर्नगुण: स्वादुपाकरसत्वादियुक्त: । वा. सू.टी.६।२अ.हेमा. । "तर्णक: प्रकुलाहत: ।" गोवत्से । কমলে বাছুর । अम. ।

**तर्दक:** । पुं । काष्ठदर्व्याम् । अ.द.१२अ. ।

**तर्दू:** । स्त्री । काष्ठदर्व्याम् । কাঠের হাতা । अम. ।

**तर्पणम्** । क्ली । तृप्ती । अम. । तीयमुतसक्तुषु । सि.यो.छर्दि.चि. । आहारविशेषे । स च द्राक्षादाड़िमखर्ज्जूरादिज्वरघ्नफलरसैः समधुशर्करं लाजाचूर्णं मिश्रयित्वालोड्य कृतः मदात्ययादिज्वरे यवागूस्थले देयः हितश्च। "तत्र तर्पणमेवादौ प्रदेयं लाजशक्तुभिः। ज्वरापहैः फलरसैर्युक्तं समधुशर्करं। द्रवेणालोड़िताश्चे स्युस्तर्पणं लाजसक्तवः ।" जल २ সে. দ্রাক্ষারস ১ ছ. দাড়িমাদিরস /॥० শে. খইচূর্ণ ৪ তো. । च.द.ज्व.चि. । नेत्रतर्पणानुष्ठाने । यथा—"वातातपरजोहीने वेश्मन्युत्तानशायिनः । अभितो माषचूर्णेन क्लिन्नेन परिपिष्टितौ । समौ दृढ़ौ च सम्बोधौ कर्त्तव्यौ नेत्रकोशयोः । पूरयेद्घृतमण्डेन विलीनेन सुखोदकैः । सर्पिषा शतधौतेन क्षीरजेन घृतेन वा । निमग्नान्यक्षिपक्ष्माणि यावत्स्युस्तावदेव हि । पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः । भिषग्भिरेव विख्याततर्पणस्येदितीविधिः ॥" भा.पू.२भ. । त्रि । नेत्रपूरणे । तृप्तिजनने । वा.टी. ।

**तर्पणकषायः** । पुं । पञ्चमांशावशिष्टकषाये । "तर्पणपञ्चमांशके ।" रा.नि.व.२० । यत्र यत्र तर्पणकषायविधिस्तत्र तत्रैवं कल्पनीयम् ।

**तर्पणी** । स्त्री। पित्तघ्नेषु लाजयवधान्यक्तान्नेषु । "लाजाश्च यवधानाश्च तर्पणी पित्तनाशिनी ।" रा.नि.व.१८। गुरुकाश्मर्य्यवृक्षे, श्लेष्मधातकवृक्षे । श.मा.।

**तर्पिणी** । स्त्री । पद्मचारिण्याम् । স্থলপদ্ম । श.च. । [२१।

**तर्व्वटः** । पुं । चक्रमर्द्दे । চাকন্দা । रा.नि.व.

**तर्षः** । पुं । तृष्णायां । लिप्सायां । त्रिका. ।

**तर्षणम्** । क्ली । पिपासायाम् । जटा. ।

**तर्क्षुः** । पुं । तरक्षुमृगे । श.र. ।

**तर्ण्यः** । पुं । यवक्षारे । र.मा. ।

**तलः** । पुं । तालवृक्षे । मे. । वै.निघ.२भ.वा.व्या.चि. । वल्कि । खड्गस्याधोभागे । ज.द.२भ. । चपेटे । रा.नि.व.१८ । मूले । गर्त्ते । त्रिका. । आधारे । हे.च. । [वै.निघ. ।

**तलकम्** । क्ली । पुष्करिण्यां । हिं तालाव ।

**तलसारकम्** । क्ली । अश्वस्य वक्षःस्थलरज्जौ । तङ्ग इति भाषा । हे.च. ।

**तलहृदयम्** । क्ली। मध्यमाङ्गुलीमनुपूर्व्वेण पादतलस्य मध्ये । हे.च. । तन्नामकसकर्मिमर्म्मणि । सु.शा.६भ. ।

**तला** । स्त्री । गोधायाम् । अम. ।

**तलामणिः** । पुं । प्रवाले । त्रिका. ।

**तलाह्वम्** । क्ली । तालीशपत्रे । रा.नि.व.६ ।

**तलिका** । स्त्री । तलसारके । हे.च. ।

**तलित(मांस)म्** । क्ली । सन्तलितमांसे । ভাজা মাংস । यथा—"शूलमांसविधानेन मांसं सम्यक् प्रसाधितम् । पुनस्तदाज्ये संभृष्टं तलितं प्रोच्यते बुधैः ॥" गुणाः—"तलितं बलमेधाग्निमांसौजःशुक्रवृद्धिकृत् । तर्पणं लघु सुस्निग्धं रोचनं दृढ़ताकरम् ॥" भा. ।

**तलिन(म)म्** । क्ली । शय्यायां । त्रि । तुच्छे । हारा. । दुर्बले । हे.च. । मे. ।

**तलेक्षणः** । पुं । शूकरे । वै.निघ. ।

**तल्पः** । पुं, क्ली । शय्यायां । अम. ।

**तल्पकीटः** । पुं । कीटभेदे । ছারপোকা ।

**तल्पनम्** । क्ली । पृष्ठवंशमांसे । মেরুদণ্ডের মাংস । हारा. । हस्तिपृष्ठे । वै निघ. ।

**तल्लः** । पुं । तड़ागे । वै.निघ. ।

**तवराजः** । पुं । यवासशर्करायां । मिना इति भाषा । रा.नि.व.१४ । वै.निघ.चय.चि.तवराजचूर्णे ।

**तवराजखण्डः** । पुं । यवासशर्कराजातखण्डे । মালথওবিশেষ । मं खण्डतवराज, मिनार खांड़ । गुणाः—दाहहरः तापशान्तिकरः तृप्तिजनकः मूर्च्छामोहहरः श्वासघ्नः इन्द्रियतर्पणः शीतलः सुमधुरश्च । रा.नि.व.१४ ।

**तवराजोद्भवः** । पुं । तवराजखण्डे, नवात् इति ख्याते मिष्टान्ने । वै.निघ. ।

**तवराजोद्भवखण्डः** । पुं । तवराजखण्डे । रा.नि.व.१४ ।

**तवर्णकृत्** । पुं । शरटे । গিরগিটি । वै.निघ.।

**तवक्षीरम्** । क्ली । स्वनामख्यातपिष्टकविशेषे । तत्तु यवजं गवयक्षीरपकं क्षीरजलं । हिं तीखा-

क्षीरं । गुणाः – मधुरं शिशिरं दाहपित्तघ्नं चय क्षामककफश्वासघ्नं रक्तदोषहरञ्च । रा.नि.व.६ । गन्धपत्रायाम् । वै.निघ.अर्श: चि.चन्द्रप्रभायां ।

**तवक्षीरी** । स्त्री । गन्धपत्रायां रा.नि.व.४।६। १० । तवक्षीरे । वै निघ । [यां । वै.निघ. ।

**तवक्षीर्य्येकपत्रिका** । स्त्री । आम्रहरिद्रा-

**तवीषः** । पुं । सुवर्णे । मे. ।

**तसरः** । पुं । सूत्रवेष्टने । उणा. ।

**तस्करः** । पुं । स्पृक्कायां । पिड़िং শাক । प. मु. । मदनवृक्षे । ময়না গাছ । जटा. । चौरके । চোরানামক গন্ধ দ্রব্য । वै.निघ. । [व.३ ।

**तस्करस्नायुः** । पुं । काकनासायां । रा.नि.

**तस्करी** । स्त्री । काकनासालतायां । ग्रन्थिपर्ण्यां । श्वेतलज्जालुकायां । वै.निघ. ।

**तक्षकः** । पुं । सर्पविशेषे । सु.कल्प.५अ. । वृक्षभेदे । हे.च. ।

**तक्षणम्** । क्ली । कृशीकरणे । [त्रिका. ।

**तक्षणी** । स्त्री । अस्त्रविशेषे । বাইস প্রভৃতি ।

**ताड़ः** । पुं । कृष्णताले । তমাল গাছ । हिन्ताले । হেঁতাল । श्रीताले । कण्टकताले । वै.निघ.।

**ताड़कम्** । क्ली । वृद्धदारकबीजे । भैष.शिरोरोग-चि.महादशमूलतैले ।

**ताड़का** । स्त्री । देवदाल्यां । দেয়াতাড়া । वै.निघ. । र.चि.८अ. ।

**ताड़काफलम्** । क्ली । स्थूलैलायां । प.मु. ।

**ताड़नम्** । क्ली । वायुजन्यव्रणवेदनाविशेषे । सु.सू.२१अ. । मारणे ।

**ताड़िः (ड़ी)** । स्त्री । तालरसे । তাড়ী । गुणाः—"तालजं तरुणं तोयमतीवमदकृन्मतं । अम्लीभूतं तदा तु स्यात्पित्तकृद्वातदोषहृत् ॥" भा. आसव.। वृक्षविशेषे । তেড়েং গাছ । भटी.भ. ।

**ताण्डवम्** । क्ली । तृणविशेषे । मे. ।

**तातनः** । पुं । खञ्जरीटपक्षिणि । त्रिका. ।

**तातलः** । पुं । रोगे । पाके । मे. ।

**तानीयकः** । पुं । यावनालवृक्षे । জনারগাছ । वै.निघ. ।

**तानूरः** । पुं । जलावर्त्ते । চাল্‌তা গাছ । वै.निघ. ।

**तान्त्रिकः** । पुं । तन्नामकसन्निपाते ।

**तापः** । पुं । अग्निसन्तापैर्वस्त्रादिभिः कृते स्वेदे । वा.टी.हेमा. । सन्तापे । रा.नि.व.२० । कृच्छ्रे । मे. ।

**तापकः** । पुं । ज्वरे । श.र. ।

**तापनः** । पुं । सूर्य्यकान्तमणौ । रा.नि.व.१३ ।

**तापसम्** । क्ली । तेजपत्रे । তেজপাত । रा. नि.व.६ । त्वचि । দারুচিনি । वै.निघ. ।

**तापसः** । पुं । मदनकवृक्षे । वकपक्षिणि । रा. नि.व.१९ ।

**तापसजम्** । क्ली । तेजपत्रे । वै.निघ. ।

**तापसतरुः** । पुं । इङ्गुदीवृक्षे । अम. । हिङ्गुआ । पुत्रञ्जीवकवृक्षे । सु.सू.३८अ. ।

**तापसद्रुमः** । पुं । इङ्गुदीवृक्षे । জিয়াপুতা । रा.नि.व.८ । स्वर्णमाक्षिके । र.सा.सं.मेहवज्ररसे । वकवृक्षद्वये । वै.निघ. । [रा.नि.व.४ ।

**तापसद्रुमसन्निभा** । स्त्री । पुत्रदात्रीक्षुपे ।

**तापसपत्रः** । पुं । दमनकक्षुपे । দনা । रा. नि.व.१० ।

**तापसप्रियः** । पुं । इङ्गुदीवृक्षे । प.मु. । र. मा. । चारवृक्षे । পেয়াল গাছ । स्त्री । कदल्याम् । स्त्री । द्राक्षालतायाम् । रा.नि.व.११ ।

**तापसवृक्षः** । पुं । इङ्गुदीवृक्षे । सु.सू.३७अ., चि.१८अ., वा.सू.१५अ.अर्कादिः । "श्वेतायुग्मं तापसानाञ्च वृक्षः ।"

**तापसा** । स्त्री । द्राक्षायाम् । वै.निघ. ।

**ताप(म)सी** । स्त्री । जटामांस्यां । आम्रहरिद्रायां । আম আদা । वै.निघ. ।

**तापसेष्टः** । पुं । प्रियालवृक्षे । পেয়াশাল গাছ । रा.नि.व.११ ।

**तापसेक्षुः** । पुं । इक्षुविशेषे । गुणाः—"तापसेक्षुर्भवेन्मृद्वी मधुरा श्लेष्मकोपनी । तर्पणी रुचिकृच्चापि वृष्या च बलकारिणी ॥" भा. । कान्तारेक्षुगुणाश्च । सु.सू.४५अ. ।

**तापस्वेदः** । पुं । स्वेदविशेषे । वस्त्रकवेष्टिते काये अग्निसिक्तैः खदिराङ्गारप्रतप्तैर्वालुकावस्त्रका स्वकन्दुककपालपाणिभिः प्रयामस्य बहुशोऽङ्गतापे । भा. । सु.चि.३२अ ।

**तापहरी** । स्त्री । व्यञ्जनविशेषे । ताहड़ी, ताताहोरी इति भाषा । तत्साधनविधिः—"घृते हरिद्रासंयुक्ते माषजा मज्जयेद्वटीः । तण्डुलांश्चापि निर्धौतान् सद्वैव परिभर्जयेत् । सिद्धयोग्यं जलं तत्र प्रविष्य कुशलैः पचेत् । लवणार्द्रकहिङ्गूनि मात्रायां तत्र निक्षिपेत् । एषा सिद्धिं समायाता प्रोक्ता तापहरी बुधैः । भवेत्तापहरी बल्या तथा श्लेष्माणमाचरेत् । बृंहणी तर्पणी रुच्या गुर्व्वी पित्तहरी स्मृता ॥" भा. ।

**तापिञ्छः (ञ्छः) (ञ्जः)** । पुं । तमालवृक्षे । अ.टी.भ. । (ञ्ज) क्ली । स्वर्णमाक्षिके, धातुमाक्षिके । रा.नि.व.१३ ।

**तापिनी** । स्त्री । भारतवर्षीयनदीविशेषे । सा च पश्चिमदेशे प्रसिद्धा । तज्जलं नेत्रवतीजलतुल्यगुणम् । रा.नि.व.१४ ।

**तापि(पी)समुद्भवम्** । क्ली । माक्षिकनामोपधातौ । स्वर्णमाक्षिक । र.सा.सं. ।

**तापीजम्** । क्ली। स्वर्णमाक्षिके । रा.नि.व.१३।

**ताप्य(क,ज)म्** । क्ली । धातुमाक्षिके, स्वर्णमाक्षिके । वै.च. । र.मा. । तुत्थके । तुँतिया । रा.नि.व.१३ । सि.यो.यक्ष्म.चि. ।

**ताप्युत्थसंज्ञकम्** । क्ली । माक्षिकधातौ । स्वर्णमाक्षिक । र.मा. ।

**तामरम्** । क्ली । घृते । जले । भ रुद्रः ।

**तामरसम्** । क्ली । कमले । रा.नि.व.१० । नीलपद्मे । वै.निघ. । स्वर्णे । त्रिका. । ताम्रे । मे. । सारसपक्षिणि । अम. ।

**तामलकी** । स्त्री । भूम्यामलक्याम् । भूँइ आमला । च.द.सि.यो.यक्ष्म.चि.च्यवनप्राशे ।

**तामसः** । पुं । पेचके । रा.नि.व.१९ । सर्पे । मे. । तमोगुणे । स्त्री । जटामांस्यां । रा.नि.व.१२।

**ताम्बूलम्** । क्ली । (Piper Betle, Syn. Chavica Betle.) नागवल्लीदले, पर्णे । पान । हिं पान । तें तामलपाकु । ता. वेट्टिली । वम्. नागवेल । गुणाः—"ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरं । वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु ॥ बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् । मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् । हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनं । नवं तदेव मधुरकषायानुरसं गुरु । वल्लासजननं प्रायः पत्रशाकगुणं स्मृतम् । बङ्गदेशोद्भवं पर्णं परं कटुरसं सरम् । पाचनं पित्तजननमुष्णं कफहरं स्मृतं ॥ पर्णं पुराणमकटु खल्लकं तनु पाण्डुरम् । विशेषाद्गुणवद्वेद्यमन्यद्धीनगुणं स्मृतम् ॥" भा. । "शिरा पर्णस्य शैथिल्यं कुर्य्यात्तस्यास्तद्रसः । शीर्षं लग्दोषदन्तास्यभक्षिते तु सितासिते । अनिधाय मुखे पर्णं पूगं खादयते नरः । मतिभ्रंशी दरिद्रः स्यादन्ते न स्मरते हरिम् ॥ कृष्णपर्णस्य गुणाः—तिक्तोष्णं कषायं दाहमुखजाड्यमलनाशनम् । शुभ्रपर्णं श्लेष्मवातामयघ्नं पथ्यं रुच्यं पाचनन्दीपनञ्च । सद्यस्त्रोटितस्य गुणा—मुखजाड्यारोचककरम् ।" रा नि.व.११ । ताम्बूलभक्षणनिषिद्धता यथा—"ताम्बूलमहितम्प्रोक्तं शरीरे रूक्षदुर्ब्बले । ज्वरास्रशोषपित्तास्रमदमूर्च्छाक्षिरोगिषु ॥" तदनुपयोगगुणाः—"ताम्बूलानुपयोगात्स्यात् श्लेष्मपित्तानिलान्वितः । देहक्लेशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥" राज.३प. । गुवाके । त्रिका. । [बाटी । वै.च. ।

**ताम्बूलकरङ्कः** । पुं । ताम्बूलपात्रे । पानेर

**ताम्बूलपत्रः** । पुं । नागवल्लीलतायाम् । वै. निघ. । पिण्डालौ । रा.नि.व.७ ।

**ताम्बूलपत्र(र्ण)कन्दः** । पुं । कन्दशाके, पिण्डालौ । थाम आलू, चुवड़ि आलू । रा.नि. व.७ । गुणाः—शुक्रलो विशदः लघुश्च । अत्रि. ।

**ताम्बूलपर्णिका (र्णी)** । स्त्री । नागवल्लीलतायाम् । पानेर गाछ । वै.निघ. ।

**ताम्बूलरागः** । पुं । मसूरे । हारा. ।

**ताम्बूलवल्लिका (ल्ली)** । स्त्री । नागवल्लीलतायाम् । पानेर गाछ । श.र. ।

**ताम्र(क)म्** । क्ली। (Cuprum.) Copper. स्वनामख्यातधातौ । र.मा. । तामा । हिं ताँबा । तें रागि । ता. सेम्बु । ताम्रलक्षणम्—"जवाकुसुमसङ्काशं स्निग्धं मृदु घनं क्षमं । लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥" इति । ताम्र-

दोषा अष्टौ—भ्रमी मूर्च्छा विदाहश्च उत्क्लेदः शोषवान्तयः । अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः ॥" र.सा.सं. । ताम्रोत्पत्तिः—"शुक्रं यत्कार्त्तिकेयस्य पतितं धरणीतले । तस्मात्ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥" गुणाः—"ताम्रं कषायं मधुरञ्च तिक्तमम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्याल्लघु लेखनञ्च । पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तं । शोथं क्रमिं शूलमपाकरोति प्राहुः परे बृंहणमल्पमेतत् ॥" भा.पू.१भ.धातुव. । "ताम्रं सुपक्वं मधुरं कषायं तिक्तं विपाके कटु शीतलञ्च । कफापहं पित्तहरं विबन्धशूलघ्नपाण्डूदरगुल्मनाशि ॥" इति शोधितताम्रगुणाः । "घनघातसहं स्निग्धं रक्तपत्रामलं मृदु । शुद्धाकरसमुत्पन्नं ताम्रं शुभमसंस्करम् ॥" तस्य लक्षणम् । ताम्रमारणम्—"गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना । शुध्यते नात्र सन्देहो विषदोषनिवृत्तये । जम्बीररससंपृष्टं रसगन्धकलेपितम् । ताम्रपत्रं शरावस्थं त्रिपुटे म्रियते ध्रुवम् । सूताभावे भिषग्युक्त्या वात्र हिङ्गुलमर्पयेत् ॥" इति । यथैवं मारितं ताम्रं ताम्रमम्लेन मर्द्दयेत् । तद्गोलं शूरणस्यान्ते कृत्वा वह्निः प्रलेपयेत् । शुष्के गजपुटे पाच्यं सर्व्वदोषहरं भवेत् । पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ॥ एवं ताम्रस्य पत्राणां विशुद्धिः सम्प्रजायते । तथा—"गोमूत्रे च पचेद्यामं ताम्रपत्रं दृढाग्निना । शुध्यते नात्र सन्देहो मारणञ्चात्र कथ्यते ॥" इति अन्यविधशोधनं । "सूतमेकं द्विधा गन्धं यामं मर्दन्तु कन्यया । द्वयोस्तुल्यं ताम्रपत्रं लिप्त्वा स्थाल्यां निधापयेत् । सम्यक् शूरणजैः सार्द्धं पार्श्वे भस्म निधापयेत् । चतुर्यामं पचेच्चुल्ल्यां पात्रपृष्ठे सगोमये । अलं पुनःपुनर्देयं स्वाङ्गशीतं विमर्द्दयेत् । म्रियते नात्र सन्देहः सर्व्वरोगेषु योजयेत् ॥ अम्लाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापय शुल्बपत्रम् । पक्वायमानं पुटयेत् सुयुक्त्या वान्त्यादिकं यावदुपैति शान्तिम् ॥" इति अन्यविधमारणम् । र.सा.सं. । अम्लपिष्टं मृतं ताम्रं शूरणस्थं वह्निमृदा । पुटेत् पञ्चामृतैर्वापि त्रिधा वान्त्यादिशान्तये ॥" र.चि.६अ. । रक्तचन्दने । त्रि । ताम्रवर्णे । पुं । कुष्ठरोगभेदे । वै.निघ. ।

**ताम्रकण्टकः** । पुं । रक्तखदिरवृक्षे । रा.नि.व.८ ।

**ताम्रकल्पः** । पुं । शीसाधिकारे कल्पविशेषः । "अथपारदगन्धञ्च कर्षद्वयमितं पृथक् । सर्व्वैः समं भवेत्ताम्रं जम्बीराम्लेन मर्द्दयेत् । सूर्य्यावर्त्तरसैः पश्चात् कणामोचरसेन च । योजयेत्तीव्रघर्म्मे तु यावत्तत्स्वेन्नु जीर्य्यति । जम्बीरस्य रसैर्भूयो रसं दत्त्वेन चालयेत् । दृढे शिलामये पात्रे चूर्णयेदतिशोभनम् ॥" मात्रा २ रतिः । विभीतक-पारद-गन्धकाः प्र. २ तो. जारितताम्रं ६ तो. जम्बीररसेन मर्द्दयेत् । अथ सूर्य्यावर्त्तरसेन कणामोचरसक्वाथेन च संमिश्र्य यावज्जरणं रौद्रे धारयेत् । पुनश्च जम्बीररसेन सम्मर्द्य शुष्के सति चूर्णयेत् । मा. २ र. । र.सा.सं. । [टि । আষাঢ়ে পোকা । হারা. ।

**ताम्रकिलिः (क्रमिः)** । पुं । इन्द्रगोपकीटे ।

**ताम्रकुट्टकः (कूटः)** । पुं । (Nicotiana rustica or tabacum. Latakia tobacco.) Tobacco. कलञ्जे, ताम्रकूटे । তামাক । पं, हिं तमाकु, चिलासीतमाकु । तैं पोगाकु, धूम्रपत्रमु । ता. पुगइ इलइ । वम्. तम्बाखु । तल्लम् ।

**ताम्रगर्भम्** । क्ली । तुत्थे । रा.नि.व.१३ ।

**ताम्रचक्षुः** । पुं । कपोते । वै निघ. ।

**ताम्रचूड़ः** । पुं । कुक्कुटे । प.मु. । च.सू.२७अ. । कुकुरवृक्षे । কুক্‌শিমা । रा.नि.व.५ ।

**ताम्रतुण्डः** । पुं । श्वेतमर्कटे । वै.निघ. ।

**ताम्रत्रपुजम्** । क्ली । कांस्यधातौ । भा. ।

**ताम्रदुग्धा** । स्त्री । गोरक्षदुग्धीनामक्षुपे । रा.नि.व.५ ।

**ताम्रद्रुः** । पुं । रक्तचन्दनवृक्षे । वै.निघ. ।

**ताम्रधातुः** । पुं । गिरिमृत्तिकायां । वै.निघ. ।

**ताम्रपत्रः** । पुं । जीवशाके । रा.नि.व.७ । क्ली । ताम्रस्य पत्रे । তামার পাত ।

**ताम्रपत्रकः** । पुं । आवर्त्तकीलतायाम् । আঁ-৫মোড়া । वै.निघ. ।

**ताम्रपर्णी** । स्त्री । हंसपादीनामक्षुपे । लज्जाविशेषे । रा.नि.व.५ ।

**ताम्रपर्णी** । स्त्री । गन्धमुण्डे । गन्धभादुलि विशेष । प.मु. । मञ्जिष्ठायां । वै.निघ. ।

**ताम्रपल्लवः** । पुं । अशोकवृक्षे । रा.नि.व.१० ।

**ताम्रपाकी** (इन्) । पुं । प्लक्षवृक्षे, गर्दभाण्ड वृक्षे । र.मा. । [पादाम् । रा.नि.व.३ ।

**ताम्रपादी** । स्त्री । रक्तलज्जालुकायाम्, हंस

**ताम्रपुष्पः** (कः) । पुं । आरग्वधवृक्षे । रक्त-काञ्चने । वै.निघ. । काञ्चनवृक्षे । जटा । भूचम्पके । भुँइ चाँपा । श.च. ।

**ताम्रपुष्पा** (ष्पिका) (ष्पी) । स्त्री । रक्तपाटलवृक्षे । पारुल गाछ । रा.नि.व.१० । (ष्पिका, ष्पी) रक्तत्रिवृति । धातकीवृक्षे । रा.नि.व.६। प.मु.चय.चि.खर्जूरासवे । नागरङ्गवृक्षे । नारा-ङ्गा । ज.द.१२अ. ।

**ताम्रप्रयोगः** । पुं । उदराधिकारे । "केवलं जारितं ताम्रं शृङ्गवेररसैः सह । विशुद्धं भक्षये-त्प्रातः······ ॥" रस.चि. । अन्यः गन्धकादौ । शोधितपारदगन्धकयोः प्र. २ तो. कज्जलीकृत्य अतिसूक्ष्मताम्रपत्रेण तोलकद्वयेन एकत्र सम्मिश्य मृत्पात्रे संस्थाप्य यावता प्लावितं भवेत् तावत्परि-माणं पक्वजम्बीररसं दत्त्वा तावत्कालं आतपे स्था-पयेत् यावता औषधं पङ्कभूतं भवेत् । अथ हस्तेन मर्द्दयित्वा वटी कार्य्या । रस.र. ।

**ताम्रफलः** । पुं । अङ्कोलवृक्षे । आँकोड़ गाछ । रा.नि.व.६ ।

**ताम्रमूला** (लिका) (ली) । स्त्री । लज्जालुकालतायां । रा.नि.व.५ । चौरिणीभेदे । थिकुई । र.मा. । मञ्जिष्ठायां । दुरालभायां । रा. नि.व.४ । भा.म.१भ.ज्व.चि. । "सिंही व्याघ्री ताम्रमूली ।" रक्तदुरालभायां । प.मु. ।

**ताम्रमृगः** । पुं । हरिणे । वै.निघ. ।

**ताम्ररसायनी** । स्त्री। दुग्धिकायां । वै.निघ.।

**ताम्रवर्णः** (कः) । पुं । पल्लीवाहलणे । रा. नि.व.८। गोधूमभेदे । हरिणे । गिरिमल्लिकायां । वै.निघ. ।

**ताम्रवर्णा** । स्त्री । जपावृक्षे । श.च. ।

**ताम्रवल्ली** । स्त्री । मञ्जिष्ठायां । प.मु. चित्रकूटदेशे प्रसिद्धायां स्वनामख्यातलतायां । सु.शा. १०अ. । गुणाः – कषाया कफघ्नी मुखकण्ठदोषघ्नी श्लेष्मशोधनी च । रा.नि.व.३ ।

**ताम्रवीजः** । पुं । कुलत्थे । प.मु. ।

**ताम्रवृन्तः** । पुं, स्त्री (न्ता) । रक्तकुलत्थे । त्रिका. । हे.च. ।

**ताम्रवृक्षः** । पुं । कुलत्थे । रक्तचन्दने । र.मा. ।

**ताम्रशालिः** । पुं । रक्तशाली । दादशानि । प.मु. । [कुकड़ा । जटा. ।

**ताम्रशिखी** (इन्) । पुं, स्त्री । ताम्रचूड़े ।

**ताम्रसार(क)म्** । क्ली । रक्तचन्दने । प.मु. । (कम्) रक्तखदिरे । रा.नि.व.८ ।

**ताम्रा** । स्त्री । ताम्रवल्लीलतायां । सिंहलीलतायां । रा.नि.व.३।६ । मञ्जिष्ठायां । रक्तगुञ्जायां । मद. । देहाभ्यन्तरचतुर्थीकलायाम् । या व्रीहिरष्ट-भागप्रमाणा कुष्ठाद्यधिष्ठाना । सु.शा.४अ. ।

**ताम्राभम्** । क्ली । रक्तचन्दने । श.च ।

**ताम्रार्धम्** । क्ली । कांस्ये । काँसा । त्रिका. । वै.निघ. ।

**ताम्राक्षः** । पुं । कोकिले । त्रिका. । रा.नि. व.१६ । चकोरपक्षिणि । (क्षी) कोकिलायाम् । वै.निघ. ।

**ताम्रिका** (म्री) । स्त्री । गुञ्जायाम् । रा. नि.व.३ । रक्तगुञ्जायाम् । मञ्जिष्ठायां । वै.निघ.।

**ताम्रोपधातुः** । पुं । तुत्थके । तूँते । भा.।

**तारम्** । क्ली । कर्पूरे । वै.निघ. । रौप्ये । मौक्तिके । रा.नि.व.१३ । शुद्धमौक्तिके । पुं । वानरविशेषे । त्रि । निर्मले । धरणिः । अत्युच्चस्वरे । त्रिका. ।

**तारकम्** । क्ली । नेत्रे । मे. ।

**तारका** । स्त्री । देवताड़वृक्षे । मद. । पद्मचारे । र.सा.सं.। इन्द्रवारुणीलतायां । रा.नि.व.३ । कनीनिकायां । मे. । त्रिका.। मुक्तायां । नक्षत्रे । वै.निघ. ।

**तारकेश्वररसः** । पुं । प्रमेहाधिकारे रसः । रससिन्दूरं वङ्गं लौहम् अभ्रकं प्रत्येकं समं मधुना मर्द्दयित्वा मधुना बहुमूत्रे लेहयेत् । अनुपानं पक्को-

दुम्बरवीजचूर्णं यथाबलमात्रं मधुना लेह्यम् । रस.र. । अन्य: सूचकच्छे रस: । गन्धक: लौहं वङ्गम् अभ्रं दुरालभा यवक्षार: गोक्षुरवीजं हरीतकी एषां प्रति समभाग: । कुष्माण्डसलिलेनैकच मर्द्दयित्वा कुशादितृणपञ्चमूलगोक्षुरयो: क्वाथेन च भावयित्वा रक्तिद्वया वटी कार्य्या । उदुम्बरवीजचूर्णस्य लेह: ।

**तारजम्** । क्ली । रौप्यमाक्षिके । वै.निघ. ।

**तारटी (ट्टी)** । स्त्री। तरटोवृक्षे । रा. नि.व.८।

**तारतण्डुल:** । पुं । धवलयावनाले । শ্বেত জবার বা জওয়ারা । रा.नि.व.१६ ।

**तारतालकीवीजम्** । क्ली । रसजारणार्थं वीजभेदे । र.चि.३अ. ।

**तारपुष्प:** । पुं । कुन्दपुष्पवृक्षे । रा.नि.व.१० ।

**तारमाक्षिकम्** । क्ली । Iron pyrites. रूप्यमाक्षिके, रूप्यस्योपधातौ । রৌপ্যমাক্ষি । प.मु.। रूप्याभावे तन्माक्षिकं ग्राह्यम् । लक्षणम्—“तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम् । किञ्चिद्रजतसाहित्यात्तारमाक्षिकमीरितम् । अनुकल्पतया तस्य ततो हीनगुणा: स्मृता: । न केवलं रूप्यगुणा: वर्त्तन्ते तारमाक्षिके । द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यत: ॥” गुणा:—“स्यात्तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं वस्तिरुक्कुष्ठपाण्डुमेहविषोदरान् । अर्श: शोथं क्षयङ्कण्डूं त्रिदोषमपि नाशयेत् । अयुद्धं तत् स्वर्णमाक्षिकवद्दोषान् करोति च ॥” तच्छोधनं यथा—“कर्कटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्वीरजैर्दिनं । भावयेदातपे तीव्रे विमला शुध्यति ध्रुवम् ॥” तन्मारणं यथा—“कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत् । तैलेन वाजमूत्रेण तारमाक्षिकमृच्छति ॥” भा. ।

**तारविमला** । स्त्री । रौप्यमाक्षिके । वै.निघ.।

**तारवीजम्** । क्ली। रौप्यादिकृतरसनिबन्धनवीजे । “कुटिलं विमला तीक्ष्णं समचूर्णम्प्रकल्पयेत्। पुटितम्पञ्चवारन्तु तारे वाह्यं शनैर्धमन् । यावद्द्विगुणं तस्य तावद्वीजम्भवेच्छुभम् ॥” र.चि.३अ. ।

**तारशुद्धिकरम्** । क्ली। सीसके । रा.नि.व.१३।

**तारा** । स्त्री । चीड़ानामदेवदारुभेदे । नेत्रकनीनिकायाम् । रा.नि व,१२।१८ ।

**ताराभ:** । पुं । यक्षद्रभेदे । दन्ताविशेष । पारदे । वै.निघ. ।

**ताराभ्र:** । पुं । कर्पूरे । रा.नि.व.१२ ।

**तारारि:** । पुं । माक्षिकधातौ । স্বর্ণমাক্ষি । विड़माक्षिके । है.च. ।

**तारारिष्टम्** । क्ली । रौप्यारिष्टे । र.चि.३अ.।

**तारिका** । स्त्री । ताड्यां । তাড়ি । तन्त्रम् ।

**तारिणी** । स्त्री । मातरि । अक्षिमध्यभागे । चिका. ।

**तारीपम्** । क्ली, पुं । स्वर्णे । वै.निघ. । मे. ।

**तारुण्यम्** । क्ली । यौवने । अम. ।

**तारुण्यजनवल्लभा** । स्त्री । उम्पाशाली । रा.नि.व.१६ ।

**तारुण्यपिड़का** । स्त्री । मुखदूषिकायाम् । वयसफोड़ा । भैष.क्षुद्ररोग.चि. ।

**तारेश्वररस:** । पुं । राजयक्ष्मणि रस: । पारद: १ तो. रौप्यं ।० तो. मन:शिला गन्धक: प्र. ४ तो. गोक्षुररसेन प्रहरद्वयं सम्मर्द्य वालुकायन्त्रेण प्रहरद्वयं पचेत् । शीते सति चूर्णयेत् । मात्रा २ र. । रस.कौ. ।

**तार्क्षी** । स्त्री । वत्सादनीलतायाम् । পাতাল-গরুড়ী লতা, শিলিন্দ্ধ । रा.नि.व.३ ।

**तार्क्ष्य(क,ज)म्** । क्ली । रसाञ्जने । भा.म.४भ. नेत्रविड़ालरी.चि. । सि.यो.अपस्मा.चि.सिद्धतमयोगे । See माणिक्यम् । पुं । अश्वकर्णलतायाम्, लताशाले । শিয়াড়ি লতা । र.मा. । का.उ.२९ अ.। सर्व्वतरौ । अश्वे । सर्पे । मे. । स्वर्णे । श.र.।

**तार्क्ष्यनायक:** । पुं । गरुड़े । रा.नि.व.१९ ।

**तार्क्ष्यप्रसव:** । पुं । अश्वकर्णनामकलताशाले । लताशाल । रा.नि.व.९ ।

**तार्क्ष्यशैलम्** । क्ली । रसाञ्जने । र.मा. ।

**ताल:** । पुं। (Borassus flabelliformis.) The Palmyra tree. स्वनामख्यातवृक्षे । তাল গাছ । प.मु. । र.मा. । हिं ताल, ताड़ । उत्. ताड़ । गुर्ज. तड़ । ता. पनम । खरताल इति अस्मत्प्रदेशे । सु.सू.३७अ.। गुणा:—स्वादुस्नि॰

कषाय: मूत्ररोगघ्न: बलप्राणशुक्रवृद्धिकरश्च। राज.। "पक्वं तालफलं पित्तरक्तश्लेष्मविवर्द्धनं। दुर्जरम्बहुमूत्रञ्च तन्द्राभिष्यन्दशुक्रदम्॥ तालमज्जा तु तरुण: किञ्चिन्मदकरो लघु:। श्लेष्मलो वातपित्तघ्न: सस्नेहो मधुर: सर:॥" भा.आम्रव.। तालप्रलम्बगुणा:—रुच: चतरोगघ्नश्च। तालास्थिमज्ज-(कल-आँटी-शाँस्)गुणा:—मधुरं शीतं मूत्रलं गुरु च। तालाम्बुगुणा:—पित्तघ्नं शुक्रलं सन्यवर्द्धनं गुरु च। तालफलं शीतलं बल्यं स्निग्धं स्वादुरसं गुरु विष्टम्भि वातपित्तरक्तचतदाहक्षयघ्नञ्च। रा.नि.व.९। तालरसगुणा:—तरुणो रसो मदकारी। अम्लीभूत: स पित्तकृत् वातदोषहरश्च। भा.। क्ली। हरिताले। लौहे। त्रिका.। तालीशपत्रे। रा.नि.व.६। तालफले। तुवरिकायां। श.र.। मत्स्यशल्के। सु.मू.७अ.।

**तालक:**। पुं। प्राणनाशककीटविशेषे। सु.कल्प.८अ.। See कीट:।

**तालकन्द:**। पुं। तालवृचस्य कन्दे। चि.क.क.सोमरी.चि.। [सारलौहे।

**तालकरीर:**। पुं। तालाङ्कुरे। च द.अमृत-

**तालकाफलम्**। क्ली। स्थूलैलायां। ज.द.१२अ.।

**तालकाभम्**। क्ली। नीलरङ्गे। वै.निघ.।

**तालकी**। स्त्री। ताड्याम्। তাড়ী। त्रिका.।

**तालजटा**। स्त्री। तालवृचस्य जटायां। তালের জটা। चि.क्र.क.सोमरी.चि.।

**तालती**। स्त्री। तालसुरायां। त्रिका.।

**तालद्रुम:**। पुं। अम्बुदेशे खरताल इति ख्याते वृचे। रा.नि.व.९। [वै.निघ.।

**तालपत्रम्**। क्ली। तालच्छदे। मेथिकायाम्।

**तालपत्रा (त्री)**। स्त्री। मिश्रेयानामचुपे। মউরী গাছ। रा.नि.व.४। तालमूल्यां। सु.सू.३६अ.। चि.११।२५अ.। वा.उ.१२अ.। कृष्णमुषल्यां। কৃষ্ণ তালমূলী। सु.चि.१८अ.। मूषकपर्ण्याम्। मे.। वनशताह्वायाम्। वै.निघ.।

**तालपत्रिका**। स्त्री। तालमूल्यां। रा.नि.व.७।

**तालपर्णम्**। क्ली। मुरानामगन्धद्रव्ये। মূরা মাংসী। श.च.।

**तालपर्णी**। स्त्री। मधुरिकायाम्। रा.नि.व.४। मुषल्यां। তালমূলী। मुरामांस्यां। अम.। हृहच्छताह्वायाम्। वै.निघ.।

**तालपुष्प(क)म्**। क्ली। तालजटायाम्। তালের মোচ। (कम्) प्रपौण्डरीके। श.र.।

**तालप्रलम्बम्**। क्ली। तालजटायाम्। गुणा:—"तथा तालप्रलम्बञ्च रुच्यं चतरुजापहम्।" राज.३प.।

**तालमण्डिका**। स्त्री। तालरसमद्ये। তালের মদ, তাড়ী। गुणा:—"श्लेष्मदोषकरी वृष्या वातला श्लेष्मवर्द्धनी। कासहृल्लासविध्वंसकरणी तालमण्डिका॥ पूर्णे कषायपित्ते च योगयुक्ता सुरा हिता। बहुदोषहरा चैव श्लेष्मरोगे विशेषत:॥" अत्रि.१९अ.।

**तालमस्तकम्**। क्ली। कटुमूरणे। বুনো ওল। वै.निघ.। तालवृचमस्तके। তালের মাতি।

**तालमूलिका**। स्त्री। तालमूल्यां। अम.।

**तालमूली**। स्त्री। (Curculigo orchioides or Hypoxis orchioides. Syn. Curculigo orchioides.) स्वनामख्यातकन्दशाके। তালমূলী, তলুর। दा. हिं कालीमुषली। तैं निलप्तलिगड्डलु, नेलतारि। मुषलीकन्द इति भाषा। सा श्वेतकृष्णभेदाद्विधा। श्वेता स्वल्पगुणा, अन्या रसायनी च। श्वेता शफेदमुषली, कृष्णा कालीमुषली। सा. गुणा:—मधुरा शीतला वृष्या बलपुष्टिदा पिच्छिला कफकरी पित्तदाहश्रमघ्नी च। रा.नि.व.७। अपिच—"तालमूली च विष्टम्भी मुषली परिकीर्त्तिता। मुषली मधुरा वृष्या वीर्य्योष्णा वृंहणी गुरु:। तिक्ता रसायनी हन्ति गुदजाननिलांस्तथा॥" भा.।

**तालर(ल)क:**। पुं। तालजटायां। তালের মোচ। र.सा.सं.।

**तालवृन्त(क)म्**। क्ली। तालव्यजने। তাল পাতার পাখা। तच्च त्रिदोषशमनं लघु। राज.२प.। पुं। सोमलताभेदे। सु.चि.२९अ.। See सोम:।

**तालगर्भम्** । क्ली । तालास्थिमज्जायां । ताल-शाँस । गुणाः—बृंहणं स्निग्धं शीतलं बल्यं मधुरञ्च । च.सू.२७अ. । [चि. ।

**तालसत्त्वम्** । क्ली । हरितालभस्मनि । रस.

**तालचीर(क)म्** । क्ली । तालजतवचीरे । रा.नि.व.६ ।

**तालाख्या** । स्त्री । सुरामांस्यां । श.च. ।

**तालाङ्कः** । पुं । शाकभेदे । हे.च. ।

**तालिः** । स्त्री । तालभेदे । তেড়ে । वै.निघ.। भूम्यामलक्यां । र.मा. ।

**तालिकः** । पुं । प्रसारिताङ्गुलिपाणौ । हे.च.।

**तालिका (ली)** । स्त्री । ताम्रवल्लीलतायाम् । रा.नि.व.३ । तालमूल्याम् । प.मु.। सु.चि.१७अ.। भूम्यामलक्याम् । रा.नि.व.५ । तालद्रुमभेदे । তাড়িগাছ । अम. । मनःशिलायाम् । तालीश-पत्रे । वै.निघ. । तुवरिकायाम् । श.र. ।

**तालिश(स)(पत्र)म्** । क्ली । तालीशपत्रे । भूरिप्र. । [सु.चि.१७अ. । ड. ।

**तालीतलम्** । क्ली । मुषलीकन्दे । তালমূলী ।

**तालीपत्रम्** । क्ली । तालीशपत्रे । रा.नि.व.६।

**तालीश(क)म्** । क्ली । तालीशपत्रे । रा.नि. व.६ ।

**तालीश(स)पत्रम्** । क्ली । (Abies webbiana or Pinus webbiana or Flacourtia cataphracta.) भूम्यामलकीसदृशे स्वनामख्यातपत्रद्रव्ये । তালীশপত্র । भा. । दा. हिं तालिस्पत्रि, तालिशपत्र । तें ता. तालिशपत्रि । दा. पनिअल । बम्. ताम्लठ । तदभावे कण्टकारीजटा ग्राह्या । गुणाः —तिक्तोष्णं मधुरं कफवातघ्नं हिक्काश्वासक्षयकासच्छर्दिघ्नञ्च । रा.नि. व.६ । लघु अरुचिघ्नं गुल्मामाग्निमान्द्यहरञ्च । भा.। भूम्यामलक्यां । मे. ।

**तालीशादिमोदकः** । पुं । यक्ष्माधिकारे । तालीशपत्रं १ तो. मरिचं २ तो. शुण्ठी ३ तो. पिप्पली ४ तो. गुड़त्वक् ॥० तो. एला ॥० तो. वंशलोचना ५ तो. शर्करा ३२ तो. । सा.कौ. । च.द. ।

**तालु (कम्)** । क्ली । जिह्वाधिष्ठानभूतप्रदेशे । তালু, টাকরা । रा.नि.व.१८ ।

**तालुकण्टकः** । पुं । तालुगतरोगभेदे । তেলোওলা । अयञ्च प्रायः शिशोरेव भवति । लक्षणं यथा —"तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् । तेन तालुप्रदेशस्य निम्नता मूर्द्ध्नि जायते । तालुपातात् स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् । तृड़क्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः ॥" भा. ।

**तालुजिह्वः** । पुं । कुम्भीरे । हे.च. ।

**तालुपाकः** । पुं । पित्तजन्यतालुरोगविशेषे । তেলো পাকা । तत्र पित्तम् अतिघोरं तालुपाकं जनयति । "पित्तं कुर्य्यात्पाकमत्यन्तघोरं तालुन्येवं तालुपाकं वदन्ति ।" भा.म.४भ.मुखरो.चि. ।

**तालुपातः (पीड़कः)** । पुं । तालुरोगभेदे, तालुकण्टके । তেলো ওলা ।

**तालुपुप्पुटः** । पुं । तालुदेशे मेदःकफजन्ये रोगविशेषे । तत्रावेदनः स्थायी कोलमात्रः शोथो जायते । लक्षणम्—"नीरुक् स्थायी कोलमात्रः कफात्स्यात् मेदोयुक्तः पुप्पुटस्तालुदेशे ।" भा.म.४भ. मुखरो.चि. ।

**तालुयन्त्रम्** । क्ली । कर्णनासानाड़ीशल्यानामाहरणार्थयन्त्रविशेषे । तत्र मीनतालाकारं द्वादशाङ्गुलपरिमितम् । तद्द्विधा—तयोरेकं मत्स्यतालुवदेकतालं नाम, अन्यत् द्वितालं नाम । सु.सू. ७अ. ।

**तालुरोगः** । पुं । मुखरोगभेदे. तालुदेशस्थरोगे । स नवधा यथा —गलशुण्डी तुण्डिकेरी अध्रुषः कच्छपः तालर्व्वुदः मांससङ्घातः तालुपुप्पुटः तालुशोषः तालुपाकश्चेति । भा.म.४भ.मुखरो. चि । एषां विशेषाः स्वस्वपर्य्याये मृग्याः ।

**तालुविद्रधिः (धी)** । स्त्री । तालुशोथे । "स्यात्तालुविद्रध्यपि दाहरागयुता भवेत्तालुनि सा त्रिदोषात् ।" च. ।

**तालुशोषः** । पुं । तालुदेशे वायुजन्यरोगविशेषे । तत्र तालुदेशे विदारणवत्पीड़ा श्वासश्च जायते । "शोषोऽत्यर्थं दीर्य्यते वापि तालु श्वासो वातात्तालुशोषोऽयमुक्तः ।" भा.म.मुखरो.चि. ।

**तालुसंहतिः** । स्त्री । तालुरोगविशेषे । "मा-

सुमध्ये निहन्यासं संहतं तालुसंहतिः।" वा.उ. २१अ.।

**तालेश्वररसः** । पुं । कासरोगे रसः । रसः २ तो. लौहं १ तो. गन्धकः ४ तो. अभ्रं ८ तो. हरितालं १ तो. मनःशिला ॥० तो. जयन्ती (जन्ती) एरण्डः चाङ्गेरी (आमरुल) तण्डुलीयं (काँटानटे) केशराजः (केशुते) भृङ्गराजः (भीमराज) पत्ररसेन प्र. त्रिधा भावयेत्। रस.कौ.।

**तात्वर्वुदम्** । क्ली, पुं । तालुशोथरोगे । टाकरा फोला । लक्षणं—पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्वुदं पित्तलिङ्गम् । भा.।

**तात्वस्थि** । क्ली । तालुदेशस्थे अस्थनि । ते च द्वे । च.शा.७अ.।

**तिक्तः (कः)** । पुं । पटोललतायां । पलता नति । प.मु.। भा.। वरुणवृक्षे । बरुण गाछ । श.मा.। कुटजवृक्षे । कुड़ची गाछ । श.च.। किराततिक्तके । चिरेता । श.र.। वा.उ.२अ.। कुरवकशाके । कुरुया शाक । पर्पटकक्षुपे । क्षेत्पापड़ा । प.मु.। हे.च.। वाय्वाकाशभूयिष्ठषड्रसान्यतमरसे । तेतो रस । "यो गले चोषमुत्पादयति मुखवैशद्यं जनयति भक्तरुचिमुत्पादयति हर्षंच स तिक्तः।" सु.सू.४२अ.। स निम्बादौ स्वाद्यते । गुणाः—क्रमिघ्नः कुष्ठघ्नः अतिसेवनात् राजयक्ष्माणं करोति । रा.नि.व.२०। शीतलघुरुचः दीपनः पाचनः शोधनः अरोचक विषघ्नश्च । तद्विपाकोऽपि कटुः। स च विपाको वातकृत् कफपित्तघ्नश्च । सु.सू.४२अ.। "प्रतिहन्ति निपाते यो वमनं स्वदते न च । स तिक्तो मुखवैशद्यशोषप्रह्लादकारकः॥" चर.। स चातियुक्तः शिरःशूलमन्यास्तम्भश्रमान् जनयति । तथा कम्पमूर्च्छातृष्णाबलशुक्रक्षयकरश्च भवति । इङ्गुदीवृक्षे । भा.। निम्बवृक्षे । वै.निघ.। क्ली । तेजोह्वायाम् । तेजबल । वै.निघ.चयरी.चि.गोक्षुरघृते । पित्ते । विड्लवणे । कृष्णखदिरे । श.मा.।

**तिक्तकघृतम्** । क्ली । कुष्ठे घृतम् । गव्यघृतं ४ श.। क्वाथार्थं त्रिफला हरिद्रा दारुहरिद्रा वासा दुरालभा क्षेत्रपर्पटी पटोलपत्रं त्रायमाणा कटुकी निम्बत्वक् एषां प्र. २ प. वारि ६४ श. शे. १६ श.। कल्कार्थं—पिप्पली मुस्तकं रक्तचन्दनं त्रायमाणा (बला लता) इन्द्रयवः भूनिम्बः एषां प्र. ४ तो. मतान्तरे ६ तो.। सु.चि.६अ.। च.द.। घृतं ४ श.। कल्कार्थं—सप्तपर्णत्वक् अतिविषा सम्पाकः (सोन्दाल) कटुकी पाठा मुस्तकम् उशीरं त्रिफला पटोलपत्रं निम्बत्वक् क्षेत्रपर्पटी दुरालभा रक्तचन्दनं पिप्पली गजपिप्पली पद्मकाष्ठं हरिद्रा दारुहरिद्रा वचा इन्द्रवारुणी (राखालशशा) मुरा वा शतावरी श्यामालता अनन्ता इन्द्रयवः वासा मूर्वा गुडूची भूनिम्बः (चिरेता) यष्टिमधु त्रायमाणा एषां मिलिता १ शरावः (१ सेर)। जलं ३२ श. आमलकफलरसः ४ श.। च.द.। रस. र.। महातिक्तकमिदम् ।

**तिक्तकन्द(न्दि)का** । स्त्री । आम्रहरिद्रायां । मालवे पलाश इति ख्याते गन्धपत्रवृक्षे । रा.नि.व. ६ । तिक्तदलकापीति क्वचित् निघण्टौ पाठः।

**तिक्तकरोहिणी** । स्त्री । कटुकायाम् । कटकी । च.द.पित्तज्व.चि.कलिङ्गादौ ।

**तिक्तकर्कोटकी** । स्त्री । तिक्तकर्कटिकायां । तित्काँकड़ी, काँकरोल । श.चि.।

**तिक्तका** । स्त्री । तुम्ब्यां, कटुतुम्ब्याम् । तित्लाउ । प.मु.। काकजङ्घायाम् । करञ्जलतायां । चुचुशाके । वै.निघ.।

**तिक्तकोषातकी** । स्त्री । तिक्तघोषायाम् । तित्पलता । भैष.कुष्ठ चि.। [निघ.।

**तिक्तगन्धा** । स्त्री । राजिकायाम् । राइ । वै.

**तिक्तगन्धिका** । स्त्री । वराहक्रान्तायाम् । वराक्रान्ता । श.मा.।

**तिक्तगुञ्जा** । स्त्री । करञ्जवृक्षे । हारा.।

**तिक्ततण्डुला** । स्त्री । पिप्पल्यां । रा.नि.व.६।

**तिक्ततुण्डी** । स्त्री । कटुतुण्डीलतायाम् । तित्कुन्दरु, तेलाकुचा। हिं कटुतराइ । रा.नि.व.३।

**तिक्ततुम्बी** । स्त्री । कटतुम्ब्यां । तित्लाउ । प.मु.। [काँकड़ाशृङ्गी । रा.नि.व.५।१८ ।

**तिक्तदुग्धा** । स्त्री । क्षीरिण्याम् । अजशृङ्ग्याम् ।

**तिक्तधातुः** । पुं । पित्ते । रा.नि.व.२१ ।

**तिक्तनित्यः** । त्रि । नित्यं तिक्तभक्षणशीले । च.द.।

श्चाधश्चभूमिश्चतिलकन्दोऽतिविश्रुतः ॥" रा.नि. व.७। [व.१८।

**तैलकल्कजः** । पुं । तैलकिट्टे । शब्द । रा.नि.

**तैलकिट्टम्** । क्ली । पिण्याके । शब्द । गुणाः—कटुकं गौल्यं कफवातप्रमेहघ्न । रा.नि.व.१६।

**तैलचो(चौ)रिका** । स्त्री । तैलपायिकायां । श्र.र.।

**तैलद्रोणी** । स्त्री । तैलमानपात्रे । তেলের দোণ। । तैलपूर्णकाष्ठपात्रे । श्वाकवदनव्यनार्थं तैलपूर्णकाष्ठादिपात्रे । তেলের ডুনী । तत्र स्थितिगुणाः—वातव्याकुलशरीरगपङ्गुवाधिर्य्यमिश्चितनमहृदयवक्रसम्प्रवृत्तप्रचलितपवनगात्रकम्पनोवाभङ्गापतनमकचयरुधिरजमूत्रकृच्छ्रवस्तिरोगेषु प्रशस्ता । राज.।

**तैलधान्यम्** । क्ली । तिलादिवीजवर्गे । यथा—तिलातसी च तोरी च विविधश्चापि सर्षपः । द्विधा राजी खाखसञ्च बीजं कौसुम्भसम्भवम् । एतानि तैलधान्यानि पठितानि च पूर्व्ववत् ॥ श्चर्कः।

**तैलनिर्यासः** । पुं । गन्धराजे । रा.नि.व.१२।

**तैलनी** । स्त्री । तिलकिट्टे । वै.निघ.।

**तैलपञ्चकम्** । क्ली । द्रव्यपञ्चकसिद्धतैले । यथा—"तैलं प्रसन्नागोमूत्रमारनालं यवाग्रजः । गुल्मजाठरमानाहपीतमेकत्र साधयेत् ॥" च.।

**तैलपर्णः (कः)** । पुं, क्ली । ग्रन्थिपर्णवृक्षे । গেঁটেলা । भा.। चन्दनवृक्षे । वै.निघ.।

**तैलपर्णिकम्** । क्ली । तैलचन्दने । तत्तु शीतलं धवलं तिलपर्णतरुजातञ्च । भ.। हरिचन्दने । श्चम.।

**तैलपर्णी** । स्त्री । लवणक्षोण्याम्, देवदारुनिर्यासे । प.मु.। रक्तचन्दने । चन्दने । शिलारसे । मे.। [পোকা। रा.नि.व.१८।

**तैलपा** । स्त्री । पेचके । तैलपायिनि । তেলা-

**तैलपाकः** । पुं । तैलसाधने । তৈল পাক করা । See तैलपाकविधिः ।

**तैलपातनम्** । क्ली। सर्व्वबीजानांतैलनिःसारणे। यथा—"सुपक्वतालफलानां रसमादाय भावयेत् । समस्तबीजचूर्णं यद्धन्ताखं पृथक् पृथक् । आतपे मुञ्चते तैलं साध्यासाध्यं न संशयः ॥" र.चि.७अ।

**तैलपायिका** । स्त्री । तैलपायाम् । তেলাপোকা, আরশোলা । श्चम.।

**तैलपिञ्जः** । पुं । श्वेततिलवृक्षे । वै.निघ.।

**तैलपिपीलिका** । स्त्री । तैलपायिपिपीलिकाभेदे । रा.नि.व.११ ।

**तैलपीतः** । पुं । तैलपिबी । श.द.।

**तैलफलः** । पुं । इङ्गुदीवृक्षे । रा.नि.व.८। विभीतकवृक्षे । रा.नि व.११ । तिलवृक्षे । वै.निघ.।

**तैलभाविनी** । स्त्री । जातीपुष्पवृक्षे । रा.नि.व.१० । [श्र.मा.।

**तैलमाली** । स्त्री । वर्त्याम् । শল্‌তে,বাতি ।

**तैलमूर्च्छा** । स्त्री । तैलस्य मूर्च्छनायां । তেল মূর্চ্ছা করা । यथा—"तैलं कृत्वा कटाहे दृढतरविमलं मन्दमन्दानलैस्तत् तैलं निष्फेनभावं गतमिह हि यदा शैत्ययुक्तं तदैव । मञ्जिष्ठारात्रिलोध्रैर्जलधरनलिकैः सामलैःसाक्षपथ्यैः, सूचीपुष्पाङ्घ्रिनीरैःकपहितमथितैर्गन्धयोगं जहाति ॥ तथा—तैलस्येन्दुकलाशिकी विकसिकाभागस्तु मूर्च्छाविधौ ये चान्ये त्रिफलापयोदरजनीह्रीवेरलोध्रान्विताः । सूचीपुष्पवटावरोहनलिकास्तस्याश्च पादांशिका दुर्गन्धं विनिहन्ति तैलमखिलं सौरभ्यमाकुर्व्वते ॥" भैष.। मूर्च्छाद्रव्यमानं यथा—मञ्जिष्ठा ॥ तो. । अन्येषाञ्च मात्रा मञ्जिष्ठाचतुर्थांशा इति ।

**तैलवीजः** । पुं । भल्लातकवृक्षे । रा.नि.व.११।

**तैलसाधनम्** । क्ली । कस्तूरिकायां । वै.निघ. । काकोल्यां । কাঁকলা । श्र.च.।

**तैलस्फटिकः** । पुं । तृणमणौ । है.च.।

**तैलस्यन्दा** । स्त्री। भूमिकुष्माण्डे । काकोल्यां । श्वेतापराजितायाम् । वै.निघ.। [व.१२ ।

**तैलाग(गु)रु** । क्ली । दाहागुरुणि । रा.नि.

**तैलाङ्गः** । पुं । वकुलवृक्षे । प.मु.।

**तैलाटी** । स्त्री । षट्पदे । वरटायां । বোল্‌তা । है.च.। [শোলা। श्चटा.।

**तैलाम्बुका** । स्त्री । तैलचोरिकायां । आर्-

**तैलिनी** । स्त्री । तैलपायिकायाम् । रा.नि.व. १८ । दशावर्त्याम् । श्र.मा.।

**तैलिमाला** । स्त्री । तैलिकगृहे । घानिघर ।  
हे.च. ।

**तैलीनम्** । क्ली । तिलक्षेत्रे । रा.नि.व.२ ।

**तैलु(ल्व)कः** । पुं । लोध्रे । च.द.पाण्डु-चि. ।  
वा.चि.६अ. ।

**तैलवणपूगम्** । क्ली । पूगफलविशेषे । नेलवन्  
इति भाषा । रा.नि.व.११ । See चक्कीटः ।

**तैषः** । पुं । पौषमासे अम. ।

**तोकः** । पुं । बालके । त्रिका. ।

**तोककः** । पुं । चातकपक्षिणि । नीलकण्ठे । वै.  
निघ. । चातकपक्षिणि । अ.म. ।

**तोक्मः (क्मः)** । पुं । अपक्वयवे । हरितनिः-  
शूकच्छदयवे । जई । "तोक्मसत्त्वस्तु हरितः ततः  
स्वल्पश्च कीर्त्तितः ।" सोऽतियवाद्धीनगुणः । भा.  
पु.१भ.धा.व. । पल्लवाद्यङ्कुरे । भागवतम् ।

**तोड़िमत्स्यः** । पुं । मत्स्यविशेषे । ताङ्गुई मा-  
छ । वै.निघ. ।

**तोदः (नम्)** । पुं, क्ली । सूचीव्यधनेनेव शूले-  
नेव वा व्यथायाम् । र.मा । भा.म.१भ.आगन्तुज्व. ।  
तीव्रवेदनायाम् । पुं । वांथी । वै.निघ. ।

**तोदनः** । पुं । फलशाकविशेषे । तत्फलं कषायं  
रूक्षं वातकफघ्नं । सु.सू.४६अ. । अस्तोषं लघु सं-  
ग्राहि स्निग्धं पित्ताग्निकरञ्च । च.सू.२७अ. ।

**तोदपर्णी** । स्त्री । तोयपर्ण्याम् । पाना । क्षु-  
धान्यभेदे । सु.सू.४६अ. ।

**तोमरधरः** । पुं । अग्नौ । वै.निघ. ।

**तोमरिका** । स्त्री । सौराष्ट्रमृत्तिकायां । श.र. ।

**तोयम्** । क्ली । जले । रा.नि.व.१४ । बालके ।  
वाला । वै.निघ. ।

**तोयकामः** । पुं । जलवेतसे । मद.व.५ ।

**तोयकुम्भा** । शैवाले । वै.निघ. ।

**तोयगर्भः** । पुं । नारिकेलवृक्षे । वै.निघ. ।

**तोयजः** । पुं । जम्बीरे । वामव्यके । वै.निघ. ।

**तोयडिम्बः** । पुं । घनोपले । हारा. ।

**तोयदः** । पुं । जम्बीरे । नागरमुस्तायाम् । वै.  
निघ. । मेघे । क्ली । घृते । मे. ।

**तोयधरः** । पुं । मुस्तायां । नागरमुस्तायाम् ।  
सुनिषण्णकशाके । मेघे । मे. ।

**तोयधिप्रियम्** । क्ली । लवङ्गे । श.च. ।

**तोयपर्णी** । स्त्री । तृणधान्यविशेषे । गुणाः  
श्यामाकवत् । च.सू.२७अ. । वारिपर्ण्यां । पाना ।

**तोयपाषाणजमलम्** । क्ली । खर्परे । खा-  
पर । वै.निघ. । [नि.व.४ ।

**तोयपिप्पली** । स्त्री । कच्छटे । काँच्ड़ा । रा.

**तोयपुष्पी** । स्त्री । पाटलावृक्षे । श.मा. ।

**तोयप्रष्ठा** । स्त्री । पाटलावृक्षे । वै.निघ. ।

**तोयप्रसादन(फल)म्** । क्ली । कतकफले ।  
निर्म्माल्य । र.मा. । [कूड़ । रा.नि.व.७ ।

**तोयफला** । स्त्री । वालुककर्कटिकायाम् । काँ-

**तोयमञ्जरी** । स्त्री । जलापामार्गे । वै निघ. ।

**तोयमलम्** । क्ली । समुद्रफेने । वै.निघ. ।

**तोयवती** । स्त्री । अमृतवल्याम् । वै.निघ. ।

**तोयवल्लिका (ल्ली)** । स्त्री । अमृतस्रवाल-  
तायाम् । चित्रकूटे रुदन्तीति ख्यातायाम् । अमृ-  
तवल्ली लता । कारवेल्लके । उच्छे । रा.नि.व.३ ।  
महादुग्धायाम् । रा.नि.व.२३ ।

**तोयहस्तिः** । पुं । जलापामार्गे । वै.निघ. ।

**तोयहृषः** । पुं । शैवाले । वै.निघ. ।

**तोयमाला** । स्त्री । वारिशालायाम् ।

**तोयशुक्तिका** । स्त्री । जलशुक्ती । जल झा-  
टाइ । रा.नि.व.१९ ।

**तोयशूकः** । शैवाले । वै.निघ. ।

**तोयसर्पिका** । स्त्री । भेक्याम् । वै.निघ. ।

**तोयसूचकः** । पुं । मण्डूके । शब्दार्थकल्पः ।

**तोयस्रावः** । पुं । अश्वस्य नेत्रतो जलस्रावरो-  
गे । "अजस्रं पश्यतो ह्यश्रु स्रवत्यं स्रवति चक्षुषः ।  
तोयस्रावीति तं विद्याद्विकारं मारुतात्मकम् ॥"  
ज.द.२०अ. । जलस्रावे ।

**तोयाधिवासिनी** । स्त्री । पाटलावृक्षे । प.मु. ।

**तोयापामार्गः** । पुं । जलापामार्गे । वै.निघ. ।

**तोयेश्वरा** । स्त्री । जलापामार्गे । वै.निघ. ।

**तोरणम्** । क्ली । ग्रीवायाम् । हारा. ।

**तोलः (कः)** । पुं, क्ली । टङ्कपरिमाणे । ১ তোলা । अशीतिरक्तिकामाने । ९६ रक्तिकामाने । प.प्र. । माषत्रयमाने । प्र.मा. ।

**तोक्मम्** । क्ली । कर्णमले । चिका. ।

**तौतिकः** । पुं, क्ली । शुक्ती । ঝিনুক । प.मु. । मुक्तायाम् । रा.नि.व.१२ ।

**तौषारम्** । क्ली । तुषारजले । रा.नि.व.१४ ।

**त्रपुकर्कटी** । स्त्री । कर्कटिकाभेदे, त्रपुष्याम् । শশা । रा.नि.व.७ । [र.मा. ।

**त्रपुटी** । स्त्री । सूक्ष्मैलायाम् । ছোট এলাচ ।

**त्रपुलम्** । क्ली । वङ्गे । रङ्गे । भ.द्वि. ।

**त्रपुष(स)म्** । क्ली । कर्कट्याम् । কাঁকুড় । प.मु. । क्षणचिह्नति । কাল তেউড়ী । र.मा. । वङ्गे । रा.नि.व.१२ । त्रपुषीफले । শশা । भा. ।

**त्रपुषतैलम्** । क्ली । त्रपुषबीजोत्थतैले । শসা-বীজের তৈল । गुणाः—वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलञ्च । वा.टी.हेमा. । मधुरं गुरु शीतलं केश्यं कफपित्तघ्नं कान्तिजनकञ्च । रा.नि.व.१५ ।

**त्रपुषा (षी) (सा, सी)** । स्त्री । (Cucumis sativus. Syn. C. Hardwickii.) The cucumber. स्वनामख्यातफलशाकविशेषे । শশা গাছ । हिं खीरे, लघुखीरा, बालमखीरा । मं तौसीकर्कटी । कं सतैंयकायि । तें दोसकाय । उत्. काकुड़ि । ता. मलैवेहरि कोड़ये । फलगुणाः—रुच्यं मधुरं शीतलं गुरु भ्रमपित्तविदाहवान्तिघ्नं बहुमूत्रकरम् । रा.नि.व.७ । "त्रपुषं लघु नीलञ्च बलवट्कृमदाहहृत् । स्वादु पित्तापहं शीतं रक्तपित्तहरं परम् । तत्पक्वं कफकृज्जीर्णमम्लं वातकफापहम् । तत्पक्वमम्लमुष्णं स्यात्पित्तलं कफवातनुत् । तद्बीजं मूत्रलं शीतं रुक्षं पित्तास्रकृच्छ्रजित् ॥" भा.आमव. । क्षणचिह्नति । কাল তেউড়ী । र.मा. । महेन्द्रवारुण्याम् । रा.नि.व.२ । कर्कटिकायाम् । हे.च. ।

**त्रपुसिनी** । कर्कटिकायां । वै.निघ. ।

**त्रपुस्** । क्ली । वङ्गे । भा.म.४भ.कर्णरो.चि.सु.सू. १८अ.त्रप्वादिः । शीसके । रा.नि.व.१३ । मे. । प.मु. । पुं । त्रपुषलतायां । শসা গাছ ।

**त्रप्वादिः** । पुं । रक्तादिसप्तधातुषु । त्रपुशीषताम्ररजतकृष्णलोहसुवर्णलोहमलानि । गुणाः—गरकृमिहरः तृष्णाविषहृद्रोगपाण्डुमेहघ्नश्च । सु.सू. ३८अ. ।

**त्रयी** । स्त्री । सोमराज्यां । श.च. ।

**त्रयोदशाङ्गगुग्गुलुः** । पुं । वातव्याधौ । आह(भा)वा इति ख्यातं वणिग्द्रव्यं (अभावे शुण्ठा लशुनं बिल्वफलं वा) अश्वगन्धा हबुषा (হবুষফল) गुडूची (গুলঞ্চ) शतावरी गोक्षुरबीजं बीजताड़कबीजं रास्ना शुलुफा शटी यमानी शुण्ठी एषां प्र. चूर्णं १ प. शुद्धगुग्गुलुः १२ प. घृतं ६ प. । रस.र. । सा.कौ. । "आहस्व लशुने प्रोक्तः आहो बिल्वफले तथा ।" विश्व. ।

**त्रसरेणुः** । पुं । त्रिंशत्परमाण्वात्मकमागधमाने । स जालान्तरगतरविकिरणेषु दृश्यते । "त्रसरेणुस्तु विज्ञेयः त्रिंशता परमाणुभिः ।" प.प्र.१ख. ।

**त्राणम्** । क्ली । त्रायमाणालतायाम् । मे. ।

**त्राणा (णी)** । स्त्री । त्रायमाणालतायां । বনা লতা বা ডুমুর । रा.नि.व.५ । मे. ।

**त्रायन्ती** । स्त्री । त्रायमाणायां । বনা ডুমুর । বন ভাঃলিয়া । रा.नि.व.५ । भैष.कुष्ठ चि.महाभल्लातकगुड़े । चि.यो.सुर्व्वाद्यघृते । "त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत् ॥" भा. । च.द.यक्ष्मा.ज्व.चि. । चि.यो.च.द.यक्ष्म.चि.जीवन्त्याद्यघृते । वात.ज्व.द्राक्षादिः । च.द.ज्वर.चि.पिप्पल्यादिघृते । नखरञ्जके । मेहदीति लोके । वै.निघ.प्रदरो.चि.जलाद्यघृते । च.द.शूल चि. ।

**त्रायमाणा (णिका)** । स्त्री । हिमवत्प्रसिद्धस्वनामख्यातमहाक्षुपे । বনাডুমুর, বনা লতা, বহুলা, বন ভাহুলিয়া । हिं त्रायमाणा । गुणाः—शीतमधुरा गुल्मज्वरकफरक्तघ्नी । भ्रमतृष्णाक्षयविषच्छर्दिघ्नी च । रा.नि.व.५ ।

**त्रायमाणादिः** । पुं । पित्तज्वरप्रसिद्धकषायभेदे । च.द.ज्व.चि. । "त्रायमाणा च मधुकं पिप्पलीमूलमेव च । किराततिक्तकं मुस्तं मधुकं सबिभीतकम् ॥"

**त्रासदष्टः** । पुं । कुक्कुरदष्टरोगभेदे । यथा— "योऽम्बुत्रस्येद्दष्टोऽपि शब्दसंस्पर्शदर्शनैः । जल-सन्त्रासनामानं दष्टं तमपि वर्जयेत् ॥" वा.उ.३८ अ. । [म.मा. ।

**त्रिंशत्पत्रम्** । क्ली । कुमुदपुष्पे । लालि फूल ।

**त्रिकम्** । क्ली । त्रिफलायां । त्रिकटुनि । त्रिम दे । (सुखबोधः) । कटिप्रान्तभागे । रा नि.व.१८। "स्फिक्सकथ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत्त्रिकं मतम् ।" पुं । गोक्षुरके । शृङ्गाटके वै.निघ. ।

**त्रिकग्रहः** । पुं । वातरोगभेदे । ত্রিকবেদনা। च सू.२०अ. । [मा.नि. ।

**त्रिकग्राही** । त्रि । वेदनया त्रिकव्यापिणि ।

**त्रिकटः** । पुं । शृङ्गाटके । गोक्षुरके । श.र. ।

**त्रिकटु** । क्ली । शुण्ठीपिप्पलिमरिचेषु । तें शुण्ठि पिप्पलि मिरियालु । गुणाः -- दीपनं श्वासकासघ्नं चर्मरोगगुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसादिकं हन्ति । भा. ।

**त्रिकटुगुड़िका** । स्त्री । प्रमेहपिड़कायाम् । त्रिकटु त्रिफला गुग्गुलु प्रत्येकं समभागः । गोक्षुरक्काथेन मर्द्या ।

**त्रिकट्वादिवर्त्तिः** । स्त्री । नेत्ररोगाधिकारि वर्त्तिः । "त्रीणि कटूनि करञ्जफलानि द्वे रजनी सह सैन्धवञ्च । बिल्वतरोर्वरुणस्य च मूलं वारिचरं दशमं वदन्ति ॥" वारिचरः शङ्खनाभिः । रस.र. ।

**त्रिकण्ट(क)म्** । क्ली । कण्टकारी दुरालभा गोक्षुरकश्चेति क्षुपत्रये । सि यो.सन्निपातज्वरे । बृहतीगन्धिकारीदुरालभासु । रा.नि.व.२२ । गुणाः —"त्रिकण्टकानां क्वाथः स्यात्पित्तज्वरविनाशनः । नेत्ररोगं वमिश्चैव मस्तकस्य रुजं तथा ॥" वै. निघ. । पुं । मत्स्यविशेषे । ট্যাংরা গাছ, গাগর মাছ । त्रिका. । गुणाः—पित्तघ्नः कफघ्नः रुच्यः लघुः दीपनश्च । राज.३प. । गोक्षुरके । र.मा. । च.द.ज्व.चि.यश.चि.नागबलाघृते । शृङ्गाटके । गुडूच्याम् । कण्टकार्य्याम् । शुण्ठ्याम् । वै.निघ. । क्षुद्रीक्षे । তেকাঁটা সিজু । श.च. । कणभजातीयकीटविशेषे । सु.कल्प.८अ. ।

**त्रिकण्टका** । स्त्री । त्रिवृतायां । তেউড়ী । च.द.१,अ. ।

**त्रिकण्टकादिघृतम्** । क्ली । मूत्रकृच्छ्राधिकारि घृतम् । गोक्षुरः एरण्डमूलं कुशमूलं काशमूलं शरमूलं इक्षुमूलं उलुपमूलं शतमूली कर्कटिबीजं एषां प्र. स्वरसः ४ श. । स्वरसाभावे गोक्षुरैरण्डमूलकुशादिपञ्चमूलं प्र. १४ प. ५ तो. २ मा. ७ र. । जलं ४४ श. शे. ११ श. । शतमूलीरसः कर्कटीरसः इक्षुरसः प्र. १२ प. २ तो. ५ मा. २ र. घृतं ४ श. । पाके सिद्धे प्रक्षेपः पुरातनगुड़ः । सा.कौ. । त्रिकण्टकादीना मिलित्वा ४४ प. वारि ४४ श. शे ११ श. शतावर्य्यादीनां रसः मिलितः ५ श. । रस.र. । भा. । गव्यघृतं ४ श. गोक्षुरादीनां प्र. २ श. क्वाथार्थजलं प्र. १६ श. शे. ४ श. । शतावरीकुकुष्माण्डानां स्वरसः प्र. ४ श. । प्रक्षेपः शर्करा २ श. । भैष. । [निघ. ।

**त्रिकण्टाख्यः (कः)** । पुं । शृङ्गाटके । वै.

**त्रिकत्रयम्** । क्ली । समत्रिकटुत्रिफलात्रिमदे ।

**त्रिकत्रयादिलौहम्** । क्ली । पाण्डुरोगे हितम् । शोधितमण्डुरं १ प. गव्यघृतं १ प. शर्करा १ प. मधु १ प. कान्तलौहं १ तो. त्रिकटु त्रिफला मुस्तं चित्रकमूलं विड़ङ्गं एषां प्र. १ तो. एषां क्वाथेन लौहपात्रे ताम्रपात्रे वा सप्त भावयित्वा ततः घृतेन च सप्त भावयित्वा रौद्रे शिशिरे च स्थाप्यम् । सा.कौ. ।

**त्रिकर्ष(र्षिक)म्** । क्ली । नागरातिविषामुस्तासु । শুঁট, আতইচ, মুতা । "नागरातिविषामुस्ता त्रयमेतत्त्रिकर्षिकम् ।" रा.नि.व.२२ ।

**त्रिकशूलम्** । क्ली । वातव्याधिभेदे । কটিপ্রান্তে শূল । लक्षणं—"स्फिक्सकथ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्त्रिकं स्मृतं । तत्र वातेन या पीड़ा त्रिकशूलं तदुच्यते ॥ कारयेद्वालुकास्वेदं त्रिकशूली प्रयत्नतः । खट्वाधस्तात्करीषाग्निं धारयेत्सततं नरः ॥" भा.म.२भ. ।

**त्रिकसन्धिः** । पुं । स्फिक्सकथिपृष्ठवंशास्थिसन्धिस्थाने । च.शा.७अ. । [७अ. ।

**त्रिकसन्ध्यस्थि** । क्ली । त्रिकास्थनि । च.शा.

**त्रिकूट(लवण)म्** । क्ली । सामुद्रलवणे । করকচ লবণ । प सु । र.मा. । द्रोणीलवणे । रा. नि.व.६ ।

**त्रिकूटाद्वयम्** । क्ली । काचलवणे । वै.निघ.।

**त्रिकूर्चकम्** । क्ली । व्रणविस्रावणार्थम् षड्ङ्गुलप्रमाणशस्त्रविशेषे । सु.सू.८अ. । "षड्ङ्गुलानि तथाष्टैव प्रस्रावणार्थं त्रिकूर्चकं । फलैरन्तर्मुखाकारैरङ्गुलैरन्वितं त्रिभिः । एकैकस्य फलस्यैषामन्तरं व्रीहिसम्मितं । वृन्तं पञ्चाङ्गुलायामङ्गार्थं रुचकभूषितं ॥" सु.टी.ड. । [त्रिधारवृक्षे । वै.निघ. ।

**त्रिकोणम्** । क्ली । योनौ । शृङ्गाटके । पुं ।

**त्रिकोणकः** । पुं । गुच्छवृक्षे । रा.नि.व.८ ।

**त्रिकोणफलम्** । क्ली । शृङ्गाटके । पाणिफल । भा. पुं । त्रिधारवृक्षे । वै.निघ. ।

**त्रिकोणा** । स्त्री । योनौ । शृङ्गाटक-वृक्षे । वै.निघ. । [पुंसि । श.च. ।

**त्रिखम्** । क्ली । कर्कटिकायाम् । वै.निघ. । च-

**त्रिगन्ध(क)म्** । क्ली । लवङ्गैलापत्रेषु । वै.निघ. २भ.ग्रह.चि.दाड़िमाष्टके । [रिकायां । मे. ।

**त्रिगर्त्ता** । स्त्री । मुक्तायाम् । वै.निघ. । घुर्घु-

**त्रिगुणम्** । क्ली । सत्त्वरजस्तमःसु ।

**त्रिगुणाख्यरसः** । पुं । वातव्याधौ रसः । गन्धकः १ भ. पारदः ८ भ. (मतान्तरे गन्धकः १ भ. पारदः २ भ.) मृदग्निना पक्त्वावतार्य सञ्चूर्ण्य तेन समभागं हरीतकीचूर्णं मिश्रयेत् । रस.कौ. । अन्यः शूले—टङ्कणं (सोहागार खई) नागवङ्गखर्परगन्धकरससिन्दूरं समभागं आर्द्रकरसेन पिष्ट्वा कृत्वा गजपुटे पचेत् । मात्रा १ मा. अनु. मधु । र.सा.सं. ।

**त्रिजटा** । स्त्री । बिल्ववृक्षे । तन्त्रम् ।

**त्रिजात(क)म्** । क्ली । मिलिततुल्यत्वगेलापत्रेषु । दारुचिनि, এলাচ, তেজপত্র সমভাগ । रा.नि.व.२२ । तें दचिणीचक्र, एलकुलु, भाकुपर्णोक । "त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चातुर्जातकमुच्यते ॥" प.प्र.३ख. । गुणाः—"तद्द्वयं रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् । लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम् ॥" भा. ।

**त्रिणम्** । क्ली । तृणे । श.र. । [रौरी.चि. ।

**त्रितयम्** । क्ली । सन्निपाते । भा.म.४भ.त्रि-

**त्रिदला** । स्त्री । गोधापदीलतायाम् । गोआलिया लता । प.मु. । रक्तलज्जालुकायाम् । वै.निघ. । अष्टिमधुनि । अ.ह.१२अ. । [च. ।

**त्रिद(दा)लिका** । स्त्री । वर्णकलतायाम् । श.

**त्रिदशगोपः** । पुं । इन्द्रगोपकीटे । वै.निघ. ।

**त्रिदशदारु** । क्ली । देवदारुकाष्ठे । चि.क.क. स्त्रीरो.चि. । [व.१० ।

**त्रिदशमञ्जरी** । स्त्री । तुलसीवृक्षे । रा.नि.

**त्रिदशवरभोज्यम्** । क्ली । अमृते । चि.क. क.कैशररसे ।

**त्रिदशसर्षपः** । पुं । देवसर्षपवृक्षे । वै.निघ. ।

**त्रिदशाहारः** । पुं । अमृते । हला. ।

**त्रिदिवा** । स्त्री । एलायां । गङ्गायां । वै.निघ. ।

**त्रिदिवोद्भवा** । स्त्री । स्थूलैलायाम् । बड़ এলাচ । रा.नि.व.६ ।

**त्रिदिवोद्भूता** । स्त्री । सूक्ष्मैलायाम् । वै.निघ. ।

**त्रिदीप्यम्** । क्ली । यमानीत्रये, यमानी खोरासानी अजमोदा च । वै.निघ.२भ.अर्शः चि.भल्लातकयाम् ।

**त्रिदोषजः** । त्रि । त्रिदोषजनिते ।

**त्रिदोषदावानलकालमेघः** । पुं । सन्निपातज्वरे रसः । हरितालपुटितवङ्गं मनःशिलापुटितशीसं शीसपुटितखर्परीयतामाचि प्रत्येकं पुनः हिङ्गुलपुटितानि कृत्वा प्र. समभागो ग्राह्यः एतत्समष्टितुल्यः पारदः गन्धकः तुल्यश्च त्रिगुणः (मतान्तरे उक्तद्रव्याणां प्र. एकैको भागः, गन्धकतुल्ययोः द्वौ भागौ) एकत्र निम्बुकरसेन सम्मर्द्य गोलकञ्च कृत्वा यथाविधि पुटेत् । अथ तत्तुल्यभागं पुनः गन्धकं दत्त्वा चित्रकरसेन मर्दयेत् । तदनु मीड़शांशं विषं सम्मिश्य पुनः तद्रसभावितं कृत्वा पचेत् । अथ रोहितमत्स्यपित्तेन भावयित्वा रक्तिकाद्वयमिता वटी कार्या ।

**त्रिदोषदावानलरसः** । पुं । ज्वराधिकारे रसः । अर्कमूर्तिरसः यदि ताम्रपात्रे अम्भोरादिरसैः पुनरपि भावितः स्यात् तदा त्रिदोषदावानलो भवति । भैष. । [त्रिशिवे । वै.निघ. ।

**त्रिदोषरोहिणी** । स्त्री । वैदोषिकगलरोग-

**त्रिदोषसमम्** । क्ली । समदोषत्रये । रा.नि.व.२२ ।

**त्रिदोषसम्भवः** । पुं । सन्निपाते । वै.निघ. ।

**त्रिदोषहारी (रसः)** । पुं। ज्वराधिकारे रसः । "बलिशिलातालताप्यतुत्थोदधिमलटङ्कणिकुम्भजाम्रताख्यं । दलितं महिषपित्तत्रिधा स्याद्धुधिरगतः शिरसि त्रिदोषहारी ॥" र चि.६ष. ।

**त्रिधातुः** । पुं । गणपतौ । त्रिका. । क्ली । धातुत्रये ।

**त्रिधारकः** । पुं । स्नुहीभेदे । তেকাঁটা মনসা । गुणाः—स्नुहीसमो विशेषात् रसशिद्धिकरः । गुण्डतृणे । रा.नि.व.८ ।

**त्रिधारकाण्डवल्ली** । स्त्री । त्रिधारकारवेल्लयाम् । তেশিরে উচ্ছে । वै.निघ. ।

**त्रिधारस्नुही** । स्त्री । त्रिधारवज्रीवृक्षे তেকাঁটা সিজু । रा.नि.व.८ ।

**त्रिनेत्ररसः** । पुं। पित्तकासे रसः । ताम्रभस्म अभ्रभस्म तीक्ष्णलोहभस्म समभागम् । कासमर्द्दतालाम्लवेतसरसैः दिनैकं मर्द्दयित्वा त्रिगुञ्जा वटी कार्य्या । रस.र. । अपरः परिणामशूले—टङ्कणं (সোহাগার খই) मृगशृङ्गं स्वर्णं रससिन्दूरम् एषां प्र. समभागं दत्वा आर्द्रकरसेन पिष्ट्वा गजपुटेन पचेत् । घृतमधुभ्यां सेव्यम् । रस.र. । अन्यः शोथे—पारदः गन्धकः भृष्टटङ्कणं ताम्रं लौहम् एषां प्र. समभागं आर्द्रकरसेन मर्दयित्वा लघुपुटे पचेत् । अनुपानं—एरण्डरसः अपामार्गरसः । अन्यः ज्वराधिकारे—पारदगन्धकताम्राणि समभागानि निर्गुण्डीरसैः दिनैकं मर्दयित्वा शुष्कीकृत्य मूषामध्यगतं बालुकायन्त्रे प्रहरत्रयं पचेत् । पर्णखण्डेन सेव्यः । र.चि.९ष. । अपरः सन्निपातज्वरे—पारदगन्धकताम्राणि समभागानि द्रव्यत्रयतुल्यैः गव्यदुग्धैः शिग्रुरसैश्च दिनं सम्मर्द्य गोलकं कृत्वा खरातपे शुष्कीकृत्य च अन्धमूषागतं बालुकायन्त्रे प्रहरत्रयं पचेत् । र.चि.९ष. । अन्यश्च सन्निपातज्वरे—रसः १ भ. गन्धकः १ भ. ताम्रं चतुर्थांशं सर्व्वतुल्येन गव्यदुग्धेन निर्गुण्डीरसेन शिग्रुरसेन च खरातपे दिनैकं मर्दयित्वा शोषयेत् । भा. । अपरः अरुचौ—जारितस्वर्णमाक्षिकं त्रिकटुकं लौहं पारदः वङ्गं गन्धकः ताम्रम् अर्ध्वं समुद्रफेनः गिरिजतुकिका स्वर्णं शीसं चित्रकमूलं त्रिकटु त्रिकटु त्रिफला शिग्रुबीजम् अजमोदा (রাঁধুনী) यमानी पिप्पलीमूलं भार्गी (বামনহাটী) चूर्णं जीरकद्वयजीरके एषां प्र. समभागः आर्द्रकरसेन मर्द्यः । रस.र. । अपरः मूत्रकृच्छ्रे रसगन्धकवङ्गानां प्र. समभागः । दूर्व्वायष्टिमधुगोक्षुरशाल्मलिरसैर्भावयित्वा भूधरयन्त्रे पक्त्वा च पुनस्तैर्भावयेत् । मा. २ र. । र.सा.सं. ।

**त्रिनेत्रा (त्री)** । स्त्री । वाराहीनाममहाकन्दशाके । रा.नि.व.७ ।

**त्रिपटु** । क्ली। विड़सैन्धवकाचलवणेषु । वै.निघ. ।

**त्रिपत्रः** । पुं । चण्डालकन्दभेदे । रा.नि.व.७ । त्रिदलबिल्ववृक्षे । रा.नि.व.११ । क्ली । त्रिदलबिल्वपत्रे ।

**त्रिपत्रकः** । पुं । पलाशवृक्षे । हे.च. ।

**त्रिपदा** । स्त्री । हंसपदीलतायाम् । रा.नि.व.५ । रक्तलज्जालुकायाम् । वै.निघ. ।

**त्रिपदी** । स्त्री । हंसपदीलतायाम् । ছোট গোয়ালিয়া লতা । प.मु. । रा.नि.व.५ ।

**त्रिपर्णः** । पुं । पलाशवृक्षे । रा.नि.व.१० ।

**त्रिपर्णा** । स्त्री । वनकार्पास्याम् । বন কাপাস । पृश्निपर्ण्यां । চাকুলিয়া । र.मा. । वनगङ्गायाम् । वै.निघ. । तिलपर्णिकाकन्दे । रा.नि.व.७ । शालपर्ण्याम् । भा.म.ख.१भ. ।

**त्रिपर्णिका** । स्त्री । यासरूपे । দুরালভা । रा.नि.व.४ । स्वनामख्यातकन्दशाकविशेषे । तिलपर्णी सूरिङ्गल इति कोङ्कणदेशे अनूपदेशे च प्रसिद्धा । তিলকন্দ । तल्लक्षणं यथा—"अस्मारिपत्रसङ्काशः तिलबिन्दुसमन्वितः । सस्निग्धाधस्स्थभूमिस्थः तिलकन्दोऽतिविस्तृतः ॥" गुणाः—मधुरा शीता श्वासकासघ्नी पित्तशमनी विषघ्नी व्रणघ्नी च । रा.नि.व.७ । तच्छाकगुणाः—शाकं गुरु च रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति । मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम् ॥ च.सू २७ष. ।

**त्रिपर्णी** । स्त्री । शालपर्ण्याम् । भा. । वनकार्पास्याम् । प.मु. । "त्रिपर्णी कलसीबिल्वैः ।" ,सूर्व्वायाम् । रा.नि.व.१ । आरण्यगञ्जिकायाम् । वै,

निघ. । त्रिपर्णीकन्दे । তিলকন্দ । रा.नि.व.७ ।

**त्रिपला** । स्त्री । त्रिफलायाम् । भ.चि. ।

**त्रिपात्** । पुं । ज्वरे । वैद्यकम् ।

**त्रिपाद:** । पुं । ग्रन्थिपर्णमूले । वै.निघ. ।

**त्रिपादिका** । स्त्री । हंसपादीलतायाम् । रा. नि.व.५ ।

**त्रिपादी** । स्त्री । हंसपादीलतायां, कीटमारिकायाम् । वा.सू १५अ.विदार्य्यादि: । "द्वे पञ्चके गोपसुता त्रिपादी ।" रक्तलज्जालुकायां। वै निघ.।

**त्रिपिबा** (न्) । पुं। लम्बकर्णे छागे । वै.निघ.।

**त्रिपुट:** (क:) । पुं । तालके । श.र. । गोक्षुरक्षुपे । प.मु. । मटर इति ख्यातद्विदलक्षुपे । र.मा. । शिम्बीधान्यभेदे । খেসারি কলাই । हिं खेसारि । गुणा:—"त्रिपुटी मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहक: शीतलस्तथा । किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपन: ॥" भ.पू.१भ.धा.व । "रूक्षो विशोषी मधुर: प्रदिष्ट: स्नायुं करोत्यस्थिगतं बलिष्ठं । विबन्धशूलभ्रमशोफकर्त्ता दाहार्शहृद्रोगविकारकारी ॥" च.चि.१५अ. । तत्सूपगुणा:—"त्रिपुटानां कलायानां सूप: स्वादुश्च वातल: । आध्मानशूलजनक: पित्तासृक्चिवान्तिहा ॥" द्रव्यगुण: ।

**त्रिपुटकी** । स्त्री । श्वेतत्रिवृति । वै.निघ. ।

**त्रिपुटा** । स्त्री। अरुणत्रिवृति । रा.नि.व.६ । कर्णास्फोटालतायाम् । रा.नि.व.३ । त्रिवृन्मात्रे । क्षुद्रचणके । प.मु. । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा.नि.व.६।२२ । वार्षिकमल्लिकायाम् । মল্লিকা বিশেষ । रा.नि.व.१०।२२ । जातीवृक्षे । गोक्षुरके । कुलत्थिकायाम् । वै.निघ. ।

**त्रिपुटी** (इन्) । पुं । एरण्डे । श.मा. । स्त्री । त्रिवृति । তেউড়ি । अ.टी.भ. ।

**त्रिपुटीफल:** । पुं । एरण्डवृक्षे । हारा. ।

**त्रिपुरभण्डिका** । स्त्री । रुद्रजटायाम् । भांट् इति भाषा ।.भैष.पानीयभक्तवट्याम् ।

**त्रिपुरभैरवरस:** । पुं । ज्वरे रस: । शुद्धविषं १ भ. टङ्कणक्षार: (সোহাগার খই) २ भ. गन्धक: ३ भ. हिङ्गुल (মহাকরি বাধ') ४ भ. दन्तीबीजं ५ भ. । दन्तीक्वाथेन मर्द्दयेत् । मात्रा २ र. । अनु. आर्द्रकरस: । रस र. । रस.की । अन्य: यथा—विषं १ भ. पिप्पली २ भ. मरिचं ४ भ. ताम्रं ५ भ. हिङ्गुलं ६ भ. आर्द्रकरसेन मर्द्दयेत् । मात्रा ॥० र. । भा.म.ज्व.चि. ।

**त्रिपुरमल्लिका (मालिका)** । स्त्री । ह्रस्वमल्लिकायाम् । रा.नि.व.१० । त्रिका. ।

**त्रिपुषा** । स्त्री । त्रपुषायाम् । कृष्णत्रिवृति । श. च. । क्ली । त्रपुषफले । त्रपुषीबीजे । कुष्माण्डलेहे ।

**त्रिपुष्पा** । स्त्री । अतिबलायाम् । वै.निघ. ।

**त्रिफला (ली)** । स्त्री । Three myrobalans. फलत्रये । ত্রিফলা । सा चतुर्धा महती ह्रस्वा सुगन्धा मधुरा च । तयोर्महती आमलकादीनां प्रत्येकमत्रभागा:। तदुक्तं—"पथ्या विभीतकं धात्री त्रिफला महती स्मृता ।" सि.यो.पानीयकल्याणघृते। आमलकहरीतकीविभीतकेषु । रा.नि. व.२२ । द्वितीया—काश्मर्य्यमृद्वीकापरूषकफलेषु । গাম্ভার ফল, কিস্‌মিস্, পরূষ ফল । "ह्रस्वा काश्मर्य्यमृद्वीकापरूषकफलानि च ।" श्रीकण्ठ: । त्रिफलायां द्रव्यत्रयं समभागं देयम् । पथ्या योगेषु प्रधाना । गुणा:—दीपनी पित्तकफघ्नी [illegible]वर्द्धनी रुच्या मलशोधनी मेहकुष्ठविषमज्वरनाशिनी च । भा.पू.१भ. । महाकुष्ठविषमज्वरपित्तघ्नी च । रावण: । सुगन्धत्रिफला यथा—जातीफललवङ्गपूगेषु । मधुरत्रिफला यथा—द्राक्षादाडिमखर्ज्जूरेषु ।

**त्रिफलाघृतम्** । क्ली । पाण्डुरोगे । गव्यघृतं ४ श. । पाकार्थं गोमूत्रं १६ श. । कल्कार्थं त्रिफला दन्तीत्रिवृन्मूलवचाकाम्पिल्ल (কমলাগুঁড়ি) मिलित शराव: । रस.र. । इदं स्वल्पम् ।

**त्रिफलाद्यघृतम्** । क्ली । नेत्ररोगाधिकारे घृतम् । गव्यघृतं ४ श. । क्वाथार्थं—त्रिफलारस: १२ श. स्वरसाभावे त्रिफला २ श. जलं ४८ श. शे. १२ श. । दुग्धं ४ श. । कल्कार्थं—त्रिफला त्रिकटु यष्टिमधु कटुकी पुण्डरीकं क्षुद्रैला विडङ्गं नागेश्वरं नीलोत्पलम् अनन्तमूलं श्यामालता रक्तचन्दनं हरिद्रा दारुहरिद्रा एषां प्र. २तो.। सा.की.। भा. । इदं मध्यमम् । अपरं—गव्यघृतं ४ श । क्वाथार्थं—त्रिफला २ श. वारि १६ श. शे. ४श । भृङ्गराजरस: ४ श. वासारस: ४ श. । स्वरसाभावे

शतावरीमूलं २ श. वारि १६ श. शे. ४ श.। शतमू-लीरसः ४ श. छागदुग्धं ४ श. गुडूचीरसः ४ श. अभावे क्वाथः आमलकीरसः ४ श.। कल्कार्थे—पिप्पली शर्करा द्राक्षा हरीतकी आमलकी विभीतकं नीलोत्पलं यष्टिमधु काकोली गाम्भारीत्वक् कण्टकारी एषां मिलित्वा शरावः (১ সের)। भैष.। रस र.। इदं बृहत्। स्वल्पं यथा घृतं ४ श.। क्वाथार्थे—त्रिफला ८ श. वारि ६४ श. शे. १६ श.। गव्यदुग्धं ४ श.। सन्ध्यायां तिमिरनाशार्थे पेयम्। अन्यत्—घृतं ४ श. शतावरीक्वाथः १६ श.। कल्कार्थे—त्रिफला यष्टिमधु १ श.। पाकशेषे मधु प्रक्षेपः १ श.। अन्यत् योनिरोगे—घृतं ४ श.। कल्कार्थे त्रिफला क्षिण्टीद्वयं गुडूची पुनर्नवा श्योणाकः हरिद्रा दार्वी रास्ना अश्वगन्धा शतावरी एषां मिलितशरावः (১ সের)। गव्यदुग्धं १६ श.। भा.। [बड़। भूरिप्र.।

**त्रिवलिः** । स्त्री। जठरावयवविशेषे। পেটের

**त्रिवलीकम्** । क्ली। गुदद्वारे, पायौ। हे.च.।

**त्रिभङ्गी (ण्टी) (ण्डी)** । स्त्री। त्रिवृतायां। তেউড়ী। प.मु.। "सशर्करा कामलिनां त्रिभण्डी हिता॥" सि.यो.कास चि.। ज.द.कास चि.। सु.सू.४४अ.। चि.१७अ.।

**त्रिभण्ड(द्र)म्** । क्ली। मैथुने, सुरते। त्रिका.।

**त्रिमण्डला** । स्त्री। कृच्छ्रसाध्यलूताविशेषे।

**त्रिमदः** । पुं। विडङ्गमुस्तचित्रकेषु। "विडङ्गमुस्तचित्रैश्च त्रिमदः।" प.प्र.३ख.त्रिकत्रयलौहे।

**त्रिमदहितयम्** । क्ली। त्रिमदस्त्रिफला चेति त्रये। प्रयोगा.यक्ष.चि.कणादिलौहे।

**त्रिमधु** । क्ली। मधुरत्रये, मधुघृतशर्करासु। रा.नि.व.२१। गुणाः—"मधुरत्रितयं शश्वद्दीपनं कान्तिदायकं। विषदोषं रक्तपित्तं तृष्णाञ्चैव विनाशयेत्॥" वै.निघ.।

**त्रिमल्लभट्टः** । पुं। योगतरङ्गिणीकारे। [सु.।

**त्रियष्टिः** । स्त्री। पर्पटके। ক্ষেৎপাপড়া। प.

**त्रियामा** । स्त्री। हरिद्रायाम्। रा.नि.व.६। नील्यां। यमुनायां। रात्रौ। त्रिका.।

**त्रिलवणम्** । क्ली। सौवर्चलसैन्धवविड़ानीति लवणत्रये। सि.यो.सान्निपातिकज्व.। "मातुलुङ्गाद्रकरसं त्रैश्चित्रिलवणान्वितम्।" च.द.ज्व.चि. नस्ये। रा.नि.व.२२।

**त्रिलिङ्गगतिः** । स्त्री। त्रिदोषजनाड्यां। शा. म.४अ.सु.रो.चि.। "त्रिलिङ्गगतिस्त्रैधिरी।"

**त्रिलौहकम्** । क्ली। स्वर्णरजतताम्रेषु। सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलौहकं। रा.नि.व.२२। गुणाः—त्रिलौहस्य गुणाः प्रोक्ताः पञ्चलौहसमा गुणैः। वै.निघ. [च। सु.चि.२अ.।

**त्रिवर्गः** । पुं। त्रिकटुनि, त्रिफलायां, त्रिमदे

**त्रिवर्गहितयम्** । क्ली। त्रिफलात्रिमदे। त्रिफला ও ত্রিমদ। रस.र.कणादलौहे।

**त्रिवर्णकम्** । क्ली। गोक्षुरके। त्रिफलायां। त्रिकटुके च। त्रिजातके। सु.सू.४४अ.।

**त्रिवर्णकृत्** । पुं। शरटे। কাঁকলাস। वै.निघ.।

**त्रिवल्ली** । स्त्री। इन्दीवरायां। वै.निघ.।

**त्रिविक्रमरसः** । पुं। अश्मर्य्यधिकारे रसः। ताम्रभस्म तुल्येन छागदुग्धेन पक्वा, छागदुग्धपक्वताम्रभस्म १ तो. पारदः १ तो. गन्धकः १ तो. निर्गुण्डी(নিশিন্দা)रसेन दिनं मर्दयित्वा गोलकं कृत्वा बालुकायन्त्रे दिनैकं पचेत्। शीते उद्धृत्य द्विगुञ्जा मात्रा देया। रस.र.।

**त्रिविधायतनम्** । क्ली। इन्द्रियार्थातियोगकर्म्मातियोगकालातियोगरूपेषु रोगाणां त्रिविधकारणेषु। च.सू.११अ.। [नि.व.१६।

**त्रिवीजः** । पुं। श्यामाके। শ্যামা ধান। रा.

**त्रिवृतादिगणः** । पुं। तदाद्यधोभागहरद्रव्यसमूहे। यथा—"त्रिवृता श्यामा दन्ती द्रवन्ती (ইন্দুরকাণী) सप्तला (চামরকষা) शङ्खिनी (শ্বেত বৃহ্ম) विषाणिका (কর্কটশৃঙ্গী, মেড়াশিঙে) गवाक्षी (গোমুক, রাখালশশা) छगलाण्ठी (বিজতাড়ক) स्नुक् (মনসা সিজু) सुवर्णक्षीरी (ওষধিবিশেষ বা শিয়ালকাঁটা) चित्रकः किणिही (আপাং) कुशः काशः तिलकः कम्पिल्लकः (কমলাগুঁড়ী) पाटला पूगः हरीतक्यामलकौ विभीतकं नीलिनी (নীল) चतुरङ्गुलः (সোন্দাল) एरण्डः पूतिकः (করঞ্জ) महावृक्षः (তেকাঁটা সিজু) सप्तच्छदार्कौ ज्योतिष्मती चेति अधोभागहराणि।" सु.सू.३८अ.।

**त्रिवृतिका** । स्त्री । त्रिवृतायां । रा.नि.व.६ ।

**त्रिवृत् (ता, क्षया)** । स्त्री । (Ipomœa turpethum. Syn. Convolvulus turpethum.) Turpeth Root. स्वनामख्यातलतायाम् । তেউড়ী । हिं तरवद, निशोत, नकपतर, पियोरी । मं तिवड़ । कं तिगड़े । तें चातेगड़ । ता. शिवदइ । वम्. फुटकुरी, निशोथीर । सा. गुणाः —कटुत्वम् क्रिमिश्लेष्मोदरार्तिकुष्ठकण्डूव्रणघ्नी विरेचने प्रशस्ता च । रा.नि.व.६। अरुणागुणाः—स्वादुः कषाया मृदुः रेचनी रूक्षा कटुका पित्तकफापहा च । राज. । च.द.चिरज्व.चि. । कृष्णागुणाः—श्वेतायाः हीनगुणा विरेचनी तीव्रा मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षकारिणी च । श्वेतागुणाः—विरेचनी स्वादुः उष्णा वातला रूक्षा पित्तज्वरश्लेष्मपित्तशोफोदरघ्नी च । भा. । रेचनी अर्थात् विपक्वमविपक्वं वा मलादि द्रवतां नयेत् रेचयति च । शार्ङ्ग. । एषा रक्तमूलैव ग्राह्या । सु. सू.३८।२६अ. । सि.यो.च.द.र.पि.चि. । त्रिवृतामोदके ।

**त्रिवृत्पत्रम्** । क्ली । वटपत्रे । रस.र. । वह्निभल्लातके ।

**त्रिवृत्पर्णी** । स्त्री । हिलमोचिकायां । श.च. ।

**त्रिवृन्तः** । पुं । पलाशवृक्षे । वै.निघ. ।

**त्रिवेला (ली)** । स्त्री । त्रिवृतायां । তেউড়ী । रा.नि.व.६ ।

**त्रिशङ्कुः** । पुं । चातकपक्षिणि । त्रिका. । सुमश्माज्ञारे । गन्धनकुल । वैनिघ. । विड़ाले । श्रलभे । मे. । खद्योते । श.मा. । [निघ. ।

**त्रिशतपत्रम्** । क्ली । पुण्डरीके । पद्म । वै.

**त्रिशर्करा** । स्त्री । गुड़ोत्पन्ना हिमोत्था मधुरा चेति मिलितशर्करायाम् । "गुड़ोत्पन्ना हिमोत्पन्ना मधुरा चेति मिश्रिता, त्रिशर्करा ।" रा.नि.व.२२।

**त्रिशाखपत्रः** । पुं । विल्ववृक्षे । रा.नि.व.११।

**त्रिशिखः** । पुं । विल्ववृक्षे । रा.नि.व.११ ।

**त्रिशिखिदला** । स्त्री । मालाकन्दे । रा.नि. व.७ ।

**त्रिशिरा** । स्त्री । पेठायां । रा.नि.व.६ ।

**त्रिशूली (लिन्)** । पुं । पारदे । रस.र.ज्वरा. चि.वज्रभैरवरसे । [छ । शब्दकल्पतरुः ।

**त्रिशृङ्गी (इन्)** । पुं । रोहितमत्स्ये । रुई मा-

**त्रिसन्धिः** । स्त्री । पुष्पवृक्षविशेषे । कृष्ण केलि । मं त्रिसन्धि । कं त्रिसन्धि । यस्य कुसुमानि सन्धिकाले एव विकसन्ति । सा रक्तसिताऽसितकुसुमभेदात् त्रिधा । परन्तु गुणैस्तुल्या । गुणाः— कफकासहरा रूक्षा लघ्वीदोषघ्नी च । रा.नि.व.१०।

**त्रिसन्धिपुष्पदा** । स्त्री। त्रिसन्धिवृक्षे । वै.निघ.।

**त्रिसन्धी** । स्त्री । शुक्लत्रिसन्धी । वै.निघ. ।

**त्रिसन्ध्यम्** । क्ली । त्रिसन्धिपुष्पे ।

**त्रिसन्ध्यकुसुमा** । स्त्री । त्रिसन्धिपुष्पवृक्षे । रा.नि.व.१० ।

**त्रिसन्ध्या** । स्त्री । त्रिसन्धिपुष्पवृक्षे । वै.निघ. ।

**त्रिसमम्** । क्ली । समभागा हरीतकी शुण्ठी गुडूची च । रा.नि.व.२२ । गुणाः—"समत्रयं रुचिकरं चक्षुष्यं मलशोधनम् । वातं पित्तं नाशयति ॥" वै.निघ. ।

**त्रिसरः** । पुं । तिलौदने । वै.निघ. । हे.च. ।

**त्रिसरा** । स्त्री । कृसरायाम् । "तिलतण्डुलमाषैश्च कृसरा त्रिसरेति ।" प.प्र.१ख. ।

**त्रिसरी** । पुं । यस्याश्वस्य सन्धौ भिन्नवर्णं कैवलं शिरः कृष्णं स त्रिसरी । "अन्यवर्णस्य वाहस्य शिरः कृष्णं यदा भवेत् । त्रिसरी नाम स प्रोक्तः भर्त्तुः कुलविनाशनः ॥" ज.द.३अ. ।

**त्रिसवनम्** । क्ली। त्रिसन्ध्यस्नाने । च.शा.५अ.।

**त्रिसिता** । स्त्री । त्रिशर्करायां । रा.नि.व.२२।

**त्रिसुगन्धम् (न्धि)** । क्ली। मिलितसमभागत्वगेलापत्रेषु । रा.नि.व.२२ । च.द.वाताव्याधिकुमाखे। गुणाः—"तदर्कं मुखदुर्गन्धच्छेदनी मलभेदनः ।" अर्कः ।

**त्रिसूत्रः (स्कन्धः)** । त्रि । हेतुलिङ्गौषधज्ञानरूपे (आयुर्वेदे) । त्रीणि हेत्वादीनि सूत्राणि यस्मिन् । त्रयो हेत्वादयः स्कन्धरूपा यत्र इति । च. सू.१अ. ।

**त्रिस्वारम्** । क्ली । क्षारत्रये । रा.नि.व.२६ ।

समययवक्षारसर्जिक्षारटङ्कणक्षारेषु । कामाग्निसन्दी-
पनरसे । च.द. । [কেথাড়া গাছ । र.मा. ।

**त्रिसुरः** । पुं । श्वेतकोकिलाक्षवृक्षे । শ্বেত কু-

**त्रिसुरी** । स्त्री । गोक्षुरे । वै.निघ.२भ.र.पि.
चि.कुष्माण्डावलेहे ।

**त्रुटिः (टी)** । स्त्री । सूक्ष्मैलायाम् । ছোট এ-
লাচ । रा.नि.व.६। वा.सू.१५अ.मुस्तादिः । "कुष्ठं
त्रुटी हैमवती ।" चि.क्र.क.चक्री.चि. । च.द.रा.
य.चि.लवङ्गाद्यचूर्णे । "त्रुटिसकक्षार ।" कट्फले ।
वै.निघ. । [मा. ।

**त्रुटिवीजः** । पुं । कच्वीवृक्षे । কচু গাছ । श.

**त्रुटीद्वयम्** । क्ली । सूक्ष्मैलायां स्थूलैलायाञ्च ।
वा.सू.१५अ. शिरोविरेचने । "त्र्यम्बी पृथ्वीका
शोधयन्तुग्रगन्धाङ्गम् ।" [कल्पयुले ।

**त्रैकटु** । क्ली । त्रिकटुके । चि.क्र.क.स्त्री.चि.म-

**त्रैफलम्** । क्ली । त्रिफलायाम् । श.चि. ।

**त्रैलोक्यचिन्तामणिरसः** । पुं। ज्वराधिका-
रे रसः । पारदः हीरकं स्वर्णं रौप्यं ताम्रं लौहम्
अभ्रं मुक्ता गन्धकः शङ्खभस्म प्रवालं हरितालं मनः-
शिला प्र. समभागं चित्रकमूलक्वाथेन ७ दिनानि
भावयेत् । अर्कनिर्यासेन (আকন্দের আঠা) नि
र्गुण्डीरसेन भल्लातरसेन स्नुहीक्षीरेण (মনসার
আঠা) च प्र. ३ दिनानि भावयित्वा पीतकपर्द-
काभ्यन्तरे दत्त्वा अर्कक्षीरेण टङ्कणं सम्मर्द्य तेन क-
पर्दकमुखानि संलिप्य अथ कपर्दकानि भाण्डमध्ये
संस्थाप्य भाण्डमुखं रुद्ध्वा वालुकायन्त्रेण पचेत् ।
शीते सचूर्णं चूर्णतुल्यं रससिन्दूरं तच्चतुर्थांशं वै-
क्रान्तञ्च सम्मिश्र्य त्रिपुरसेन ७ चित्रकमूलरसेन
च भावनाद्वयं देयम् । मात्रा ४ र. । भैष. ।

**त्रैलोक्यडम्बररसः** । पुं । नवज्वरे हितः ।
पारदः गन्धकः ताम्रं पिप्पली जैपालं कटुकी ह-
रीतकी त्रिवृत् मधुरतिन्दुकफलं, एषां प्र. समभागं
स्नुहीक्षीरेण मर्दयेत् । मात्रा २ गुञ्जा । अनुपानं
मधु । अन्यः —रसः २ भ. गन्धकः ४ भ. अभ्रचि-
त्रकविडङ्गगुडूचीसारशोधकक्लृप्तजीरकत्रिकटुसैन्ध-
वयवक्षाराणां प्र. १भ. निर्गुण्डीवीजपूररसेन मर्द-
येत् । मात्रा ३ र. । घृतेन देयः । अन्यः वातव्या-
धौ—हीरकभस्म स्वर्णं विषं मुक्ता कान्तलौहं,
एषां प्र. १ तो. अभ्रभस्म ४ तो. रससिन्दूरं ५
तो. कुमारीरसेन मर्द्यः । र.सा.सं. ।

**त्रैलोक्यविजया** । स्त्री । भङ्गाशणवृक्षे । সি-
দ্ধি গাছ । श.च. ।

**त्रैलोक्यविजयापत्रम्** । क्ली । विजयापत्रे ।
সিদ্ধি । (मदनमोदके, लक्ष्मीविलासरसे) ।

**त्रैलोक्यसुन्दररसः** । पुं । उदररोगे रसः ।
पारदः १ तो. गन्धकः २ तो. अभ्रं सैन्धवं विषं
कृष्णजीरकं विडङ्गं गुडूचीसारः वचा यवक्षारः प्र-
त्येकं ॥० तो. निर्गुण्डीरसेन वीजपूररसेन च दिनं
मर्दयित्वा शोषयेत् । मात्रा २ गुञ्जा । घृतेन से-
व्यः । रस.चि.८अ.। अन्यः—रसः १ मा. गन्धकः
२ मा. कज्जलीकृत्य कुटजतालमूलीधुस्तूरकेशराज
(কেশুত্তে)हस्तिघोषक(ধুন্দুল)जयन्तीमण्डूकपर्णी-
णां (থুলকুড়ি) प्र. शाणमितपत्ररसेन खल्लयेत् ।
र.सा.सं. । [See सोमः ।

**त्रैष्टुभः** । पुं । सोमलताभेदे । सु.चि.२९अ. ।

**त्रोटकः** । पुं । श्लेष्मप्रकृतिकीटविशेषे । See
कीटः । सु.कल्प.८अ. ।

**त्रोटिः (टी)** । स्त्री । पक्षिचञ्चौ । कट्फले ।
पक्षिणि । मत्स्यभेदे । मे. । [रा.नि.व.२२ ।

**त्र्यञ्जनम्** । क्ली । अञ्जनत्रितये । সুর্মাত্রয় ।

**त्र्यम्बकम्** । क्ली । ताम्रे । তামা । रा.नि.व.
१३ । [व.११ ।

**त्र्यम्बकफलः** । पुं । नारिकेलवृक्षे । रा.नि.

**त्र्यष्टकम्** । क्ली । प्रसाधनार्थं जलरक्षणाधार-
विशेषे । सु.सू.४५अ.। पुं । राजिकायाम् । শ্বেত
সরিষা । रस.र.सू.चि. ।

**त्र्यस्रः** । पुं । त्रिपुटक्षुपे । মটর গাছ । र.मा.।
व्याघ्रनखे । নখীবিশেষ । रा.नि.व.१२ । स्त्री ।
शुक्लत्रिवृति । वै.निघ. । वार्षिकमल्लिकायाम् । म-
ल्लिका । रा.नि.व.१० ।

**त्र्यस्रफला** । स्त्री । शल्लकीवृक्षे । वै.निघ. ।

**त्र्याहिकः** । पुं । ज्वरविशेषे । यो ज्वरः तृतीये
दिने भवति । "तृतीयेऽह्नि तृतीयकः" इति । मा.
नि. । [वै.निघ. ।

**त्र्यूषफलः (ला)** । पुं, स्त्री । नारिकेलवृक्षे ।

**त्र्युषर:** । पुं । नागवीटे । त्रिका. ।

**त्र्यु(त्र्यू)ष(ण)म्** । क्ली । त्रिकटुनि । शुंट पिपूल मरिच । रा.नि.व.२२ । "पिप्पली शृङ्ग-वेरञ्च मरिचं त्र्यूषणं विदुः ।" प.प्र.२ख. ।

**त्र्यूषणाद्यघृतम्** । क्ली । यक्ष्मणां घृतम् । अ-व्यघृतं ८ प. । कल्कार्थे—त्रिकटु-त्रिफला-मिलितं पलं गुडपलं जलं ३२ प. । "त्र्यूषणत्रिफलाकल्कं बिल्वमात्रे गुडात् पलं । सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानिलः पिबेत् ॥" च.चि.१८ग. । अन्य-ल्कादौ—"त्र्यूषणं त्रिफलां द्राक्षां काश्मर्य्याणि प रूषकम् । द्वे पाठे सरलं व्याघ्रीं स्वगुप्तां चित्रकं शटीं । ब्राह्मीं तामलकीं मेदां काकनासां शताव-रीं । त्रिकण्टकां विदारीञ्च पिष्ट्वा कर्षसमं घृता-त् । प्रस्थं चतुर्गुणक्षीरं सिद्धं कासहरं पिबेत् ॥" कल्कार्थे—त्रिकट्वादीनां प्र.२ तो.दुग्धं १६ग्र.घृतं ४ श्र. । च.चि.२२ग. ।

**त्र्यूषणाद्यमण्डूरम्** । क्ली । पाण्डुरोगे । त्रि-कटु त्रिफला मुस्ता विडङ्गं चवी (चई) चित्रकमूलं दारुहरिद्रा गुडत्वक् स्वर्णमाक्षी पिप्पलीमूलं देव-दारु, एषां प्र.चूर्णं २ प. चूर्णसमष्टिद्विगुणं शुद्ध-मण्डुरं गोमूत्रं मण्डुरात् ८ गुणम् । गोमूत्रे मण्डुरं पक्त्वा घनीभूते चूर्णप्रक्षेपो देयः । भैष. ।

**त्र्यूषणाद्यलौहम्** । क्ली । स्थौल्याधिकारे । त्रिकटु त्रिफला चव्यं काचलवणं (कत्रकच्) सैन्ध-वलवणं विट्लवणं सौवर्चललवणम् (सचल) चर्म सोमराजी लौहभस्म, एषां प्र.समभागः । रस.र. ।

**त्र्यूषणम्** । क्ली । त्र्यूषणे । वै.निघ. ।

**त्वच्** । स्त्री । वल्कले । छाल । मे. । इन्द्रियविशे-षे । स्पर्शेन्द्रिय । गुडत्वचि । दारुचिनि । रा. नि.व.६ । तालीशपत्रे । वै.निघ. । चर्म्मणि । चा-मड़ा । यथा—"क्षीरस्य पच्यमानस्य यथा सन्ता-निका भवेत् । पच्यमानस्य शुक्रस्य रजसश्च तथा त्वचः । पूर्व्वावभासिनी तासां सिध्मस्थानञ्च सा स्मृता ॥ शरीरे षट् त्वचः—तद्यथा—उदकधरा असृग्धरा सिध्मकिलाससम्भवाधिष्ठाना-कुष्ठसम्भवा-धिष्ठाना अलजीविद्रधिसम्भवाधिष्ठाना यस्यां छि-न्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्य-धिष्ठाय अरूंषि जायन्ते पर्व्वसन्धिषु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीति षट् त्वचः एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति ।" च.शा.७ग. । सुश्रुतस्तु सप्त त्वच आह । १अवभासिनी २ लोहि-ता ३ श्वेता ४ ताम्रा ५ वेदिनी ६ रोहिणी ७ मांसधरा चेति । तत्र १मा सर्व्ववर्णानवभासयति, व्रीहेः अष्टादशभागप्रमाणा सिध्मपद्मकाधिष्ठाना । २या व्रीहेः षोड़शभागप्रमाणा तिलकालकन्यच्छ-व्यङ्गाधिष्ठाना । ३या द्वादशभागप्रमाणा चर्म्मदला-धिष्ठाना । ४र्थी अष्टभागप्रमाणा किलासकुष्ठाद्य-धिष्ठाना । ५मी पञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठा-ना । ६ष्ठी व्रीहिप्रमाणा ग्रन्थ्याद्यधिष्ठाना । ७मी व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यधिष्ठाना च । सु. शा.४ग. ।

**त्वक्कण्डुर:** । पुं । व्रणे । क्षत. । [शब्द.चि. ।

**त्वक्कन्द:** । पुं । वनशूरणे । बुनो ओल । भैष.

**त्वक्छद:** । पुं । क्षीरीशवृक्षे । क्षीरकञ्चुकी । र.मा. । [चर्म्मकीलि । वै.निघ. ।

**त्वक्तरङ्ग: (क:)** । पुं । वल्याम् । रा.नि.व.१८।

**त्वक्पञ्चकम्** । क्ली । न्यग्रोधोदुम्बराश्वत्थप्लक्ष-वेतसवल्कलेषु । रा.नि.व.२२ ।

**त्वक्पत्रम्** । क्ली । दारचिनीविशेषे । कलमि दारुचिनि । तेजपत्रे । मे. । पुं । हिङ्गुपत्रे । वै. निघ. ।

**त्वक्पत्री** । स्त्री । हिङ्गुपत्र्याम् । हिङ्गुपत्रे । तमालपत्रे । वै.निघ. । कारव्याम् । कृष्णजीरा । मे. ।

**त्वक्पाक:** । पुं । शूकरोगे । तल्लक्षणं यथा— "पित्तरक्तकृतो ज्ञेयः त्वक्पाको ज्वरदाहवान् ।" मु.नि.१४ग. । [वि । छुली । श.च. ।

**त्वक्पुष्पम्** । क्ली । रोमाञ्चे । त्रिका. । किला-

**त्वक्पुष्पिका** । स्त्री । सिध्माम् । छिम् । श्वित्रकुष्ठे । किलासे । धवल, छुली । त्रिका. ।

**त्वक्पुष्पी** । स्त्री । श्वित्ररोगे । किलासे । धवल, छुली । जटा. ।

**त्वक्शून्यता** । स्त्री । अस्पर्शतायाम् । "स्पृश्य-माना त्वचा या तु शीतोष्णं मृदु कर्कशं । न जा-नाति बुधैस्त्वक्सा शून्येति परिकीर्त्तिता ॥" निघ. ।

**त्वक्सार:** । पुं । वंशवृक्षे । बाँशगाछ । रा.नि.

व.४ । रक्तवंशे । रा.नि.व.७ । वंशलोचनायाम् । वंशलोचन । गुड़त्वचि । सु.सू.४४अ. । वंशे । अम. ।

**त्वक्सारनिर्यासविषम्** । क्ली । स्थावरविषभेदे । यस्य त्वक्सारः निर्यासश्च विषम् । तानि तत्र यथा—अन्त्रपाचककर्त्तरीयसौरीयककरघाट-करम्भनन्दनवराटकानीति । "त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि । आस्यदौर्गन्ध्यपारुष्यशिरोरुक्-कफसंस्रवाः ॥" सु.कल्प.२अ. । [नि.व.४ ।

**त्वक्सारभेदिनी** । स्त्री । क्षुद्रचुञ्चुपे । रा.

**त्वक्सारा** । स्त्री । वंशरोचनायाम् । रा.नि.व.६ । [लेबुर गाछ । भा. ।

**त्वक्सुगन्धः** । पुं । नागरङ्गवृक्षे । नाराङ्ग ।

**त्वक्सुगन्धा (न्धिका)** । स्त्री । सूक्ष्मैलायाम् । एलवालुके । वै.निघ. । जटा. । [निघ. ।

**त्वक्स्वादी** । स्त्री । त्वक्सारे । दारुचिनि । वै.

**त्वक्स्वापः** । पुं । स्पर्शाज्ञतायाम् । निदा. ।

**त्वक्क्षीरम्** । क्ली । तवक्षीरे, वंशलोचनायां । वै.निघ.२भ.कास-चि. । [याम् । रा.नि.व.६ ।

**त्वक्क्षीरी** । स्त्री । क्षीरशुक्लायां, वंशरोचना-

**त्वगङ्कुरः** । पुं । रोमाञ्चे । त्रिका. ।

**त्वगाक्षीरा (री)** । स्त्री । वंशलोचनायाम् । जटा. । अम. । [रा.नि.व.१८ ।

**त्वगूर्म्मिः** । स्त्री । वल्याम्, मांसलोलतायाम् ।

**त्वग्गन्धः** । पुं । नागरङ्गवृक्षे । नारेङ्गा । रा.नि.व.११ । [न्धि । रा नि.व.१८ ।

**त्वग्जम्** । क्ली । रक्तधातौ । रक्त । केशे, रो-

**त्वग्दोषः** । पुं । चर्म्मरोगे, शीतपित्तोदर्दकुष्ठ-कोठादौ । चर्म्म रोग, कोठादि । निदा. ।

**त्वग्दोषापहा** । स्त्री । सोमराज्याम् । रा.नि.व.४ ।

**त्वग्दोषारिः** । पुं । हस्तिकन्दे । रा.नि.व.७ ।

**त्वग्भी** । स्त्री । चर्म्मचटके । चाम्चिकि । वै.निघ. ।

**त्वग्भेदः** । पुं । व्रणे । वै.निघ. ।

**त्वचम्** । क्ली । गुड़त्वचि । दारुचिनि । गुणाः—गुरु शीतं कफकासघ्नं शुक्रामशमनं कण्ठशोधनञ्च । रा.नि.व.६ । सि.यो.र.पि.चि.खण्डखाद्य-लौहे ।

**त्वचा** । स्त्री । मिष्टवल्कले । दारुचिनि । श.र. ।

**त्वचाङ्गः** । पुं । नागरङ्गवृक्षे । रा.नि.व.११ ।

**त्वचापत्रः** । पुं । हिङ्गुवृक्षे । क्ली । त्वचायाम् । दारुचिनि । श.र. ।

**त्वचिसारः** । पुं । वंशे । मद.व.७ ।

**त्वचिसुगन्धा** । स्त्री । क्षुद्रैलायाम् । हारा. ।

**त्वच्यगणः** । पुं । त्वक्प्रसाधनवर्गे तैलादौ । यथा—"तैलन्तु नवधा प्रोक्तं वाकुची चक्रमर्दकं । स्थौणेयं पर्पटी सूक्ष्मा त्वच्योऽयं गण उच्यते ॥" भर्क. ।

**त्वरारोहः** । पुं । पारावते । वै.निघ. ।

**त्वरितका** । स्त्री, पुं (कः) । शीघ्रपाकिशालि-धान्यभेदे । सु.सू.४६अ. ।

**त्वष्ट(ष्ट्र)म्** । क्ली । ताम्रे । वै.निघ. ।

**त्वष्टा (ष्ट्री)** । स्त्री । ब्राह्मीशाके । वै.निघ. ।

**त्वाचम्** । क्ली । त्वक्तैले । दारुचिनिर तेल । गुणाः—"वह्निमद्यानिलहरमाध्मानाक्षेपनाशनम् । वातश्लेष्मप्रशमनं संयाहि दशनार्त्तिभित् । त्वाचं तैलं रजःस्रावि तोये क्षिप्तं निमज्जति ।" भचि. ।

## थ

**थः** । पुं । पर्व्वते । मे. । रोगविशेषे । भक्षणे । श.र. ।

**थुत्कारः** । पुं । निष्ठीवनत्यागानुकरणशब्दे ।

**थुथुकृत्** । पुं । पक्षिविशेषे । धूतुलि पाखी । वै.निघ. ।

**थोड़नम्** । क्ली । आच्छादने । वै.निघ. ।

**थौनेयकः** । पुं । ग्रन्थिपर्णे । गाँटिआला । च.चि.२८.भ.तैले । च.द.विष.चि. ।

**दंशः ।** पुं । दन्ते । हे.च. । मक्षिकाविशेषे । ডাঁশ । अम. । शीभाञ्जनवृक्षे । मक्षिवे । सर्पक्षते । मर्म्मणि । विश्व. । त्रिका. । वै.निघ. । दंशने । मे. ।

**दंशकः ।** पुं । कर्कटे । कुक्कुरे । वै.निघ. । मक्षिकायाम् । ডাঁশ । धारा. ।

**दंशनम् ।** क्ली । दन्तेन कर्त्तने । কামড়ান । हे.च. ।

**दंशनाशिनी ।** स्त्री । तैलकीटे । वै.निघ. ।

**दंशभीरुः (कः) ।** पुं, स्त्री । मल्कुणे । मक्षिके । त्रिका. । [रा नि.व ७ ।

**दंशमूलः ।** पुं । शियुवृक्षे । সজিনা গাছ ।

**दंशवदनः ।** पुं । कङ्कपक्षिणि । वै.निघ. ।

**दंशिका ।** स्त्री । वनमक्षिकाविशेषे । ডাঁশ মাছী, রোঁয়ানী । वै.निघ. ।

**दंशी** (इन्) । पुं, स्त्री । कुक्कुरे । वै.निघ. । वनमक्षिकायाम् । क्षुद्रदंशे । রোঁয়ানী । अम. ।

**दंष्टः ।** पुं । शूकरे । प.मु. ।

**दंष्टकम् ।** क्ली । सर्पदंशविशेषे ।

**दंष्टा ।** स्त्री । दृढ़दन्ते । দাড়া । हे.च. । विषदन्ते । वै.निघ. । [मित. ।

**दंष्टायुधः (ष्टास्त्रः) ।** पुं । वनशूकरे । वै.

**दंष्ट्रिका ।** स्त्री । दाढ़िकायाम् । हे.च. ।

**दंष्ट्री** (इन्) । पुं,स्त्री । वन्यशूकरे । अम. । सर्पे । श.र. ।

**दकम् ।** क्ली । जले । त्रिका. । वा.चि.१अ. ।

**दकलावणिकः ।** पुं । यूषविशेषे । "नातिमांसालनुवसा दकलावणिकाः स्मृताः" । अन्यत्र "अल्पमांसपटुस्नेहा दकलावणिकाः स्मृताः ।" वा. टी.१अ.अरुणः ।

**दकोदरम् ।** क्ली । उदररोगभेदे । जलोदरी । "यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ़ः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत् सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ।" सु.नि.७अ. ।

**दग्धकः ।** पुं । महाशतावर्य्याम् । रा.नि.व.४ ।

**दग्धकाकः ।** पुं । द्रोणकाके । ডোম কাক । हे.च. ।

**दग्धभूमिजशालिः ।** पुं । दग्धक्षेत्रजशालौ । गुणाः—"दग्धायामवनौ जाताः शालयो लघुपाकिनः । किञ्चित्सतिक्ता मधुराः पाचना बलवर्द्धनाः ॥" रा.नि व.१६ । "दग्धग्रामाचले जाताः शालयो लघुपाकिनः । सुपथ्या बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षिणः ॥" अत्रि.१५अ. ।

**दग्धमत्स्यः ।** पुं । अग्निदग्धमीने । পোড়া মাছ । तस्य विवरणम् । "पलालैर्वेष्टितो मत्स्यः कर्द्दमेन च लेपितः । दग्धोऽङ्गारे सलवणो दग्धमत्स्यः प्रकीर्त्तितः ॥" वैद्यकम् । गुणाः—"दग्धमत्स्यो गुरुर्हृष्यो हृद्यः प्राणवर्द्धनः । क्षीणशुक्राश्च ये केचित् भग्नजर्ज्जरिताश्च ये । नित्यं स्त्रीसेविनो ये च क्षीणतेजस एव च । दग्धमत्स्यो हितस्तेषां सतैललवणान्वितः । तथाङ्गीनगुणः किञ्चिद्दग्धमत्स्य उदाहृतः ॥" राज. । [रा.नि.व.१० ।

**दग्धरुहः ।** पुं । तिलकवृक्षे । তিল গাছ ।

**दग्धरुहा ।** स्त्री । दग्धावृक्षे । हिं कुरकी । रा.नि.व.९ । [वै.निघ. ।

**दग्धवर्णकः ।** पुं । रोहिषतृणे । রামকর্পূর ।

**दग्धक्षीरम् ।** क्ली । वैक्रान्तमणौ । भैष.ज्व.पानीयभक्तवट्याम् ।

**दग्धा ।** स्त्री । कुरकी इति कोङ्कणे प्रसिद्धे वृक्षविशेषे । गुणाः—कषाया उष्णा वातकफघ्नी अग्निदीपनी पित्तकोपनी च । रा.नि.व.९ ।

**दग्धास्यः (स्याह्वः) ।** पुं । कुमरिवृक्षे । লঙ্কামরিচ গাছ । प.मु. ।

**दग्धाह्वः ।** पुं । तिलकपुष्पवृक्षे । वै.निघ. ।

**दग्धिका ।** स्त्री । दग्धायाम् । कुरकीति कोङ्कणे । रा.नि.व.९ । दग्धान्ने । धरा वा आँका भात । चाँचीति केचित् । भ. ।

**दण्डेष्टका ।** स्त्री । अपिदग्धेष्टकायाम् । पाका इट, झामा । हारा. ।

**दण्डः ।** पुं । ध्वमाने । अन्ने । यष्टिकायाम् । लाठी, छड़ि ।

**दण्डकः ।** पुं । वातव्याधिविशेषे । तल्लक्षणं — "पाणिपादशिरःपृष्ठश्रोणिस्तम्भातिमारुतः । दण्डवत् स्तम्भगात्रस्य दण्डकः सोऽनुपक्रमः ॥" भा. । शरे । सु.कल्प.७अ. । वा.उ.५.अ. ।

**दण्डकन्दः (कः) ।** पुं । धरणीकन्दे । रा.नि.व.७ । [काक । हे.च. ।

**दण्डकाकः ।** पुं । स्वनामख्यातकाके । दाँड़-

**दण्डधारणम् ।** क्ली । यष्टिधारणे । गुणाः — "श्वनः सरीसृपव्यालविषाणिभ्यो भयापहं । श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते । सत्त्वोत्साहबलस्थैर्यधैर्यवीर्यविवर्द्धनं । अवष्टम्भकरञ्चापि भयघ्नम् ॥" सु.चि.२४अ. । स्खलतः सम्प्रतिष्ठानम् अवष्टम्भनं शत्रुवारणं भयघ्नमायुष्यञ्च । राज. ।

**दण्डपातः (ती) (इन्) ।** पुं । सन्निपातज्वरविशेषे । लक्षणं — "नक्तं दिवा न निद्रामुपैति गृह्णाति मूढ़धीर्नभसः । उत्थाय दण्डपाती भ्रमातुरः सर्व्वतो भ्रमति ॥" भा.म.१भ. ।

**दण्डपालः ।** पुं । अर्थप्रफरमत्स्यविशेषे । डानकोणा माछ । हारा. ।

**दण्डपालकः ।** पुं । दण्डमत्स्ये । डानकोणा माछ । शकुलमत्स्ये । शउल माछ । हारा. ।

**दण्डपाली ।** स्त्री । तुलायन्त्रे । दाँड़िपाल्ला । च.सू.१५अ. ।

**दण्डबालाधः ।** पुं । हस्तिनि । श.र. ।

**दण्डमत्स्यः ।** पुं । स्वनामख्यातमत्स्ये । दाँड़िका माछ । हिं दण्डारी । गुणाः — "दण्डमत्स्यो रसे तिक्तः पित्तरक्तकफं हरेत् । वातसाधारणः शीतः शुक्रलो बलवर्द्धनः ॥" भा. । कफवायुपित्तघ्नः तिक्तः लघुश्च । राज.१प. । [वै.निघ. ।

**दण्डमातङ्गः ।** पुं । तगरे, पिण्डीतगरे ।

**दण्डयामः ।** पुं । दिवसे । वै.निघ. ।

**दण्डवृक्षः (क्षः) ।** पुं । स्नुहीवृक्षे । । रा.नि.व.८ ।

**दण्डहस्तः (स्ती) (इन्) ।** पुं । तगरपुष्पे । टगर फुल । रा.नि.व.१०।२३ । पिण्डीतगरे । तगरपादुका । वै.निघ. ।

**दण्डा ।** स्त्री । नागबलायाम् । वै.निघ. ।

**दण्डापतानकः ।** पुं । वातव्याधिभेदे । लक्षणम् — "कफान्वितो यदा वायुर्धमनीष्वेव तिष्ठति । स दण्डवत्स्तम्भयति कृच्छ्रो दण्डापतानकः ॥" सु.नि.१अ. ।

**दण्डालुः ।** पुं । स्वनामख्यातालुविशेषे । थाम आलू । प.मु. । "ताम्बूलपात्रा दण्डालु"रिति । द्रव्याभिधानम् । [क्लीबे तक्री । रा.नि.व.१५ ।

**दण्डाहतम् ।** क्ली । पादजलेन त्रिभागदधि-

**दण्डिकः ।** पुं । दण्डमत्स्ये । डानकोणा माछ ।

**दण्डिका ।** स्त्री । श्योणाकवृक्षे । वै.निघ. ।

**दण्डी (इन्) ।** पुं । दमनकक्षुपे । दना । रा.नि.व.१० ।

**दण्डोत्पलम् ।** क्ली । क्षुपविशेषे । दण्डकलस, डानकुनि, डानपोला । हिं डानिकुरुण्ड । सं सहदेवी । तत्र पीतश्वेतरक्तपुष्पभेदेन त्रिधा भवति । र.मा. । गुणाः—श्वासकासक्षयघ्नम् अग्निदीप्तिकरञ्च । राज. ।

**दण्डोत्पला ।** स्त्री । पीतपुष्पदण्डोत्पले । डानपाना, डानकुनी । र.मा. । भैष.अ.पि.चि.वृहत् सुवर्णगुग्गुल्याम् । "दण्डोत्पलाया मूलानि ।" सा.कौ.दूर्व्वाद्यतैले । वै.निघ.भग्न.चि.भल्लातकादौ ।

**दत् ।** पुं । दन्ते । श.च. ।

**दद्रुः (कः)** पुं । क्षुद्रकुष्ठभेदे । दाद । लक्षणं यथा — "सकण्डूरागपिड़कं दद्रुमण्डलमुद्गतम् ।" मा.नि. । (कः) कच्छपे । श.र. ।

**दद्रु(द्रू)घ्नः ।** पुं । चक्रमर्द्दक्षुपे । चाकन्दा गाछ । रा.नि.व.४ । भा.कुष्ठ.चि. ।

**दद्रुघ्नपत्रम् ।** क्ली । दद्रुमर्द्दपत्रे । श.चि. ।

**दद्रु(द्रू)णः ।** त्रि । दद्रुरोगिणि । अम. । श.टी.र. । [नी । तैलिनीकीटे । रा.नि.व.१९ ।

**दद्रुनाशिनी ।** स्त्री । क्षुपविशेषे । दादमर्द्द-

**दद्रुमर्द्दी (इन्) ।** पुं । (Cassia alata,)

छाना। र.मा। "दध्ना सह पयः पक्वं या भवेद्धि कूर्चिका।" प.प्र.२ख.। अथ दधि दुग्धं समानं भाव्यम्। गुणाः—"वातघ्नी ग्राहिणी रूक्षा दुर्जरा दधिकूर्चिका।" राज.।

**दधिचार:** । पुं। दधिमन्थनदण्डे। हारा.।

**दधिजम्** । क्ली। दधनि। नवनीते। रा.नि.व.१५। [रा.नि.व.१५।

**दधिजलम्** । क्ली। मस्तुनि। দয়ের মাৎ।

**दधित्थ:** । पुं। कपित्थवृक्षे। र.मा.। च.सू.२ष.। क्ली। कपित्थफले। ज.द.१२ष.। सि.यो.ग्रहदाह-चि.। च.द.विदार्यादिदीपे। "दधित्थं वीजपूरकम्।"

**दधित्थाख्य: (ख्य:)** । पुं। धूपविशेषे, सरलद्रवे। लोवान् इति लोके। र.मा.।

**दधिनाम (कम्)** । क्ली। कपित्थफले। কয়েৎ বেল। सि.यो.हिक्कश्वास-चि.। "काश्मीरं दधिनाम च।" पुं (मा)। कपित्थवृक्षे। च.द.।

**दधिपुष्पिका (ष्पी)** । स्त्री। कटभीवृक्षे। कटुभ्याम्। रा.नि.व.२३। श्वेतापराजितायाम्। रा.नि.व.३। शुकशिम्ब्याम्। आलाकुशी। वै.निघ.। तन्नामकफलशाकविशेषे। চিচিঙা, চেঁপা। हिं कुन्दरी। मं गोड़ीकुन्दली। कं काकजोला, कुमरी। गुणाः—कटुः मधुरा शीतला सन्तापपित्तघ्नी वातकरी गुरुः अरोचकघ्नी च। रा.नि.व.७। वीजगुणाः—गुरु हृद्यं वर्च्यं मलस्तम्भकं कफाग्निमान्द्यकरणं वातपित्तहरञ्च। वै.निघ.।

**दधिपूप: (पा:)** । पुं। दधिवटके। দয়ে বড়া। वै.निघ.।

**दधिफल:** । पुं। कपित्थवृक्षे। रा.नि.व.११।

**दधिभवम्** । क्ली। नवनीते। ननि। वै.निघ.।

**दधिमण्ड: (ण्डम्)** । पुं, क्ली। दधिजले। দধির মাৎ। र.मा.। गुणाः—"मस्तु क्लमघ्नं बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहम्। अवृष्यमीषत् शीघ्रमिन्नत् म-[illegible]म्॥" भा.। "वृष्यं वह्निपटुकिदं ममहरं बल्यं कषायं सरं भुक्तिच्छेदकरं तृषोदरगदप्लीहा-[illegible] आमयं। श्रोतःशुद्धिकरं कफानिलहरं विड्-विबन्धापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु॥" रा.नि.व.१५।

**दधिमण्डातकम्** । क्ली। दधिमस्तुनि। च.चि.१८ष.पञ्चकोलघृते। [वै.निघ.।

**दधिमण्डोद्भवम्** । क्ली। नवनीते। ननि।

**दधिलेह:** । पुं। दधिसरे। দয়ের সর, মাথা। र.मा.।

**दधिवटी** । स्त्री। औषधि। ইটের গুঁড়া, হরিদ্রার গুঁড়া, ও ঝুলে পারা, ভীমরাজরসে গন্ধক, শোধন করিবে। পারা ১ তো. গন্ধক ১ তো. ইহার কজ্জলি, হরিতাল, বিষ, তুঁতে, এলবালুক, অভ্র, খাপর, স্বর্ণমাক্ষী, কান্তলৌহ প্রত্যেকে ৷৹ তো. নিসিন্দা, লতাফট্‌কী, অপরাজিতা, জয়ন্তী ও চিতার মূল, ইহাদের রসে ভাবনা। বটী ১ সরিষা। भैष.। कज्जलिः २ती. हरितालं, विषं तुल्यम् एलवालुकम्, अभ्रकम्, खर्परं स्वर्णमाक्षिकं लौहं एषां प्रति ॥० तो.। निर्गुण्डीजयन्तीज्योतिष्मतीचित्रकरसेन क्वाथेन वा भावयेत्।

**दधिवासुका** । स्त्री। गोदन्तहरिताले। दुरालभाभेदे। वै.निघ.।

**दधिशोण:** । पुं। रक्तवानरे। दर्व्वीकरसर्पविशेषे। सु.कल्प.४ष.। See सर्पः। गोलाङ्गूलवानरे। মুখ পোড়া। शिका.।

**दधिसक्तव:** । पुं (बहु)। दध्युपसिक्तसक्तुषु। দইমাখা ছাতু বা রসালা। अम.।

**दधिसक्तु:** । पुं। रसालायाम्। प.मु.।

**दधिसर:** । पुं। दध्यग्रभागे। দধির সর। वै.निघ.। See दधि।

**दधिसारम्** । क्ली। नवनीते। ह.च.।

**दधिस्नेह:** । पुं। दध्नः स्नेहभागे, दधिसरे। शिका.। [See तैलपर्णी।

**दधिस्रवा** । स्त्री। [illegible]म्। प्र.भि.।

**दधिस्वेद:** । पुं। तक्रे। ঘোল। जटा.।

**दधीचा(चि)स्थि** । क्ली। हीरके। शिका.।

**दध्यग्रम्** । क्ली। दधिसरे। वै.निघ.।

**दध्यङ्ग:** । पुं। सरलद्रवे। शिका.।

**दध्यानी ।** स्त्री । कटुकायां । कट्की । वै.निघ. ।

**दध्याली ।** स्त्री । सुदर्शनालतायाम् । দয়েশ্বরে, উরতিপুরতি । ক্বি মদনমস্তু । र.मा. ।

**दध्याह्वः ।** पुं । कपित्थवृक्षे । वै.निघ. ।

**दध्युत्तर(क)म् ।** क्ली । दधिसारे । र.मा. । सु.सू.४१अ. ।

**दन्तः ।** पुं । तक्रप्रकाण्डे । रा.नि.व.२ । चर्व्वण-साधनास्थनि, दशने । দাঁত । स च शिशोः षष्ठे मासि जायते । सुखबोधः ।

**दन्तकड़मड़िः ।** पुं । तन्नामकबालरोगे । यत्र बालकः निद्रितोऽपि दन्तशब्दं करोति । रस.र. बाल.चि. ।

**दन्तकरालः ।** पुं । दन्तरोगभेदे । "करालः सुकुमाराणां दशनानां समुद्भवः ।" वा.उ २१अ. ।

**दन्तकर्षणः ।** पुं । निम्बूवृक्षे । লেবুগাছ । श.र. ।

**दन्तकाष्ठः ।** पुं । अर्कवृक्षे । खदिरवृक्षे । अ-र्ज्जुनवृक्षे । करञ्जवृक्षे । वै.निघ. । विकङ्कतवृक्षे । বঁইচী গাছ । रा.नि.व.९ । क्ली । दन्तधावनका ष्ठे । দাঁতন কাটি । तत्र द्वादशाङ्गुलं कनिष्ठाङ्गु-लिस्थूलम् ऋजु अग्रन्थि कीटाद्यक्षतं ग्राह्यम् । त-दुक्तं—"द्वादशाङ्गुलमायतम् । कनिष्ठिकापरीणा-हमृज्वग्रथितमव्रणम् । निम्बखदिरयष्टिमधुकरञ्ज-भवम् ऋतुवीर्य्यरसदोषविशेषेषु प्रशस्तम् । अवेक्ष्य-र्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत् ।" सु.चि.२४ अ. । "कषायं मधुरं तिक्तं कटुकम्प्रातरुत्थितः । निम्बश्च तिक्तके श्रेष्ठः कषाये खादिरस्तथा । मधु-की मधुरे श्रेष्ठः करञ्जः कटुके तथा ।" च.सू.५ अ. । "केऽप्यत्र करवीरार्ककरञ्जबकुलासनान् । दन्तकाष्ठार्थमन्ये तु सर्व्वान् कण्टकिनोऽब्रुवन् । गु-वाकतालहिन्तालखर्ज्जूरैः केतकीयुतैः । नारिके-लेन ताड्या च न कुर्य्याद्दन्तधावनम् । अर्दिती क-र्णशूली च दन्तरोगी नवज्वरी । शोथी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्ज्जयेत् ।" राज.१प. ।

**दन्तकाष्ठकम् ।** क्ली । आढ्क्यरूपे । रा.नि. व.४ । दन्तधावनकाष्ठे । [वै.निघ. ।

**दन्तकेतुः ।** पुं । अम्लनिम्बूवृक्षे । লেবুর গাছ ।

**दन्तघर्षणम् ।** क्ली । दन्तमार्ज्जने । দাঁতমাজা ।

**दन्तघातः ।** पुं । निम्बूवृक्षे । शिशोर्दन्तकड़म-ड़िरोगे । वै.निघ. ।

**दन्तचाल: (नः)** । पुं । दन्तरोगविशेषे । দাঁ-ত নড়া । "चालश्चलद्भिर्दशनैः भक्षणादधिकव्य-थैः ।" वा.उ.२१अ. ।

**दन्तच्छदः ।** पुं । ओष्ठे । हला. ।

**दन्तच्छदा ।** स्त्री । मधुरबिम्ब्यां । बिम्ब्याम् । কুন্দুরু । তেলাকুচা । वै.निघ. ।

**दन्तच्छदोपमा ।** स्त्री । कुन्दुरी । बिम्ब्याम् । रा.नि.व.७ ।

**दन्तध(धा,प)वनम् ।** क्ली । दन्तमार्ज्जने । দাঁত মাজা বা দাঁতন করা । दन्तधावनकाष्ठे । দাঁতন কাঠি । दन्तधावनविधिः—"प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् । भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् । केऽप्यत्र करवीरार्ककरञ्ज-बकुलासनान् । दन्तकाष्ठार्थमन्ये तु सर्व्वान् कण्ट-किनोऽब्रुवन् । निषिद्धं यथा—गुवाकतालहिन्ताल-खर्ज्जूरैः केतकीयुतैः । नारिकेलेन ताड्या च न कु-र्य्याद्दन्तधावनम् ॥ इति । दन्तधावने दिक्—"प्रा-ङ्मुखः स्याद्दक्षिणास्येन पश्चिमास्येन चामयः । पूर्व्वा-स्येनोत्तरास्येन सम्पदो दन्तधावनात् ॥" इति । द-न्तकाष्ठव्यवहारे निषिद्धजनाः यथा—"अर्दितो कर्णशूली च दन्तरोगी नवज्वरी । शोथी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्ज्जयेत् ॥" इति । राज.१प. ।

**दन्तधावनः ।** पुं । खदिरवृक्षे । अ.द.१२अ. । रा.नि.व.८ । गुच्छकरञ्जे । रा.नि.व.९ । बकुल-वृक्षे । श.च. ।

**दन्तनाड़ी ।** स्त्री । दन्तमूलगतनाड़ीनामरोगे । দন্তনালী । सा पञ्चविधा वातपित्तकफसन्निपाता-गन्तुजनिमित्ता । "दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ।" भा.म.४भ.मु.रो.चि. ।

**दन्तपत्रकम् ।** क्ली । कुन्दपुष्पे । श.च. ।

**दन्तपातनयन्त्रम् ।** क्ली । दन्तोत्पाटनयन्त्रे । দাঁততোলা সাঁড়াশি । "शरपुङ्खमुखं यन्त्रं दन्त-पातनमुच्यते ।" चचि. ।

**दन्तपाली ।** स्त्री । शिशोर्दन्तरोगे । वा.उ.२अ. ।

**दन्तपीठकम्** । क्ली । दन्तवेष्टे । দাঁতের মাড়ি । अ.द.२अ. ।

**दन्तपुप्पुटः (कः)** । पुं । दन्तरोगविशेषे । দাঁতের মাড়ি ফোলা বা দাঁতের গোড়া ফোলা । "दन्तयोस्त्रिषु वाप्यत्र श्वयथुर्जायते महान् । दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ।" भा.म.४भ.मु.रो चि. । "दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान् । दन्तपुप्पुटको ज्ञेयः कफमारुतपित्तजः ।" सु. । "दन्तयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः । कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः ॥" वा.उ.२१अ. ।

**दन्तपुष्पः** । पुं । अश्वत्थवृक्षे । वै.निघ. । क्ली । कतकफले । श.च. ।

**दन्त(न्ता) फलः** । पुं । पिप्पल्याम् । "दन्तफला तु पिप्पल्याम् ।" रा.नि.व.२३ । क्ली । कतकफले । নির্ম্মাল্য ফল । श.च. ।

**दन्त(न्ता)फला** । स्त्री । पिप्पल्याम् । रा.नि.व.६ । अश्वत्थिकावृक्षे । वै.निघ. ।

**दन्तभागः** । पुं । हस्त्यग्रभागे । अम. ।

**दन्तभेदः** । पुं । दन्तरोगविशेषे । लक्षणम्— "दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ।" वा.उ.२१अ. । [ना वा पाथुरि । हारा. ।

**दन्तमलम्** । क्ली । दशनमले । দাঁতের ময়-

**दन्तमूलम्** । क्ली । दन्तार्ब्बुदरोगे । रा.नि.व. २० ।

**दन्तमूलिका** । स्त्री । दन्तीवृक्षे । श.र. ।

**दन्तरञ्जनम्** । क्ली । कासीसे । হিরেকস্ । र.सा.सं. ।

**दन्तरोगः** । पुं । दन्तगतमुखरोगे । स अष्टविधः । यथा—दालनः क्रिमिदन्तः भञ्जनकः दन्तहर्षः दन्तविद्रधिः दन्तशर्करा कपालिका श्यावदन्तकश्चेति । भा. । दन्तविद्रधिमगणय्य हनुमोक्षमाह सु.नि.१६अ. । अश्वस्य दन्तगतरोगे । अ. द.१८अ. । See मुखरोगः ।

**दन्तरोगी (इन्)** । त्रि । दन्तरोगयुक्ते ।

**दन्तलेखनम्** । क्ली । शस्त्रविशेषे । দাঁতের পাথুরি ছোলা । यथा—"एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः । दन्तलेखनकं तेन शोधयेद्दन्तशर्करान् ॥" भचि. ।

**दन्तवलः** । पुं । हस्तिनि । वै.निघ. ।

**दन्तवस्त्रम् (वासः)** । क्ली, पुं । ओष्ठे । रा. नि.व.१८ ।

**दन्तविद्रधिः** । पुं । दन्तवेष्टगतरोगविशेषे । দাঁতের গোড়া ফোলা, দাঁৎকড়া । यत्र दन्तवेष्टगतदोषेण सरक्तेन हेतुना बाह्यतो दाहरुजायुक्तः महान् श्वयथुः भिन्नः पूयं स्रवेत् स दन्तविद्रधिः । "दन्तमांसमलैः सास्रैः बाह्यतः श्वयथुर्महान् । सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥" भा.म.४भ.मु.रो.चि. ।

**दन्तवीजः (कः) (जा)** । पुं, स्त्री । दाडिम्ववृक्षे । भा. । रा.नि.व.११ । (जा) अलाव्वाम् । वै.निघ. ।

**दन्तवेष्टः** । पुं । दन्तवेष्टनमांसे, दन्तमाड़िकायाम् । দাঁতের মাড়ি । दुष्टशोणितजे तन्नामकदन्तवेष्टजरोगे । यदि पूयरुधिरं स्रवेत् दन्ताश्च चला भवन्ति तदा दन्तवेष्ट इत्यभिधीयते । "स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च । दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः ॥" भा.म.४भ.मु. रो.चि. ।

**दन्तवेष्टजरोगः** । पुं । दन्तवेष्टनमांसगतमुखरोगे । स षोड़शविधः (দাঁতের মাড়ির ১৬ রোগ) यथा—दन्तवेष्टः सौषिरः महासौषिरः परिदरोपकुशौ वैदर्भः खलि(ल्ली)वर्द्धनः (আক্কেল দন্ত) अधिमांसकः करालकः, पञ्चदन्तनाड्यः वातादिभेदेन, शीतादः दन्तपुप्पुट इति । "शीतादो गदितः पूर्व्वं दन्तपुप्पुटकस्तथा । सुरुष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा । दन्तवेष्टः सौषिरश्च महासौषिर एव च । ततः परिदरः प्रोक्तस्ततस्तूपकुशः स्मृतः । वैदर्भश्च ततः प्रोक्तः खलि(ल्ली)वर्द्धन एव च । अधिमांसकनामा च दन्तनाड्यश्च पञ्च च । दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोड़श ॥" भा. म.४भ.मु.रो.चि. । मा.नि.। करालस्थाने दन्तविद्रधिमाह भावमिश्रः । सुश्रुतस्तु करालकं न गणयति । एषां लक्षणानि तत्तत्पर्य्याये कथ्यानि ।

**दन्तवैदर्भः** । पुं। दन्तमूलगतमुखरोगे । See वैदर्भः ।

**दन्तशङ्कुः** । पुं । तीक्ष्णकण्टकप्रथमयवपत्रमुखे दन्ताहरणार्थं शस्त्रभेदे । "शङ्कुनश्च मुखं तस्य कार्य्यमर्द्धाङ्गुलायतम् । चतुरस्रं समञ्चैव तीक्ष्णधारं समाहितम् । दन्ताग्रं तस्य कर्त्तव्यं शस्त्रं व्रीहिमुखाकृति । कपालिकां शर्कराञ्च दन्तानां तेन शोधयेत् ॥" सु.सू.८ष. । सु.टी.ड. ।

**दन्तशटः** । पुं । दन्तशठे । च.टी.म. ।

**दन्तशठः** । पुं । कपित्थवृक्षे । जम्बीरवृक्षे । रा.नि.व.११।२२ । चाङ्गेर्य्याम् । आम्रातकवृक्षे । कर्म्मरङ्गवृक्षे । मे. । तिन्तिडीवृक्षे । वै.निघ. ।

**दन्तशठा (ठी)** । स्त्री । चाङ्गेर्य्याम् । आम्‌रूल । रा.नि.व.५ । तिन्तिड्याम् । भा. ।

**दन्तशब्दः** । पुं । शङ्कुजुष्टबालकस्य दन्तपीड़नरोगे । दाँत कड़मड़ रोग । लक्षणम्—"ऊर्द्ध निरीक्षते दन्तान् खादेत्कूजति जृम्भते ।" मा.नि. ।

**दन्तशर्करा** । स्त्री । दन्तगतमुखरोगे । दाँतेर पाथुरि । लक्षणं यथा—"मलो दन्तगतो यस्तु पित्तमारुतशोषितः । शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥" मा.नि. ।

**दन्तशाणम्** । क्ली । दन्तघर्षणे, दन्तनिर्म्मुक्तद्रव्ये । माजन, मिशि । त्रिका. । [श.र. ।

**दन्तशिरा** । स्त्री । दन्तवेष्टे । दाँतेर माड़ि ।

**दन्तशूलम्** । क्ली । दन्ततोदे । दन्तार्व्वुदे । दाँतेर शूलुनि । रा.नि.व.२० ।

**दन्तशैथिल्यम्** । क्ली । वातजदन्तरोगविशेषे । दाँत आल्‌गा । च.सू.२०ष. ।

**दन्तशोफः** । पुं । दन्तार्व्वुदरोगे । रा.नि.व.२० ।

**दन्तहर्षः** । पुं । दन्तगतमुखरोगे । दाँत शिहरा, टका । लक्षणं—"शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः स नामतः ॥" मा.नि. । "दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षन्तु व्याधिं विद्यात्समीरणात् ॥" सु. । "शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । तत्र सुवातपित्ताभ्यां दन्तहर्षः स कीर्त्तितः ॥" भा. । [का. । जटा. ।

**दन्तहर्षकः (णः)** । पुं । जम्बीरवृक्षे । त्रि-

**दन्ताघातः** । पुं । निम्बूकवृक्षे । गोँड़ा लेबुर गाछ । रा.नि.व.११ ।

**दन्तायुधः** । पुं । वनशूकरे । त्रिका. ।

**दन्तार्व्वुदः** । पुं,क्ली । दन्तरोगविशेषे । दाँतेर गोड़ार आव् । रा.नि.व.२० ।

**दन्तावलः** । पुं । करिणि । अम. । [श.र. ।

**दन्तिका (जा)** । स्त्री । दन्तीवृक्षे । अम. ।

**दन्तिनी** । स्त्री । दन्तीक्षुपे । रा.नि.व.६ । वै.निघ.२भ.कृमि-चि.चित्रकादितैले ।

**दन्तिनीबीजम्** । क्ली । जैपालबीजे । जय्‌पाल । रा.नि.व.६ । [सु.सू.३७ष. ।

**दन्तिला** । स्त्री । नागदन्त्यां । हातिशुँड़े ।

**दन्ती** । स्त्री । (Baliospermum montanum. Syn. Croton polyandrum.) स्वनामख्यातक्षुद्रक्षुपे । दन्ती गाछ । हिं दन्तम् । मं दान्ति । कं दन्ति । तें दन्तिचेट्टु, कोण्डआमदुम् । वम्. जामालगोटा । क्षुद्रदीर्घभेदेन दन्ती द्विधा । तयोर्ह्रस्वा उदुम्बरदलाकारा, अन्या एरण्डदला । सा. गुणाः—कटूष्णा शूलघ्नी अर्शोव्रणाश्मरीघ्नी दीपनी च । अन्या कटूष्णा रेचनी कृमिघ्नी शूलकुष्ठामघ्नी तुदामयघ्नी च । रा.नि.व. ६ । "दन्तीद्वयं सरं पाके रसे च कटु दीपनं । गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत् । तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन् । क्षुद्रदन्तीफलं तु स्यात् मधुरं रसपाकयोः । शीतलं सृष्टविण्मूत्रगरशोथकफापहम् ॥" भा. । वा.सू.१५ष.श्यामादिः । "श्यामा दन्ती द्रवन्ती ।" सु.सू.३९ष. । च.सू.२ष.वमने । जैपालबीजे । वै.निघ.२भ.शीतज्व.चि. । "क्वाथेन दन्तीत्रिवृतोद्भवेन ।" वा. व्या.चि.महानाराचरसे । ४र्थ विषगर्भतैले । पुं (न्) । हस्तिनि । प.मु. । [वै.निघ. ।

**दन्तीफलम्** । क्ली । पिप्पल्याम् । दन्तीबीजे ।

**दन्तीफलसमाकृतिः** । पुं । पिस्ताक्षे । पेस्ता गाछ । वै.निघ. ।

**दन्तीबीजम्** । क्ली । जैपालबीजे । रा.नि.व.६ । वै.निघ.२भ.अर्श.चि.मन्दोदधिरसाम् । वा.व्या. वृतसञ्जीवनीरसे, वातगजकेशरीरसे ।

**दन्तीहरीतकीगुड़ः** । पुं । गुड़ाधिकारे । पाठः—"जलद्रोणे विपक्तव्यं विंशतिः पञ्च चाभयाः । दन्त्याः पलानि तावन्ति चित्रकस्य तथैव

च । तैलाढकमम्लेषेण पचेद्दन्तीसमं गुडं । तस्मिन् यं मित्रचूर्णतैलाभापि चतुष्पलं । पलमेकं कणा शुण्ठ्योः सिद्धे शीते च शीतले । चौद्रं तैलसमं दद्यात् चातुर्जातपलन्तथा॥ ततो लेहपलं लिढ्वा जग्ध्वा चैकां हरीतकीम् ॥" पोटलीबद्धहरीतकी २५ दन्तीमूलं २५ प. चित्रकमूलं २५ प. जलं ६४ श. शे. ८ श. । पुरातनगुडस्य २५ प. क्वाथेन गुडं गोलयित्वा पचेत् । पाके सिद्धे अवतार्य स्निग्धे सति त्रिवृच्चूर्णं ४ प. कणाशुण्ठ्योः प्र. पलं तिलतैलं ४ प. प्रक्षेप्यम् । शीते मधु ४ प. गुड़त्वक् एलातेजपत्रनागकेसराणां प्र. २ तो. मिश्रणीयम् मात्रा २ तो. हरीतकी ।० श. । रस.र. ।

**दन्तुरः** । त्रि । उच्चदन्ते । नतानते । मे. ।

**दन्तुरच्छदः (त्वक्)** । पुं । मातुलुङ्गवृक्षे । टाबा गाछ । रा.नि.व.११ । [निघ. ।

**दन्तोज्ज्वला** । स्त्री । श्वेतजातीपुष्पवृक्षे । वै.

**दन्तोद्भेदः** । पुं। बालदन्तोद्गमे । दाँत उठा ।
"दन्तोद्भेदः शिशोः सर्व्वरोगाणां कारणं स्मृतं । विशेषाज्ज्वरविड्भेदकासच्छर्द्दिशिरोरुजाम् । अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥" भा.म. ख.४भ. । [तानि २० । च.शा.७अ. ।

**दन्तोलूखलम्** । क्ली । दन्ताधिष्ठानास्थनि ।

**दन्दशः** । पुं । दन्ते । वै.निघ. ।

**दन्दशूकः** । पुं । सर्पे । वै.निघ. ।

**दमः** । पुं । दमनकक्षुपे । वै.निघ. ।

**दमनम्** । क्ली । दमनपुष्पे । दना फुल । सि.यो.च.द.वा.व्या.चि.महाराजप्र.तैले । पुं । कुन्दपुष्पवृक्षे । कुँदफुलेर गाछ । रा.नि.व.१० । दमनकवृक्षे । त्रिका. । "दमनस्तुवरस्तिक्तो हृद्यो वृष्यः सुगन्धिकः । ग्रहणात् विषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥" भा. ।

**दमनकः** । पुं । (Artemisia Scoparia or A. Indica.) दना इति ख्याते पुष्पक्षुपे । दना गाछ । प.मु. । हिं दवणा । पं दोणा । गुणाः—शीतलः तिक्तः कषायः कटुकः द्वन्द्वदोषनिदोषघ्नः विषविस्फोटघ्नश्च । अन्यच्च वन्यदमनः वीर्य्यस्तम्भनकारी बलदायी आमदोषहारी च । रा.नि.व.१० ।

**दमनी** । स्त्री । अग्निदमनीनामक्षुपे । ( ) रा.नि.व.४। नागदमन्याम् । नागदना । वै.निघ.।

**दमयन्ती** । स्त्री । भद्रमल्लिकापुष्पवृक्षे । मल्लिका फूलेर गाछ । रा.नि.व.१० । कर्कटिकायाम् । वै.निघ. ।

**दम्पती** । पुं (द्वि.) । जायापत्योः । वै.निघ. ।

**दम्भः** । पुं । अतीसाररोगे दाहकर्म्मविशेषे । "नाभेर्द्व्यङ्गुलकादधोर्धशशिवक्रंशशिमूले तथा । दाहः प्रज्वलितायसस्य कथितो दम्भो ग्रहण्यातुरे ॥" तन्त्रान्तरम् ।

**दम्भफलः** । पुं । सेववृक्षे । সেও । वै.निघ. ।

**दम्भोरः** । पुं । लावपक्षिणि । (भरु:) महिषे । वै.निघ. ।

**दम्यः** । पुं । दमके । वृषे । वै.निघ. ।

**दरः** । पुं । शङ्खे । वै.निघ.२भ.मधुरज्व.विष्णुचिकादिकषाये । विषे । वै.निघ. । [४ ।

**दरकण्टिका** । स्त्री । शतावर्य्याम् । रा.नि.व.

**दरदः** । पुं । हृत्पत्रशाके । नटे शाक । प.मु. । क्ली । हिङ्गुलधातौ । रा.नि.व.१३ । र मा ।

**दर्दराम्रः** । पुं । मीनाक्षीने, व्याघ्रनखविशेषे। श.मा.

**दर्दरीकः** । पुं । भेके । मेघे । उणा. ।

**दर्दुरः** । पुं । पुनर्नवायाम् । इन्द्रगोपकीटे । वर्षाभ्वाम् । रा.नि.व.२३। कृष्णाभ्रे । मीलाभ्रभेदे । रा.नि.व.१३ । र.चि.३भ. । "वलिदर्दुरपूतिलोहतापम् ।" भेके । मे. । शालिधान्यभेदे । अयं षष्टिकाहीनगुणः । च.सू.२७अ. ।

**दर्दुरच्छदा** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**दर्दुरदला** । स्त्री । मण्डूकपर्ण्याम्, सा च ब्राह्मी, ब्रह्मी, वरम्मीति महाराष्ट्रे ख्याता । थूलकुड़ि भेद । भा.म.१भ.चित्तभ्रम,ज्व.चि. । "इन्दुचित्रकजीरथ दर्दुरदला ।"

**दर्दुरपर्णी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**दर्द्रुः (दर्द्रूः)** । पुं । लकुचवृक्षे । ডেলো गाछ । रा.नि.व.९। महाकुष्ठभेदे । दाद । मा.नि.। स्त्री । दद्रुरोगे । उणा. ।

**दर्द्रुघ्नः** । पुं । चक्रमर्द्दवृक्षे । চাকন্দা গাছ শ.র. ।

**दर्द्रुघ्नपत्रम्** । क्ली पत्रशाकविशेषे । दादमर्द्दिनी । चक्रमर्द्दपत्रे চাকন্দা পাতা । हिं चकवड़ । गुणाः—दोषहरम् अम्लं वातकफघ्नं कण्डूकासकृमिश्वासदद्रुकुष्ठघ्नं लघु च । भा.पू.१भ. शा.व. । See दद्रुघ्नी ।

**दर्द्रु(द्रू)णः** । त्रि । दद्रुरोगिणि । श.टी.भ. ।

**दर्द्रु(द्रू)रोगी** (इन्) । त्रि । दद्रुरोगयुक्ते । श.टी.भ. । [त्रिका.

**दर्पः** । पुं । कस्तूरिकावृक्षे । मे. । उष्मणि ।

**दर्पणम्** । क्ली, पुं । नेत्रे । जटा. । आदर्शे । আর্শি । गुणाः—आयुःश्रीकारित्वं पापशमनत्वञ्च । राज.२प. ।

**दर्पपत्रकः** । पुं । काशतृणे । वै.निघ. ।

**दर्पा** । स्त्री । कस्तूर्य्याम् । वै.निघ. ।

**दर्भः** । पुं । (Poa cynosuroides. Syn. Eragrostis cynosuroides.) कुशतृणे । কুশ তৃণ । हिं दाभ । तें दुभ । अम. । सु.सू. ३८अ. । (Imperata cylindrica. Syn. Saccharum cylindricum.) उलुके । উলু, থাগড়া । प.मु. । वा.सू.१५अ. वरुणादिः । "बहलपल्लवदर्भरुजाकराः ।" च.सू ४अ. । काशतृणे । श.र. ।

**दर्भकः** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं —"मण्डूका विवरं यस्य दर्भगुच्छकरं भवेत् । तस्य दर्भक इत्युक्तो व्याधिः कष्टचिकित्सितः ॥" ज.द.३९अ. । [कृमिजाति । वै.निघ. ।

**दर्भकुसुमः** । पुं । कृमिजातौ । তদাকার

**दर्भपत्रः** । पुं । काशतृणे । रा.नि.व.८ ।

**दर्भपुष्पः** । पुं । तन्नामकदर्वीकरसर्पविशेषे । राजिमत्सर्पविशेषे । वैकरञ्जजातीयसर्पे । सु.कल्प. ४अ. । See सर्पः । कफजकृमिभेदे । च.वि.७अ. ।

**दर्भमूलम्** । क्ली । कुशमूले । उलुमूले । च. द.क्षुद्रो.चि. ।

**दर्भरः** । पुं । लावपक्षिणि । वै.निघ. ।

**दर्भवटम्** । क्ली । अक्षगर्त्ते । त्रिका. ।

**दर्भाह्वयः** । पुं । मुञ्जतृणे । मूञ्ज । रा.नि.व.८।

**दर्व्विः** (र्व्वी) (र्व्वः) । स्त्री । सर्पफणायाम् । दर्व्विकायाम् । হাতা । अम. । श.र. ।

**दर्व्विका** । स्त्री । दर्व्याम् । হাতা । अ.टी. रा. । कज्जलभेदे । কাজল । तच्च सौवीरञ्जनाच्छलतुत्थमयूरश्रीकरदर्विकासिवनीलभेदेन षट् भवति । तल्लक्षणम् अञ्जनशब्दे द्रष्टव्यम् । पुराणम् । गोजिह्वायाम् । वै.निघ. ।

**दर्व्विपत्रिका** । स्त्री । गोजिह्वायां । দাড়িশা শাক । न.द.१२अ. ।

**दर्व्वीकरः** । पुं । सर्पजातिविशेषे । फणधरसर्प । लक्षणं यथा—"रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः । फणिनः शीघ्रगतयः सर्पा दर्व्वीकरा मताः ॥" वा.उ.३६अ. । दर्व्वीकरभेदाः— कृष्णसर्पमहाकृष्णकृष्णोदरश्वेतकपीतवलाहकमहासर्पशङ्खपाललोहिताक्षगवेधुकपरिसर्पखण्डफणककुदपद्ममहापद्मदर्भपुष्पदधिमुखपुण्डरीकभ्रुकुटीमुखविष्किरपुष्पाभिकीर्णगिरिसर्पऋजुसर्पश्वेतोदरमहाशिरालगर्दाशीविषाश्चेति । दर्व्वीकरस्य प्रथमे विषवेगे श्यावत्वं दुष्टञ्च रक्तं स्यात् । तथा मुखादौ श्यावता स्यात् । द्वितीये ग्रन्थयः, तृतीये शिरोगुरुत्वादयः, चतुर्थे ष्ठीवनादयः, पञ्चमे सन्धिविश्लेषणं तन्द्रा पर्व्वभेदः दाहः हिक्का च, षष्ठे हृत्पीड़ाद्याः, सप्तमे च शुक्रं प्राप्य स्कन्धादिभङ्गः सर्व्वचेष्टानिवृत्तिश्च स्यात् । वा.टी.अरुणः ।

**दर्शः** । पुं । अवलोकने । मे. ।

**दर्शतः** । पुं । सूर्य्ये । चन्द्रे । उणा. ।

**दर्शनम्** । क्ली । नेत्रे । रा.नि.व१८ । दर्पणे । स्वप्ने । मे. ।

**दर्शनी** । स्त्री । तैलकीटके । वै.निघ. ।

**दर्शनीयः** । पुं । अर्कवृक्षे । श्वेतार्के । वै.निघ. ।

**दर्शनोज्ज्वला** । स्त्री । श्वेतजातीवृक्षे । वै. निघ. ।

**दर्शविपत्** । पुं । चन्द्रे । হারা ।

**दलम्** । क्ली । तेजपत्रे । रा.नि.व.६ । वा.उ.५ अ. । प.द.सि.यो,समशर्करचूर्णे । "शुण्ठीकणा-

मरिचनामदललवीला ।" पत्रे । পাতা । त्रिका. ।

**दलकोमलम्** । क्ली । पद्मे । वै.निघ. ।

**दलकोषः** । पुं । मल्लिकापुष्पवृक्षे । वै.निघ. । कुन्दपुष्पवृक्षे । श.मा. ।

**दलनिर्म्मोकः** । पुं । भूर्जवृक्षे । श.मा. ।

**दलपः** । पुं । सुवर्णे । उणा. ।

**दलपुष्पा** । स्त्री । केतकीवृक्षे । কেয়া গাছ । रा.नि.व.१० । श्वेतकेतक्याम् । শ্বেত কেয়া । वै.निघ. ।

**दल(अर्द्ध)लाङ्गलकः** । पुं । तदाकारच्छेदविशेषे । य एकस्मिन् पार्श्वे छेदः स दललाङ्गलकाख्यः । वा.उ.२८अ. । "उभयमेकतरं यत्र सोऽर्द्धलाङ्गलकः स्मृतः ॥" सु.चि.८अ. ।

**दलशालिनी** । स्त्री । कच्चुकशाके । কচু শাক । वै.निघ. ।

**दलसायसी** । स्त्री । श्वेततुलसीवृक्षे । वै.निघ. ।

**दलसारिणी** । स्त्री । केमुकवृक्षे । কেউ গাছ । र.मा. । [कण्टके । কাঁটা । त्रिका. ।

**दलसूचिः** । पुं । कण्टकवृक्षे । কাঁটা গাছ ।

**दलस्नसा** । स्त्री । पत्रशिरायाम् । পাতার শিরা । हे.च. । [भा. ।

**दलहीनफला** । स्त्री । सुलेमानीखर्जूर्य्याम् ।

**दला** । स्त्री । नगवल्लयाम् । নালিতা । प.मु. । अजमोदायाम् । রাঙ্গুনী, বনযমানী । रा.नि.व.६ ।

**दलाग्रलोहिता** । स्त्री । चिल्लीनामपत्रशाके । रा.नि.व.७ । पत्नाग्रलोहितापि पठ्यते ।

**दलाढकः** । पुं । नागकेशरवृक्षे । নাগেশ্বর গাছ । गैरिके । গেরিমাটী । समुद्रफेने । आरण्यतिलकवृक्षे । বন তিল । काके । पृश्निपर्ण्यां । চাকুলে । चक्रवाके । मे. । करिकर्णे । कुन्दवृक्षे । शिरीषवृक्षे । हे.च. ।

**दलाढकी** । स्त्री । फणिज्झकवृक्षे । वै.निघ. । पृश्निपर्ण्याम् । চাকুলে । मे. ।

**दलाढ्यः (कः)** । पुं । कुन्दपुष्पवृक्षे । वै.निघ. । पङ्ककर्दमे । দলদলিয়া কাদা । त्रिका. ।

**दलामलम्** । क्ली । मूर्व्वायाम् । মুর্গা । मदनवृक्षे । मरुवा । दमनकवृक्षे । দনা । मे. । मदनवृक्षे । ময়না গাছ । श.र. ।

**दलाम्लम्** । क्ली । चुक्रनामपत्रशाके । চুক শাক । रा.नि.व.७ । [व.१ ।

**दलाह्वम्** । क्ली । तमालपत्रे । তেজপত্র । मद.

**दलिकम्** । क्ली । काष्ठे । हे.च. । [त्रिका. ।

**दलेगन्धः** । पुं । सप्तपर्णवृक्षे । ছাতিম্ গাছ ।

**दवः** । पुं । वह्नौ । अ.टी.नी. । उपतापे । दवथौ, मुखताल्वोष्ठानां दाहे । वै.निघ. ।

**दवदग्धकम्** । क्ली । कत्तृणे । গন্ধতৃণ বা রামকর্পূর । रा.नि.व.८ ।

**दवथुः** । पुं । दवे, चक्षुरादिष्वल्पशोथप्रवृत्तौ । वा.ज्व.चि.१अ. । "उद्रिक्तपित्ते दवथुः ।"

**दशजटा** । स्त्री । दशमूली । वै.निघ.१भ.वा. व्या.चि.राजादिचूर्णे ।

**दशनः** । पुं । दन्ते । अ.टी.भ. ।

**दशनवासः** । क्ली । ओष्ठे । अम. ।

**दशनबीजः** । पुं । दाड़िम्बवृक्षे । वै.निघ. ।

**दशनाख्या** । स्त्री । चाङ्गेर्य्याम् । আমরুল । चुक्रशाके । চুকাপালং । श.च. ।

**दशनोच्छिष्टः** । पुं । निःश्वासे । मे. ।

**दशपु(पू)रम्** । क्ली । जलमुस्तायाम्, कैवर्त्तमुस्तके । अम. । अ.टी.भ. ।

**दशमूत्रकम्** । क्ली । दशविधमूत्रे । हस्तिमहिषोष्ट्रगवाजमेषाश्वगर्दभनरनारीणां मूत्रे । रा.नि.व.२२ ।

**दशमूलम्** । क्ली । बिल्वादिदशविधवृक्षमूले, पञ्चमूलीद्वये वा । "बिल्वश्योणाकगाम्भारीपाटलागणिकारिकाः । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ॥" रा.नि.व.१२ । वर्गोऽयं वातघ्नः । वा.सू.१५अ.भद्रदार्व्वादौ । गुणाः—दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः । तन्द्राशोथज्वरानाहपार्श्वपीड़ारुचीर्हरेत् ॥" भा. । सूतिकारोगहरम् । अर्क. ।

**दशमूलघृतम्** । क्ली । गुल्मे घृतम् । गव्यघृतं

४ श. । क्वाथार्थं—दशमूलं ६४ प. वारि ६४ श. शे. १६ श. । कल्कार्थं—शुण्ठी पिप्पली मरिचं यवक्षारः सैन्धवलवणम्, एषां प्र. २ प. । च. चि.५च. ।

**दशमूलतैलम्** । क्ली । कर्णरोगे तैलम् । पाठः—"दशमूलीकषायेन तैलप्रस्थं विपाचयेत् । एतत्कल्कं प्रदायैव वाधिर्य्ये परमौषधम् ॥" तिलतैलं ४ श. दशमूलं ४ श. वारि १६ श. शे. ४ श. । क्वाथार्थं—दशमूलं १ श. । च.द. । सा.कौ. । अन्यत् शिरोरोगे—दशमूलं प्र. ६ प. करञ्जनिर्गुण्डी जयन्ती धुस्तूराणां प्र. ६ प. जलं ६४ श. शे. १६ श. । कटुतैलं ४ श. । कल्कार्थं—दशमूलधुस्तूरकरञ्जनिर्गुण्डीजयन्तीनां प्र. ६ तो. । श्वासाष्टाङ्गावलेहकल्कमपि ददति वृद्धाः । सा.कौ. ।

**दशरथः** । पुं । शरीरे । वै.निघ. ।

**दशशतकरदुग्धम्** । क्ली । अर्कक्षीरे । आकन्द आटा । वै.निघ.२भ.कर्णक.ज्व.चि. ।

**दशशताङ्घ्रिः** । स्त्री । शतावर्य्याम् । शतमूली । वै.निघ. । [अर्कापककच्छूपर्पटककुमारीषु ।

**दशशाकः** । पुं । त्वक्पत्रमूलफलदण्डाङ्कुरपु-

**दशसारवटी** । स्त्री । वातव्याधौ वटी । "यष्टि धात्री बला द्राक्षा एला चन्दनवालुकं । मधूकपुष्पं खर्ज्जूरं दाड़िमं पेषयेत्समं । सर्व्वतुल्या सिता योज्या पलार्द्धं भक्षयेत्सदा । दशसारवटी ख्याता...... ।" र.सा.सं. ।

**दशा** । स्त्री । बाल्याद्यवस्थायाम्, बाल्ययौवनप्रौढवार्द्धक्येषु । अमस्य चेचफलदशविधकालपरिमाणे । सा च समावयं सद्वादशदिनं वर्षत्रयं ज्ञेयम् । "वासराः सप्ततिः त्री च वर्षाणाञ्च तथात्रयं । दशाप्रमाणं वाहानां शालिहोत्रेण कीर्त्तितम् ॥" ज.द.५अ. ।

**दशाङ्गगुग्गुलुः** । पुं । मेदोरोगे । त्रिकटु चित्रकमूलं त्रिफला मुस्ता विड़ङ्गं एषां प्र. चूर्णं १ तो. गुग्गुलु ९ तो. । भा. ।

**दशाङ्गधूपः** । पुं । दशविधद्रव्याङ्गकधूपविशेषे । यथा—"पञ्चाङ्गमन्यपापाणात्तावाम्माहिषगुग्गुलुः । चतुरंशं चन्दनञ्च जटामांसी च तावती । त्रिभागः साज्र्जकः सारः तावदेव हि वालकं । उशीरन्तु त्रिभागं आहृतश्चेटनखं समम् । कर्पूरो मृगनाभिश्च एकभागौ प्रकीर्त्तितौ ॥" अन्यः—"वचाहिङ्गुविड़ङ्गानि सैन्धवं गजपिप्पली । पाठा प्रतिविषा व्योषं दशाङ्गः काश्यपोदितः ॥" अयं धूपः सर्व्वग्रहजित् । वा.उ.३अ. । [गोक्षु । भा. ।

**दशाङ्गुलः** । पुं, क्ली । खर्व्बूजायाम् । थर्मुजा

**दशाङ्घ्रिः** । पुं । दशमूले । वा.व्या.महाराजादौ ।

**दशानिकः** । पुं । दन्तीवृक्षे । श.च. ।

**दशावहा** । स्त्री । कैवर्त्तमुस्तायां । रा.नि.व.६ ।

**दष्टपीड़ितम्** । क्ली । दंशनविशेषे । "दंष्ट्रापदानि चत्वारि तदृष्टनिपीड़ितम् ।" वा.उ.३५ अ. । [तुद्विने । उषा. ।

**दस्रः** । पुं । अश्विनीकुमारे । गर्दभे । मे. । क्ली ।

**दस्रौ** । पुं (द्वि.) । अश्विनीकुमारौ । अम. ।

**दहनः** । पुं । चित्रकवृक्षे । रा.नि.व.६।२१ । वा.सू.१५अ. । भल्लातकवृक्षे । रा.नि.व.११ । शि.यो.स्त.मे.चि.चवगादिलेहे । "तालीशजीरकतुगादहनैः ।" वा.सू.१५अ.वरुणादिः । "दहनमीरटविल्वविषाणिकाः ।" च.द.अ.च.चि. । दृषिकाख्याम् । विछाती । रा.नि.व.२१ । गुग्गुलौ । पक्षिविशेषे । पायरा । रा.नि.व.१९ । क्ली । दाहे । अगुरुणि । काञ्जिकभेदे । वै.निघ. ।

**दहनकेतनः** । पुं । धूमे । श.च. । [व.१२ ।

**दहनाग(गु)रु** । क्ली । दाहागुरुणि । रा.नि.

**दहनारातिः** । पुं । जले । रा.नि.व.१४ ।

**दहनी** । स्त्री । मूर्व्वायां । मुर्गी । रा.नि.व.३ ।

**दहनोपलः** । पुं । सूर्य्यकान्तमणौ । श.च. ।

**दहरः** । पुं । कुक्कुटे । बालके । मूषिके । मे. ।

**दक्षः** । पुं । कुकुटे । त्रिका. । शि.यो.कास-चि. दशमूलघृते । वृषभेदे । विश्व. ।

**दक्षाण्डत्वक्** । स्त्री । कुक्कुटाण्डत्वचि । कुकड़ार डिमेर खोला । मेध.नेत्र.चि. । भा.म.४भ. कर्परी.चि. । "दक्षाण्डत्वक् च सा ।"

**दक्षाय्यः** । पुं । गृध्रे । वै.निघ. ।

**दक्षिणदेशजा** । स्त्री । लताकस्तूर्य्याम् । लताकस्तूरी । श.चि. ।

**दक्षिणवायुः** । पुं । मलयमारुते । दक्षिणवायु । गुणाः—"मधुरश्चाविदाही च कषायानुरसो लघुः । दक्षिणो मारुतः श्रेष्ठः चक्षुष्यो बलवर्द्धनः ॥ रक्तपित्तप्रशमनो न च वातप्रकोपनः ॥" सु.सू. ।

**दक्षिणायनम्** । क्ली । रवेर्दक्षिणतो गतौ । यदा रविः कर्कटराश्यवस्थितो भवति तदा तदारभते । तच्च श्रावणादिमासषट्के भवति । "कर्कटावस्थिते भानौ दक्षिणायनमुच्यते ।" सु.सू. ।

**दक्षिणावर्त्तकी** । स्त्री । वृश्चिकाल्यां । बिछाति गाछ । रा.नि.व.९ । मेषशृङ्ग्यां । वै.निघ. ।

**दक्षिणावर्त्तफला** । स्त्री । क्षुद्रौषधे । वै.निघ. ।

**दक्षिणावर्त्ता** । स्त्री । मेषशृङ्ग्यां । रा.नि.व.६ ।

**दक्षेयः** । पुं । गृध्रे । वै.निघ. ।

**दाड़कः** । पुं । दन्ते । शब्दार्थकल्पतरुः ।

**दाड़िमः** । पुं । एलायाम् । मे. । (Punica Granatum.) The Pomegranate. स्वनामख्यातफलवृक्षे । दाड़िम गाछ । हिं अनार । मं दाड़िम । कं दाड़िम्ब । तें डानिम्मचेट्टु । उत्. दालिम्ब । ता. मादलइचेट्टेड्डि । गुर्ज. डालम । फलगुणाः—मधुराम्लकषायं कासवातकफपित्तघ्नं ग्राहि दीपनं लघूष्णं शीतलं श्रमघ्नं रुचिकरम् । दाड़िमम् अम्लमधुरभेदेन द्विविधं, तयोः प्रथमं वातकफहारि, द्वितीयं तापहारि लघु पथ्यञ्च । रा.नि.व.११ । स्वादुस्वादम्लकेवलाम्लभेदेन त्रिभेदमिच्छति भावप्रकाशः—स्वादु त्रिदोषहरं तृष्णादाहज्वरघ्नं हृत्कण्ठमुखदुर्गन्धघ्नं तर्पणं शुक्रलं लघु कषायानुरसं ग्राहि स्निग्धं मेधाबलाहरम् । स्वादम्लं—दीपनं रुच्यं लघु किञ्चित्पित्तकरञ्च । अम्लन्तु —पित्तजनकं वातकफघ्नञ्च । तन्मूलञ्च क्रिमिहरम् । भा. । द्वयम् अम्लं श्वासरुचिरवाहरं कण्ठशोधनं पित्तकफविशोषकम् । राज. । "श्रेष्ठं वातादिकरुचहरं दाड़िमञ्चामयघ्नम् ।" अत्रि.१७अ. । क्ली । दाड़िमफले । सि.यो.वृद्दाद्य.चि. ।

**दाड़िमत्वक्** । स्त्री । दाड़िमफलवल्कले । दाड़िमेर खोसा । सि.यो.अ.सा.चि.उत्पलादिः ।

**दाड़िमपत्र(पुष्पः)कः** । पुं । रोहितकवृक्षे । मोड़ा, रग्ना गाछ । रा.नि.व.८ ।

**दाड़िमप्रियः** । पुं । कीरे । शुक पक्षी । श.र. ।

**दाड़िमभक्षणः** । पुं । शुकपक्षिणि । श.च. ।

**दाड़िमाष्टकम्** । क्ली । चक्रदत्तो क्तिम् । "कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम् । यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकं । पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतम् ॥" च.द. ।

**दाड़िमी** । स्त्री । दाड़िमवृक्षे । वै.निघ. ।

**दाड़िमीरसः** । पुं । दाड़िमाम्बुनि । च.द. ।

**दाड़िमीविषम्** । क्ली । दारुमोचनामकविषभेदे । दारुज । प.मु. । [११ ।

**दाड़िमीसारः** । पुं । दाड़िमवृक्षे । रा.नि.व.

**दाड़ि(ड़ी)म्बः** । पुं । दाड़िमवृक्षे । प.मु. ।

**दाढ़ा** । स्त्री । दंष्ट्राभेदे । दाड़ । हे.च. ।

**दाढ़िका** । स्त्री । दाड़ी इति ख्याते मुखावयवे । हे.च. ।

**दात्यूहः** । पुं । शुकपक्षिणि । प.मु. । डहुकपक्षिणि । डाक पाखी । गुणाः—वातघ्नः वृष्यः बलदः शुक्रदः श्रमघ्नश्च । अत्रि.२२अ. । चातकपक्षिणि । त्रिका. ।

**दात्यौहः** । पुं । जलकाके, दात्यूहे । श.र. ।

**दात्रम्** । क्ली । अस्त्रविशेषे । दा ।

**दाधिकः** । त्रि । दधिसम्बन्धिनि । क्ली । दधिसंस्कृतभक्ते । भा.म.४भ.भग्नद्र.ग्र.चि. ।

**दानम्** । क्ली । कुङ्कुमे । च.द.वा.व्या.चि.१८अ. ग्रती.प्रसारणीतैले । गजमदे । मे. । तरुकोटरजमधुनि । कुटुरे मधु । गुणाः—रुच्यं दीपनं कफच्छर्दिमेहघ्नञ्च । राज. । [निघ. ।

**दानवप्रिया** । स्त्री । नागवल्लीलतायाम् । वै.

**दान्तः** । पुं । दमनकवृक्षे । दना गाछ । रा.नि.व.१० ।

**दामनः** । पुं । दमनकवृक्षे । वै.निघ. ।

**दामबन्धः (नः)** । क्ली । व्रणबन्धनविशेषे । लक्षणं—"दामाकृतिश्चतुष्पादो बन्धः स्याद्दामसंज्ञितः ।" इति । सु.सू.१८अ. । दाम अनेकयोकम्लरज्जुः । दौंका । तदाकारः चतुष्पादयुक्तः दामबन्धः । च.द. ।

**दामाम्बलम्** । क्ली। अम्लार्दि: पादवल्मनरज्जौ। हे.च. ।

**दामोदर:** । पुं । व्याधर्गलाख्यवैद्यकग्रन्थप्रणेतरि । [नि.व.१८ ।

**दाम्भिक:** । त्रि । वाचाले । पुं । वके । रा.

**दायक:** । पुं । बालके । मे. । पुत्रे । हे.च. ।

**दारक:** । पुं । ग्राम्यशूकरे । रा.नि.व.१८ । त्रि। विदारके । वै.निघ. । हारिद्रर्णस्थावरविषभेदे । अभि.श्थान ५६अ. ।

**दारकर्म्म** । क्ली । विवाहे । त्रिका. ।

**दारणम्** । क्ली । कतकफले । निर्म्मल्या । श. च. । व्रणविदारणद्रव्ये । ফোড়া গলান দ্রব্য । यथा—"चिरविल्वोऽग्निको दन्ती चित्रको हयमारक: । कपोतगृध्रकङ्कानां पुरीषाणि च दारणम् । क्षारद्रव्याणि यानीह चारी वा दारणम्परम् ॥" सु. । पुं । कतकवृक्षे । वै.निघ. ।

**दारद:** । पुं । हिङ्गुले । त्रिका. । पारदे । मे. । दरददेशीयविषे । विषमात्रे । अम. । [१८ ।

**दारबलिभुक्** । पुं । वकपचिणि । रा.नि.व.

**दारी** । स्त्री । पाददारिनामक्षुद्ररोगे । "परिक्रमणशीलस्य वायुरत्यर्थरुक्षयो: । पादयो: कुरुते दारीं सरुजां तलसंश्रिताम् ॥" सु नि.१३अ. ।

**दारु** । पुं,क्ली । काष्ठे । अम. । क्ली । दार्व्याम् । দারুহরিদ্রা । र.सा.सं.मेहमुद्गररसे । च.द.पाण्डु.चि. । वै.निघ.१भ.अ.सा.चि.पाठादिकषाये । वा.व्या.खल्वनारायणतैले । देवदारुणि । प.मु. । सि.यो.सा.ज्व.चि.अष्टादशाङ्गे । "भूनिम्बदारुदशमूल··· ।" च.द.ज्व.चि.अपराजिताधूपे । वा.ज्व. राखादि: । "राखाव्रचादनीदारु ।" दारुमूषे । দারুমুজ । र.सा.सं. । पित्तले । मे. ।

**दारुकम्** । क्ली । देवदारुणि । रा.नि.व.१२ । वा.व्या.चि. । तैलदेवदारुणि । श्रीणपित्तले । वै. निघ. । [কলা । रा.नि.व.११ ।

**दारुकदली** । स्त्री । काष्ठकदल्याम् । বন

**दारुगन्धा** । स्त्री । चीड़ानामकदेवदारुभेदे । रा.नि.व.१२ । [दारुणकरोमे ।

**दारुण:** । पुं । चित्रकवृक्षे । रा.नि.व.६।२१ ।

**दारुणक:** । पुं । कुष्ठीभेदे । वत्सनाभे । वै. निघ.२भ.मूर्च्छा-चि. । क्ली । तन्नामकक्षुद्ररोगे । রুসী খুসকী । लक्षणं यथा—"दारुणा कण्डुरा रुक्षा केशभूमि: प्रपाट्यते । कफमारुतकोपेन विद्यात्‌दारुणकन्तु तम् ॥" सु.नि.१३अ. । [सु. ।

**दारुणकर्म्म** । क्ली। मृदुव्रणानां कठिनीकरणे ।

**दारुनिशा** । स्त्री । दारुहरिद्रायाम् । দারুহরিদ্রা । रा.नि.व.६ । वै.निघ.२भ.मध्यमलाक्षातैले । च.द.वा.र.चि.,मेह.चि. । "वत्सादनीदारुनिशा ।"

**दारुपत्री** । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

**दारुपीता** । स्त्री। दारुहरिद्रायां । रा.नि.व.६।

**दारुफलम्** । क्ली । पेसा इति ख्याते फले । वै.निघ. । [গোসাপ । रा.नि.व.१८ ।

**दारुमत्स्या (ह्वया,ह्वा)** । स्त्री। गोधायाम् ।

**दारुमूषा** । स्त्री । दामुंज इति प्रसिद्धे स्थावरविषभेदे । দামুজ । भा.म.१भ.ज्व.चि. ।

**दारुमोच:** । पुं । स्वनामख्यातविषभेदे । দামুজ । प.मु. ।

**दारुविषम्** । क्ली । दारुमोचविषे । "भवेदारुविषं दारुविषं पाषाणसंज्ञकम् । तद्भेदा: श्रृङ्गीदन्तदाड़िमीस्फटिकादय:॥" प.मु. ।

**दारुसिता** । स्त्री । (Cinnamomum zeylanicum.) दारुचिनीतिख्यातायां मधुरत्वचि । দারুচিনি । हिं डालचिनि । तें सनलिंगु । ता. करुवा । गुणा:—"उक्ता दारुसिता स्वाद्वी तिक्ता चानिलपित्तहृत् । सुरभि: शुक्रला वर्ण्या मुखशोषतृषापहा ॥" भा.उ.वाजी.चि. ।

**दारुहरिद्रा** । स्त्री। (Coscinium fenestratum. [Berberideae] Berberis Asiatica and other species.) स्वनामख्यातपीतकाष्ठविशेषे । দারুহরিদ্রা । हिं दारुहलदि, जारकेहलदि । कं मरनरिसिन । तें मनिपसुपु । ता. मरमञ्जिल । गुणा:—तिक्ता कटूष्णा व्रणघ्नी मेहघ्नी कण्डूविसर्पत्वग्दोषकर्णाक्षिरोगघ्नी च । रा.नि.व.६ । "दार्व्वीनिशागुणा: किन्तु नेत्रकर्णास्यरोगनुत् ।" भा. । कफपित्तशोफघ्नी विशेषेण वाह्याभिघ्नन्दहरी च । राज. ।

**दारुहस्तक:** । पुं । दर्व्वी । काठेर हाता । सु.सू.७अ. । [अर्थे । शब्दार्थकल्पतरु: ।

**दार्दुर:** । पुं । दक्षिणमुखशङ्खे । वाचावाम् ।

**दार्व्वण्ड:** । पुं । मयूरे । वै.निघ. ।

**दार्व्वाघाट: (त:)** । पुं । काष्ठकुट्टपक्षिणि । काठ्ठोकरा पाखी । अम. । अ.र. ।

**दार्व्विका** । स्त्री । खर्परयाने । थापर । प. मु. । गोजिह्वाक्षुपे । रा.नि.व.४ । रसाञ्जने । वै. निघ. । [जिह्वा शाक । र.मा. ।

**दार्व्विपत्रिका** । स्त्री । दार्व्वीशाके । गो-

**दार्व्वी** । स्त्री । दारुहरिद्रायाम् । प.मु. ।

**दार्व्वीक्वाथसमुद्भवम्** । क्ली । क्षनिमरसाञ्जने । रा.नि.व.१३ ।

**दार्व्वीक्वाथोद्भवम्** । क्ली । क्षनिमाञ्जने । रसोत् इति पारस्यभाषा । प.मु. ।

**दार्व्वीत्वक्** । स्त्री । दारुहरिद्रात्वचि । शि.यो. काम.चि.मस्तुरवटके । "दार्व्वीत्वक्त्रिफलाव्योष ।" त्वच एव ग्राह्यत्वम् । अभावे काष्ठम् । श्रीकण्ठ: ।

**दार्व्यम्** । क्ली । रसाञ्जने । वै.निघ. ।

**दार्व्यादि:** । पुं । कषायविशेषे । "दार्व्वीरसाञ्जनकिराततृषाब्दविल्वसचौद्रचन्दनदिनेशभवप्रसूनै: । क्वाथ: कृती मधुयुतो विधिना विनीत: रक्तं सितञ्च सरुजं प्रदरं निहन्ति ।" भा. । "दार्व्वी रसाञ्जनवृषाब्दकिरातविल्वभल्लातकैरवकृती मधुना कषाय: ।" च.द. ।

**दालम्** । क्ली । षष्टविधमध्वन्यतममधुविशेषे । कुटुरे मधु । एतदापीतवर्णं सूक्ष्ममक्षिकाभि: इन्द्रनीलवर्णाभि: तरुकीटरादौ उत्पाद्यते । "इन्द्रनीलदलाकारा: सूक्ष्माश्चिन्वन्ति मक्षिका: । यहचकोटरान्त:स्थं मधु दालमिदं स्मृतम् ॥" गुणा: — कटु कषायमम्लं मधुरं पित्तकरञ्च । रा.नि.व.१४ । पुं । कोद्रवे । हे.च. ।

**दालकशर्करा** । स्त्री । दालकमधुकृतशर्करायाम् । दालमधुर चिनि । सा तन्मधुतुल्यगुणा । रा.नि.व.१४ ।

**दालन:** । पुं । वायुजन्यदन्तगतमुखरोगे । "शीर्य्यमाणेष्विव रुजा यस्य दन्तेषु जायते । दालनो नाम स व्याधि: सदागतिनिमित्तज: ॥" मा. नि. । तथा "दाल्यन्ते बहुधा दन्ता यस्मिन् तीव्ररुगन्विता: । दालन: स इति ज्ञेय: सदागतिनिमित्तज: ॥" सु.सू.४५अ. ।

**दालव:** । पुं । स्थावरविषभेदे । हे.च. ।

**दाला** । स्त्री । भारिखदिरे । रा.नि.व.८ । इन्द्रवारुण्याम् । वै.निघ. । महाकाले । माकाल । भा. ।

**दालि:** । स्त्री । द्विदले । दाल । "स्फोटस्तु चणकादीनां दालिस्तु परिकीर्त्तिता ।" रा.नि.व.१६ ।

**दालिका** । स्त्री । दाल्याम् । डाल । महाकाले । माकाल । भा. ।

**दालिम:** । पुं । दाडिम्बवृक्षे । अ.टी.भ. ।

**दाली** । स्त्री । देवदालीलतायाम् । पीत घोषालता । हिं घघरवेल । रा.नि.व.३ । See अगरी । द्विदले । दाल । "दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे ।" तत्पाकविधि: — "दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभि: । संयुक्ता सूपनाम्नी स्यात्कथ्यते तद्गुणा अथ । सूपो विष्टम्भकी रुच: शीतस्तु स विशेषत: । निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत् ॥" भा. । विट्खदिरवृक्षे । गुयेबावला । रा.नि.व.८ ।

**दास:** । पुं । नीलझिण्ट्याम् । उष्ट्रे । वै.निघ. ।

**दासपु(पू)रम्** । क्ली । जलमुस्तके, परिपेलवृणे । नागरमुता । अ.र. । रा.नि.व.८ ।

**दासिका** । स्त्री । दासीकुरण्टके । नीलपुष्प झाँटी । अ.चि. ।

**दासी** । स्त्री । पीतपुष्पझिण्टीक्षुपे । पीतझाँटी । नीलझिण्ट्यां । कुलझुटी, नीलझाँटी । रा.नि.व. १० । काकजङ्घायाम् । केओआका । रा.नि.व.४ । See नीलाम्लान: ।

**दासीकुरण्टक:** । पुं । नीलपुष्पझिण्टीक्षुपे । नीलझाँटी । सु.सू.३८अ. । See नीलाम्लान: । "नीलपुष्प: स एव दासीकुरण्टक: ।" डल्वण: ।

**दासेर: (क:)** । पुं । उष्ट्रे । मे. ।

**दास्यादि:** । पुं । विषमज्वरे कषायभेदे । "दासीदारुकलिङ्गलोहितलताश्यामाकपाठाशठीप्र-

न्यूशीरकिरातकुस्तरकणाचायन्तिकापद्मकैः। व चीधान्यकनागराब्दसरलैः शिग्रुमुसिंहीशिवाव्याघ्री पर्पटदर्भमूलकटुकानन्ताखतापुष्करैः। धातुस्थं विषमं त्रिदोषजनितं……।" भैष.।

**दाहः**। पुं। भस्मीकरणे। "सर्वाङ्गीणस्तीव्र उष्णा दाहः।" चरकः। वा.ज्व.चि.१ष.। तन्नामकपित्तज्वरोगे। জ্বলুনি রোগ। "त्वचं प्राप्य समानीमा पित्तरक्ताभिमूर्च्छितः। दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम्॥" दाहः तृष्णारोधजरक्तपूर्णकोष्ठजधातुक्षयजपित्तजक्षतजरक्तजभेदेन षड्विधः, मर्म्माभिघातजश्चैक इति सप्तविधः। [नि.व.६।

**दाहकः**। पुं। चित्रके। रक्तचित्रकवृक्षे। रा.

**दाहकर्षितः**। त्रि। दाहपीड़िते।

**दाहकाष्ठम्**। क्ली। दाहागुरुणि। वै.निघ.।

**दाहग(गु)रु**। क्ली। अगुरुविशेषे गुर्जरदेशप्रसिद्धे। অগুরুবিশেষ। गुणाः—दाहागुरु कटूष्णं केशवर्द्धनं वर्णकरं केशदोषघ्नं सौगन्ध्यप्रदञ्च। रा.नि.व.१२।

**दाहज्वरः**। पुं। दाहपूर्व्वके ज्वरे। দাহপূর্ব্বক জ্বর। "करोत्यादौ तथा पित्तं लक्ष्यं दाहमतीव च। तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः॥" मा.नि.।

**दाहदा**। स्त्री। नागवल्लीलतायाम्। वै.निघ.।

**दाहनिःश्वासः**। पुं। सुगन्धार्जकवृक्षे। वै.निघ.।

**दाहसरः**। क्ली। श्मशाने। त्रिका.।

**दाहहरणम्**। क्ली। उशीरे। श.च.।

**दाक्षायणम्**। क्ली। स्वर्णे। वै.निघ.।

**दाक्षाय(या)णी**। स्त्री। दन्तीक्षुपे। र.मा.।

**दाक्षिणात्यः**। पुं। नारिकेलवृक्षे। रा.नि.व.११।

**दिक्**। स्त्री। रीतौ। পিতল। सु.सू.४२ष.।

**दिकः**। पुं। करिशावके। श.र.।

**दिक्पालसङ्ख्या**। स्त्री। अष्टसंख्यायाम्। আট। भा.व्यं.कल्पतरौ। [विष.चि.।

**दिग्धविद्धः**। त्रि। विषाक्तबाणविद्धे। च.द.

**दिङ्कः**। पुं। लिक्षायां। ४ वा ८ त्रसरेणूः। शब्दार्थकल्पतरुः।

**दितः**। त्रि। छिन्ने। अम.।

**दिनम्**। क्ली। दिवसे। रा.नि.व.२१।

**दिनकरः**। पुं। सूर्य्ये। हे.च.।

**दिनकेशान्तकः**। पुं। वटपत्रपाषाणभेदे। বড় পাথরকুচা। वै.निघ.।

**दिनचर्य्या**। स्त्री। दिवसे यो विधिः स्वास्थ्यकरस्तथाचरणे। तत्र ब्राह्ममुहूर्त्तोत्थानाभीष्टदेवतास्मरणम्, दध्याज्यादर्शबिल्वगोरोचनादिदर्शनस्पर्शनादि, घृते स्वमुखदर्शनम्, उषसि मलादिविसर्ज्जनम्, दन्तधावनजिह्वानिर्लेखनमुखप्रक्षालनतैलाभ्यङ्गस्नानभोजनादि च। भा.प्र.द.।

**दिनदुःखितः**। पुं। चक्रवाके। स्त्री। तत्पत्न्याम्। श.र.।

**दिनमणिः**। पुं। सूर्य्ये। त्रिका.।

**दिनादिः**। पुं। प्रभाते। रा.नि.व.२१।

**दिनान्तः**। पुं। सायंकाले। अम.।

**दिनान्धः**। पुं। पेचके। वै.निघ.।

**दिनेशः**। पुं। सूर्य्ये। अर्कवृक्षे। वै.निघ.१भ. वा.व्या.चि.शतपुष्पालेपे।

**दिनेशपुष्पम्**। क्ली। कैरवपुष्पे। নীলশুন্দী পুষ্প। चि.क्र.क.प्रदरचि.।

**दिलीरम्**। क्ली। शिलीन्ध्रे। কোঁড়ক ছাতা। छाता.।

**दिवसः**। पुं, क्ली। दिने।

**दिवसमुखम्**। क्ली। प्रभाते। हला.।

**दिवा**। व्य, पुं (न्)। दिवसे। अम.।

**दिवाकरः**। पुं। काके। सूर्य्यपर्णे। श.च.। अर्कवृक्षे। अम.।

**दिवाकीर्त्तिः**। पुं। पेचके। नापिते। हे.च.।

**दिवाटनः**। पुं। काके। शब्दार्थकल्प.।

**दिवान्धः**। पुं। पेचके। रा.नि.व.२१। त्रि। दृष्टिरोगयुक्ते। দিনকাণা। लक्षणं—"प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येत् निशि वीक्षते

स:। रात्री स शीतानुष्णशीतदृष्टि: पित्ताल्पभावादपि तानि पश्येत् ॥" मा.नि. । (न्धा) स्त्री । वनमुद्गापचिथि । रा.नि.व.१९ ।

**दिवान्धकी (न्धिका)** । स्त्री । कुकुन्दर्य्यां । छुँ टो । वै.निघ. ।

**दिवाभीत: (ति:)** । पुं । पेचके । त्रिका । श.र. । क्ली । श्वेतपद्मे । वै.निघ. ।

**दिवामध्यम्** । क्ली । मध्याह्ने । हे.च. ।

**दिवास्वाप:** । पुं । दिवानिद्रायाम् । दिने घुमान । तस्य विधि:—"सर्व्वर्तुषु दिवास्वाप: प्रतिषिद्ध: अन्यत्र ग्रीष्मात् ।" सु.शा.४अ. । "दिवा स्वात्मीकृतं येन तु रात्री वा यदि वा दिवा । न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥" "दिवास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावह: । ग्रीष्मवर्षासु कालेषु दिवास्वप्नो निषिध्यति ॥" भा. ।

**दिवास्वापा** । स्त्री । पक्षिविशेषे, वल्गुला इति लोके । रा.नि.व.१९ ।

**दिवि:** । पुं । चाषपक्षिणि । श.मा. ।

**दिविजम्** । क्ली । कुङ्कुमागुरुचन्दने । वै.निघ. ।

**दिवी** । स्त्री । उपजिह्निकाकीटे । हारा. ।

**दिवौका:** । पुं । चातके । मे. । हरिणे । वै.निघ. ।

**दिवोदास:** । पुं । काशीराजधन्वन्तरौ । य: चन्द्रवंशीयभीमरथनरपते: पुत्र आसीत् । त्रिका. ।

**दिवोद्भवा** । स्त्री । एलायां । शब्दार्थकल्पतरु: ।

**दिव्य:** । गुग्गुलौ । रा.नि.व.१२ । यवे । रा.नि.व.१६ । अर्ज्जुनवृक्षे । वै.निघ. । क्ली । कान्तलौहे । प.मु. । लवङ्गे । रा.नि.व.१२ । चन्दने । वै.निघ. । बालके । बाला । ज.द.१२अ. । [४अ. ।

**दिव्यक:** । पुं । निर्विषसर्पविशेषे । सु.कल्प.

**दिव्यगन्ध:** । पुं । गन्धके । रा.नि.व.१३ । क्ली । लवङ्गे । रा.नि.व.१२ ।

**दिव्यगन्धा** । स्त्री । स्थूलैलायाम् । बड़ एलाइच । रा.नि.व.६ । महाचुञ्चुपे । रा.नि.व.४ । लवङ्गलतायाम् । श.चि. । [वै.निघ. ।

**दिव्यचन्दनम्** । क्ली । हरिचन्दने । लवङ्गे ।

**दिव्यचक्षु:** । पुं । वानरे । श.मा. । उपचक्षुषि । चशमा । सुगन्धभेदे । मे. ।

**दिव्यतुम्बी** । स्त्री । अलाबूभेदे । वै.निघ. ।

**दिव्यतेजा:** । स्त्री । ब्राह्मीनाममहाक्षुपे । स.नि.व.५ ।

**दिव्यपञ्चामृतम्** । क्ली । समभागगव्यघृतदधिदुग्धमधुशर्करासु । "गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितम् ।" रा.नि.व.२२ । [व.१० ।

**दिव्यपुष्प:** । पुं । श्वेतकरवीरवृक्षे । रा.नि.

**दिव्यपुष्पा (ष्पी)** । स्त्री । देवद्रोण्याम् । बड़ घलघसा । रा.नि.व.५ ।

**दिव्यपुष्पिका** । स्त्री । देवद्रोणक्षुपे, महाद्रोण्याम् । बड़ घलघसा । वै.निघ. । रक्तार्कवृक्षे । र.मा. ।

**दिव्यरस:** । पुं । पारदे । रा.नि.व.१३ ।

**दिव्यलता** । स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**दिव्यसार:** । पुं । सर्ज्जवृक्षे । शाल वा धूनार गाछ । रा.नि.व.६ ।

**दिव्या** । स्त्री । महामेदायाम् । ब्राह्म्याम् । विंश्री शाक । वन्ध्याकर्कोटक्यां । शतावर्य्यां । स्थूलजीरके । बड़ जीरा । रा.नि.व.५ । श्वेतदूर्व्वायां । रा.नि.व.८। आमलक्यां । मे.। हरीतक्याम् । रा.नि.व.११ ।

**दिव्याम्रम्** । क्ली । उत्तमाम्रे । वै.निघ. ।

**दिव्येलक:** । पुं । राजिलवक्रैकरञ्जसर्पविशेषे । सु.कल्प.४अ. ।

**दिव्यौषधि: (धी)** । स्त्री । मन:शिलायां । च.द. । कान्तलौहे । भा. । च.द.सि.यो.र.पि.चि. खण्डखाद्यलौहे । "दिव्यौषधिहतस्यापि ।" शमीमूले ।

**दिष्टम्** । क्ली । दारुहरिद्रायाम् । श.मा. ।

**दिष्टान्त:** । पुं । मृत्यौ । अम. ।

**दिष्टि:** । स्त्री । परिमाणे । मे. ।

**दीर्घिका** । स्त्री । विशतधनु:परिमितजलाशये । दिघि । "पल्वलं दीर्घिका वापी यष्टिका भीनगोधिका ।" त्रिका. ।

**दीदिवि** । क्ली । अन्ने । प.मु. ।

**दीनम्** । क्ली । तगरपादिके । रा.नि.व१० ।

**दीना** । स्त्री । कुछुन्दर्य्याम् । वै.निघ. । मूषिकायां । त्रिका. ।

**दीनारः** । पुं । माषचतुष्टयमाने । ४ मासा । अम. । स्वर्णमुद्रायां । মোহর । स्वर्णकर्षद्वये । अ.टी.भा. ।

**दीपकः** । पुं । कासमर्द्दक्षुपे । চাকন্দা । रा.नि.व.४ । चित्रकवृक्षे । वै.निघ.२भ.वा.व्या । यमान्यां । र.मा. । अजमोदायाम् । जीरके । वै.निघ. । श्येनपक्षिणि । বাজ পাখী । हे.च. । क्ली । कुङ्कुमे । भर. ।

**दीपकर्पूरजः** । पुं । कर्पूरे । वै.निघ. ।

**दीपकिट्टम्** । क्ली । दीपकज्जले । श.मा. ।

**दीपकूपी (खोरी)** । स्त्री । दीपवर्त्याम् । শল্তে । श.मा. । [रा.नि.व.१२ ।

**दीपतरुः** । पुं । सरलतरौ, सरलदेवदारौ ।

**दीपध्वजः** । पुं । कज्जले । जटा. ।

**दीपनम्** । क्ली । रसस्य संस्कारविशेषे । तन्नामकरससाधनकार्य्यविशेषे । तद्यथा—"कासीसं पञ्चलवणं राजिका मरिचानि च । भूशिग्रुबीजमेकत्र टङ्कणेन समन्वितं । आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनैस्त्रिभिः । दीपनं जायते सम्यक् सूतराजस्य जारणे ॥" अथवा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत् । र.सा.सं । मण्डोदके । त्रिका. । See पारदः । कुङ्कुमे । त्रिका. । तगरमूले । र.मा. । पुं । पलाण्डौ । रा.नि.व.१७ । शालिञ्चशाके । সাঞ্চে শাক । श.च. । षष्ठांशावशिष्टकषाये । "दीपनस्तु षडंशस्य ।" रा.नि.व.२० । चक्रमर्द्दवृक्षे । कासमर्दवृक्षे । रा.नि.व.४ । अग्निगुणभूयिष्ठे द्रव्यमात्रे । "पचेन्नामं वह्निकृच्च दीपनं तद्यथा मिसिः ।" भा. । त्रि । पाचने । अग्निगुणभूयिष्ठे । सु.सू.४१अ. ।

**दीपनी** । स्त्री । मेथिकायां । মেতি । पाठायां । আকনাদি । यमान्याम् । रा.नि.व.६ । कर्कटिकायाम् । কাঁকড়ী । वै.निघ. ।

**दीपनीयः** । पुं । यमान्याम् । रा.नि.व.६ । हरितपलाण्डौ । वै.निघ. । त्रि । अग्निदीप्तिकरे ।

**दीपनीयवर्गः** । पुं । तन्नामकाग्नेयमहाकषायवर्गे । यथा—"पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्य्यासा इति दशेमानि दीपनीयानि भवन्ति ।" পিপুল, পিপুলমূল, চই, চিতা, শুঁট, অম্লবেতস বা থৈকল, মরিচ, যমানী, ভেলার মুটী, হিঙ্গু । च.सू.४अ. । "त्रिविधत्रिफलाजीवाजमजमोदा च जीरकम् । चतुर्था इवुषा द्वैधा गणोऽयं दीपनः स्मृतः ॥" चर्क.चि. ।

**दीपनीया** । स्त्री । यमान्याम् । मद.व.२ ।

**दीपनीयौषधम्** । क्ली । आग्नेयौषधे, पञ्चकोलादौ । सि यो.मदा.चि । च.द. ।

**दीपपुष्पः** । पुं । चम्पकवृक्षे । रा.नि.व.१० ।

**दीपवृक्षः (कः)** । पुं । सरलदेवदारुवृक्षे । वै.निघ. ।

**दीपशिखा** । स्त्री । कज्जले । शब्दार्थकल्प. ।

**दीपसंज्ञः** । पुं । चित्रकवृक्षे । वै.निघ. ।

**दीपाख्यभस्म** । क्ली । दग्धदीपशिखायाम् । প্রদীপের পোড়া শীষ । रस.र.समरी.चि. ।

**दीपिका** । स्त्री । वचायाम् । वै.निघ. ।

**दीप्त(क)म्** । क्ली । हिङ्गुनि । হিং । रा.नि.व.६ । कांस्यधातौ । কাঁসা । सुवर्णे । रा.नि.व.१३ । जम्बीरे । वै.निघ. । पुं । सिंहे । रा.नि.व.१९ । नासारोगविशेषे । নাকজ্বালা । लक्षणं यथा—"घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः । नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति ॥" सु. । निम्बूकवृक्षे । रा.नि.व.११ । [কাঁসা । रा.नि.व.१३ ।

**दीप्तकांसम्** । क्ली । शुक्लकांस्यधातौ । থাঁটী

**दीप्तजिह्वा** । स्त्री । उल्कामुख्यौश्रृगाल्यां । त्रिका. ।

**दीप्तपिङ्गलः** । पुं । सिंहे । रा.नि.व.१९ ।

**दीप्तपुष्पा** । स्त्री । शाल्मलीवृक्षे । विषनाशिन्याम् । वै.निघ. ।

**दीप्तरसः** । पुं । किञ्चुलुके । কেঁচো । श.च. ।

**दीप्तलोचनः** । पुं । विडाले । रा.नि.व.१९ ।

**दीप्तलोहम्** । क्ली । कांस्यधातौ । प.मु. ।

**दीप्ता (प्ति:)** । स्त्री । लाङ्गलिकावृक्षे । विष-लाङ्गलिया । रा.नि.व.४। ज्योतिष्मतीलतायाम् । लताफटकी । रा.नि.व.३ । लाक्षायाम् । रा.नि. व.६ । मन:शिलायाम् । वै.निघ. । कांस्यधातौ । रा.नि.व.१३ । दीप्तनामनलासारीवभेदे । वा.उ. १८अ. । See दीप्त: ।

**दीप्ताग्नि:** । त्रि । दीप्तजठराग्नौ । मा.नि. ।

**दीप्ताङ्ग: (ग:)** । पुं । मयूरे । श.र. । विड़ाले । श.र. ।

**दीप्तानलम्** । क्ली । सुवर्णे । रा.नि.व.१३ ।

**दीप्ताक्ष:** । पुं । विड़ाले । त्रिका. । मयूरे । वै.निघ. । [निघ. ।

**दीप्तिक:** । पुं । दुग्धपाषाणे । फूल थड़ि । वै.

**दीप्तोपल:** । पुं । सूर्य्यकान्तमणौ । प.मु. ।

**दीप्य: (क:)** । पुं,क्ली । मयूरशिखायां । रुद्र-जटायाम् । अम. । रक्तचित्रके । कुङ्कुमे । तगरे । निम्बूकवृक्षे । श्येनपक्षिणि । भ. । । जीरके । रा. नि.व.६ । रस.र.सूतिका.चि.पञ्चजीरकगुड़े । भैष. कुष्ठ.चि. । च.द.पञ्चतिक्तघृतगुग्गुलौ । उन्मा.चि. लशुनाद्यघृते । अजमोदायाम् । राकुनि । भा.पू. १भ. । यमान्यां । च.द.सि.यो.कास.चि.दशमूल-षट्पलकघृते । "तालीशवत्रिदीप्यकम् ।"

**दीप्यका** । स्त्री । यमान्याम् । अजमोदायाम् । राकुनि । भा.पू.१भ. ।

**दीप्यवल्ली** । स्त्री । अजमोदायाम् । वै.निघ. ।

**दीप्या** । स्त्री । कृष्णजीरकभेदे । মোটা কৃষ্ণজীরে । रा.नि.व.६ । यमान्याम् । भा. ।

**दीर्घ:** । पुं । रामशरे । रा.नि.व.८। लताशाले । र.मा. । कोङ्कणदेशप्रसिद्ध माड़वृक्षे । रा.नि.व. ९ । रक्तकशाली । रा.नि.व.१६। इत्कटे । र.मा.। उष्ट्रे । रा.नि.व.१९ । त्रि । आयते ।

**दीर्घकम्** । क्ली, पुं । कृष्णजीरके । मद.व.२ । शरवृक्षे । श्वेतजीरके । उशीरे । उष्ट्रे । शाकवृक्षे । শেগুন গাছ । वै.निघ. ।

**दीर्घकणा** । स्त्री । गौरजीरके । শাদা জীরা । रा.नि.व.६ ।

**दीर्घकण्ट: (क:)** । पुं । वर्वूरवृक्षे । বাবলা গাছ । रा.नि.व.८ ।

**दीर्घकण्ठ: (क:)** । पुं। वकपक्षिणि । श.च. ।

**दीर्घकन्द: (क:)** । पुं । मालाकन्दे । वै. निघ. । सुखालौ । মৌ আলু । (कम्) क्ली । मूलके । मूला । रा.नि.व.७ ।

**दीर्घकन्दिका** । स्त्री । तालमूल्याम् । रा.नि. व.७ । कृष्णतालमूल्याम् । वै.निघ. ।

**दीर्घकन्धर:** । पुं । वकपक्षिणि । रा.नि.व. १९ । स्त्री । वकस्त्रियाम् । वै निघ. ।

**दीर्घकाण्ड:** । पुं । गुन्द्रतृणे । रा.नि.व.८ ।

**दीर्घकाण्डा** । स्त्री । वन्ध्यादनीलतायाम् । পাতাল গরুড়ী । रा.नि.व.३ ।

**दीर्घकील: (क:)** । पुं । अङ्कोल्लवृक्षे । धन्व आँकोड़. আঁকোড় গাছ । रा नि.व.९ । अ टा. । "अङ्कोले दीर्घकीलक: ।" रा.नि.व.२३ ।

**दीर्घकूरकम्** । क्ली । शूपान्ननामकशालिधान्यभेदे । রাজ অন্ন । रा.नि.व.१६ । [नि.व.१६ ।

**दीर्घकृष्णा** । स्त्री । तिलवासिनीशाली । रा.

**दीर्घकेश: (शी)** । पुं। भल्लूके । रा.नि.व.१९।

**दीर्घकोशा (षा)** । स्त्री। पङ्क्तिशुक्तौ । শুগলি, ঝিণুক । हारा.। गण्डूपद्याम् । কেঁচো। वै.निघ.।

**दीर्घकोशि(षि)का (शी)** । स्त्री । पङ्कशुक्तौ । हारा. । गण्डूपद्यां । वै.निघ. । [प.मु. ।

**दीर्घखरच्छद:** । पुं । इत्कटे । ইৎকড় ।

**दीर्घगति:** । पुं । उष्ट्रे । रा.नि.व.१९ ।

**दीर्घगोधूम:** । पुं । महागोधूमे । वै.निघ. ।

**दीर्घग्रन्थि:** । पुं । गजपिप्पल्यां । रा.नि.व.६।

**दीर्घग्रीव:** । पुं । उष्ट्रे । है.च. । नीलक्रौञ्च-पक्षिणि । रा.नि.व.१९ ।

**दीर्घघाटिक:** । पुं । उष्ट्रे । वकौ । वै.निघ. ।

**दीर्घचञ्चु:** । पुं । पक्षिविशेषे । वम्. वकोड़ा । वै.निघ. । [दृष्टौ । भा. ।

**दीर्घच्छद:** । पुं । शाकवृक्षे । শেগুন গাছ ।

**दीर्घजङ्गल:** । पुं । मत्स्यविशेषे । ভাঙ্গন মাছ । श.मा. ।

ति । कटाहे कोष्ठके वापि सूपविष्टोऽवगाहयेत् । सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम् । कोष्ठकं तत्र कुर्व्वीत तोयाधारे षड्विंशदङ्गुलं । भाण्डानि वा तदेव स्यात्तत्तुल्यौषधं चिकणम् ॥” भा.।

**द्रवा ।** स्त्री । मेदायाम् । रा.नि.व.५ ।

**द्रविडी ।** स्त्री । एलायाम् । वै.निघ.२भ.वा. व्या.चि.शतावरीतैले । [मे. ।

**द्रविणम् ।** क्ली । सुवर्णे । रत्ने । बले । धन. ।

**द्रविणनाशनः ।** पुं । शिग्रुवृक्षे । सजिना गाछ । श.र. ।

**द्रवीकरणम् ।** क्ली । तरलतापादने ।

**द्रव्यम् ।** क्ली । वस्तुनि । पित्तले । मद्ये । जले । विलेपने । जतुके । ला । मे. । औषधोपकरणे । औषधे । चिका.। तत्र द्रव्यमात्रं पृथिव्यादिभूतसमुदायादुत्पद्यते । तदुत्कर्षस्याभिव्यञ्जकत्वात्, तत्पञ्चविधं—पार्थिवम् आप्यं तैजसं वायव्यमाकाशीयञ्च । तत्र “स्थूलसारसान्द्रमन्दस्थिरगुरुकठिनगन्धबहुलमीषत्कषायम्प्रायशो मधुरम्पार्थिवम्, तच्च स्थैर्य्यबलादिकरं विशेषतश्चाधोगतिस्वभावम् । यच्च द्रव्यं शीतस्निग्धगुरुसरसान्द्रं पिच्छिलेषत्कषायाम्ललवणं मधुररसप्रायं तदाप्यम्, तच्च स्नेहनाह्लादनादिकरम् । यद्रूपगुणबहुलम् ईषदम्ललवणं कटुरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावं तत्तैजसं, तच्च दहनपचनदारणादिकरम् । सूक्ष्मरूक्षखरविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतश्च कषायं वायव्यम्, तद्वैशद्यलाघवादिकरम् । श्लक्ष्णसूक्ष्मदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम्, तच्च मार्द्दवलाघवादिकरम् । अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं वाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्याणि कार्म्मकराणि भवन्ति । तानि यदा कुर्व्वन्ति स कालः, यत्कुर्व्वन्ति तत्कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं, यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपायः, यन्निष्पादयति तत्फलमिति । तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापौ गुर्व्व्यौ गुरुत्वादधोगच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात् । वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्निवायू हि लघू लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति तस्मादवमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम् । उभयगुणभूयिष्ठमुभयतोभागं । आकाशगुणभूयिष्ठं संशमनं । संग्राहकमनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात् । दीपनमग्निगुणभूयिष्ठं । लेखनमनिलानलगुणभूयिष्ठं। बृंहणं पृथिव्यम्बुगुणभूयिष्ठं । एवमौषधकर्म्माण्यनुमानात्साधयेत् । भवन्ति चात्र —भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः । भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिं ॥ खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणां । वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः ॥ आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते । वसुधाजलजाताभ्यां बलासः परिवर्द्धते ॥ एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितं । द्वित्रौ वा बहुशो वापि ज्ञात्वा दोषेऽवधारयेत् ॥” सु.सू. ४१अ. । दोषशमनधातुदूषणस्वस्थहितत्वात् द्रव्यं त्रिविधमाह चरकः ॥ तच्च पुनस्त्रिविधं जाङ्गमौद्भिदपार्थिवभेदात् । तत्र जाङ्गममूत्रविंशतिः, भौमं विंशतिः, उद्भिदन्तु । तच्च चतुर्विधं वनस्पतिवीरुद्वानस्पत्यौषधयः । इति । च.सू.१अ. । द्रव्यं पुनः द्विविधं शुष्कमार्द्रञ्चेति । तयोः शुष्कद्रव्यापेक्षयार्द्रस्य द्विगुणा मात्रा ग्राह्या । “शुष्कद्रव्ये तु या मात्रा चार्द्रस्य द्विगुणा हि सा ।” तदपवादमाह —“वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरीवर्षाभूकुटजाश्वगन्धसहिताः ताः पूतिगन्धामृताः । मांसीनागबलाकुरुण्टकपुरीहिङ्ग्वार्द्रकं चेत्यमी ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता गणाः ॥” इन्दीवरी शतावरी। पूतिगन्धा प्रसारणी। कुरुण्टकः पीतझिण्टी। इक्षुजाता गुडादयः। गणाः दशमूलादयः। “वासाकुटजकुष्माण्डशतपुष्पासहामृताः। प्रसारण्यश्वगन्धा च नागाह्वातिबलाबलाः। नित्यमार्द्राः प्रयोक्तव्याः न तासां द्विगुणो भवेत्।” शार्ङ्ग.। “शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्म्मसु । आर्द्रञ्च द्विगुणं विद्यादेष सर्व्वत्र निश्चयः । द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋते घृतगुडक्षौद्रधान्यकृष्णाविडङ्गतः ॥” प.प्र.१ख. ।

**द्रव्यकल्कः ।** पुं । दृषदि पेषितद्रव्ये ।

**द्रव्यगुणाकरः**
**द्रव्यरत्नावली** } पुं, स्त्री। द्रव्यगुणसंग्रहविशेषे ।

**द्रव्यसङ्ग्रहः ।** पुं । करचरणहरीतक्यादिद्रव्यसङ्क्षेपे । च.सू.१च. । [यष्टि ।

**द्रव्याभिधानम् ।** क्ली । औषधादीनां नामसं-

**द्राविडम्** । क्ली । दीर्घरोहिषतृणे । बड़ गन्धतृण । रा.नि.व.८ ।

**द्राविडाख्य:** । पुं । मसूरे । रा.नि.व.१६ ।

**द्राव:** । त्रि । द्रुते ।

**द्राप:** । पुं । पङ्के । शब्दार्थकल्प. ।

**द्राव:** । पुं । उष्णतायाम् वै.निघ. ।

**द्रावकम्** । क्ली । सिक्थके । रा.नि.व.१२ । लौहचुम्बके । वै.निघ.। शौण्डीयधविशेषे । महाद्रावकादौ । पुं । प्रस्तरविशेषे । चन्द्रकान्तमणि । मे. रसविशेषे । श.र. ।

**द्रावककन्द:** । पुं । तैलकन्दे । रा.नि.व.७ ।

**द्रावकरम्** । क्ली । श्वेतटङ्कणे । সোহাগা । रा.नि.व.६ ।

**द्रावकवर्ग:** । पुं । द्रवकरद्रव्यपञ्चके । यथा— "गुञ्जाटङ्कणमध्वाज्यगुडा द्रावकपञ्चका: ।" र.सा.सं. । [ण) । र.मा. ।

**द्रावण(फल)म्** । क्ली । कतकफले । निर्म्मा-

**द्रावणक:** । पुं । टङ्कणक्षारे । वै.निघ. ।

**द्राविका** । स्त्री । लालायाम् । লাল, থুতু । श.र. ।

**द्राविड़: (क:)** । पुं । वेधमुख्ये । त्रिंशत्षष्ठी । अम. । मे. । गन्धशट्याम् । प.मु. । आमहरिद्रायाम् । কাঁচা হলুদ । श.र. । क्ली । विड़लवणे । रा.नि.व.६ ।

**द्राविड़भूतिक: (मिज:)** । पुं । आमहरिद्रायाम् । কাঁচা হরিদ্রা । श.र. ।

**द्राविड़ी** । स्त्री । सूक्ष्मैलायाम् । प.मु. । भा.म. ४भ.सौभाग्यशुण्ठीमोदके । "द्राविड़ीनां पलम् ।" सु.सू.२८ष. ।

**द्राविड़ोद्भव:** । पुं । सुगन्धहट्वे । सुगन्धप्रियस्त्री । (वा) स्त्री । एलायाम् । वै.निघ. ।

**द्रावित:** । पुं । टङ्कणे । সোহাগা । र.सा.सं. ।

**द्राविणी** । स्त्री । काकजङ्घायां, काकमाच्यां । वै.निघ. ।

**द्रावी (वन्)** । पुं । टङ्कणक्षारे । र.सा.सं टङ्कशोधने । अम्लवेतसे । वै.निघ. ।

**द्राक्षा** । स्त्री । (Vitis vinifera.) Dried fruits called Kismis. स्वनामख्यातलतायाम् । কিসমিস, মনেক্কা । हिं दाख, अङ्गुर । मं द्राक्षा । तें द्राक्षपौण्डु, द्राक्षपैडु । ता.कोडिमुन्दिरिप्पळाम् । गुणा: —पक्वा सा सरा शीता चक्षुष्या बृंहणी । अपक्वा स्वल्पगुणा गुर्वी च । अम्ला सा रक्तपित्तकृत् । "द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरु: । स्वादुपाकरसा स्वर्य्या तुवरा सृष्टमूत्रविट् । कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातास्रकामलाः । कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । हंस्वा स्वाद्वीसती द्राक्षा गुर्वी च कफपित्तनुत् । अन्याऽन्या स्वल्पतरा गोस्तनीसदृशी गुणै:। द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्मास्रपित्तकृत् । द्राक्षा पर्व्वतजा यादृक्तादृशी करमर्द्दिका ॥" भा. द्राक्षाव. । "द्राक्षाफलं मधुरमम्लकषाययुक्तं चारिष पित्तमरुता कफहारि शीघ्रम् । श्रेष्ठं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्रमकासविनाशकारि । कषायाम्ला विपाके च द्राक्षा चैव कफे हिता ॥" अत्रि. १७अ. । एतदभावे गाम्भारीफलं ग्राह्यम् । सि.यो. ज्व.चि.पिप्पल्यादौ । वा.सू.१५अ.परूषकादि: । "परूषकं वरा द्राक्षा" । च.द.वा.ज्व.चि. पिप्पल्यादि: । वा.ज्व.चि. द्राक्षादि: । रसालायां । रा.नि.व.२२ ।

**द्राक्षादि:** । पुं । वातज्वरे कषाय: । "द्राक्षागुडूचीकाश्मर्य्यत्रायमाणा: सशारिवा: । निष्क्वाथ्य सगुड़ं क्वाथम्… ।" च.द.वा.ज्व.चि. । अन्य:— द्राक्षाभयापर्पटकाब्दतिक्तामल: कषाय: पैत्तिकज्वरे प्रलापमूर्च्छाभ्रमघ्न: । च.द.पि.ज्व.चि. ।

**द्राक्षाफल:** । पुं । पियालवृक्षे । वै.निघ. ।

**द्राक्षायणी** । स्त्री । दन्तीवृक्षे । प.मु. ।

**द्राक्षारिष्ट:** । पुं । यक्ष्माधिकारे अरिष्टविशेषे । पाठ:—"द्राक्षातुलार्द्धं द्विद्रोणे जलस्य विपचेत् सुधी: । पादशेषे कषाये च पूते शीते विनिक्षिपेत् । गुडस्य द्वितुलां तत्र त्वगेलापत्रकेशरं । प्रियङ्गुमरिचकृष्णा विडङ्गेति विचूर्णयेत् । पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत् । समन्ततो ग्रहयित्वा पिबेज्जातरसं तत: ॥" भैष. ।

**द्राक्षासम्भूत:** । पुं । द्राक्षासवे । वै.निघ. ।

**द्राक्षासवः** । पुं । द्राक्षाकृतासवे । गुणाः—दी-पनो दीपनो हृद्यः बल्यः पित्ताविरोधी विबन्धघ्नः कफघ्नः लघुः स्वल्पमादकश्च । च.सू.२७अ. ।

**द्राक्षासुरा** । स्त्री । द्राक्षाकृतमद्ये । পোর্ট । च.सू.२७अ. ।

**द्राक्षोत्थः** । पुं । द्राक्षासवे । वै.निघ. ।

**द्रुकिलिमम्** । क्ली । देवदारुणि । प्र.सु. ।

**द्रु(द्रू)घनः** । पुं । भूमिचम्पकवृक्षे । ভূঁই চাঁপা । श.च. ।

**द्रु(द्रू)णः** । पुं । भ्रमरे । वृश्चिके । धूम्राटपक्षि-णि । ফিঙে । श.च. । मधुमक्षिकायां । वै.निघ. ।

**द्रुणी** । स्त्री । कर्णजलौकायाम् । কাণকো-টারি । कच्छपिकायाम् । अम.भ. ।

**द्रुतः** । पुं । वृश्चिके । मत्स्ये । वृक्षे । धरणि. ।

**द्रुतमांसम्** । क्ली । मत्स्यादिवृश्चिकादयः ख-यं द्रुतगमनात् द्रुतसंज्ञकाः स्मृताः, तेषां मांसं । गुणाः—पथ्यं बल्यं लघु वीर्यकारि च । रा.नि. व.१७ ।

**द्रुमखः** । पुं । कण्टके । কাঁটা । त्रिका. ।

**द्रुपदी** । स्त्री । वन्दाके । মান্দড়া । वै.निघ. ।

**द्रुमः** । पुं । वृक्षे । त्रिका. । कुटजवृक्षे । आर-ग्वधवृक्षे । च.द.कुष्ठ-चि.मञ्जीरावतैले । पारिजात-वृक्षे । मे. ।

**द्रुमकिलः** । पुं । देवदारुवृक्षे । वै.निघ. ।

**द्रुमगः** । पुं । स्थलचरपक्षिणि । वै.निघ. ।

**द्रुमत्वक्** । स्त्री । कुटजवल्कले । च द.कुष्ठ-चि. ।

**द्रुमध्वजः** । पुं । तालवृक्षे । वै.निघ. ।

**द्रुमनखः** । पुं । कण्टके । काटा. । पारिजा-तवृक्षे । मे. । [কাটা । वै.निघ. ।

**द्रुमनिर्यासः** । पुं । तरुनिर्यूहे । গাছের

**द्रुमरः** । पुं । कण्टके । काटा. ।

**द्रुमव्याधिः** । पुं । लाक्षायाम् । रा.नि.व.६ ।

**द्रुममयः** । पुं । वानरे । वै.निघ. ।

**द्रुमश्रेष्ठः** । पुं । तालवृक्षे । वै.निघ. ।

**द्रुमामयः** । पुं । लाक्षायाम् । प्र.सु. ।

**द्रुमारिः** । पुं । हस्तिनि । वै.निघ. ।

**द्रुमावती** । स्त्री । कैवर्तमुस्तायां । रा.नि.व.६ ।

**द्रुमाश्रयः** । पुं । सरटे । গিরগিটে । रा.नि. व.१९ ।

**द्रुमेश्वरः** । पुं । तालवृक्षे । रा.नि.व.११ ।

**द्रुमोत्पलः** । पुं । (Abroma augusta.) कर्णिकारवृक्षे । ওলট্ কম্বল । अम. । ऋतुप्रवर्त्ति-कृत् ।

**द्रुयवम्** । क्ली । परिमाणे । वै.निघ. । [र. ।

**द्रुसल्लकः** । पुं । पियालवृक्षे । পেয়াশাল । श.

**द्रूः** । स्त्री । स्वर्णे । वै.निघ. ।

**द्रेकः (का)** । पुं,स्त्री । निम्बविशेषे । ঘোড়া নিম् । हिं बकायनिम्ब । भा.म.४भ.महामज्जार-के । घोकड़ा इति ख्याते वृक्षे । च.द.दार्व्यादिक-षाये । "सरलाद्रेकामृतायासकैः ।"

**द्रोणः** । पुं । ४०० धनुःपरिमितजलाशये । का-कविशेषे । দাঁড় কাক, ডোম কাক । मे. । द्रोणपुष्पवृक्षे । ঘলঘসে । वृश्चिके । रा.नि.व.१९ । पुं,क्ली । आढ़कमाने । ८ শের । खारीषोड़शांशे । गोणावस्था । आढ़कचतुष्टये (३२ श.) । "चतुर्भि-राढ़कैर्द्रोणः ।" प.म.१ख. । क्ली । वृश्चिकन्दे । द्रोणीलवणे । वै.निघ. । [কাক । अम. ।

**द्रोणकाकः** । पुं । तन्नामककाके । ডোম

**द्रोणकुसुमिका** । स्त्री । देवकुसुमायाम् । देव-द्रोण्यां । বড় ঘলঘসাবিশেষ । वै.निघ. ।

**द्रोणगन्धिका** । स्त्री । रास्नायाम् । जटा. ।

**द्रोणपर्णी** । स्त्री । द्रोणपुष्प्याम् ।

**द्रोणपुष्पिका** । स्त्री । द्रोणपुष्प्याम् । घल-घसा । वै.निघ. ।

**द्रोणपुष्पी** । स्त्री । घलघसा इलकषा दण्डक-लस इति ख्याते चैवलकक्षुपे । द्रोणपुष्पीति भा-षा । र.मा. । मं कुंबा । कं तुंबे । हिं गुमा, गू-मा । तें एतुमतुम्मि । गुणाः—कटूष्णा रुच्या वात-कफघ्नी अग्निमान्द्यकरी पथ्या च । रा.नि.व.५ । च.द.शि-शो.कास.चि.अञ्जने । "अञ्जनं कामला-र्तानां द्रोणपुष्पीरसः शुभः । द्रोणपुष्पीरसोऽप्येवं निहन्ति विषमज्वरान् ।" शार्ङ्ग.म.ख.१५. । क-

फार्श:कासश्वासक्रिमीघ्नी । राज. । द्रोणपुष्पी गु
ण: स्वादुपाका कट्वी भेदिनी कफामकामलाशोथ-
तमकश्वासक्रमिघ्नी च । भा. ।

**द्रोणपुष्पीदलम्** । क्ली । द्रोणपुष्पीपत्रे । घ-
लघसेर पाता । गुणा:—स्वादु रुचं गुरु पित्त-
करं भेदनं कामलाशोथमेहज्वरहरं कटु च । भा.
पू.१म.शा.व. ।

**द्रोणा** । स्त्री । द्रोणपुष्प्याम् । घलघसा । भा.
वा.उ२६च. । इन्दीवराख्यतायाम् । वै.निघ. ।

**द्रोणिः** । स्त्री । सूर्पद्वयमाने । १२८ श. । प.प्र.
१ख. ।

**द्रोणिका** । स्त्री । नील्याम् । श.र. । [व.६ ।

**द्रोणि(णी)जम्** । क्ली । द्रोणीलवणे । रा.नि.

**द्रोणिनी** । स्त्री । उत्तरिख्याम् । वै.निघ.२भ.
मञ्जिष्ठाद्यष्टते ।

**द्रोणी** । स्त्री । इन्द्रचिर्भट्यां, इन्दीवरायाम् ।
रा.नि.व.३ । द्रोणीलवणे । श.र.। नील्याम् । सू-
र्पद्वयमाने । १२८ श. । "सूर्पाभ्याञ्च भवेद्द्रोणी ।"
प.प्र.१ख. । [छ द्वारा. ।

**द्रोणीदलः** । पुं । केतकीपुष्पवृक्षे । (केया गा-

**द्रोणीलः** । पुं । केतकवृक्षे । वै.निघ. ।

**द्रोणीलवणम्** । क्ली । वारिजलवणे । मं द्रो-
णीचेमीट। कं द्रोणीय उपु । गुणा:—भेदनं स्निग्धं
शूलघ्नं नातिपित्तलं पाके नात्युष्णञ्च । रा.नि.व.६ ।

**द्रोणेयम्**, **द्रौणम्** } क्ली । वारिजलवणे । रा.नि.व.६ ।

**द्वन्द्(न्द्व)म्** । क्ली । मिथुने । युगले । सुखदुः-
खादौ । पुं । रोगभेदे । श.र. ।

**द्वन्द्वगः** । पुं । चक्रवाके । वै.निघ. ।

**द्वन्द्वगदः** । पुं । द्वन्द्वजरोगे ।

**द्वन्द्वचरः (चारी)** । पुं । चक्रवाकपक्षिणि ।
हे.च. । त्रिका. । [वै.निघ. ।

**द्वन्द्वचरीसहायः** । पुं । चक्रवाकपक्षिणि ।

**द्वन्द्वजः (दोषोत्थः)** । पुं । विषमज्वरे । रा.
नि.व.२० । द्विदोषरोगे । त्रि । द्विदोषोत्थे । मा.
ज्व.नि. ।

**द्वयाग्निः** । पुं । चित्रकवृक्षे । चिता । श.च. ।

**द्वादशपत्रिका** । स्त्री । मतान्तराख्यक्षुपे । गु-
ल्फ। गाछ, मउरी ।

**द्वादशाङ्गकषायः** । पुं । सन्निपातज्वरे कषा-
यः । दशमूलीकषायस्तु पिप्पलीपौष्करान्वितः । स-
न्निपातज्वरे देयः श्वासकाससमन्विते ॥ भा.म.१भ.।

**द्वादशाङ्गुलः** । पुं । वितस्ती । विगत् । श्रम.।

**द्वादशात्मा** । पुं । सूर्य्ये । अर्कवृक्षे । श्रम. ।

**द्वादशायसकः** । पुं । ऊरुस्तम्भाधिकारे रसः ।
चिन्ताख्यरस एव । रस.र. । See चिन्तारसः
वातरक्ते ।

**द्वादशायुः** । पुं । कुक्कुरे । श.मा. ।

**द्वारम्** । क्ली । उपाये । निगमे । त्रिका. ।

**द्वारका** । स्त्री । कार्पास्याम् । वै.निघ. ।

**दारदारुः** । पुं । शाकवृक्षे । वै.निघ. । भूमी-
सहवृक्षे । भा. ।

**द्वारबलिभुक्** । पुं । काकविशेषे । त्रिका. ।

**द्विकः** । पुं । काके । त्रिका. । चक्रवाके । मे. ।

**द्विककारः** । पुं । काके । श.र. ।

**द्विककुत्, द्विकपृष्ठः** । पुं । उष्ट्रे । हे.च. ।

**द्विककोली** । स्त्री । काकोलीक्षीरकाको-
ल्योः । वा.उ.२च. ।

**द्विखुरी** (इन्) । पुं । गोखुरवत् द्विधाविभक्तखु-
राग्रभागे । "द्विखुरं गोखुराकारखुरैर्द्विधाद्विधचं-
ष: । अथवा सीवनीयुक्तैर्निम्नमध्यैस्तु निर्दिशेत् ॥"
ज.द.२च. । [यो.भग्निमा.त्रि. ।

**द्विचित्रकम्** । क्ली । श्वेतरक्तचित्रकयोः । त्रि.

**द्विजः** । पुं । दन्ते । रा.नि.व.१८।२२ । तुम्बुरु-
वृक्षे । रा.नि.व.११ । ब्राह्मणे । क्षत्रिये । वैश्ये ।
मे. । सर्पे । अण्डजे । श्रम. ।

**द्विजकुत्सितः** । पुं । बहुवारवृक्षे । চালিতা
গাছ । रा.नि.व.११ ।

**द्विजकेतुः** । पुं । जम्बीरविशेषे । वै.निघ. ।

**द्विजन्मा** (मन्) । पुं । पक्षिणि । दन्ते । श.
र. । माहभाण्डे । कीशिके । अण्डजे । वै.निघ. ।

**द्विजप्रिया** । स्त्री । सोमलतायां । रा.नि.व.३ ।

**द्विजभक्त:** । त्रि । वैद्ये भक्तिमति (रोगिणि) । वै.निघ. ।

**द्विजयष्टि: (ष्टिका)** । स्त्री । भार्ग्याम् । वामुनहाटी । वै.निघ.२भ.वा.व्या.चि. ।

**द्विजश्रम:** । पुं । राजमाषे । बर्बटी । श.च. ।

**द्विजश्रेष्ठ:** । पुं । पलाण्डुवृक्षे । वै.निघ. ।

**द्विजा** । स्त्री । रेणुकायां । রেণুক । रा.नि.व. ६ । भार्ग्याम् । मे. । लोवान् इति ख्याते गन्धद्रव्ये । वै.निघ. । पालक्यशाके । श.च. ।

**द्विजाङ्गिका (ङ्गी)** । स्त्री । कटुक्याम् । कट्‌की । रा.नि.व.६ । [मे. ।

**द्विजाति:** । पुं । दन्ते । अण्डजे । पक्षिणि ।

**द्विजायनी** । स्त्री । यज्ञोपवीते । त्रिका. ।

**द्विजालय:** । पुं । तरुकोटरे । श.च. ।

**द्विजिह्व:** । पुं । सर्पे । अम. । अधिजिह्वनामककण्ठरोगे । আলজিবের রোগ । सु.नि.१६अ. ।

**द्विजेन्द्रक:** । पुं । निम्बूवृक्षे । লেবুর গাছ । वै.निघ. । [टी.हेमा.मुस्तकादि: ।

**द्वितिक्ता** । स्त्री । कटुक्यां, करञ्जिकायाञ्च । वा.

**द्वितीयत्रिफला** । स्त्री । द्राक्षाखर्ज्जूरगाम्भारीफलेषु । কিস্‌মিস, খেজুর, গাম্ভার ফল । वै.निघ. ।

**द्वितीयाभा** । स्त्री । (Curcuma zanthorrhiza.) वृक्षविशेषे । दारुहरिद्रायाम् । श.च. ।

**द्विदल:** । पुं । अश्मन्तकवृक्षे । आपटा इति ख्याते । আবুটা । वै.निघ. । क्ली । द्विदलमात्रे । तद्गुणा:—"सूप: कृतो द्विदलानामष्टादशगुणैस्त्वपि । स एव सत्रिकटुक: सर्पि:सैन्धवसंयुत: । भवेल्लघुतरश्चैव कृतमित्येव तं विदु: । त्रिभिर्द्रव्यैर्विनाशिद्धमकृतन्तु लघुं वदेत् । फलान्यधान्यतश्चैव कृता गुरुतरा मता: । वातघ्ना रुचिदा: प्रोक्ता: पूर्वपाकविशारदै: ॥" द्रव्यगुण: ।

**द्विधागति:** । पुं । शिशुमारे । শুশোক । वै.निघ. । कुम्भीरे । কুমীর । हे.च. ।

**द्विधातु:** । त्रि । द्विप्रकृतिके ।

**द्विधात्मकम्** । क्ली । जातीफले । वै.निघ. ।

**द्विधालेख्य:** । पुं । हिन्तालवृक्षे । হেঁতাল গাছ । रा.नि.व.९ । [र.मा. ।

**द्विप:** । पुं । हस्तिनि । प.मु. । नागकेसरवृक्षे ।

**द्विपचक:** । पुं । मण्डालुकन्दे । रा.नि.व.७ ।

**द्विपद:** । पुं । मनुष्ये । पक्षिणि । अमरसार: ।

**द्विपमता** । स्त्री । नागवल्लयां । वै.निघ.वा.व्या.चि.अतावरीतैले ।

**द्विपमद:** । पुं । करिमदजले ।

**द्विपर्णी** । स्त्री । शालपर्णी पृश्निपर्णी चेति द्वये । শালপানি, চাকুলিয়া । च.द.यक्ष.चि. ।

**द्विपाख्य:** । पुं । नागकेशरवृक्षे । प.मु. ।

**द्विपादिक:** । पुं । नागकेशरवृक्षे । प.मु. ।

**द्विपायी** (इन्) । पुं । करिणि । हारा. ।

**द्विपनख:** । पुं । व्याघ्रनखे । নখাবিশেষ । रा.नि.व.१२ ।

**द्विपी** (इन्) । पुं । चित्रकभेदे । च.वि.८अ. ।

**द्विपुट:** । पुं । (Impotiens Balsamina.) पुष्पक्षुपविशेषे । দোপাটী । श.चि. ।

**द्विपुटी** । स्त्री । मल्लिकायां । मे. ।

**द्विपुनर्नवम्** । क्ली । शुक्ललोहितवर्णभेदेन पुनर्नवाद्वये । শ্বেতপুন্ন্যা, গাদাপুন্ন্যা । सि.यो. काम.चि.व्योषाद्यघृते । "त्रिफला द्विपुनर्नवम् ।"

**द्विब्राह्मी** । स्त्री । ह्रस्वदीर्घब्राह्मीद्वये । ছোট্ ও বড় ব্রাহ্মী । सु.शा.१०अ. ।

**द्विमाषम्** । क्ली । मुद्गपर्णीमाषपर्ण्यौ: । মুগানী ও মাষাণী । च.द.उन्मा.चि.महाकल्याणघृते ।

**द्विमुख: (खाहि:)** । पुं । द्विमुखसर्पविशेषे, राजसर्पे । রাজসাপ, দুমুখো সাপ, শাঁখিনী সাপ । वम्. दुंदुल । हारा. । रस.र.विष.चि. । त्रि । मुखद्वययुक्ते ।

**द्विमुखा** । स्त्री । आखिकायां । গাড়ু । जलौकायाम् । জোঁক । हला. ।

**द्विमुखोरग:** । पुं । द्विमुखसर्पे । अटा. ।

**द्विरजनी** । स्त्री । हरिद्रायां दारुहरिद्रायाञ्च ।

हरिद्रा, दारुहरिद्रा। चि.यो.काम.चि.स्त्रीया- यवृते।

**द्विरदः** । पुं । हस्तिनि । प.मु. ।

**द्विरदपिप्पली** । स्त्री । गजपिप्पल्याम् । वै. निघ.२भ.वा.व्या.चि.दार्शिमकगुग्गुलौ ।

**द्विरदान्तः (कः)** । पुं । सिंहे । रा.नि.व. १९ । [ष । वै.निघ. ।

**द्विरदारातिः** । पुं । शरभे । सिंह विशे-

**द्विरदाशनः** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**द्विरर्व्वुदम्** । क्ली । अर्व्वुदभेदे । तस्य लक्षणं —"यद्द्वयाजं युगपत् क्रमाद्वा द्विरर्व्वुदं तच्च भवेदसाध्यम् ।" सु.नि.११अ. ।

**द्विरसनः** । पुं । सर्पे । निका. ।

**द्विरापः** । पुं । हस्तिनि । अ.मा. ।

**द्विरेताः** । पुं । गर्द्दभे । वै.निघ. । स्त्रीपुंचिह्न- पुंसके । "बीजात्समांशादुपतप्तबीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः ।" च.शा.२अ. ।

**द्विरेफगणसम(चि)ता** । स्त्री । पुष्पवृक्ष- भेदे । वन शैঁউতী । वै.निघ. ।

**द्विलम्बकः** । पुं । दुग्धबीजे । के.प. ।

**द्विवर्षा (र्षिका)** । स्त्री । द्विहायन्यां गवि । अम. । के.प. ।

**द्विवार्त्ताकी** । स्त्री । वृहतीद्वये । वृहती, कণ্টকারী । भा.म.४भ.बाल-चि. । "द्विवार्त्ताकी- फलरसम् ।"

**द्विविषम्** । क्ली । पाण्डुकृष्णातिविषायां । শ্বেত ও কৃষ্ণ আতইচ । वै.निघ.२भ.वा.व्या.चि. ।

**द्विवृन्तः** । पुं । मस्तरसकवृक्षे । মেঁদী গাছ । प.मु. ।

**द्विवृहती** । स्त्री । कण्टकारिकावृहत्योः । কণ্টকারী ও বিরুতী । वा.सू.१५अ. । "द्विवृहती त्रिकण्टकजयायवम् ।"

**द्विशफः** । त्रि । द्विखुरपशुमात्रे । "गौरजो म- हिषः क्रवः शूकरी गवयो रुरुः । द्विशफाः पञ्च- वर्गेऽस्मिन्नविरुष्ट्रश्च……॥" भागवतम् ।

**द्विशृङ्गिका** । स्त्री । मेषशृङ्ग्याम् । মেড়াশি- ঙ্গী । वै.निघ. ।

**द्विशृङ्गी (ङ्गिन्)** । पुं । मत्स्यविशेषे । শিঙ্গী মাছ । वै.निघ. ।

**द्विसा** । स्त्री । एलायाम् । वै.निघ. ।

**द्विहम्** । क्ली । ताम्रे । च.टी.वा. ।

**द्विहितशालम्** । क्ली । शितशतण्डुले । সিদ্ধ চাউল । पुराणम् ।

**द्विहृदया** । स्त्री । गर्भवत्यां स्त्रियां । वै.निघ. ।

**द्विक्षारम्** । क्ली । यवक्षारसर्जिक्षारयोः । चि.को. अग्निमा.चि. ।

**द्विक्षीरम्** । क्ली । गव्याजदुग्धयोः । গাইদুগ্ধ ও ছাগদুগ্ধ । च.द.यक्ष-चि.सर्पिर्गुडे ।

**द्वीपः** । पुं । कक्कोलवृक्षे । वै.निघ. । क्ली । व्या- घ्रचर्मणि । अ. । [नि.व.१२ ।

**द्वीपकर्पूरः (जः)** । पुं । चीनकर्पूरे । रा.

**द्वीपखर्ज्जूरम्** }
**द्वीपजम्** } क्ली । महापारेवते, द्वीपान्तर- खर्ज्जूरे । रा.नि.व.११ ।

**द्वीप(पि)शत्रुः** । पुं । शतावर्य्याम् । रा.नि.व. ४ । जटा. ।

**द्वीपसम्भवः** । पुं । कक्कोलवृक्षे । কাঁকলা । जीरके । (वा) स्त्री । महाखर्ज्जूरवृक्षे । वै.निघ. ।

**द्वीपान्तरवचा** । स्त्री । चोपचिनीति ख्याते मूले । गुणाः—"द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशो- धिनी । वातव्याधीनपस्मारमुन्मादं तनुवेदनाम् । व्यपोहति विशेषेण फिरङ्गामयनाशिनी ।" भा. ।

**द्वीपिका** । स्त्री । शतमूल्याम् । रा.नि.व.४ ।

**द्वीपिनखः** । पुं । व्याघ्रनखे । नखी । वै.निघ. ।

**द्वीपिनी** । स्त्री । वटपत्रपाषाणभेदे । वै.निघ. ।

**द्वीपिपलाशः** । पुं । हस्तिकर्णपलाशे । वा. सू.१५अ.मुष्ककादिः । "मुष्ककमुष्कपलाशद्वीपिप- लाशधवशिंशपाः ।" [रा.नि.व.६।१६ ।

**द्वीपी (पिन्)** । पुं । व्याघ्रविशेषे । चित्रकवृक्षे ।

**द्वीप्यः** । पुं । व्याघ्रे । स्त्री । काकोली । वै.निघ. ।

**द्वीप्या** । स्त्री । शतावर्य्याम् । रा.नि.व.४ । पि- ण्डीखर्ज्जूरवृक्षे । रा.नि.व.११ ।

हैमः । पुं । चमलाविशेषे । रस.र.क्षीरी.चि. ।

हैयम् । क्ली । कहीत्रि । रा.नि.व.१२ ।

हैमाद्रकः । पुं । नदीहन्यनुपालिते देशे । रा.नि.व.२ ।

हैमवीया । स्त्री । नागवल्लीविशेषे । हीसयली इतीय इति क्षीरसमुद्रदेशे ख्याता । हैसवीया इति पुस्तकान्तरे पाठः । रा.नि.व.११ ।

ह्रास्तरः । पुं । जातिद्वयसम्भूते सर्पे । दो आँस्ला साप । सु.कल्प.टी. ।

ह्रस्वम् । क्ली । ताने । चम. । [२ । रा.नि. ।

ह्रस्विकः (हीनः) । पुं । एकदिनान्तरज्व-

## ध

धटः (कः) । पुं । धवतरौ । धाओया गाछ वै.निघ. । तुलामाने । তরাজু । ধাড়া । चम. । १४ वल्लमाने । ৪২ রতি । लीलावती ।

धटी । स्त्री । वल्कली । वै.निघ. । जीर्णवस्त्रखण्डे । ধড়ি । मे. ।

धत्तूरः । पुं । धुस्तूरवृक्षे । रा.नि.व.१० ।

धनम् । पुं, क्ली । मरिचे । चर्थे । वै.निघ. । खेदपाचे । म.र. ।

धनकम् । क्ली । धान्यके । ধনিয়া । वै.निघ. २भ.सर्व्वज्व.चि.गुडूच्यादिः ।

धनञ्जः (ञ्जूः) । पुं, स्त्री । पक्षिविशेषे । ধানস পাখী, কর্কটিয়া পাখী । चिका. ।

धनञ्जयः । पुं । अर्ज्जुनवृक्षे । रा.नि.व.९ । वै निघ.२भ.चजी.चि.पञ्चाग्निचूर्णे । अग्नौ । चम. । चित्रकवृक्षे । र.मा. । [अन्तरात् ।

धनदः । पुं । हिज्जलवृक्षे । रा.नि.व.८ । पा-

धनदाक्षी । स्त्री । पाटलवृक्षे । रा.नि.व.१० । लताकरञ्जे । रा.नि.व.८ । [चिका. । हारा. ।

धनपिशाची (चिका) । स्त्री । तृष्णायां ।

धनप्रिया । स्त्री । काकजम्बूवृक्षे । वन जाम । रा.नि.व.११ । [वै.निघ. ।

धनसूः । पुं । धूम्याटपक्षिणि । ফিঙে পাখি ।

धनस्य(स्व)कः । पुं । गोक्षुरकवृक्षे । श.च. ।

धनहरः । पुं । ग्रन्थिपर्णवृक्षे । গেঁঠেলা । पा-रसीकयमान्याम् । वै.निघ. ।

धनह(हा)री । स्त्री । पारसीकयमान्याम् । ग्रन्थिपर्णभेदे । चम. ।

धनहन् । पुं । चक्रालकन्दे । वै.निघ. ।

धना (नी) । स्त्री । आर्द्रधान्यके । वै.निघ. । धान्यके । वै.निघ,२भ,वा.व्या.चि.षड्शीतिगुग्गुलौ । चचि.२स्थान.२च. ।

धनिकः । पुं । धान्यकवृक्षे । ধনে গাছ । रा. नि.व.६ । क्ली । धान्यके । ধনে । च.द. सि.यो. सन्निपातज्व.चष्टाङ्गकषाये । "तिक्तेन्द्रबीजधनिकै" ।

धनिका । स्त्री । धान्यके । ধনে । चचि.२स्थान. । प्रियङ्गुलतायाम् । श.च. । [ধনিয়া । श.र. ।

धनीयकम् । क्ली । आर्द्रधान्यके । धान्यके ।

धनुः (स्) । पुं । भल्लातकवृक्षे । चारवृक्षे । পিয়াশাল । मे. । [११ । चम. ।

धनुःप(ष्प)टः । पुं । प्रियालवृक्षे । रा.नि.व.

धनुःशाखा । स्त्री । मूर्व्वायां । মূর্গা । श.च. ।

धनुःश्रेणी । स्त्री । मूर्व्वायाम् । प.मु. । महेन्द्रवारुण्यां । বড় মাকাল, রাখালশশা । रा.नि. व.३ ।

धनुर्गुणा । स्त्री । मूर्व्वायाम् । श.च. ।

धनुर्द्रुमः । पुं । वंशे । বাঁশ । रा.नि.व.७ ।

धनुर्माला । स्त्री । मूर्व्वायाम् । श.च. ।

धनुर्य्यासः । पुं । दुरालभायाम् । प.मु. ।

धनुर्लता । स्त्री । सोमवल्याम् । সোমলতা । रा.नि.व.३ ।

धनुर्वातः । पुं । वातव्याधिविशेषे. यत्र सर्व्व-सन्धिषु वेदनाधिक्यं भवति । "अनिच्छन्त्यपरां यस्तु उपभुङ्क्ते परस्त्रियं । बलादाक्रम्य स नरः सर्व्वसन्धिषु वेदनां । तीव्रामप्नोत्यहर्निशम् धनु-र्वातयुतो भवेत् ॥" इति कर्म्मविपाकः ।

धनुर्बीजः । पुं । भल्लातकवृक्षे । रा.नि.व.११ ।

**धनुर्वृक्ष:** । पुं । धन्वनवृक्षे । धामनि गाछ । र.मा. । रा.नि.व.९ । वंशे । भल्लातकवृक्षे । अश्वत्थवृक्षे । रा.नि.व.११ ।

**धनुष:** । पुं । कुक्कुरे । वै.निघ. ।

**धनुष्य:** । पुं । वंशे । वाँश । रा.नि.व.७ ।

**धनुस्तम्भ:** । पुं । वातव्याधिविशेषे । धनुष्टङ्कार । स बाह्याभ्यन्तरायामभेदाद्द्विविध: । लक्षणं —"धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसंज्ञित: । विवर्णभग्नवदन: स्रस्ताङ्गो नष्टचेतन: । प्रस्विन्नश्च धनुस्तम्भी दशरात्रं न जीवति ॥" मा.नि. । [भ.।

**धनेयकम्** । क्ली । धन्याके । धनिया । च.टी.

**धनैषणा** । स्त्री । एषणासु नरस्य द्वितीयैषणायाम् । धनप्रार्थना । "प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति । तदुपकरणानि च कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात् ।" च.सू.११अ. ।

**धन्य:** । पुं । अश्वकर्णशाली । लता शाल । रा.नि.व.९ । क्ली । द्रव्ये । वै.निघ. । कैवर्त्तमुस्तायां । अ.ह.१२अ. ।

**धन्यवृक्ष:** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**धन्या** । स्त्री । धन्याके । धने । हे.च. । उपमातरि । वै.निघ. । आमलक्याम् । मे. । निर्जलप्रदेशे । वै.निघ. ।

**धन्याकम्** । क्ली । (Coriandrum sativum.) Coriander plant. स्वनामख्यातपण्यद्रव्ये । प.मु. । धने । हिं धनिया । तें कोत्तिमिरचेट्टु, धनियलु । ता. कोट्टमल्लि । च.द.सन्निपातज्व.चि.नागरादि: । "धन्याकं बृहतीद्वयम् ।" पि.ज्व.चि. । "व्युषितं धन्याकजलम् ।" पि.श्लेष्मज्व.चि.गुडूच्यादि: । गुणा: —तुवरं स्निग्धम् अवृष्यं मूत्रलं लघु तिक्तं कटूष्णवीर्य्यं दीपनं पाचनं ज्वरघ्नं रोचकं ग्राहि स्वादुपाकं त्रिदोषघ्नं तृष्णादाहवमिश्वासकासकार्श्यक्रिमिघ्नञ्च । आर्द्रं तत् तद्गुणमपरं स्वादु विशेषत: पित्तघ्नञ्च । भा.पू.१भ. । मद.व.२ ।

**धन्व:** । पुं । दुरालभायाम् । वै.निघ. ।

**धन्वन:** । पुं । धामनवृक्षे । च.द.मेह.चि. । "पाठाम्जुनधन्वनानां ।"

**धन्वङ्ग:** । पुं । धामनवृक्षे । धामना गाछ । गुणा: —"धन्वङ्ग: कफपित्तास्रकासघ्नस्तुवरो लघु: । बृंहणो बलकृद्रूक्ष: सन्धिकृद्व्रणरोपण: ॥" भा.म.२भ.प्रमे.चि. । वंशे । वै.निघ. ।

**धन्वचारी** । त्रि । निर्जलदेशचारिणि । वा.चि.७अ. ।

**धन्वतरु:** । पुं । सोमवल्लयाम् । वै.निघ. ।

**धन्वदुर्गम्** । क्ली । निर्जलदेशे । पुराणम् ।

**धन्वन:** । पुं । धामनवृक्षे । धामना गाछ । र.मा. । हिं धामिनी । मं धमानु । कं उदुवे । गुणा: —कटु: उष्ण: कषाय: कफघ्न: दाहशोषकर: संग्राही कण्ठदोषघ्नश्च । रा.नि.व.९ । एतत्फलं कषायं हिमं स्वादु वातकफघ्नञ्च । सु.सू.४६अ. ।

**धन्वन्तरि:** । पुं । वैद्ये । क्षितौ आयुर्वेदप्रणेतरि देवतावैद्ये । तत्प्रादुर्भाव: —"एकदा देवराजस्य दृष्टिर्निपतिता भुवि । तत्र तेन नरा दृष्टा व्याधिभि: परिपीडिता: ॥ तान् दृष्ट्वा हृदयं तस्य दयया परिपीडितम् । दयार्द्रहृदय: शक्रो धन्वन्तरिमुवाच ह ॥ धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते । योग्यो भवसि भूतानामुपकारपरो भव ॥ उपकाराय लोकानां केन किं न कृतम्पुरा । त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ॥ तस्मात् त्वं पृथिवीं याहि काशीमध्ये नृपो भव । प्रतीकाराय रोगाणामायुर्वेदम्प्रकाशय ॥ इत्युक्त्वा सुरशार्दूल: सर्व्वभूतहितेप्सया । समस्तमायुषो वेदं धन्वन्तरिमुपादिशत् ॥ अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरि: पुरा । आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि ॥ नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ । बाल एव विरक्तोऽभूच्चार सुमहत्तप: ॥ यत्नेन महता ब्रह्मा तं काशीसंकरोन्नृपम् । ततो धन्वन्तरिर्लोके काशिराजोऽभिधीयते ॥ हिताय देहिनां स्वीया संहिता विहितामुना । अयं क्रियार्थिनो लोकान् संहितामामपाठयत् ॥" भा. । चिकित्सादीपकनिदाननिघण्ट्वादिप्रणेतरि । [ग्र.प. ।

**धन्वन्तरिग्रस्ता** । स्त्री । कटुकायां । कट्फी ।

**धन्वन्तरिप्रस्थम्** । क्ली । धन्वन्तरिकृततन्त्रविशेषे ।

**धन्वन्तरिभागः** । पुं । औषधकरणार्थं वैद्यकोक्तौषधादिभागे । शिङ्गरसानां १० भ. तैलघृतलौहानां ८ भ. लौहवटिकानां ७ भ. । वै.निघ. ।

**धन्वमांसम्** । क्ली । निर्जलदेशपशुमांसे । वा. चि.१२अ. । See जाङ्गलमांसम् ।

**धन्वयवासः (कः)** / **धन्वयासः** । पुं । दुरालभायाम् । रा.नि.व.४ । सि.यो.रक्तार्श.-चि. । "धन्वयवासाः समागराः कथिताः ।" च.सू.४अ. । चि.यो.सन्निपात-ज्व.चि.अष्टादशाङ्गकषाये । [चि.१अ. ।

**धन्वा (न्)** । पुं । मरुभूमौ । रा.नि.व.२ । च.

**धन्वामिषम्** । क्ली । जाङ्गलपशुमांसे ।

**धन्वी (न्)** । पुं । दुरालभायाम् । रा.नि.व.४। अर्जुनवृक्षे । रा.नि.व.९ । वकुलवृक्षे । रा.नि.व. १० ।

**धमनः** । पुं । नलवृक्षे । नल गाछ । रा.नि.व. ८ । निम्बवृक्षे । निम् गाछ । रा.नि.व.९ ।

**धमनिः (नी)** । स्त्री । पृश्निपर्ण्याम् । চাকুলে । रा.नि.व.४ । उत्तरापथप्रसिद्धनलिकानाम गन्धद्रव्ये । भा. । हे.च. । नखीनामगन्धद्रव्ये । हरिद्रायाम् । शिरायाम् । रा.नि.व.१८ । शिराविकार एव धमनी । धमन्यश्च नाभिजाः, तत्संख्या च २४ । तेषु दशोर्द्धगाः, शेषास्तिर्य्यग्गाश्च । तेषूर्द्धगाः कपरसगन्धस्पर्शशब्दप्रश्वासोच्छ्वासजृम्भक्षुतहास्यभाषणरोदनगानादिकर्म्म सम्पादयन्ती देहं धारयन्ति । ताश्च हृदयं गत्वा प्रत्येकं शाखात्रयं विस्तारयन्त्यः ३०संख्या भवन्ति । तासु प्रत्येकं द्वे द्वे भूत्वा दश धमन्यो वातपित्तकफशोणितरसान् वहन्ति । अष्टौ च शब्दादीनि गृह्णन्ति । शिष्टासु द्वादशसु द्वाभ्यां वाङ्निर्गतिः, द्वाभ्यां घोषणं, द्वाभ्यां निद्रा, द्वाभ्यां जागरणं, द्वाभ्यां रसवहनं भवति । शिष्टेन सम्बन्धितेन द्वयेन च स्त्रियाः स्तन्यवहनं पुंसश्च शुक्रवहनं कन्याभ्यां भवति । अधोगास्तु दश पित्ताशयमधिगम्य त्रिंशत्संख्यकाः । तासु द्वे द्वे वातपित्तकफरक्तरसावहतः । शिष्टाभ्यश्च द्वे अन्नमात्रिस्रावं वहतः । द्वे जलं वहतः, द्वे वस्तिमाश्रित्य मूत्रं वहतः, द्वाभ्यां पुरुषस्य शुक्रं स्त्रियं आर्त्तवञ्च प्रादुर्भवति, द्वे च तद्वयं निःसारयतः । द्वे स्थूलान्त्रमिबद्धे भूत्वा पुरीषं निःसारयतः । अवशिष्टाश्चाष्टौ तिर्य्यग्गामिन्यो स्वेदं निःसारयन्ति । एतास्त्वधोगा धमन्यः पक्वाशयकटिमूत्रपुरीषगुह्यवस्तिमेढ्रपादप्रभृतीनाश्रित्य तेषां पोषणं सम्पादयन्ति । तिर्य्यग्गाश्च धमनीचतुष्टयं प्रत्येकमसंख्यशाखाविभक्तं देहं गवाक्षयितं करोति । एतासाञ्च मुखानि प्रतिरोमकूपं संलग्नानि । तेभ्यश्च मुखेभ्यः स्वेदा निर्गच्छन्ति, देहरसो वहिरन्तश्च सन्तर्पयति । अभ्यङ्गादिना च तैलादिवीर्य्यमन्तःशरीरं प्रविश्य त्वकपाकादिकं करोति तेनैव च शुभाशुभस्पर्शज्ञानं भवति ।" सु.शा.९अ. । भा. ।

**धमिः** । स्त्री । अग्नौ । धमन्याम् । शब्दा. ।

**धयनम्** । क्ली । पाने । रा.नि.व.२० ।

**धरः** । पुं । कार्पासतूलके । मे. ।

**धरणः** । पुं । तुलायां । सने । धान्ये । हे.च. । तण्डुले । वै.निघ. । क्ली । कालिङ्गचतुर्माषमितमाने । प.प्र.१ख. । पलदशमांशे । २४ रक्तिकामाने । रौप्यषोडशमाषे । वै.निघ. ।

**धरणी** । धारणीकन्दे । रा.नि.व.७ । शिरायां । रा.नि.व.१८ । खदिरवृक्षे । रा.नि.व.२३ । पुनर्नवायाम् । मेदायाम् । वै.निघ. । शाकवृक्षे । श.च. ।

**धरणीकन्दः** । पुं । धारणीकन्दे । रा.नि.व.७।

**धरणीधरः** । पुं । पर्व्वते । कच्छपे । रा.नि. व.१९ ।

**धरणीबन्धः** । पुं । अरिष्टबन्धने । सर्पाघाते बन्धनविशेष । स शाखादष्टस्य दंशदेशाच्चतुरङ्गुले न्याय्यः । यदाह वाग्भटः—"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले । क्षौमादिभिर्व्वेणिकया सिद्धैर्म्मन्त्रैश्च मन्त्रवित् ॥" च.द.विष.चि. ।

**धरा** । स्त्री । शिरायाम् । नाड्याम् । रा.नि.व. १८ । वसायाम् । गर्भाशये । मे. ।

**धराकदम्बः (कः)** । पुं । कदम्बवृक्षे । शब्दा. ।

**धराङ्कुरः** । पुं । भूम्याकी । वै.निघ. ।

**धराजकुष्माण्डः** । पुं । भूमिकुष्माण्डे कुमड़ा । चि.क्र.क.औरी.चि. ।

**धरिमा** (न्) । पुं । तुलायाम् । তরাজু । का-वरे । वै.निघ. ।

**धवषः** । पुं । जले । मे. ।

**धर्त्तूरः** । पुं । शुक्लधुस्तूरे । वै.निघ. ।

**धर्म्मः** । पुं । स्वभावे । आचारे । गुणे । मे. ।

**धर्म्मघ्नः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मणः** । पुं । धमन्यवृक्षे । धामना गाछ । र.मा. । सर्पभेदे । ঢেমনা সাপ । मे. ।

**धर्म्मद्वेषी** (इन्) । पुं । विभीतकवृक्षे । वै.निघ. ।

**धर्म्मपत्तनम्** । क्ली । मरिचे । रा.नि.व.६ ।

**धर्म्मपत्रः** । पुं, क्ली । उदुम्बरवृक्षे । म.प. ।

**धर्म्मवृक्षः** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ ।

**धर्म्मसूः** । पुं । धूम्याटपक्षिणि । म.र. ।

**धर्म्मिणी** । स्त्री । रेणुकायाम् । রেণুক । रा.नि.व.६ । [আঁ:কাড় । म.प. ।

**धलवकः** (कः) । पुं । स्वनामख्यातवृक्षे । धला

**धर्षः** (र्षितम्) । पुं, क्ली । मैथुने । त्रिका. । जाड्ये ।

**धवः** । पुं । (Anogeissus latifolia. Syn. Conocarpus latifolia.) स्वनामख्यातवृक्षे । धाओया गाछ । र.मा. । मं धामोड़ा । कं सिरिवल । तें नारिंजचेट्टु । गुणाः—कटुः कषायः कफघ्नः वातघ्नः पित्तकोपनः रुच्यः दीपनश्च । राज. । "धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥" भा. । अन्यच्च —"धवः कषायः कटुकः कफघ्नोऽनिलनाशनः । पित्तप्रकोपनो रुच्यो विशेषो दीपनः परः ॥" फलमीषन्मधुरम् । रा.नि.व.८ । काके । त्रिका. । मनुष्ये । अम. । खदिरे । र.मा.सं.वच्चुवयलीडे ।

**धवनी** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । वै.निघ. ।

**धवलः** । पुं । धववृक्षे । धाओया गाछ । रा.नि.व.८ । शङ्खे । चीनकर्पूरे । रा.नि.व.१२ । धातकीवृक्षे । वै.निघ. । क्ली । श्वेतमरिचे । रा.नि.व.६ । त्रि । शुक्ले । सुन्दरे । त्रिका. ।

**धवलपक्षः** (क्षी (इन्)) । पुं । हंसे । रा.नि.व.१९ । [পাকুল । रा.नि.व १० ।

**धवलपाटली** । स्त्री । शुक्लपाटल्याम् । শ্বেত

**धवलमृत्तिका** । स्त्री । खटिकायाम् । फुलखड़ि । रा.नि.व.१३ ।

**धवलयावनालः** । पुं । श्वेतवर्णयावनालवृक्षे । शादा जनार । मं श्वेतजुवारी । कं विलियजोल । अयं ग्रीष्मधान्ये वर्त्तते । गुणाः– शैत्यः बल्यः त्रिदोषघ्नः हृद्यः वह्निमदः श्रमघ्नः पथ्यः गुल्मव्रणघ्नश्च । रा.नि.व.१६ ।

**धवलशारिवा** । स्त्री । शुक्लशारिवायाम् । অনন্তমূল । वै.निघ. ।

**धवला** । स्त्री । श्वेतशारिवायाम् । See अनन्ता श्वेतशारिवा च । भा.पू.१भ. । गवि । गाइ गरु । त्रिका. । वचायाम् । श्वेतापराजितायाम् । र.चि. पापरोगान्तकरसे ।

**धवली** । स्त्री । शुक्लगवि । अम. ।

**धवलेक्षुः** । पुं । श्वेतेक्षौ । रा.नि.व.१४ ।

**धवलोत्पलम्** । क्ली । कुमुदपुष्पे । नालफुल, शाला फुल । रा.नि.व.१० ।

**धवित्रम्** । क्ली । मृगचर्म्मनिर्म्मितव्यजने । अम. ।

**धाकः** । पुं । वृषे । क्ली । अन्ने । उणा. ।

**धातकी** । स्त्री । (Woodfordia floribunda. Grislea tomentosa.) स्वनामख्यातपुष्पवृक्षे । धाइ फुलेर गाछ । हिं धावइ, धाघोला । मं धायटी । तें आरिपुव्वु, जार्गि । उत्. आतिको । गुणाः—कटुः उष्णा मदकृद्विषघ्नी प्रवाहिकातिसारघ्नी विसर्पव्रणघ्नी च । रा.नि.व.६ । "धातकी कटुका शीता मृदुकृत्तुवरा लघुः । तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित् ॥" भा. । शीता रक्तपित्तघ्नी च । राज. ।

**धातकीकुसुम(पुष्प)म्** । क्ली । धातकीपुष्पे । धाइ फुल । सु.सू ३८अ.अम्बष्ठादिः । च.सू. ४अ. ।

**धातक्यभिषुतम्** । क्ली । धातकीपुष्पजातसुराभेदे । गुणाः—हृद्यं रुच्यं रोचनं दीपनञ्च । च.सू.२७अ. ।

**धातक्यादिचूर्णम्** । क्लौ । बालरोगाधिकारे चौषधम् । पाठः—"धातकीबिल्वधन्याकलोध्रेन्द्रयवबालकम् । क्षौद्रेण वालानां ज्वरातीसारवानिजित् ॥" धाइफूल, बेलशुँठा, धने, लोध, इन्द्रयव, बाला प्रत्येक चूर्ण समभाग मधु द्वारा लेहन । शा.की. ।

**धाता** । पुं । ब्रह्मणि । शरीरादिसंयोगस्य धारयितरि । सु.शा.२य. ।

**धातुः** । पुं । खनिजेषु स्वर्णादिसप्तविधाष्टविधनवविधपदार्थेषु । धात । यथा—"काञ्चनं रजतं ताम्रं कांस्यं पित्तलं नागं वङ्गं लौहश्चेत्यष्टौ । रा.नि.व.१८ । स्वर्णरौप्यताम्रवङ्गयशदसीसलौहाश्चेति सप्त । भा. । तथा—"हेमतारारनागाश्च ताम्रवङ्गे च तीक्ष्णकम् । कांस्यकङ्कान्तलौहश्च धातवो नव कीर्त्तिताः ॥" मुग्धबोधः । "त्रिविधन्तु सुवर्णं स्यादष्टधा रजतं भवेत् । पञ्च प्रकारकं ताम्रं वङ्गन्तु द्विविधं स्मृतम् । यशदं त्रिविधं प्रोक्तं भवेन्नागस्तु षड्विधः । अष्टधा लौहमुद्दिष्टमेते सप्तैव धातवः ॥" धर्के.चि. । गुणाः—"वलीपलितखालित्यकार्श्याबलत्वज्वरामयान् । निवार्य देहं दधति नृणां तज्ञातवो मताः ॥" भा.पू.१भ.धातुव. । देहधारकवस्तुविशेषे । स च वातपित्तकफरूपः देहस्य धारणात्तस्य धातुशब्दवाच्यता । यथा—"धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः ।" वैद्यकम् । गैरिकमनःशिलाद्यश्मविकारे । प.मु. । शरीरस्थसप्तधातुषु रसरक्तमांसमेदोऽस्थिमज्जशुक्रेषु । "रसाद्रक्तं ततो मांसं मांसान्मेदोऽस्थि तन्नवं । अस्थ्नोर्मज्जा ततः शुक्रमित्यमीषां विनिश्चयः ॥" रा.नि.व.१८। धातूनाञ्च कर्म्माणि प्रीणनजीवनलेपस्नेहधारणपूरणगर्भोत्पादनानि । गिरिमृत्तिकायां । रा.नि.व.१२।

**धातुक(ञ्ज)म्** । क्लौ । शिलाजतुनि । वै.निघ.।

**धातुकाशीश(सीस)म्** । क्लौ । काशीशे । हिराकस् । रा.नि.व.१३ ।

**धातुघ्नी** । स्त्री । धातकीवृक्षे । वै.निघ. ।

**धातुग्राही** (इन्) । पुं । खर्परे । वै.निघ. ।

**धातुघ्नम्** । क्लौ । काञ्जिके । वै.च. ।

**धातुचेतनकरम्** । क्लौ । दुग्धे । चामवके । विदर्भे । वै.निघ. ।

**धातुद्रावकम्** । क्लौ । टङ्कणक्षारे । सोहागा । वै.निघ. ।

**धातुनाशनम्** । क्लौ । काञ्जिके । भिषा. ।

**धातुपः** । पुं । शुक्रे । रसे । श.च. ।

**धातुपाकः** । पुं । रसादिधातुक्षये । तल्लक्षणम्—"निद्रानाशो हृदिस्तम्भो विष्टम्भो गौरवारुचौ । अरतिर्बलहानिश्च धातूनाम्पाकलक्षणम् ।" वैद्यकम् । [प.मु. । भा. ।

**धातुपुष्पिका (ष्पी)** । स्त्री । धातकीवृक्षे ।

**धातुमलः** । पुं । सीसके । रसादिमलेषु । रसरक्तादिर मल । "मलिनीकरणान्मलाः ॥" वैद्यकम् । "कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च । नेत्रविट् त्वक्च च स्नेहो धातूनां क्रमशो मलाः ॥" भा. ।

**धातुमारिणी** । स्त्री । टङ्कणक्षारे । श.च. ।

**धातुमारी** (इन्) । पुं । गन्धके । वै.निघ. ।

**धातुमाक्षिकम्** । क्लौ । स्वर्णमाक्षिके । रा.नि.व.१३ । धातुकाशीशे । हिराकस् । वै.निघ.।

**धातुराजः (कम्)** । पुं, क्लौ । वीर्य्ये । शुक्र । वै.निघ. । श.च. । [प.मु. ।

**धातुवल्लभम्** । क्लौ । टङ्कणे । सोहागा ।

**धातुवादी** (इन्) । पुं । खनिजविद्याभिज्ञः ।

**धातुविट्** । स्त्री । सीसके । वै.निघ. ।

**धातुविषम्** । क्लौ । हरितालादौ । र.सा.सं. ।

**धातुवृद्धिः** । स्त्री । रसादिवृद्धौ, रसादिधातुसाम्ये । च.सू.१२अ. । [धातुपत्नीप्रवर्ष्यादौ ।

**धातुविकारः** । पुं । धातुवर्द्धकद्रव्ये, चम्पन ।

**धातुवैरी** (इन्) । पुं । गन्धके । श.च. ।

**धातुवैषम्यम्** । क्लौ । विकारात्मकरूपकार्य्ययोगो । च.वि.८अ. ।

**धातुशेखरम्** । क्लौ । Green sulphate of Iron. धातुकाशीशे । हिराकस् । वै.च. ।

**धातुशोधनम्** । क्लौ । सीसके । वै.निघ. ।

**धातुशोधनकरी** । स्त्री । हरीतक्याम् । वै.निघ. ।

**धातुसम्भवम्** । क्ली । सीसके । वै.निघ. ।

**धातुसाम्यम्** । क्ली । विकारोपशमनरूपकार्य्ये । च.वि.८अ । आरोग्ये । च.सू.९अ. । [निघ. ।

**धातुस्तम्भनकरम्** । क्ली । जातीफले । वै.

**धातुहा** (न्) । पुं । गन्धके । वै.निघ. ।

**धातुक्षयकासः** । पुं । धातुक्षयकरकासरोगे । क्षयकास । निदा. । [निघ. ।

**धातूपलः** । पुं । खटिकायाम् । थड़ि । वै.

**धात्रिका** । स्त्री । आमलक्याम् । रा.नि.व.११।

**धात्री** । स्त्री । आमलक्याम् । आमला । रा. नि.व.११ । भा.पू.१भ. । See मकरा । उपमातरि । दाइ । तल्लक्षणं—“पीताय यदि बालस्य विदध्यादुपमातरम् । सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम् । सवर्णां मध्यवयसां सःक्षीरां मुदितां सदा । युक्तदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम् । स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेन परित्यक्तां निजपुत्रहस्रिग्धो ॥” भा. । धात्रीकर्म्म । यथा—“धात्री तु यदा स्वादु बहुलशुद्धदुग्धा स्यात्, तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधाय ब्राह्म्याद्यौषधं धारयन्ती कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत् ।” इत्यादि । च.शा.८अ. । [आमलकीपत्रे ।

**धात्रीपत्रम्** । क्ली । तालीशपत्रे । रा.नि.व.६।

**धात्रीफलम्** । क्ली । आमलकफले । आम्ला । स्वह.व.१ । (त्रा) स्त्री । आमलक्याम् । आमला गाछ । रा.नि.व.११ ।

**धात्रीलौहम्** । क्ली । शूलाधिकारे । प्रथमः पाठः—शुद्धमण्डूरं ६ प. यवः ४ प. पाकार्थजलं २ श. शे. ॥०श. । शतावरीरसः ८ प. आमलकीस्वरसः ८ प. दधि ८प. दुग्धं ८प. भूमिकुष्माण्डस्वरसः ४ प. घृतं ४ प. इक्षुरसः ४ प. । एकत्र पक्त्वा पाके सिद्धे प्रक्षेपः—जीरकचूर्णं धान्यकचूर्णं त्वक्चूर्णं तेजपत्रचूर्णम् । एलाचूर्णं गजपिप्पलीचूर्णं मुस्ताचूर्णं हरीतकीचूर्णम् अभ्रभस्म लौहभस्म रेणुकचूर्णं त्रिफलाचूर्णं तालीशचूर्णं नागकेशरचूर्णं प्र. २तो.। शुद्धमণ্ডুর ৬প. যব ৪প. পাকার্থ জল ২শ.শে.॥০ শ.। শতমূলীরস ৮প. আমলকীরস ৮ প. দধি ৮ প. দুগ্ধ ৮ প. ভূমিকুষ্মাণ্ডের রস ৪ প. ঘৃত ৪ প. ইক্ষুরস ৪প. । একত্র পাক সিদ্ধ হইলে প্রক্ষেপ—জীরা, ধনে, গুড়ত্বক্, তেজপত্র, এলাইচ, গজপিপুল, মুস্তা.হরীতকী, অভ্র, লৌহ, রেণুক, ত্রিফলা, তালীশপত্র, নাগেশ্বর প্রত্যেক চূর্ণ ২তো. । র.সা.সং. । ম.কী. । द्वितीयः—धात्रीचूर्णं ८ प. मण्डूरचूर्णं ४ प. यष्टिमधुचूर्णं २ प. गुडूचीक्वाथे सप्तवारं भावयेत् । भावनाक्वाथार्थं क्वाथ्यद्रव्यम् औषधतुल्यमादाय ८गुणे वारिणि साधयेत् । আমলকীচূর্ণ ৮ প. মণ্ডুরলৌহচূর্ণ ৪প. যষ্টিমধুচূর্ণ ২ প. । গুলঞ্চকাথে সপ্তাহ ভাবনানন্তর শুষ্ক করিয়া ঘৃতভাণ্ডে রাখিবে । ভাবনার কাথ ঔষধের তুল্য লইয়া ৮ গুণ জলে প্রস্তুত করিবে । तृतीयः पाठः—आमलकलौहत्रिकटुमनःशिलाचूर्णं मधु घृतं शर्करा प्र. समम् । আমলাচূর্ণ, লৌহ, ত্রিকটু, মনছাল, মধু, ঘৃত, চিনি প্রত্যেকে সমান । चतुर्थः वाजीकरणे—आमलकचूर्णं ८ प. त्रिफलाक्वाथेन २१ भावयित्वा अथ मृतलौहमधुघृतशर्कराः प्र. २ प. मिश्रयेत् । আমলাচূর্ণ ৮ প. ত্রিফলাকাথে ২১ ভাবনা দিবে । মৃতলৌহ ২ প. মধু ২ প. ঘৃত ২ প. শর্করা ২ প. একত্র মিশ্রিত করিবে । र.स.र. । अन्यः पित्तरोगे—“धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य । यष्टीमधुकरजस्र द्विपलं दद्यात् पुटे दृष्टम् । धात्र्यास्र क्वाथेन तच्चूर्णं भाव्यञ्च सप्ताहं । चण्डातपेन संशुष्कं भूयः पिष्टं घटे स्थितं । घृतेन मधुना युक्तं भोजनादन्मध्यतः । त्रीन् वारान् भक्षयेन्नित्यं…… ।” र. सा.सं ।

**धात्रीषट्पलकघृतम्** । क्ली । गुल्मे घृतम् । “धात्रीफलानां स्वरसैः षट्पलं विपचेद्घृतम् । शर्करा सैन्धवोपेतं तद्धितं सर्व्वगुल्मिनाम् ॥” धात्रीरसः घृतसमः । र.र. । भैष. ।

**धात्रेयि(यी)का** । स्त्री । आमलक्याम् । रा. नि.व.११ । उपमातरि ।

**धात्र्यरिष्टम्** । क्ली । पाण्डुरोगे । “धात्रीफलसहस्रे द्वे पीडयित्वा रसन्तु तं । क्षौद्राष्टांशेन संयुक्तं कणार्द्धकुडवेन च । शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धे घटे स्थितं । प्रपिबेत्पाण्डुरोगार्त्तः……।” च.चि.२०अ. ।

**धानराद्धिः** । पुं । धातुर्विकारजन्ये कर्णमूला-न्तनदीप्रगति व्याधौ । वा.चि.१८. ।

**धानकः** । पुं । माषपरिमाणे । च.कल्प.१२अ.। क्ली । धन्याके । मद.व.२ ।

**धाना (नाः)** । स्त्री । चिपीटके । চিড়ে। प.मु.। भृष्टयवादौ। ভাজা যবাদি । हिं बहुड़ा । गुणाः—विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुश्च । भा. । "यवादयश्च ये भृष्टा धानास्ते परिकीर्त्तिताः ।" रा.नि.व.१६ । "धानाः सुदुर्जरा रूक्षास्तृट्प्रदा गुरवस्तु ताः । तथा मेहकफच्छर्द्दिनाशिन्यः सम्प्रकीर्त्तिताः ॥" धन्याके । ধনিয়া । भा. । मुख्याभृष्टयवे । सु.चि.१०अ. ।

**धानाकाः** । स्त्री । धान्याके । ধনে । वा सू. १५अ.गुड़्च्यादिः । "धानाकारतचन्दनम् ।" (बहुवचनान्ताः) । [दिश छातू । हे.च. ।

**धानाचूर्णम्** । क्ली । भृष्टयवादिचूर्णे । यवा-

**धानिका** । स्त्री । धान्यके । ধনে । वै.निघ. अ.सा.चि.यवान्यादौ । [लुब्रचे । रा.नि.व.११ ।

**धानी** । स्त्री । धान्यके । ধনে । मद.व.२ । पी-

**धानुष्का** । स्त्री । अपामार्गवृक्षे । আপাং গাছ । श.च. ।

**धानुष्यः** । पुं । वंशे । रा.नि.व.८ ।

**धानेय(क)म्** । क्ली । धन्याके । रा.नि.व.६ । आर्द्रधान्यके । কাঁচা ধনিয়া । वै.निघ. ।

**धान्या** । स्त्री । एलाग्राम् । श.च. ।

**धान्यम्** । क्ली । ४ तिलमाने । ६ गुञ्जामाने । धान्याके । ধনে । रा.नि.व.६।२३ । भूम्यामलक्यां । रा.नि.व.२३ । (Oryza sativa.) Common rice plaut. शाल्यादिवृक्षे । सतुषतण्डुले । ধান । धान्यं त्रिधा शालिषष्टिकव्रीहिभेदतः । यथा—"शालयो हैमनास्तत्र षष्टिका ग्रैष्मिका अपि । व्रीहयस्त्वाशवः ख्याता प्रावृट्कालसमुद्भवाः ॥" राज.३प. । शूकशिम्बीतृणधान्यभेदेन त्रिधा । रा.नि.व.१६ । शालिव्रीहिशूकशिम्बी-क्षुद्रधान्यभेदेन पञ्चविधम् । "शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः । यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम् । कङ्ग्वादिकक्षुद्रधान्यं तृणधान्यञ्च तत्स्मृतमिति ॥" भा.पू.१भ,धा,व, । अष्टादशविधम् । यथा—"रक्तशालिर्महाशालिः कलमा षष्टिकापरा । स्वर्णटीपकशाली च जीरकाख्या कपिञ्जला । सौगन्धी शूकला चान्या तिलवासी कचोरका । गरुड़ा हंसवर्णी च काकमान्या तथापरा । विल्वजा मागधी पीता ता अष्टादश शालयः ॥ कङ्गुश्चतुर्विधः प्रोक्तः श्यामाकश्चीनकः कटः । कोद्रवो द्विविधः प्रोक्तो वंशवीजं शरोद्भवं । कुसुम्भवीजं तीसी च वीनरी च गवेधुकः । तिजाह्वया राजनी च क्षुद्रधान्यगणस्त्वयम् ॥" क्षुद्रधान्यम् । त्रिधा यवश्च गोधूमो मुद्गः षड्विध ईरितः । द्विविधः प्रोच्यते माषो राजमाषस्त्रिधा मतः । मकुष्ठकुवरी श्रेधा निष्पावकमसूरकौ । त्रिधा चणक उद्दिष्टः कलायश्च त्रिपुष्पकः ॥" अत्रि.। एषां गुणाः स्वस्वपर्य्याये मृग्याः । शरद्ग्रीष्मोद्भवधान्यगुणाः—"धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु ।" ऋतुसन्धिजधान्यगुणाः—"ऋतुसन्धिभवं धान्यं पित्तलं कफनाशनम् ॥" राज.३प. । स्थलजधान्यगुणाः—"स्थलजं कफपित्तघ्नं कषायं कटुपाकि च । किञ्चित्तु तिक्तमधुरं पवनानलवर्द्धनम् ॥" वापितावापितधान्यगुणाः—"वापितं गुरु तद्धान्यं किञ्चिद्धीनमवापितम् ।" रोप्यातिरोप्यधान्यगुणाः—"रोप्यातिरोप्ये लघुनी शीघ्रपाके गुणोत्तरे । अदाहिनी दोषहरे बल्ये मूत्रविवर्द्धने ॥" यच्छूकसमन्वितं व्रीह्यादिकं तच्छूकधान्यम्, शिम्बीनिगूढं मुद्गमकुष्ठकादि शिम्बीधान्यम् । तृणोद्भवतया तृणधान्यम् । इति । "पक्वं हरितलूनञ्च धान्यं सर्व्वगुणावहम् । शुष्कं लूनन्तु निःसारं रूक्षं तत्स्वल्पनाशनम् ॥" इति हरितलूनशुष्कलूनान्नगुणाः । "कोशधान्यं नवञ्चान्यं मधुरं वत्सरोषितं । निर्द्दोषं लघु पथ्यञ्च तद्वर्षाद्विरसम्भवेत् । नवं धान्यमभिष्यन्दि लघु संवत्सरोषितं । त्र्यब्दोषितं लघु पथ्यं त्रिवर्षाद्बलभवेत् ॥" इति नवधान्यजीर्णधान्यगुणाः । धान्यं वापितम् उत्तमं, तदेव छिन्नोद्भवं मध्यमम् । दग्धभूमौ वने वा वापितं छिन्नोद्भवं धान्यं विण्मूत्रबन्धकरम् । वारोदकसमुत्पन्नं श्लेष्मरोगघ्नम् । सुस्निग्धभूमिजम् ओजोबलकरम् । वालुकाभूमिजमल्पपुष्टिकरञ्च । रा.नि.व.१६ ।

**धान्यकम्** । क्ली । स्वनामख्यातपक्वद्रव्ये । ধনে । हिं कोथुम्बुरि । धनिया । मद.व.२ । गु-

णा: —मधुरं शीतलं कषायं पित्तघ्नं ज्वरकासतृट्श्वासच्छर्दिकफघ्नं दीपनञ्च । रा.नि.व.६ । च.सू.४ अ. । च.द.ज्वराति.चि. । "बिल्वधान्यकनागरैः ।" पुं । माषमितमाने । ৬ কুঁচ । प.प्र.१ख. ।

**धान्यकञ्चुकी (इन्)** । पुं । धान्यत्वचि । धानेর খোসা । गुणा:—धान्यगुणयुक्तः । रा.नि.व.१६ ।

**धान्यकतण्डुलः** । पुं । कण्डितधन्याकतण्डुले । धनेর চাল । भा.म.१भ.अम्लकज्व.चि.धान्यकक्वाथे । "प्रातर्धान्यकतण्डुलक्वाथः ।"

**धान्यकल्कः** । पुं । तुषे ।

**धान्यचतुष्कम्** । क्ली । अतीसारे धान्यशुण्ठकबालकबिल्वकृतकषायविशेषे । वैद्यकसं. । [क्ली. ।

**धान्यचमसः** । पुं । चिपीटके । চিঁড়ে । त्रि-

**धान्यजम्** । क्ली । धान्ये । रा.नि.व.६ ।

**धान्यतुषोदम्** । क्ली । धान्यतुषकृतसन्धानविशेषे । एतदभावे काञ्जिकम् । सि.यो.अजी.चि. ।

**धान्यतैलम्** । क्ली । गोधूमयावनालव्रीहियवादिजतैले । गुणा:—त्रिदोषशमनं कण्डूकुष्ठादिहरं चक्षुष्यञ्च । रा.नि.व.१५ ।

**धान्यपञ्चकम्** । क्ली । आमशूलादौ कषाये । "धान्यकं नागरं मुस्तं बालकं बिल्वमेव वा । आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥" वैद्यकसं. । पञ्चविधधान्येषु शालिव्रीहिशूकशिम्बीक्षुद्राख्येषु । "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकं । शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् ॥" भा. ।

**धान्यपटोलः** । पुं, क्ली । पित्तश्लेष्मज्वरे योगविशेषे । अत्र धान्यस्य १० माषाः पटोलस्य च ६ माषाः । सि.यो.ज्व.चि. ।

**धान्यपानकम्** । क्ली । धान्यकृतपानकविशेषे । धनेর পানা। तस्य साधनविधिः—"शिलायां साधु सम्पिष्टं धान्यकं वस्त्रगालितं । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतं । नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥" भा. ।

**धान्यपिप्पली** । क्ली । आमज्वरे । ज्वरे दीपनी पाचनी च । धान्यादीनां प्रत्येकं ६ माषा ४ रतिः । यो.रत्ना. ।

**धान्यमण्डः** । पुं,क्ली । धान्यकृतमण्डे । धानेর মণ্ড । गुणा:—"धान्यमण्डं पित्तहरं श्रमतृष्णाश्मरीहरं । वातलं रक्तशमनं ग्राहि सन्दीपनम्परम् ॥" अचि.१२अ. ।

**धान्यमद्यम्** । क्ली । धान्यकृतमद्ये । ধেনো মদ । गुणा:—गुरु विष्टम्भि च । रा.नि.व.१४ ।

**धान्यमाषः** । पुं । कलाये, माषे । वै.निघ. । षोडशसर्षपपरिमाणे । च.कल्प.१२अ. ।

**धान्यराजः** । पुं । यवे । रा.नि.व.१६।२३ ।

**धान्यबीजम्** । क्ली । धन्याके । रा.नि.व.६ ।

**धान्यवीरः** । पुं । माषे । মাষ কলায় বা বিরি কলায় । रा.नि.व.१६ ।

**धान्यशाकम्** । क्ली । धन्याकशाके । ধনের শাক । र.चि.৫अ. । [শুঙ বা শীষ । जटा. ।

**धान्यशीर्षकम्** । क्ली । धान्यकणिशे । ধানের

**धान्यश्रेष्ठम्** । क्ली । हैमन्तशालिधान्यभेदे, कृपान्ने । হৈমন্তিক ধান্যবিশেষ । रा.नि.व.१५ ।

**धान्यस्वेदः** । पुं । धान्याद्यैः स्वेदे । माषादिकौषधान्यैः स्वेदे । सु.चि.२अ. ।

**धान्या** । स्त्री । धान्यके । अचि.२स्थान.२अ. ।

**धान्याकम्** । क्ली । धान्यके । मद.२व. । वै.निघ.२भ.छर्दि.चि. ।

**धान्याग्रम्** । क्ली । धान्यकणिशे ।

**धान्याभ्र(क)म्** । क्ली । अभ्रकविशेषे । কৃত্রিম অভ্রবিশেষ । तत्करणप्रणाली भावप्रकाशे—"पादांशं शालिसंयुक्तमभ्रं बद्ध्वा च कम्बले । त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत्करैः । कम्बलाद्गलितं सूक्ष्मं बालुकारहितञ्च यत् । तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥" इति । तन्मारणप्रकरणम्—"धान्याभ्रञ्च धमेदग्नौ ततः क्षीरे विनिक्षिपेत् । भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्लयोर्द्रवैः । भावयेदष्टयामन्तदेवं शुध्यति चाभ्रकम् । कृत्वा धान्याभ्रकं तत्तु शोषयित्वा तु मर्दयेत् । अर्कक्षीरैर्दिनं मर्द्यमर्कमूलद्रवेण वा । वेष्टयेदर्कपत्रैस्तु सम्यग्गजपुटे पचेत् । पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः । ततो वटजटाक्वाथैस्तद्देयं पुटत्रयम् ॥" र.चि.४अ. ।

**धान्याम्लम्** । क्ली । मधुजम्बीरकृतसन्धाने

विशेषे । লেবুর আরক । मधुभाण्डे जम्बीररसेनापूर्य्य धान्यराशौ मासं स्थापयेत् । वै.निघ. ।

**धान्याम्बु** । क्ली । धान्योदके । वा.चि.६ष. ।

**धान्याम्ल(क)म्** । क्ली । रसस्वेदनकाञ्जिकविशेषे । यथास्वम्भनिस्तुषधान्यानि जलेन भाण्डमध्ये तावद्रचेत् यावदम्लत्वं नायान्ति । ततश्च तन्मध्ये भृङ्गराजमुण्डापराजितामत्स्याक्षीसर्पाक्षीसहदेवीत्रिफलानीलापराजिताहंसपादीचित्रकं समूलं यथालाभं कुट्टयित्वा देयम् । "नानाधान्यैर्यथाप्राप्तैस्तुषवर्ज्जैर्जलान्वितैः । मृद्भाण्डं पूरितं रचेत् यावदम्लत्वमाप्नुयात् । तन्मध्ये भृङ्गरा मुण्डी विष्णुक्रान्ता पुनर्नवा । मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी । त्रिफला गिरिकर्णी च हंसपादी च चित्रकं । समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत् । पूर्व्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं स्मृतम् । स्वेदनादिषु सर्व्वत्र रसराजस्य योजयेत् ॥" भा.२भ. । च.द.तृष्णा-चि. । काञ्जिके । কাঁজি । रा.नि.व.१५ । तत्साधनप्रणाली यथा—"धान्याम्लं शालिचूर्णञ्च कोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात्प्रीणनं लघु दीपनं । अरुचौ वातरोगेषु सर्व्वेष्वास्थापनेषु च ॥" भा.पू.२भ. ।

**धान्यारिः** । पुं । वनमूषके । रा.नि.व.१९ ।

**धान्यासवः** । पुं । धान्यकृतासवे । गुड़धात्रीधातकीसुरासौवीरकमैरेयमेदकधान्याम्लेषु षट्सु । च.सू.२५अ. । [व.१६ ।

**धान्योत्तमम्** । क्ली, पुं । शालिधान्ये । रा.नि.

**धान्वः** । त्रि । जाङ्गले । वा.चि.३अ. ।

**धान्वन्तरघृतम्** । क्ली । प्रमेहाधिकारे घृतम् । गव्यघृतं १६ श. । क्वाथार्थं—दन्तीमूलं चित्रकमूलम् एषां प्र. ८ प. हरीतकी २० प. देवदारु-कदम्ब-कैलिकदम्बत्वक्-वरुणत्वक्-आरग्वधत्वक्-शाल्मलक-पुनर्नवा-करञ्जत्वक् प्र. ६ प. दशमूलं मिलित्वा ६४ प. वारि चतुर्गुणं शे. चतुर्थांशः । कल्कः—पञ्चलवणं पञ्चकोलं प्र. २ तो. । इति धान्वन्तरम् । शा.कौ. । ঘৃত ১৬ শ. । ক্বাথার্থ—দন্তীমূল, চিতামূল প্রত্যেকে ৮ প. হরীতকী ২০ প. দেবদারু ৬ প. কদম্ব, কেলিকদম্ব, বরুণ, শোঁদাল, অম্র, পুনর্নবা, করঞ্জ প্রত্যেকের ছাল ৬ প. দশমূল মিলিত ৬৪ প. জল চতুর্গুণ শে. চতুর্থাংশ । কল্কার্থ—পঞ্চলবণ, পিপুল, পিপুলমূল, চই, চিতামূল, শুঁট প্রত্যেকে ২ তো. । द्वितीयम्—गव्यघृतं ४ श. । क्वाथार्थं—दशमूलं करञ्जद्वयस्य फलं (तदभावे त्वक्) देवदारु हरीतकी शुक्लपुनर्नवा वरुणमूलं दन्तीमूलं चित्रकमूलं पुनर्नवा कदम्बत्वक् कैलिकदम्बत्वक् शुक्लीत्वक् बिल्वत्वक् भल्लातकं शटी पुष्करमूलं कणामूलम् एषां प्र. १० प. यवकोलकुलत्थानां प्र. १६ प. वारि २१० श. शे. ५४ श. ४ प. । कल्कार्थं—हिज्जलमूलं त्रिफला भार्गी रोहितकमूलं गजपिप्पली शुण्ठी वचा विड़ङ्गं गुञ्जारोचनी एषां प्र. ५॥० तो. । च.द. । ঘৃত ৪ শ. । ক্বাথার্থ—দশমূল, করঞ্জ, রক্তকরঞ্জ, দেবদারু, হরীতকী, শ্বেতপুনর্নবা, বরুণ, দন্তী, চিতা, পুনর্নবা, কদম্ব, কেলিকদম্ব, সিজু, বিল্ব, ভেলা, শঠী, পুষ্করমূল, পিপুলমূল প্রত্যেকে ১ ৺ প. যব, কুল, কুলথ প্রত্যেকে ১৬ প. জল ২১০ শ. শে. ৫৪ শ. ৪ প. । কল্কার্থ—হিজলমূল, ত্রিফলা, বামুনহাটী, রস্নামূল, গজপিপুল, শুঁট, বচ, বিড়ঙ্গ, কমলাগুঁড়ি প্রত্যেকে ৫॥০ তো. । रस.र. । [प्र.]

**धाम (न्)** । क्ली । शरीरे । अम. । जन्मनि ।

**धामकम्** । क्ली । कत्तृणे । গন্ধতৃণ বা রামকর্পূর । रा.नि.व.८ । पुं । माषपरिमाणे । "हेमन्त धामकश्चैव ।" प.प्र. ।

**धामनी** । स्त्री । शोणितवाहिशिरायां । श.च. ।

**धामार्गवः** । पुं । पीतघोषायाम् । পীত ঘোষা । ধুন্দুল । हिं तेतुया । प.मु. । सु.सू.३८अ. । च.सू.१।२अ. । अपामार्गे । रक्तापामार्गे । भा.पू.१भ. । महाकोशातक्याम् । ঝিঙে । हिं तोरई । तैं ভগরীপ, चैतिवीर । रा.नि.व.७ । राजकोशातक्याम् । वा.टी.हेमा. ।

**धारः** । पुं । पाषाणविशेषे । सन्नती । द्रवद्रव्यमाने । क्ली । वृष्ट्युदके । বৃষ্টির জল । तच्च द्विविधं गाङ्गं सामुद्रञ्चेति । "धाराभिः पतितं तोयं गृहीतं स्फीतवाससा । शिलायां वसुधायां वा धौतायां प्रतितञ्च यत् । सौवर्णे राजते ताम्रे स्फटिके काच-

गन्धनाकुलीति, रासायनेति । रास्ना, गन्धरास्ना । प.मु.। नाकुली नाकि विषमुंगरीति च लोके। हिं चन्द्रा। तें सर्पाक्षिचेट्टु, पग्नचेट्टु। नाकुली द्विधा—नाकुली गन्धनाकुली च। गुणाः—नाकुलीयुगलं तिक्तं कटूष्णं त्रिदोषघ्नं नानाविषघ्नञ्च। द्वितीया तु किञ्चिच्छ्रेष्ठा। रा.नि.व.७। यवतिक्तालतायाम्। श्वेतकण्टकार्य्याम्। रा.नि.व.४। चव्ये। प.मु। मरिचे। शङ्खिन्याञ्च। मे.।

**नाकुलीद्वयम्** । क्ली । गन्धरास्नायां रास्नायाञ्च । सि.यो.उन्मा.चि.महापैशाचघृते । "वयस्था नाकुलीद्वयम् ।"

**नागः** । पुं, क्ली (गं) । सीसधातौ । वत्सनाभे । काटविष । नागकेशरवृक्षे । प.मु. । वङ्गे । जर्द्धजायौ । नागबलायाम् । मेदायाम् । करिदन्ते । मुस्तके । सुरपुन्नागवृक्षे । रक्ताभके । मे.। हस्तिनि । नागवल्लीलतायाम् । च.टी.भ. । सि.यो.समशर्करचूर्णे । भैष.च.पि.चि.पिप्पलीखण्डे। सर्पे। त्रिका.। बीजकृमिः । अशन वृक्ष । रा.नि.व.२२ ।

**नागकन्दः** । पुं । हस्तिकन्दाख्यमहाकन्दशाके । रा.नि.व.७ ।

**नागकर्णः** । पुं । रक्तैरण्डे । रा.नि.व.८ ।

**नागकर्णी** । स्त्री । आखुकर्णीलतायाम् । रा.नि.व.३ । श्वेतापराजितायाम् । श.चि. ।

**नागकिञ्जल्कम्** । क्ली । नागकेशरपुष्पे । रा.नि.व.८ ।

**नागकुमारिका (री)** । स्त्री । गुडूच्याम् । रा.नि.व.३ । मञ्जिष्ठायाम् । रा.नि.व.६ ।

**नागकुसुमम्** । क्ली। नागकेशरपुष्पे । वै.निघ. २भ.ज्व.चि.चन्दनबलातैले ।

**नागकृष्णा** । स्त्री । गजपिप्पल्याम् । वै.निघ.।

**नागकेश(स)रः (कः)** । पुं । (Mesuaferrea.) स्वनामख्यातपुष्पवृक्षे । নাগেশ্বর চাঁপা ফুলের গাছ । हिं नागकेशर । तें नागकेसरालु । ता. नागस । बम्. नागचम्प । गुणाः—दीपनः पाचनः आमपाचनः अग्निमान्द्यकरश्च। तत्कुसुमं वस्तिवातघ्नं कण्ठशिरोरुजापहञ्च । रा.नि.व.६ । "नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम् । ज्वरकण्डूतृषास्वेदच्छर्द्दिहृल्लासनाशनम् । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥" भा.। "कीटादिकेन रहितमभिनवमिह केवलं ग्राह्यम् ।" भैष.। [नागदमन्यां । नागदना । वै.निघ. ।

**नागगन्धा** । स्त्री । नाकुलीकन्दे । रा.नि.व.७

**नागगर्भम्** । क्ली । सिन्दूरे । रा.नि.व.१३ ।

**नागचम्पकः** । पुं । वनचम्पकवृक्षे । নাগেশ্বর চাঁপা, বুনো চাঁপার গাছ । रा.नि व.१० ।

**नागच्छत्रः (त्रा)** । पुं, स्त्री । नागदन्त्याम् । रा.नि.व.५ । (त्रा) नागवल्ल्याम् । वै.निघ. ।

**नागजम्** । क्ली। सिन्दूरे । प.मु.। वङ्गे । हे.च.।

**नागजिह्वा** । स्त्री । अनन्तायां । অনন্তমূল । भैष वा.व्या.चि. । र.मा.। मनःशिलायाम् । रा.नि.व.१३ ।

**नागजिह्विका** । स्त्री। मनःशिलायां । प.मु.।

**नागजीवनम्** । क्ली । वङ्गे । हे.च. ।

**नागजीवनशत्रुः** । पुं। हरिताले । वै.निघ.।

**नागतुम्बी** । स्त्री । तुम्ब्याम् । वै.निघ. ।

**नागदन्तः (कः)** । पुं । हस्तिदन्ते । मे. ।

**नागदन्तिका (न्ती)** । स्त्री । महाराष्ट्रकर्णाटयोः स्वनामख्यातमहाक्षुपे । হাতিশুঁড়ে । गुणाः—कटुः तिक्ता रूक्षा वातकफघ्नी विषघ्नी मेधाकरी पाचनी गुल्मशूलोदरघ्नी च । रा.नि.व.५ । स्थूलमूलदन्त्याम् । च.द. । भैष.ना.व्र.चि. । सु.चि.१७अ. । च.वि.८अ. । (न्ती) हस्तिकाख्यां । বিছাতি । र.मा. ।

**नागदमनी** । स्त्री । (Artemisia vulgaris. Syn. A. Indica.) Indian worm wood. स्वनामख्यातक्षुपे । নাগদনা । हिं नागदुनी, नागदवन । तें ईश्वरिचेट्टु, दरबाम । ता. माचिपत्री । बम्. दवणा । नेपाली तितापात । गुणाः—"बलामोटा कटुस्तिक्ता लघुः पित्तकफापहा । मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्द्दभम् । सर्व्वग्रहप्रशमनी विशेषविषनाशिनी । जयं सर्व्वत्र कुरुते धनदा सुमतिप्रदा ॥" भा. । त्रिदोषघ्नी तीक्ष्णोष्णा कटुः तिक्ता उदराध्मानघ्नी कोष्ठशोधनी च । रा.नि.व.५। वन्ध्याकर्कोटक्याम् । वै.निघ. । [भैष.गन्धराजतैले । पर्णे । पाण ।

**नागदलम्** । क्ली । नागदमन्यां । নাগদনা ।

**नागद्रुलोपमः** । पुं । पनसवृक्षे । पनस फल वा फनसा गाछ । प.मु. । [भैरवरसे ।

**नागदा** । स्त्री । हरीतक्याम् । र.सा.सं.सन्नन्द-

**नागद्रुः** । पुं । वृक्षविशेषे । তেকাঁটা সিজু গাছ । वम्. गैरचिकाड़ा । श.च. ।

**नागनामकम्** । क्ली । सीसके । भा. ।

**नागनामा** (न्) । पुं । श्वेततुलसीवृक्षे । कृष्ण-तुलसीवृक्षे । वै.निघ. । [रा.नि.व.७ ।

**नागपत्नी** । स्त्री । लक्ष्मणाकन्दे । लक्ष्मणामूल ।

**नागपत्रम्** । क्ली । ताम्बूलदले । পাণ । वै. निघ.श्वास-चि.त्रिकटुवटी ।

**नागपत्रा** । स्त्री । नागदमन्याम् । भा. ।

**नागपत्री** । स्त्री । नागदमन्याम् । वै.निघ. ।

**नागपर्णी** । स्त्री । नागवल्लीलतायाम् । वै. निघ. ।

**नागपर्य्यायकर्णी** । स्त्री । श्वेतापराजिता-याम् । रा.नि.व.३ । [कायाम् । वै.निघ. ।

**नागपुटभावना** । स्त्री । षोडशपलेन भाव-

**नागपुरगम्** । क्ली। सीसधातौ। रा.नि.व.१३।

**नागपुरीषच्छत्रम्** । क्ली । गजपुरीषजाते छत्राके । वा.उ.२७अ. ।

**नागपुष्पः** । पुं । पुन्नागवृक्षे । मे. । नागकेशर-वृक्षे । प.मु. । नागकेसरपुष्पसमपुष्पं महातरौ । सु.सू.३८अ.एलादि. । क्ली । नागकेसरपुष्पे । च. द.र.पि.चि.कामदेवघृते । सु.कल्प.५अ. । भा.फ-रङ्गरोगे । च.चि.२अ. । नागचम्पके । मे. ।

**नागपुष्पकः** । पुं । कपित्थवृक्षे । स्वर्णयूथिका-याम् । कुष्माण्डे । रा.नि.व.२३। पुन्नागवृक्षे । नाग-केसरवृक्षे । वै.निघ. । [रा.नि.व.७ ।

**नागपुष्पफला** । स्त्री । कुष्माण्डीलतायाम् ।

**नागपुष्पा** । स्त्री । नागदमन्याम् । मनःशिला-याम् । वै.निघ. । [नि.व.१० ।

**नागपुष्पिका** । स्त्री । स्वर्णयूथिकायां । रा.

**नागपुष्पी** । स्त्री । नागदमन्याम् । भा. । स्व-र्णयूथिकायाम् । रा.नि.व.१० । पुष्पवृक्षविशेषे । गुणाः --"नागिनी रेचनी तिक्ता तीक्ष्णोष्णा कफ-पित्तनुत् । विनिहन्ति विषं मूत्रं योनिदोषवमि-क्रिमीन् ॥" भा.कर्ण.चि. ।

**नागफणः** । पुं । (Opuntia Dillenii. Syn. Cactus Indicus.) वृक्षविशेषे । फ-णिमनसा । तैं ता. नागदलि ।

**नागफलः** । पुं । पटोले । रा.नि.व.३ । कटु-पटोले । वै.निघ. । [च.सा.चि.कुङ्कुमवटी ।

**नागफेनम्** । क्ली । अहिफेने । वै.निघ.१अ.

**नागवधूप्रियः** । पुं । सल्लकीनिर्यासे । धूना । वै.निघ. । [वृक्षे । श.च. ।

**नागबन्धुः** । पुं । उदुम्बरवृक्षे । श.चि. । अश्व-

**नागबला** । स्त्री । (Sida spinosa. Syn. Sida alba.) गोरक्षतण्डुलायाम् । গোরক্ষ-চাকুলিয়া । त्रिं गुरुत्वकारी कक्षी । च.द. यक्ष्म.चि.ग्रहाद्यचूर्णे च.चि.१अ.नागरसायने । सा.कौ.महाकामेश्वरमोदके । नागानामिव बलं यस्याः सा । सि यो.यक्ष्म.चि.बलाद्यघृते । भा.मू. कृ.चि.नागबलातैले । योगरत्न.उ.ख. । गुणाः— मधुराम्ला कषाया उष्णा गुरुः कण्डूकुष्ठवातव्रणपि-त्तघ्नी च । स्निग्धा आयुष्या ग्राहिणी वृष्या मूत्रकृ-च्छ्राश्मरीशर्करारोगेषु हिता च । भा. । मधुराम्ला कषाया उष्णा गुरुः कण्डूकुष्ठवातव्रणपित्तघ्नी वा-जीकरणी च । रा.नि.व.४ ।

**नागबलातैलम्** । क्ली । वातरक्ते तैलम् । तिलतैलं १६ श. । क्वाथार्थं—गोरक्षतण्डुलामूलं १२॥० श. वारि ६४ श. शे. १६ श. छागदुग्धं १६ श. । कल्कार्थं—तगरं यष्टिमधु प्र. ५ प. वा १ श. । तुलाद्रव्ये जलद्रोणाः इति । च.द. । তিলতৈল ১৬ শ. । ক্বাথার্থ—গোরক্ষচাকু-লিয়া ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ. ছা-গদুগ্ধ ১৬ শ. । কল্কার্থ—তগরপাদুকা, যষ্টি-মধু প্রত্যেকে ৫ প. বা ২ শ. । চ.দ. ।

**नागभूः** । स्त्री । क्षुद्रपाषाणभेदायाम् । ছোটি পাথরকুচা । रा.नि.व.५ ।

**नागभृत्** । पुं । डुण्डुभसर्पे । त्रिका. ।

**नागमती** । स्त्री । कृष्णतुलस्याम् । वै.निघ. ।

**नागमाता** । स्त्री । मारिवायाम् । वै.निघ. । मनःशिलायाम् । श.च. । मनसादेव्याम् । श.र. ।

**नागमारः** । पुं । नक्षत्राशि । शीघ्रराशौ । के-शदेहे । त्रिका. । त्रि । हस्तिमारके ।

**नागरम्** । क्ली । मुस्तायां । भै. । च.सू.२अ. । शुण्ठ्याम् । रा.नि.व.६ । भा. । वा.सू.१५अ.वचा-दिव. । "नागरातिविषाभया: ।" वा.चि.१अ.दु-रालभादि: । शुण्ठ्यां । हरीतक्यां । च.द.सन्निपा-तज्व.चि.षडङ्गपानीये । च.सू.४अ. । पुं । नागर-ङ्गवृक्षे । श.र. ।

**नागरकः** । पुं । नागरङ्गवृक्षे । वै.निघ. ।

**नागरक्तम्** । क्ली । सिन्दूरे । हे.च. ।

**नागरघनः** । पुं । नागरमुस्तायाम् । नागर-मुता । रा.नि.व.६ ।

**नागरङ्गः** । पुं । (Citrus aurantium.) Orange. जम्बीरविशेषे । कमला लेबु । हिं नारङ्गी, संघा । मं नारङ्ग । तें गंजनिम्म, नारं-जिचेट्टु । ता. किचिलिचेट्टु । उत्. नारङ्गी । गु-णा:—तत्फलम् अम्लम् अत्युष्णं वातपित्तहरं सर-ञ्च । पक्वं स्वादुकं हृद्यं दुर्जरं वातघ्नञ्च । मद.व.६। मधुरमम्लं गुरु उष्णं रोचनम् आमवातकृमिशूलघ्नं श्रमघ्नं बलकरं वृष्यञ्च । रा.नि.व.११ । सुरभि पाके गुरु दुर्जरम् अत्यम्लं मधुरकल्पं हृद्यं वातघ्न-ञ्च । तत्केशरं वृष्यं वातहरञ्च । राज. । वातघ्नं दुर्जरं गुरु च । सु.सू.४६अ. ।

**नागरमुस्तकम् (स्ता)** । क्ली,स्त्री । (Cyperus pertenuis. Syn. Mariscus cyperus.) नागरदेशप्रसिद्धमुस्तायाम् । नागर-मुता । हिं नागरमोथा । तें तुङ्गगड्डलविम् । ता. मुट्टकाच । दा. नरमोटा । गुणा:—तिक्ता कटु: कषाया शीतला कफघ्नी पित्तज्वरातिसारारुचि-तृष्णादाहघ्नी श्रमघ्नी च । रा.नि.व.६ ।

**नागरा** । स्त्री । पानीयामलके । वै.निघ. ।

**नागरादिः** । पुं । कषायभेदे । "नागराति-विषामुस्तभूनिम्बामृतवत्सकै: । सर्व्वज्वरहर: क्वाथ: सर्व्वातीसारनाशन: ॥" च.द.अ.सा.चि. । अन्य: —"नागरं देवदारुञ्च धन्याकं कण्टकीद्वयम् ।" च.द.सामान्यज्व चि. । शुण्ठ्यादीनां प्रत्येकं दक्षि-णशाधिकमाषकत्रयं चतुष्पलजलेन पक्त्वा पलमवशे-षयेत् । भा.ज्वरे । अपर:—"नागरं पुरतञ्च धा-न्यकं कुष्ठकी तत्तिमायुकं विद्धि ।" अति.अ-चि. । नागरमुस्तायाम् । वै.निघ. ।

**नागराह्वम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**नागरी** । स्त्री । स्नुहीवृक्षे । मनसा गाछ । श. च. । [निघ. ।

**नागरीकन्या** । स्त्री । वन्ध्याकर्कोटिकायाम् । वै.

**नागरुकः** । पुं । नागरङ्गवृक्षे । कमला लेबुर गाछ । श.र. ।

**नागरूपप्रभम्** । क्ली । हरिताले । वै.निघ. ।

**नागरेणुः (कः)** । पुं । सिन्दूरे । रा.नि.व. १२ । (कः) नागकेसरवृक्षे । वै.निघ. ।

**नागरोत्था** । स्त्री । नागरमुस्तायाम् । "नाग-रोत्था कच्छरुहा ।" रा.नि.व.६ ।

**नागलता** । स्त्री । शिश्ने । त्रिका. ।

**नागवल्लरी** । स्त्री । नागवल्ल्याम् । भा. ।

**नागवल्लिका (ल्ली)** । स्त्री । पत्रशाकविशे-षे । नालिता गाछ । ताम्बूलीलतायाम् । पान गाछ । गुणा:—कटुतीक्ष्णा तिक्ता पीनसवातघ्नी कफकासहरा रुच्या दाहकृद्दीपनी च । सा स्थान-विशेषजातत्वात् बहुधा भिन्नगुणा । तत्र श्रीवाद्य-म्लवाटीसातसीसदाशिरामलसरादय: प्रसिद्धा: । तत्र अम्लसरा मालवे अंगरापर्णं इति ख्याता, आन्ध्रे पीटुकलिपर्णं हैसनीया च, चीरसमुद्रदेशे चीरस-मुद्रदेशपर्णं इति प्रसिद्धा । श्रीवाटीगुणा:—मधु-रा तीक्ष्णा रसाढ्या सरसा रुच्या च । अम्लवाटी— कटुकाम्लतीक्ष्णतिक्ता उष्णा विष्टम्भकारी वातघ्नी च । सातसी—मधुरा तीक्ष्णा कटुरुच्या पाचनी रुच्या दीपनी च । सदाशिरा —अतिरसा सुगन्धि: रुच्या तीक्ष्णा मधुरा दीपनी पुंस्त्वकारी अतिबल्या विर्दि-षनी मुखसौगन्ध्यकरी च । अम्लसरा—तीक्ष्णा म-धुरा रुच्या हिमा दीपनी बल्या मुखामोदिनी गुल्माध्मानादिजिच्च । पटुलिका—कषाया उष्णा कटु: मलकर्षिणी पित्तकृत् वातघ्नी च । हैसनीया —कटुतीक्ष्णा हृद्या दीर्घपत्रा रुच्या दीपनी पा-चनी च । ताम्बूलं सद्यस्त्रोटितं मुखरोगादिजनकं दाहारोचककरमदं मलकरं विष्टम्भि वान्तिजननम्। चिरत्रोटितं ताम्बूलदलं जलपोषितं गुणकरं काम्यं बल्यञ्च । कृष्णं पर्णं तिक्तमुष्णं कषायं दाहकृत्

गुरुत्वावबरं मलसमलघ । मूलं पर्णं वातस्नेषरीमन्नं वर्ण्यं पर्यं दीपनं पाचनञ्च । शिरापर्णं रक्तम् भेदिगुल्मजनकञ्च । रा.नि.व.११ । नागवल्लीफलं द्रव्यं सुगन्धि कफवातजिच । भनि.१०भ. ।

**नागवारिकः** । पुं । मयूरे । करीन्द्रे । मे. ।

**नागविश्वा** । स्त्री । नागवध्वायाम् । नागदन्त्यां । वा.उ.६भ. ।

**नागवीजम्** । क्ली । सीसककृतरसवेधकवीजविशेषे । यथा—"माचिकेण हतं ताम्रं नागस्य रसेऽन्मुहुः । तं नागं वाहयेद्वीजे विपोड़शगुणानिच । वीजन्विदं वरं श्रेष्ठं नागवीजमकीर्त्तितम् ॥" र.चि.२भ. । [चुपे । प.मु. ।

**नागवृन्ता (न्तिका)** । स्त्री । हस्तिकाली-

**नागवृक्षी** । स्त्री । हस्तिशुण्ड्याम् । वै.निघ.। तालाख्याम्, कर्करीफले । रा.नि.व.७। [निघ.।

**नागश्रीवल्लभः** । पुं । सप्तकोनियासे । वै.

**नागसत्वः** । पुं । मेषशृङ्ग्याम् । वै.निघ. ।

**नागसम्भवम्** । क्ली । सिन्दूरे । अम. ।

**नागसिन्दूरम्** । क्ली । सीसककृतसिन्दूरे । तत्प्रकरणं यथा—"भुजङ्गममगस्त्यस्य पिष्टा पत्रम्प्रलेपयेत् । तत्र संविद्रुते नागे वासामार्गसमुद्भवम् । क्षारं वा निक्षयेत्तत्र चतुर्थांशं गुरूक्तितः । प्रहरं पाचयेत्तस्मा वासादर्व्यावघट्टितं । तत उद्धृत्य तच्चूर्णं वासानीरैर्विमर्दयेत् । पुटेत् पुनः समुद्धृत्य तेनैव परिमर्दयेत् । एवं सप्तपुटैर्नागः सिन्दूरं जायते ध्रुवम् । तारस्य रञ्जनो नागः वातपित्तकफापहः । बलीकुष्ठगुल्मार्शःशोथव्रणविनाशनः ॥" र.स.चि.६भ. । [भ.टी.भ.खा. ।

**नागसुगन्धा** । स्त्री । रास्नायाम्, सर्पगन्धायां ।

**नागस्फोता** । स्त्री । दन्तीभेदे । रा.नि.व.६ । नागदन्तीभेदे । रा.नि.व.५ । [व.१२ ।

**नागहनुः** । पुं । नखीनामगन्धद्रव्ये । रा.नि.

**नागहन्त्री** । स्त्री । वन्ध्याकर्कोटक्याम्। रा.नि.व.७ । [कदलीभेदे । वै.निघ. ।

**नागा** । स्त्री । नाकुल्याम् । पुनर्दाम्न्याम् । ला-

**नागाख्यः** । पुं । नागकेसरे । त्रिका. । भनि.१खान.२भ. ।

**नागान्तकः** । पुं । मयूरे । गरुड़े । अम. ।

**नागारातिः** । पुं । वन्ध्याकर्कोटिकायाम् । रा.नि.व.७ ।

**नागारिः** । पुं । देवदालीलतायाम् । वै.निघ.। वन्ध्याकर्कोटक्याम् । रा.नि.व.२ ।

**नागार्जुनयोगः** । पुं । अर्शःप्रभृतिरोगेषु योगविशेषे । त्रिफला पञ्चलवणं कुष्ठं कटुकी देवदारु विड़ङ्गं निम्बफलं बला गोरक्षतण्डुला हरिद्रा दारुहरिद्रा सौवर्चललवणं प्र. समम् । करञ्जत्वग्रसेन पिष्टा वदरास्थिप्रमाणा गुड़ी कार्य्या । कृष्णजलेनाग्नेयः तक्रेणार्शः काञ्जिकेन गुल्मं खदिरजलेन त्वग्रोगं जलेन मूत्रकृच्छ्रं तैलेन हृद्रोगं निर्गुण्ड्या सर्व्वज्वरञ्च हन्ति। ত্রিফলা, পঞ্চলবণ, কুড়, কটুকী, দেবদারু, বিড়ঙ্গ, নিমফল, বেলেড়া, গোরক্ষচাকুলি, হরিদ্রা, দারুহরিদ্রা, সচললবণ প্রত্যেকে সমভাগ। করঞ্জছালের রসে মর্দ্দন। কুলপ্রমাণ গুলী হইবে। च.द. ।

**नागार्जुनवटिका** । स्त्री । नेत्ररोगे हिता । "त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनं । प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश । द्रव्याण्येतानि संचूर्ण्य वर्त्तिः कार्य्या नताम्बुना ॥" रस.र. । नताम्बु तगरवारि ।

**नागार्जुनाभ्रम्** । क्ली । हृद्रोगे औषधम् । "सहस्रपुटनैः शुद्धं वज्राभ्रमर्ज्जुनत्वचः । सत्वैर्विमर्दितं सप्तदिनं खल्ले विशोषितं । छायाशुष्का वटी कार्य्या नाम्नेदमर्ज्जुनाह्वयम् ॥" रसा.स. ।

**नागार्जुनी** । स्त्री । दुग्धिकायाम् । थिरुइ । वै.निघ. । [व.७ ।

**नागालावुः** । स्त्री,क्ली । कुम्भतुम्ब्यां । रा.नि.

**नागाह्वः** । पुं । वनचम्पकवृक्षे । रा.नि.व.१०। क्ली । नागकेसरपुष्पे । वा.सू.१५भ.अञ्जनादिः । "सैलामधुकनागाह्वम् ।" सि.यो.वाह्यामगुदे । "नागाह्वञ्चापि षट्पलम् ।" च.द.मू.कृ.चि. ।

**नागाह्वयम्** । क्ली । नागकेसरपुष्पे । वा.सू.१५भ,एलादिः । "पुन्नागनागाह्वयम् ।"

**नागाह्वा** । स्त्री । लक्ष्मणाकन्दे । रा.नि.व.७। नागवल्लीलतायाम् । नागदमन्याम् । वै.निघ. ।

**नागिनी** । स्त्री । नागवल्लीक्षुपे । रा.नि.व.६। लघ्वाकन्दे । रा.नि.व.७ ।

**नागी** । स्त्री । वन्ध्याकर्कोटिकायाम् । वै.निघ.२भ. जीर्णज्व.चि.कल्याणचूर्णे ।

**नागीयः** । पुं । नागकेशरे । रा.नि.व.६ ।

**नागेश्वररसः** । पुं । गुल्मे रसः । पारदः गन्धकः सीसः रङ्गं मनःशिला नृसारदः यवक्षारः सर्ज्जिक्षारः टङ्कणं लौहं ताम्रम् अभ्रं प्र. समम् । वस्तीक्षीरेण मर्द्दनं । पश्चात् वासाचित्रकदन्तीमूलक्वाथेन दिवसं मर्द्दयेत् । मात्रा माषप्रमाणा । पারা, গন্ধক, সীস, রঙ্গ, মনছাল, নিশাদল, যবক্ষার, সাচিক্ষার, সোহাগা, লৌহ, তাম্র, অভ্র সমভাগ । সিজুর আঠায় মর্দ্দন । পরে বাসক, চিতা ও দন্তীর মূল সমভাগ লইয়া একত্র কাথ করিয়া ১ দিন মর্দ্দন করিবে। মাত্রা ১ মাষ কলায় । भैष. ।

**नागोद(र)म्** । क्ली । गर्भजरोगविशेषे । "शुक्रशोणितं वायुनाभिप्रपन्नम् अवक्रान्तजीवमाध्मापयत्युदरम्, तत्कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते । तदेव कदाचित् प्रलीयमानं नागोदरमित्याहुः ।" सु.शा.१०अ. ।

**नाटाम्रः** । पुं । कालिङ्गकलतायाम् । তরমুজ । त्रिका. ।

**नाडः** । पुं । नले । নল গাছ । रा.नि.व.८ । नाड़ीवल्लतायाम् । च.सू.१अ. ।

**नाड़िः** । स्त्री । शरीरान्तर्नाड़िकायाम् । च.टी. भ. । सिंहपिप्पल्याम् । कालशाके । दूर्व्वाभेदे । नाड़ीव्रणे । নালি ঘা । वै.निघ. ।

**नाड़िकम्** । क्ली । कालशाके । কাসন্দা শাক । भा.पू.१भ.शा.व. । [वै.निघ. ।

**नाड़िका** । स्त्री । कालशाके । घटपरिमाणे ।

**नाड़िकायन्त्रम्** । क्ली । यन्त्रविशेषे । বকযন্ত্র, ভাটীযন্ত্র । तस्य लक्षणं यथा—"विनिधाय घटे द्रव्यं कनीयांसमधोमुखं । घटमन्यमुखे तस्य स्थापयित्वोभयोर्मुखं । मृत्पट्टैः समालिप्य नाड़िकां विनिवेशयेत् । यस्मात् कुम्भस्थितास्तिला बहिरोषी महोत्तमा । आधारभाण्डपर्य्यन्तं ततस्तम्भां विधारयेत् । अधस्ताज्ज्वालयेदग्निं यावद्वाष्पो विशेदयः । स्वकीयादाधारगतं निर्म्मलं रसमुत्तमम् । नाड़िकायन्त्रमेतद्धि मुनिभिः परिकीर्त्तितम् ॥" इति । भचि. । [टी.भ. ।

**नाड़िकेरः (लः)** । पुं । नारिकेलवृक्षे । श. ।

**नाड़िचीरम्** । क्ली । निर्वेष्टने । नली । হাকা. ।

**नाड़िन्धमः** । पुं । स्वर्णकारे । त्रिका. ।

**नाड़िपत्रम्** । क्ली । नाड़ीचशाके । श.मा. ।

**नाड़ी** । स्त्री । शिरायाम् । रा.नि.व.१८ । श्वासायाम् । नखने । रा.नि.व.२२ । नाले । गण्डदूर्व्वायां । मे. । नाड़ीव्रणे । रा.नि.व.१० । ६० पलात्मककाले ।

**नाड़ीकः** । पुं । पट्टशाके । পাটশাক । কোষ্ঠার শাক । हिं पटुया । भा.पू.१भ.शा.व. । तत्पत्रं तिक्तमधुरभेदेन द्विविधं, तयोस्तिक्तं क्रमिकुष्ठहरं ; मधुरं पिच्छिलं शीतं विष्टम्भि कफवातकृच्च । शुष्कपत्रं—नलितमित्युच्यते । নালিতা । ज्वरघ्नं पित्तकफज्वरघ्नञ्च । तज्जलञ्च पित्तघ्नं दीपनं व्यञ्जने हितञ्च । राज. । क्ली । कालशाके । हिं कालशाक । गुणाः—"कालशाकं सरं रुच्यं वातकृत्कफशोथहृत् । बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥" भा. ।

**नाड़ीकलापकः** । पुं । सर्पाक्ष्यां । भा. ।

**नाड़ीकल्पनविधिः** । पुं । भूमिष्ठस्य नाड़ीच्छेदनविधौ । "नाभिबन्धनात् प्रभृति हि अष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौप्यराजतायसानां छेदनानामन्यतमेन ऊर्द्धधारेण छेदयेत् । तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसजेत् । तस्य चेन्नाभिः पच्येत लोध्रमधुकप्रियङ्गुदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यञ्ज्यात् एषामेव तैलौषधानां चूर्णेनावचूर्णयेदिति ।" च.शा.८अ. ।

**नाड़ीकेरः(लः)** । पुं । नारिकेलवृक्षे । श.र. ।

**नाड़ीचः** । पुं । तिक्तपट्टशाके । নালিতা পাতা । "नाड़ीचबीजकल्कः ।" भैष.क्षुद्ररो.चि. । पेचुके । कचु । त्रिका. ।

**नाड़ीचक्रम्** । क्ली । नाड़ीनिर्णायकयन्त्रे ।

**नाड़ीचरणः** । पुं । पक्षिणि । त्रिका. ।